# ४

## अथ सभ्योपदेशः

तत्र बृहस्पतिः [१, ९६-९७]

अज्ञानतिमिरोपेतान् [1]संदेहपटलान्वितान् ।
निरामयान् यः कुरुते शास्त्राञ्जनशलाकया ॥

इह कीर्तिं राजपूजां लभते स्वर्गतिं च सः ।
तस्मात्संशयमूढानां प्रकर्तव्यो विनिर्णयः ॥

नारदः [३, १-२]

नानियुक्तेन वक्तव्यं व्यवहारे कथञ्चन ।
नियुक्तेन तु वक्तव्यमपक्षपतितं वचः[2] ॥

नियुक्तो वाऽनियुक्तो वा धर्मज्ञो[3] वक्तुमर्हति ।
दैवीं वाचं स वदति यः शास्त्राण्युपजीवति[4] ॥

'दैवीम्' शास्त्रीयां सत्यामिति यावत् ।

1. S. B. (a)-पत्रिणान्वितान्; पटलावृतान्-बि.

2. नियुक्तेन तु सभ्येन धर्मासनस्थेन केवलं धर्ममूर्तिमेवावस्थापयता किमपि धर्मशास्त्रोक्त-व्यवहारनिर्णयवचनं तदेव वक्तव्यम् । न पुनर्वादिनोरेकतरस्यापि पक्षपाताश्रितं वक्तव्यमिति ॥ (असहायः)

3. A. S. B. ज, द, बि and S. B. (a)-शास्त्रज्ञो; धर्मज्ञे-उ.

4. यदि कथमपि सर्वेऽपि सभासदो बुद्धिक्षूणाच्छास्त्रार्थं विस्मृत्य अथवा लोभादिना कारणेन शास्त्रोक्तं न्यायमार्गमुत्सृज्य व्यवहारस्यान्याययुक्तं निर्णयं दातुं प्रवृत्ता भवन्ति । तत्र प्रसङ्गागतः कश्चित् स्मृतितन्त्रव्यवहारमार्गज्ञो ब्राह्मणः प्रत्यक्षस्तिष्ठति तेन शास्त्रोक्तवचनपाठपूर्वकं प्रतिषेधनीयाः सभासदः । एवं प्रबोधयतस्तस्य छलं नास्ति । अनियुक्तोऽपि शास्त्रज्ञो वक्तु-मर्हति । यतः शास्त्रं नाम देवभाषा ॥ (असहायः)

बृहस्पतिः [१, १०८]

नियुक्तो वाऽनियुक्तो वा धर्मज्ञो वक्तुमर्हति ।
यस्तेन सदसि प्रोक्तं कर्तव्यं नात्र संशयः ॥

नारदहारीतौ [ना. ३, १४]

अन्धो मत्स्यानिवाश्नाति निरपेक्षः सकण्टकान् ।
परोक्षमर्थवैकल्याद्भाषते यः सभां गतः ॥

'अर्थवैकल्यात्' अर्थतत्त्वानवगमात् ।

बृहस्पतिः [१, ९८ ; १, ५४]

लोभद्वेषादिकं त्यक्त्वा यः कुर्यात्कार्यनिर्णयम् ।
शास्त्रोदितेन विधिना तस्य यज्ञफलं भवेत् ॥

सत्यं देवास्समासेन मनुष्यास्त्वनृतं विदुः ।
इहैव तस्य देवत्वं यस्य सत्ये स्थिता मतिः ॥

नारदः [३, ७]

शुद्धेषु व्यवहारेषु शुद्धिं यान्ति सभासदः ।
शुद्धिश्च तेषां धर्माद्धि धर्ममेव वदेत्ततः[1] ।

कात्यायनः[2]

[3]अधर्मज्ञान् यदा राजा नियुञ्जीत विवादिनाम् ।
विज्ञाप्य नृपतिं सभ्यस्तदा सम्यङ्निवर्तयेत् ॥

सभ्येनावश्यवक्तव्यं धर्मार्थसहितं वचः ।
शृणोति यदि नो राजा [4]स्यादसत्यस्ततो नृपः ॥

1. यदा राजा व्यवहारान् विशोधयेत् तदा शुद्धेषु व्यवहारेषु सभासदः शुद्धिं प्राप्नुवन्ति ॥ (असहायः)

2. का. ७८, ७७, ७६, ७४, ७५.

3. अधर्मज्ञान्—ज, द ; अधर्मज्ञं—उ ; अधर्माय—राजनीतिरत्नाकरः ; अधर्मज्ञं—उ.

4. स्यात्तु सभ्यस्ततो नृपः—उ, बि, A. S. B, ज and S. B. (a)—स्यादसत्यः ; स्यादसत्यं ततो नृपः—द ; स्यात्तु सभ्यस्ततोनघः—स्मृ. चन्द्रिका. पृ. ४७.

न्यायमार्गादपेतं तु ज्ञात्वा चित्तं महीपतेः ।
[1]वक्तव्यं तत्प्रियं तत्र न सभ्यः किल्बिषी ततः ॥

अधर्मतः प्रवृत्तं तु नोपेक्षन्ते[2] सभासदः ।
[3]उपेक्षमाणास्ते सर्वे नरकं यान्त्यधोमुखाः ॥

[4]अन्यायतो यियासन्तं येऽनुयान्ति सभासदः ।
तेऽपि तद्भागिनस्तस्माद्बोधनीयः स तैर्नृपः ॥

'अधर्मज्ञान्' अधर्मानुवर्तनीयाज्ञान् ।

मनुः [८, १९ ; ८, १३]

राजा भवत्यनेनास्तु मुच्यन्ते तु सभासदः ।
एनो[5] गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते ॥

सभायां न प्रवेष्टव्यं वक्तव्यं वा समञ्जसम्[6] ।
अब्रुवन् विब्रुवन् वापि नरो भवति किल्बिषी[7] ॥

नारदः [३, ३]

[8]युक्तरूपं ब्रुवन् सभ्यो नाप्नुयाद्द्वेषकिल्बिषे ।

1. "वक्तव्यं तत्प्रियं नात्र" इति व्यवहारप्रकाशे । "तत्प्रियं न वक्तव्यं राज्ञो मनोऽनुकूलमेव न वाच्यम् । किन्तु न्याय्यम् । एवं सति सभ्यो न किल्बिषी भवेदिति नञ्द्वयान्वयः ।" इति तत्र व्याख्यातञ्च ॥ स्मृतिचन्द्रिका पराशरमाधव दण्डविवेक सरस्वतीविलासेषु कल्पतरुपाठ एवादृतः ॥ धर्मकोशे व्यवहारनिर्णये (p. १८) तु 'तत्र न सभ्यैः' इति पाठः ।

2. नोपेक्षेरन्-इति अपरार्कः, वि.

3. 'उपेक्षमाणाः सनृपाः' वि, स्मृतिचन्द्रिका च

4. ज, द, A. S. B. and S. B. (a)-अन्यायेनापि तं यान्तं

5. द, A. S. B. and S. B. (a)-ततो, This reading is not good.

6. ज, द, A. S. B. and S. B. (a)-समं वचः

7. सभा वा न प्रवेष्टव्येति-व्यवहारदर्शनाधिकारो न प्रतिपादनीयः इति । प्रतिपन्नश्चेत् समञ्जसं वक्तव्यम् । 'अब्रुवन्' अन्येन विपरीतेऽनुष्ठीयमाने तूष्णीमासीनः (विब्रुवन्) शास्त्रन्यायविरुद्धं ब्रुवन् ॥ (मेधातिथिः)

8. शास्त्राचाराविरुद्धं यत्तद्युक्तरूपमुच्यते । एवं विधं वाक्यं ब्रुवन् सभ्यो नाप्नुयाद्द्वेषकिल्बिषे ऐहिकामुष्मिकबाधे इत्यर्थः (असहायः)

[1]ब्रुवाणस्त्वन्यथा सभ्यस्तदेवोभयमाप्नुयात् ॥

[2]कात्यायनः

सम्यग्विज्ञाय सद्भावं गूढं कार्यस्य यत्न वै ।
निर्णयं त्वन्यथा कुर्युर्न यथाविहितं तु तत् ॥

यत्नानेन विधानेन क्रियते कार्यनिर्णयः ।
तत्र सत्यं हतं सभ्यैरनृतै[3] र्न दुरात्मभिः ॥

[4]न्यायशास्त्रमतिक्रम्य सभ्यैर्यत्र विनिश्चितम् ।
तत्र धर्मो ह्यधर्मेण हतो हन्ति न संशयः ॥

[5]बृहस्पतिः

असत्यनिर्णये साक्षिसभ्याध्यक्षमहीभुजाम् ।
अप्रत्ययोदयश्च[5] स्यान्नरके पतनं तथा ॥

'अप्रत्ययः' अविश्वासः[6] ।

म, नारदहारीतबौधायनाश्च प्रथमे

[7]पादोऽधर्मस्य कर्तारं पादः साक्षिणमृच्छति ।
पादः सभासदः सर्वान् पादो राजानमृच्छति ॥

[8]धर्मो विद्धस्त्वधर्मेण सभां यत्रोपतिष्ठते ।
शल्यं नास्य निकृन्तन्ति विद्धास्तत्र सभासदः ॥

1. कुर्वाणस्त्वन्यथा–ज.
2. The first two verses are not found in Kane's collection.
3. द, ज, A. S. B. and S. B. (a)–सभ्यैः नानृतैः न दुरात्मभिः
4. कात्यायनस्मृतिसारोद्धारे, ७२
5. Not included in *Bṛhaspatismṛti*, G. O. S,. No. LXXXV
6. अप्रत्ययोऽयशश्च–वि.
7. मनु, ८, १८
8. मनु, ८, १२

[1]यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च ।
हन्यते प्रेक्षमाणानां[2] हतास्तत्र सभासदः ॥

मनुः [८, १६ १७, १५]

वृषो हि भगवान् धर्मस्तस्य यः कुरुते त्वलम् ।
[3]वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत् ॥

एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यत्तु[4] गच्छति ॥

धर्म एव हतो[5] हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मो न [6]हन्तव्यो [7]मा नो धर्मो हतो वधीत्[8] ॥

नारदः [३, ११; ३, १७]

ये तु सभ्याः सभां प्राप्य तूष्णीं ध्यायन्त आसते ।
यथाप्राप्तं न चेद्ब्रूयुः[9] सर्वे तेऽनृतवादिनः[10] ॥

1. मनु, ८, १४
2. 'हताः' शवतुल्या भवन्तीति निन्द्यन्ते-(मेधातिथिः)
3. वृषलशब्दनिर्वचनेन मिथ्यादर्शी निन्द्यते । न जातिवृषलो वृषलः, किं तर्हि यो वृषस्य कामवर्षिणो धर्मस्यालं कुरुते । निवृत्तिवचनोऽलंशब्दः ॥ (मेधातिथिः ।)
4. अन्यत-द ; 'अन्यद्धि' इति मेधातिथिपाठः
5. 'हतः' व्यतिक्रान्तः-(मेधातिथिः)
6. हातव्यो-ज.
7. मनोर्धर्मोहतोऽब्रवीत्-द.
8. A. S. B.-अवदीत् ; अवधीत्-ज ; अब्रवीत्-ड.
9. न ते ब्रूयुः-ज.
10. ये सभ्या अधर्मविच्छेदस्थानभूतां सभां प्राप्य वादिप्रतिवादिनोः संदेहविच्छेदार्थिनोऽपि अन्यकार्यव्यासक्ता इव किञ्चिदन्यदेव कार्यान्तरं ध्यायन्त इव तूष्णीं तथा आसते तिष्ठन्ति एकस्य जयमपरस्य पराजयमवसरप्राप्तमपि न ब्रुवते ततस्ते सर्वेऽपि अनृतवादिसमाना राज्ञा द्रष्टव्याः । अनृतवादिविनययोग्या इत्यर्थः ॥ (असहायः)

यत्र सभ्यो जनः सर्वः साध्वेतदिति मन्यते ।
स निश्शल्यो विवादः स्यात्सशल्यः[1] स्यादतोऽन्यथा[2] ॥

पुनर्नारदः [३, ३८]

न सा सभा यत्र न सन्ति वृद्धाः
वृद्धा न ते ये न वदन्ति धर्मम् ।
धर्मः स नो यत्र न सत्यमस्ति
सत्यं न तद्यच्छलमभ्युपैति ॥

कात्यायनः [८०, ७९, ८१]

कार्यस्य निर्णयं सम्यक्कृत्वा[3] सभ्यस्ततो वदेत् ।
अन्यथा नैव कर्तव्यं[4] वक्ता द्विगुणदण्डभाक् ॥

स्नेहादज्ञानतो वापि मोहाद्वा लोभतोऽपि वा ।
[5]यत्र सभ्योऽन्यथावादी दण्ड्यः सभ्यः[6] स्मृतो हि सः[7] ॥

[8]सभादोषात्तु यन्नष्टं देयं सभ्येन तत्तदा ।
कार्ये तु कार्यिणामेवं निश्चितं न विचालयेत् ॥

1. S. B. (a)-सत्यस्स्यात्

2. व्यवहारदर्शनगतो लोकः सभ्यजनो जनशब्दादवगम्यते । अत्र व्यवहारे निष्पन्ने सर्वे सभ्याः । तथा सर्वोऽपि सभ्यजनः साधु तदस्य लोकोऽपि साध्वेतदिति मन्यते जानाति । स एव व्यवहारो निश्शल्यो ज्ञेयः । अतोऽन्यथा विपरीतस्वरूपः सशल्य एवावमन्तव्यः ॥ इति असहायः ॥

3. 'सम्यग्ज्ञात्वा' इति अपरार्कपाठः (पृ. ६०२)

4. 'वक्तव्यम्' इति तस्यैव पाठः

5. 'तत्र' इति अपरार्के

6. दण्ड्योऽसभ्यः-इति अपरार्क-स्मृतिचन्द्रिकापाठः

7. 'स्नेहो' रागः । 'मोहः' विपरीतज्ञानम् । (स्मृ. च. ४५०)

8. 'सभ्यदोष' इति स्मृतिचन्द्रिकापाठः (पृ. ५१)

बृहस्पतिः [१, १०८]

अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः ।
विश्वस्तवञ्चकाश्चैव निर्वास्याः सर्वे एव ते ॥

विष्णुः [५, १७९-१८०]

कूटसाक्षिणां[1] सर्वस्वापहारः कार्यः । उत्कोचजीविनां सभ्यानाम्[2] ।

कात्यायनः [७०]

अनिवृत्ते[3] तु यद्यर्थे संभाषेत रहोऽर्थिनम्[4] ।
प्राड्विवाकोऽथ दण्ड्यः स्यात्सभ्यश्चैव न संशयः ॥

बृहस्पतिः [१, ७६[5]]

प्राड्विवाकः सदस्यानामुपजीव्य मतानि तु ।
[6]न युक्तियोगाद्योऽर्थेषु निर्णयेत्तु स दण्डभाक् ॥

[7]इति भट्टहृदयधरात्मजमहासान्धिविग्रहिक
भट्टश्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
व्यवहारकाण्डे व्यवहारप्रकरणम् ॥



1. कूटसाक्षिना (स्मृ. च. ५१) ; साक्षिनां–द.
2. 'सभ्यानां च'; वि.
3. ज, द, A. S. B. and S. B. (a)–अनिर्णीते
4, अर्थिणि–ज.
5. Wrongly ascribed by our manuscripts to Kātyāyana.
6. 'तद्युक्तियोगाद्यर्थेषु निर्णये न स दण्डभाक्' इति व्यवहारनिर्णयपाठः (p. 20) । श्लोकोऽयं बृहस्पतेरङ्कितश्च ॥
7. इति महाराजाधिराज श्रीमद्गोविन्दचन्द्रदेव महासांधिविग्रहिक भट्टहृदयधरात्मज भट्टश्रीलक्ष्मीधरेण विरचिते कृत्यकल्पतरौ व्यवहारकाण्डे व्यवहारप्रकरणम् ॥—वि.

५

# अथ व्यवहारलक्षणम्

तत्र कात्यायनः [२५-२६]

प्रयत्नसाध्ये विच्छिन्ने[1] धर्माख्ये[2] न्यायविस्तरे ।
साध्यमूलस्तु यो वादो व्यवहारः स उच्यते ॥

वि नानार्थेऽव[3] सन्देह हरणं हार उच्यते[4] ।
नानासन्देहहरणाद्व्यवहार इति स्मृतः ॥

'प्रयत्नसाध्ये' क्षेत्रादिके । 'विच्छिन्ने' भोगविरहिते । धर्माख्यो[5] यो 'न्यायविस्तरः' न्यायो विस्तीर्यते अस्मिन्निति न्यायविस्तरो[6] धर्माधिकरणम् । तत्र यो वादः स व्यवहार इत्यर्थः ।

व्यवहारानुवृत्तौ नारदः [१, ४, ८-१४, २६-२९, १५-२०]

[7]सोत्तरो नोत्तरश्चैव स विज्ञेयो द्विलक्षणः ।
सोत्तरोऽभ्यधिको यत्र विलेखापूर्वकः पणः ॥

स चतुष्पाच्चतुःस्थानश्चतुःसाधन एव सः ।
चतुर्हितश्चतुर्व्यापी[8] चतुष्कारी च कीर्तितः ॥

1. विच्छिन्नं–द.
2. A. S. B. and S. B. (a) धर्मार्थे
3. च–ज and द
4. श्लोकपादोऽयं लुप्तः विकानीरकोशे ।
5. A. S. B. and S. B. (a)–धर्मार्थो ; धर्माख्ये न्याये विस्तरे न्यायो, इति–ज ; धर्माख्ये न्यायविस्तरे न्यायो–द and वि.
6. 'रे धर्माधिकरणात् तत्र वादः'–द.
7. सोत्तरोऽनुत्तरश्चैव इति–मु. ना. स्मृ. and वि.
8. चतुर्हितश्चतुर्व्यायां (?) इति–ज.

त्रियोनिर्द्व्यभियोगश्च द्विद्वारो द्विगतिस्तथा ।
अष्टाङ्गोऽष्टादशपदः शतशाखस्तथैव च ॥

धर्मश्च व्यवहारश्च चरित्रं राजशासनम् ।
चतुष्पाद्व्यवहारोऽयमुत्तरः पूर्वसाधकः[1] ॥

तत्र सत्ये स्थितो धर्मो व्यवहारश्च साक्षिषु ।
चरित्रं पुस्तकरणं[2] राजाज्ञायां तु शासनम् ॥

सामाद्युपायसाध्यत्वाच्चतुस्साधन उच्यते ।
*चतुर्णामपि वर्णानां रक्षणात्स चतुर्हितः ॥

कर्तॄनसौ[3] साक्षिणश्च सभ्यान् राजानमेव च ।
[4][व्याप्नोति पादशो यस्माच्चतुर्व्यापी ततः स्मृतः ॥

धर्मस्यार्थस्य यशसो लोकपक्तेस्तथैव च ।]
चतुर्णां करणादेषां चतुःकारी प्रकीर्तितः[5] ॥

कामात्क्रोधाच्च लोभाच्च नित्यो यस्मात्प्रवर्तते ।
त्रियोनिः कीर्त्यते तेन त्रयमेतद्द्विधाकृतम्[6] ॥

द्व्यभियोगश्च विज्ञेयः शङ्कातत्त्वाभियोगतः[7] ।
शङ्का सतां[8] [9]तु संसर्गात्तत्त्वं होढाभिदर्शनात्[10] ॥

1. पूर्वबाधकः इति मु. ना. स्मृ; 'पूर्वसाधकः इति–उ, बि.
2. 'पुस्तकरणे' इति–मु. नार., वि. च
* 'चतुर्णामाश्रमाणां च,' इति मु. नार.
3. 'कर्तॄनथो' मुद्रितनारदे बिकानीरकोशे च
4. इदं श्लोकार्धद्वयं मूलेऽत्र भ्रष्टमिव भाति । बि. को. ना. स्मृतौ च दृश्यते
5. चतुष्कारीति चोच्यते इति तत्रैव
6. द, A. S. B. and S. B. (a)–विवादकृत्
7. द, A. S. B., ज, and S. B. (a)–दर्शनात् for योगतः
8. सदा इति–ज and द.
9. 'तत्संसर्गात्' इति द.
10. होढादिदर्शनात् तत्रैव

स्वकीयं द्रव्यं यन्नष्टं तद्धोढमुच्यते । तं दृष्ट्वा योऽभियोगः परस्य दीयते स तत्त्वाभियोग उच्यते । तत्र शङ्कायोगस्य देवकुलं निर्णयस्थानम् । तत्त्वाभियोगस्य राजकुलमिति—(असहायः)

पक्षद्वयाभिसम्बन्धाद् द्विद्वारः समुदाहृतः ।
पूर्ववादस्तयोः पक्षः[1] प्रतिपक्षस्तदुत्तरः ॥

भूतच्छलानुसारित्वाद् द्विगतिः [2]समुदाहृतः ।
भूतं तत्वार्थसंयुक्तं प्रमादाभिहितं छलम् ॥

राजा सपुरुषः सभ्याः शास्त्रं गणकलेखकौ ।
हिरण्यमग्निरुदकमष्टाङ्गः [3]समुदाहृतः ॥

ऋणादानं ह्युपनिधिः सम्भूयोत्थानमेव च ।
[4]दत्तस्य पुनरादानमशुश्रूषाऽभ्युपेत्य च ॥

वेतनस्यानपाकर्म तथैवास्वामिविक्रयः ।
विक्रीयासंप्रदानं च क्रीत्वानुशय एव च ॥

समयस्यानपाकर्म विवादः क्षेत्रजस्तथा ।
स्त्रीपुंसयोश्च सम्बन्धो दायभागोऽथ साहसम् ॥

वाक्पारुष्यं तथैवोक्तं दण्डपारुष्यमेव च ।
द्यूतं प्रकीर्णकं चैवेत्यष्टादश [5]विधिःस्मृतः ॥

एषामेव प्रभेदोऽन्यः शतमष्टोत्तरं स्मृतम्[6] ।
क्रियाभेदो मनुष्याणां[7] शतशाखो निगद्यते ॥

'विलेखा' लिखितम् । 'शङ्का' सदसत्संसर्गात् आसन्नाश्चौरादयः, तत्संसर्गाच्चौरत्वादिसंभावना भवतीत्यर्थः । होढशब्देन व्यभिचरितं चिह्नमुच्यते ।

1. पूर्वतः पूर्ववादश्च इति वि.

2 and 3. 'स उदाहृतः,'–द.

4. A. S. B., S. B. (a), ज and द omit the succeeding three lines.

5. 'पदः' for 'विधिः' इति–मु. ना. स्मृ, वि. च

6. "एषामेव प्रभेदोऽन्यो द्वात्रिंशदधिकं शतम्" इति मु. ना. स्मृ.

7. क्रियाभेदान्मनुष्याणाम् इति मु. ना. स्मृ.

मनुः [८, ४-८]

तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः ।
सम्भूय च समुत्थानं दत्तस्यानपकर्म च ॥

वेतनस्यैव चादानं संविदश्च व्यतिक्रमः ।
क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥

सीमाविचारधर्मश्च पारुष्ये दण्डवाचिके ।
स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च ॥

स्त्रीपुंधर्मो[1] विभागश्च द्यूतमाह्वय एव च ।
पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥

एषु स्थानेषु भूयिष्ठं विवादे चरतां[2] नृणाम् ।
धर्मशास्त्रं [3]समाश्रित्य कुर्यात्कार्यविनिर्णयम् ॥

[4]इति भट्टहृदयधरात्मज[5] विरचिते
कृत्यकल्पतरौ व्यवहारकाण्डे
[6]व्यवहारलक्षण[प्र]करणम्

---

1. A. S. B., S. B. (a), ज and द read–स्त्रीस्वधर्मो

2. A. S. B., S. B. (a), द and बि read–विवादश्चरतां; विवादं चरतामिति मु. मनु

3. धर्मं शाश्वतमाश्रित्य, इति मुद्रितनारदपाठः.

4. 'इति महाराजाधिराज श्रीमद्गोविन्दचन्द्रदेव महासांधिविग्रहिक भट्टश्रीलक्ष्मीधरविरचितकृत्यकल्पतरौ व्यवहारकाण्डे व्यवहारलक्षणम्' (बि. को.)

5. A. S. B., S. B. (a) and द have श्रीलक्ष्मीधर here.

6. रलक्षणप्रकरणम् (ज); व्यवहारप्रकरणम्–(द.)

## ६

# अथ विचारविधिः

तत्र बृहस्पतिः [१-४५-४७; ११५; ६५]

दुर्गमध्ये गृहं कुर्याज्जलवृक्षान्वितं पृथक् ।
प्राग्दिशि प्राङ्मुखीं तस्य लक्षण्यां कल्पयेत्सभाम् ॥

माल्यधूपासनोपेतां[1] बीजरत्नसमन्विताम् ।
प्रतिमालेख्यदेवैश्च युक्तामग्न्यम्बुना तथा[2] ॥

पूर्वाह्णे तामधिष्ठाय वृद्धामात्यानुजीविभिः ।
पश्येत्पुराणधर्मार्थशास्त्राणि शृणुयात्तथा ॥

राजा कार्याणि संपश्येत्प्राड्विवाकोऽथवा द्विजः ।
न्यायाङ्गान्यग्रतः कृत्वा [3]सभ्यशास्त्रमते स्थितः ॥

कात्यायनः [६०, ६१, ३१]

सभास्थानेषु पूर्वाह्णे कार्याणां निश्चयं[4] नृपः ।
[5]कुर्याच्छास्त्रप्रमाणेन मार्गेणामित्रकर्षणः[6] ॥

दिवसस्याष्टमं भागं मुक्त्वा कालत्रयं[7] तु यत् ।
स कालो व्यवहाराणां शास्त्रदृष्टः परः स्मृतः ॥

1. धूमासनो–द.
2. S. B. (a)–प्रतिमलेख्यादारैश्च सक्तामङ्गेपुना तथा
3. सत्यशास्त्र–द.
4. 'निर्णयम्' इति व्यवहारमातृकापाठः
5. S. B. (a)–कार्यं शास्त्र प्रमाणेन साध्येनामित्रकर्षणः
6. A. S. B, ज, द–कर्शनः
7. A. S. B, वि. and S. B. (a)–भागत्रयं

पूर्वपक्षश्चोत्तरं च [1]प्रत्याकलितमेव च ।
क्रियापादश्च तेनायं चतुष्पात्समुदाहृतः ॥

अष्टमभागोऽत्र आद्योऽर्धप्रहरः[2] ।

नारदः [१, ३६]

आगमः प्रथमं कार्यो व्यवहारपदं ततः ।
चिकित्सा[3] निर्णयश्चेति दर्शनं स्याच्चतुर्विधम् ॥

'आगमः' भाषोत्तरयोः[4] श्रुत्वा लिखनम् । 'व्यवहारपदम्' ऋणादानादिषु इदं [5]पदमिति व्यवस्थापनम् । 'चिकित्सा' विचारणा ।

बृहस्पतिः [१-१७; २-३]

पूर्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरस्तथा ।
क्रियापादस्तथा चान्यश्चतुर्थो निर्णयः स्मृतः ॥

मिथ्योक्तौ तु चतुष्पादः प्रत्यवस्कन्दने तथा ।
[6]प्राङ्न्यायश्च स विज्ञेयो[7] द्विपात्संप्रतिपत्तिषु ॥

याज्ञवल्क्यः [२, ५]

स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत्[8] ॥

1. प्रत्याकलितमेव–ज.
2. आद्यो यः प्रहरार्धः–बि.
3. A. S. B. and S. B. (a)–किञ्चित्साः 'विवित्सा' (Vulgate)
4. भाषोत्तरे–बि.
5. दिषु समादिदं–द ; ऋणादानादिष्वन्यतमादिदमिति–उ.
6. प्राङ्न्याया सा तु विज्ञेया–ज.
7. A. S. B. and S. B. (a)–प्राङ्न्यस्तु विज्ञेयो
8. तदेव हि व्यवहारपदं यत् स्मृत्याचारव्यपेतेन बाह्येन मार्गेणासंबद्धैः खलीकृत इत्येवं कश्चित् कथयेत् । न तु स्वयं कार्यारम्भक इत्यर्थः । स्मृत्युक्त आचारः स्मृत्याचारः । कुलधर्माद्यभिप्रायं वैतत् । परैरिति गुरुशिष्यवादनिवृत्त्यर्थम् । व्यवहारः पदनीयो निरूपणीयतयेत्यर्थः ॥ (विश्वरूपः)

<u>उशनाः</u>

कार्यमुद्दिश्य [1]पीडां यः कश्चिद्राज्ञे निवेदयेत्[2] ।
[3]पदं तदष्टादशविधं[4] विवादानां प्रकीर्तितम् ॥

<u>बृहस्पतिः</u> [१, १६९]

[5]आगमानां विवदतामसकृद्वादिनां नृपः ।
वादान् पश्येदात्मकृतांश्च चाध्यक्षनिवेदितान् ॥

<u>कात्यायनः</u> [२७]

न राज्ञा तु विशिष्टेन[6] धनलोभेन वा पुनः ।
स्वयं कार्याणि कुर्वीत नराणामविवादिनाम्[7] ॥

<u>मनुः</u> [८, ४३]

नोत्पादयेत्स्वयं कार्यं[8] राजा नाप्यस्य पूरुषः ।
न च प्रापितमन्येन ग्रसेदर्थं कथञ्चन ॥

'न ग्रसेत' नोपेक्षेत ।

<u>बृहस्पतिः</u> [२, २६-२७; १, १७०]

अष्टादशपदो वादो विचार्यो विनिवेदितः ।
सन्त्यन्यानि पदान्यत्र [9]तानि राजा विशेत्स्वयम् ॥

1. पीडां वा यः–ज, द, वि.
2. द्राज्ञि वेदयेत्–द, वि.
3. एतदष्टादश–ज.
4. A. S. B. and S. B. (a)–पदं तदष्टादशधा
5. आगतानां इति माधवपाठः
6. 'न राज्ञा तु वशित्वेन' इति व्यवहारमातृकायाम् ।
7. A. S. B, ज, द and S. B. (a)–अविवादताम्; अपि वादिनाम्–वि.
8. कार्यं विवादवस्तु । नोत्पादयेत् न प्रवर्तयेत्—(मेधातिथिः)
9. A. S. B, ज, द, वि and S. B. (a)–यानि

[1]षड्भागकरशुल्कं च समयातिक्रमो निधिः ।
वधः संग्रहणं स्तेयमासेधाज्ञाव्यतिक्रमः[2] ॥

पीडितः स्वयमायातः शालीनोऽर्थी यदा भवेत् ।
प्राड्विवाकोऽपि[3]तं पृच्छेत्पुरुषो वा शनैः शनैः ॥

'अन्यानि' करशुल्कादीनि । 'विशेत्' [4]अवेक्षेत । 'शालीनो'ऽप्रगल्भः ।

कात्यायनः [८६-८७]

काले कार्यार्थिनं पृच्छेत्प्रणतं पुरतः स्थितम् ।
किं कार्यं का च ते पीडा मा भैषीर्ब्रूहि मानव ॥

केन कस्मिन् कदा कस्मात्पृच्छेदेवं सभागतः ।

उशनाः

सशस्त्रोऽनुत्तरीयश्च[5] मुक्तकच्छः सहासनः ।
वामहस्तेन वा स्रग्वी वदन् दण्डमवाप्नुयात् ॥

[6]गौतमः [१३, २७]

प्राड्विवाकमध्याभवेत् ॥
प्राड्विवाकमनुवर्तेतेत्यर्थः ।

[7]स्तेयविवादपदे मनुः [८, ३१२-३१३]

क्षन्तव्यं प्रभुणा नित्यं क्षिपतां कार्यिणां नृणाम् ।
बालवृद्धातुराणां तु कुर्वता हितमात्मनः ॥

1. A. S. B, ज, द, वि and S. B. (a)–यद्भागकरशुल्कं; भागहरणमिति व्यवहारमातृकायाम् (p. 296)
2. S. B. (a)–श्रेयमात्मधार्थाव्यतिक्रमः; चेयमासेधाशाव्यतिक्रमः–उ.
3. A. S. B, ज, द and S. B. (a)–प्राड्विवाकस्तु
4. निविशेत–उ.
5. यो वा युक्तकक्षः–द.
6. सूत्रमिदं कात्यायनीयत्वेन स्खलनात् पठितं उदयपुरकोशे
7. बिकानीरकोशे 'स्तेयविवादे' एतदारभ्य 'महीयते' इत्येतत्पर्यन्तं भ्रष्टम्

यः क्षिप्तो मर्षयत्यार्तैस्तेन स्वर्गे महीयते ।
यस्त्वैश्वर्यान्न क्षमते नरकं तेन गच्छति ॥

[1]क्षिपताम्, गर्जयताम् ।

नारदकात्यायनौ [ना, २, १८; का, १२९]

[2]रागादिना यदेकेन कोपितः करणे वदेत् ।
तदोमिति लिखेत्सर्वं वादिनः फलकादिषु ॥

बृहस्पतिः [१, १३४]

अर्थिनस्तद्वचः[3] कार्यं वचः प्रत्यर्थिनस्तथा[4] ।
परीक्ष्य पदमादद्यादन्यथा नरकं भवेत् ॥

'पदम्' ऋणादानादि । 'आदद्यात्' निर्णयत्वेन स्वीकुर्यात् ।

पुनर्बृहस्पतिः [२-४३, ३२; ८-१३]

राज्ञा विवर्जितो यस्तु यश्च पौरविरोधकृत् ।
राष्ट्रस्य वा समस्तस्य प्रकृतीनां तथैव च ॥
अन्यायेन[5] पुरग्राममहाजनविरोधकः ।
अनादेयास्तु ते सर्वे व्यवहाराः प्रकीर्तिताः ॥
अप्रसिद्धं सदोषं च निरर्थं निष्प्रयोजनम् ।
असाध्यं वा विरुद्धं वा पक्षं राजा विवर्जयेत् ॥

1. 'क्षिपताम्' गर्हताम्-वि.

2. अयं श्लोकः मुद्रितनारदीये एवं पठ्यते—
रागादीनां यदेकेन कोपितः करणं वदेत् ।
तदादौ तु लिखेत्सर्वं वादिनः फलकादिषु ॥

3. A. S. B, ज, द and S. B. (a)-अर्थिनो यद्वचः; अर्थिनश्च इति व्यवहारसौख्ये

4. A. S. B, ज, द and S. B. (a)-वाचो प्रत्यर्थिनां तथा

5. 'अन्ये वा ये पुर' इति पराशरमाधवीये; 'अथो जनपदग्राममहाजनविरोधकृत्' इति व्यवहारनिर्णये, पृ. २७

न केनचित्कृतो यस्तु सोऽप्रसिद्ध उदाहृतः ।
अन्यार्थः[1] स्वार्थहीनश्च सदोषः परिकीर्तितः ॥

अल्पापराधः स्वल्पार्थो[2] निरर्थक इति स्मृतः ।
[3]कार्यबाधाविहीनस्तु विज्ञेयो निष्प्रयोजनः ॥

कुसीदाद्यैः पदैर्हीनो व्यवहारो निरर्थकः ।
वाक्पारुष्यादिभिश्चैव विज्ञेयो निष्प्रयोजनः ॥

ममानेन प्रदातव्यं शशशृङ्गकृतं धनुः ।
असंभाव्यमसाध्यं तं पक्षमाहुर्मनीषिणः ॥

यस्मिन्नावेदिते पक्षे प्राड्विवाकेऽथ राजनि ।
पुरे राष्ट्रे विरोधः स्याद्विरुद्धः सोऽभिधीयते ॥

अप्रसिद्धमिति । यथा प्रतिपौर्णमास्याममावास्यायां वा [4]दक्षिणावृद्धिर्द्विगुणा प्रोक्ता पुराणे तद्विवाद इत्याद्यप्रसिद्धम् । कुसीदादिव्यवहाराश्चतुर्दशार्थविषयास्तैर्हीनो 'निरर्थकः' । वाक्पारुष्यादिभिर्हिंसात्मकैः हीनो 'निष्प्रयोजनः' ।

कात्यायनः [१३६-१३७]

[5]पुरराष्ट्रविरुद्धश्च यश्च [6]राजविवर्जितः ।
अनेकपदसङ्कीर्णः पूर्वपक्षो न सिध्यति ॥

बहुप्रतिज्ञं यत्कार्यं व्यवहारेषु निश्चितम् ।
कार्यं तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सया ॥

1. र्थे–द.
2. चाल्पार्थो–वि.
3. कार्यविधि–उ.
4. दक्षिणवृद्धिः द्विगुणा पुराणोक्ता–द.
5. 'यश्च राष्ट्रविरुद्धश्च'–इति विश्वरूपपाठः (याज्ञ., २, ५)
6. 'राज्ञा विवर्जितः' इति विश्वरूपपाठः





'अनेकपदसङ्कीर्णः' [1]नानाविवादप्रयुक्तः पक्षो युगपन्न सिध्यति, एवमनेकोऽपि पक्षो युगपन्न सिध्यति। न तु नानापक्षनिर्देशात्तस्य हानिः स्यात्। किं तु तदपि राजा तत्त्वप्रतिपन्नं लेखयेत् क्रमशो निरूपयितुम्। यत्र तु नानाविवादपदानि एकहेतुसाध्यानि भवन्ति तत्र युगपदेव निर्णयः[2]॥

[3]बृहस्पतिः कात्यायनश्च, पुनर्यमः

न्यायं वा नेच्छते कर्तुमन्यायं वा करोति यः।
न लेखयति यस्त्वेनं तस्य पक्षो न सिध्यति॥

विरुद्धाश्चाविरुद्धाश्च द्वावप्यर्थौ[4] निवेशितौ।
एकस्मिन् यत्र दृश्येते तं पक्षं दूरतस्त्यजेत्॥

बृहस्पतिनारदौ [बृ. १, १३५][5]

एकस्य बहुभिः सार्धं स्त्रीभिः प्रेष्यकरैस्तथा।
अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः॥

एकस्य बहुभिः सार्धमिति—एकस्य बहुभिः सह नानार्थविषयो विवादो युगपन्न विचारणीयः। एको विषयस्तु विचारणीय एव[6]। स्त्रीभिरिति भर्त्रादिपरवशाभिः। 'प्रेष्यकरैः' स्वामिपरतन्त्रैः तेनाननुज्ञातैः।

बृहस्पतिः [१, १२४-१२५]

गुरुशिष्यौ पितापुत्रौ दम्पती स्वामिभृत्यकौ।
एतेषां समवेतानां व्यवहारो न विद्यते॥

1. नानाविवादपदप्रयुक्तः-बि.
2. निर्णयः कार्यः-बि.
3. बृह, २, ४४-४५; का., १३९, प्रथमे
4. द्वावप्येतौ-द.
5. पूर्वार्धमात्रं मुद्रितनारदस्मृतौ, २, १२
6. 'एव' लुप्तम्-बि. कोशे

एवं परीक्षितं सभ्यैः पूर्वपक्षं[1] तु लेखयेत् ।
अप्रसिद्धं पुरद्विष्टं विवादं न विचारयेत् ॥

व्यवहारो न विद्यत इति । गुरुशिष्यादीनां विवादो भाषोत्तरश्रवण-पूर्वकं राज्ञा न विचारणीयः । किं तु येन केनापि प्रकारेण तमर्थं स्वयमवगम्य यथावत्[2] व्यवस्थाप्य विवादमुपशमयेदित्यर्थः ।

नारदः [१२, ८९]

ईर्ष्यासूयासमुत्थे तु [3]संरम्भे कामहेतुके ।
दम्पती विवदेयातां स्वज्ञातिषु न राजनि ॥

[4]ज्ञातिष्वेव स्वविवादमावेदयेतामित्यर्थः ।

कात्यायनः [८७, ८८]

एवं पृष्टः स यद्ब्रूयात्ससभ्यैर्ब्राह्मणैः सह ।
विचार्य कार्यं न्याय्यं चेदाह्वानार्थमतः परम् ॥

मुद्रां वा निक्षिपेत्तत्र पुरुषं वा समादिशेत् ।

'न्याय्यम्' न्यायार्हम् ।

बृहस्पतिः [१, १४४]

यस्याभियोगं कुरुते तथ्येनाशङ्कयाऽथवा ।
तमेव साधयेद्राजा मुद्रया पुरुषेण तु ॥

नारदः [१, ४७-४८]

वक्तव्येऽर्थे न तिष्ठन्तमुत्क्रामन्तं च तद्वचः ।
आसेधयेद्विवादार्थी यावदाह्वानदर्शनम् ॥

1. पूर्वपक्षे–द.
2. वस्तु व्यवस्थाप्य–द., वि.
3. संबन्धे रागहेतुके इति मुद्रितपाठः
4. ज्ञातिश्चैव स्वविवाद–उ.

स्थानासेधः कालकृतः प्रवासात्कर्मणस्तथा ।
चतुर्विधः स्यादासेधस्तमासिद्धो[1] न लङ्घयेत् ॥

'वक्तव्ये' सन्दिग्धे। 'न तिष्ठन्तम्' [2]निर्णयार्थमप्रवर्तमानम् । न केवलं न प्रवर्तते, तत एव 'उत्क्रामन्तं च' यदि 'तद्वचः' तदा 'आसेधयेत्'[3] निरुन्ध्यात् । [4]तथा 'यावदाह्वानदर्शनम्' राज्ञा यावदाहूयत इत्यर्थः ।

'स्थानासेधः'—नास्मात् स्थानाच्चलितव्यमदत्त्वा, यदि चलसि तदा तवैव तावान् दण्डो[5] भवति । एवं 'कालकृतः'—अदत्त्वा यदि भोक्ष्यसे तदा तवैव तावान्[6] दण्ड इत्यादिरूपः । 'प्रवासात्'—यद्यदत्त्वा ग्रामं गच्छसि तदायं दण्डस्तवेत्यादिरूपः । 'कर्मणः'—यद्यदत्त्वा अध्ययनादि करोषि तदायं ते दण्ड इत्यादिरूपः ॥

कात्यायनः [१०३-१०८, ११०]

उत्पादयति यो हिंसां देयं वा न प्रयच्छति ।
याचमानाय दौःशील्यादाकृष्योऽसौ नृपाज्ञया ॥
आवेद्य तु[7] नृपे कार्यमसन्दिग्धे प्रतिश्रुते ।
तदासेधं नियुञ्जीत यावदाह्वानदर्शनम् ॥
[8]क्रियार्थिनावरुद्धः सन्नासेधं चेद्विलङ्घयेत् ।

1. नासिद्धस्तं विलङ्घयेत्, इति मुद्रितनारदीये

2. अत्र दर्भङ्गामातृकापाठो गृहीतः; ०र्थमप्रवर्तमाने, न केवलं न प्रवर्तते, तत एवोत्क्रोचन्तं च–उ.

3. येत् । निरुन्ध्यात्–ब, द; यत निरुध्यत–उ.

4. तत्र–बि.

5. दण्ड इति दण्डो–बि.

6. तवैतावान्–बि.

7. आवेद्यस्तु–उ.

8. का. स्मृ. सारोद्धारे नास्ति

स्वहस्तेनापि रोद्धव्यो यद्यसौ न[1] विभावयेत् ॥

आसेधयोग्य आसिद्ध उत्क्रामन् दण्डमर्हति[2] ।
आसेधयंस्त्वनासेध्यं राज्ञा शास्य इति स्थितिः ॥

'असन्दिग्धे प्रतिश्रुते' निवेदिते कार्ये राज्ञा निश्चिते, विचार्यत्वेन प्रतिज्ञात इत्यर्थः । 'तदासेधः' तस्यासेधः । स्वहस्तेनापीति । यदासौ अर्थिनो[3] विवादनिमित्तां क्रियां लोके विभावयितुं न[4] शक्नुयात् तदा स्वहस्तव्यापारेणापि उपारुन्ध्यादित्यर्थः ।

नारदः [१, ४९]

नदीसंतारकान्तारदुर्देशोपप्लवादिषु ।
आसिद्धस्तं परासेधमुत्क्रामन्नापराध्नुयात्[5] ॥

कात्यायनः [१०७, १०६]

वृक्षपर्वतमारूढा हस्त्यश्वरथनौस्थिताः ।
विषमस्थाश्च ते सर्वे नासेध्याः कार्यसाधकैः ॥

यस्त्विन्द्रियनिरोधेन व्याहारोच्छ्वसनादिभिः ।
आसेधयेदनासेध्यैः[6] स दण्ड्यो नत्वतिक्रमी ॥

1. तां विभावयेत्—उ. वि.

2. A. S. B, S. B. (a), द and न read the line thus: आसेधयोग्य उत्क्रामं दण्डमर्हति चोत्तमम् ।

3. अर्थी तां—उ.

4. 'न' लुप्तम्—उ, वि.

5. नदीसंतारस्तीरगमनम् । कान्तारं भयानकं वनम् । दुर्देशः कुप्रदेशः । उपप्लवो देशभङ्गः । शोकाद्युपप्लवो वा । ईदृशेषु प्रदेशेष्ववसरेषु च आसिद्ध आसेधं व्यतिक्रामन्नपस्यापराधप्राप्तो न भवति ॥ (असहायः)

6. 'आसाधयेदनासेध्यम्' इति स्मृतिचन्द्रिकायाम् ।

संभूतेऽर्थे[1] य आसिद्धः प्रत्यासेधयते स तम् ।
शास्यो भवेत्सदा दण्ड्यो ह्यसंभूते स एव तु ॥

आसेधयेतां यदि वै सन्दिग्धेऽर्थे परस्परम् ।
तयोरतिक्रमे धर्म्यं तत्र दण्डं प्रदापयेत् ॥

'अनासेधैः' आसेधानर्हैरुच्छ्वासादिभिः । 'संभूत' यथाभूते ।

बृहस्पतिः [पृ. २२, २६, २३]

[2]शास्त्रोद्वाहोद्यतो रोगी शोकार्तोन्मत्तबालकाः ।
मत्तोद्युक्तोऽतिवृद्धश्च नृपकार्योद्यतो व्रती ॥

[3]आसन्नसैनिकः संख्ये कर्षको वापसङ्ग्रहे ।
विषमस्थाश्च नासेध्याः स्त्रीसनाथास्तथैव च ॥

'संख्ये' सङ्ग्रामे । 'वापसंग्रहे' अनादिसस्यसंबन्धे ।

[4]नारदः [१, ५२-५४]

निवेष्टुकामो रोगार्तो यियिक्षुर्व्यसने स्थितः ।
अभियुक्तस्तथान्येन राजकार्योद्यतस्तथा ॥

गवां प्रचारे गोपालाः सस्यारम्भे कृषीवलाः ।
शिल्पिनश्चापि तत्कालेनायुधीयाश्च[5] विग्रहे ॥

अप्राप्तव्यवहाराश्च दूतो दानोद्यतो व्रती ।

1. A. S. B, ज, द and S. B. (a)–च for अर्थे

2. शस्त्रो–उ. सत्रो–बि.

3. आसन्ने सैनिकः–उ. बि.

4. 'नारदः' इत्यारभ्य 'कृषीवलाः' इत्येतत्पर्यन्तो ग्रन्थः लुप्तः उदयपुरकोशे। दृश्यते च बिकानीरकोशे ।

5. तत्कालमायुधीयाश्च–द.

[1]विषमस्थाश्च नासेध्याः न चैतानाह्वयेन्नृपः ॥

<u>कात्यायनः</u> [१११]

अभियुक्तश्च रुद्धश्च तिष्ठेयश्च नृपाज्ञया ।
न तस्यान्येन कर्तव्यमभियुक्तं विदुर्बुधाः ॥

<u>व्यासः</u>

योगी [2]विवक्षुरुन्मत्तो धर्मार्थी व्यसनी व्रती ।
दानोन्मुखो नाभियोज्यो नासेध्यो नाह्वयेच्च तम् ॥

नासेध्या इत्यनुवृत्तौ <u>कात्यायनः</u> [१०९, ११०, ९७]

[3]प्रतिष्ठाभिप्रयातश्च कृतकालश्च नान्तरा ।
उद्युक्तः कर्षकः सस्ये तोयस्यागमने तथा ॥

आरम्भात्संग्रहं यावत्तत्कालं न विवादयेत् ।
[4]अकल्यबालस्थविरविषमस्थक्रियाकुलान् ॥

कार्यातिपातिव्यसनिनृपकार्योत्सवाकुलान् ।
मत्तोन्मत्तप्रमत्तार्तभृत्यान्नाह्वाययेन्नृपः ॥

न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् ।
सर्ववर्णोत्तमां कन्यां नाज्ञातिप्रभुकाः स्त्रियः ॥

तदधीनकुटुम्बिन्यः [5]स्वैरिण्यो गणिकाश्च याः ।
निष्कुला याश्च पतितास्तासामाह्वानमर्हति ॥

1. इतः पूर्वं 'विषमस्थाश्च नासेध्याः स्त्रीसनाथास्तथैव च' इति श्लोकार्धमधिकतया दृश्यते उदयपुरकोशे । मुद्रितपुस्तकेषु च न दृश्यते.

2. विपक्ष–न, द; 'वियक्षुरुन्मत्तो' इति स्मृ. चन्द्रि. व्यवहारसौख्य पाठः

3. 'प्रतिज्ञाय प्रयातश्च' इति स्मृ. च. पाठः

4. Three lines from this are absent in Kane's edn.

5. 'स्वैरिण्यो' इत्यारभ्य 'कोपयन्' पर्यन्तो भागः भ्रष्टः वि. कोशे

[1]ज्ञात्वाभियोगं येऽपि स्युर्वने प्रव्रजितादयः ।
तानप्याह्वानयेद्राजा गुरुकार्येष्वकोपयन् ॥

कालं देशं च विज्ञाय कार्याणां च बलाबलम् ।
अकल्यादीनपि शनैः शनैरानाययेन्नृपः ॥

'अकल्यो' रोगी । 'कार्यातिपाती' यस्य [2]कार्यमासेधे सति नश्यति । 'तदधीनकुटुम्बिन्यः' गोपालशौण्डिकादिस्त्रियः ।

बृहस्पतिः [१, १३६]

वणिग्विक्रीतपण्यस्तु सस्ये जाते कृषीवलः ।
[3]शस्त्रोद्यताद्यास्तु तथा दापनीयाः कृतक्रियाः ॥

कात्यायनः [१००-१०१]

आहूतस्त्ववमन्येत यः शक्तो राजशासनम् ।
तस्य कुर्यान्नृपो दण्डं विधिदृष्टेन कर्मणा ॥

हीने कर्मणि पञ्चाशन्मध्यमेऽपि[4] शतावरः ।
गुरुकार्येषु दण्डः स्यान्नित्यं पञ्चशतावरः ॥

[5]व्यासः

परानीकहते देशे दुर्भिक्षे व्याधिपीडिते ।
कुर्वीत पुनराह्वानं दण्डं न परिकल्पयेत् ॥

1. 'ज्ञात्वा' इत्यारभ्य 'नृपः' इत्येतत्पर्यन्तश्लोकद्वयं का. स्मृ. सारे न लभ्यते

2. कार्ये प्रतिषेधे–बि. 'यस्य रक्षणीयं कार्यं आसेधेन नश्यति'—(व्यवहारसौख्य)

3. A. S. B. and S. B. (a)–शस्त्रोद्यताद्यास्तु; शष्पोद्यताद्यास्तु तथा–उ. स्मृतिचन्द्रिकायाञ्च; सस्रो–बि. पराशरमाधवीये च । 'शस्त्रोद्गाहोद्यताश्चैते पालनीयाः कृतक्रियाः' इति व्यवहारसौख्ये

4. A. S. B, ज, द and S. B. (a)–तन्मध्येऽपि; 'मध्यमे द्विशतावरः' इति स्मृतिचन्द्रिका पठति; अपरार्कपाठस्तु 'मध्यमेन शतावर'मिति ।

5. स्मृतिचन्द्रिका, व्यव, पृ. ७६; 'परानीकगते' इति व्यव. सौ.

कात्यायनः [११२-११३]

[1]एकाहद्व्यहाद्यपेक्ष्यं देशकालाद्यपेक्षतः ।
[2]दूताय साधिते कार्ये तेन भक्तं[3] प्रदापयेत् ॥

देशकालवयःशक्त्याद्यपेक्ष्यं भोजनं स्मृतम् ।
आकारकस्य[4] सर्वत्र इति तन्त्रविदो विदुः ॥

याज्ञवल्क्यः [२, १०]

उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये[5] ।

कात्यायनः [११७]

अथ चेत्प्रतिभूर्नास्ति वादयोग्यस्य वादिनः ।
संरक्षितो दिनस्यान्ते दद्याद्दूताय वेतनम् ॥

---

1. एकाहादिद्व्यहापेक्षं–द

2. पूताय साधिते–उ.

3. 'तेनाशक्तं'–उ.

4. A. S. B, ज, द ; and S. B. (a)–आकारकस्य ; आकारणस्य सर्वत्र–उ.

5. सर्वविवादेषु च यदा न सद्य एव निर्णयः स्यात् तदा उभयोरपि कार्यिणोः प्रतिभूः कार्यनिर्णयक्षमो ग्राह्यः—विश्वरूपः ॥

# ७

## अथ भाषा

तत्र बृहस्पतिः [३, २५]

अहंपूर्विकया यातावर्थिप्रत्यर्थिनौ यदा ।
वादो वर्णानुपूर्व्येण ग्राह्यः पीडामवेक्ष्य च ॥

मनुः [८, २४]

अर्थानर्थावुभौ बुध्वा धर्माधर्मौ च केवलौ ।
वर्णक्रमेण सर्वाणि पश्येत्कार्याणि कार्यिणाम्[1] ॥

कात्यायनः [१२०-१२१]

गृहीतग्रहणो न्यायो न प्रवर्त्यो महीभुजा ।
तस्य वा [2]तत्समर्थ्यं स्यात्स्थापयेद्वा परस्परम् ॥

तत्राभियोक्ता प्राग्ब्रूयादभियुक्तस्त्वनन्तरम् ।
तयोरुक्ते सदस्यास्तु प्राड्विवाकस्ततः परम् ॥

'गृहीतग्रहण' इत्यत्र अर्थिना यत्स्वकार्यसिद्ध्यर्थं प्रत्यर्थिनो धनमाहृतं तद्ग्रहणमभिप्रेतम् ।

1. धर्माधर्मावेव केवलावर्थानर्थौ । धर्मोऽर्थः अनर्थश्चाधर्म इति बुध्वा हृदि निश्चित्य कार्याणि पश्येत्—मेधातिथिः ।

2. S. B. (a)–तस्य राजा समर्थस्य; तस्य वा तत्समर्थस्य–उ. 'तस्यैव तत्समर्थ्यं स्यात्' इति व्यव. मातृ.

नारदः [२, ३८]

[1]आज्ञालेखः पट्टकः शासनं वा
आधिः पत्रं विक्रयो वा क्रयो वा ।
राज्ञे कुर्यात्पूर्वमावेदनं यः
तस्य ज्ञेयः पूर्ववादो विधिज्ञैः[2] ॥

[3]यस्य वाभ्यधिका[4] पीडा कार्यं वाऽभ्यधिकं भवेत् ।
तस्यार्थिवादो दातव्यो न यः पूर्वं निवेदयेत् ॥

आज्ञालेख इति । आज्ञालेखादिविषयं यो राज्ञे पूर्वमावेदनं करोति तस्य पूर्ववाद इत्यर्थः ॥

बृहस्पतिः [२, ३६, ४१, ४२]

चतुर्विधः पूर्वपक्षः प्रतिपक्षस्तथैव च ।
[5]चतुर्धा निर्णयः प्रोक्तः कैश्चिदष्टविधः स्मृतः ॥

शङ्काभियोगस्तथ्यं वै लब्धेऽर्थेऽभ्यर्थनं तथा ।
वृत्ते वादे पुनर्न्यायः पक्षो ज्ञेयश्चतुर्विधः ॥

1. A. S. B, S. B. (a), ज and द–आज्ञालेख्ये पट्टलेखे विरोधे, बाधे पत्रे शासने विक्रये वा । स्मृतिचन्द्रिका इत्थं पठति–"आज्ञालेख्ये पट्टके शासने वा आधौ पत्रे विक्रये वा क्रये वा ।"

2. यो राज्ञे पूर्वमावेदयति तस्य पूर्वपक्षो ज्ञेयः । आज्ञा तेन राजाज्ञा न गणिता । लेखः प्रभुसक्तलेखेनार्यं प्रारब्धः । पट्टकः अनेन दासी मदीयावष्टब्धा पट्टकलिखितम् । शासनम् अयं मदीयं शासनग्राममवष्टभ्य भुङ्क्ते ममेदं शासनं तिष्ठति । आधिः अयमाधिः प्रथमं मम ऋणिकेन कृतः तत्केन मोक्तव्यः । पत्रम्, एष मम पत्र लिखितगृहीतमपि द्रव्यं न प्रयच्छति । क्रयः अस्य हस्ताद्भाण्डं मया क्रीतं मूल्यद्रव्यं च दत्तम्, भाण्डं मम नार्पयति इत्यादिकानि पूर्वपक्षस्य भाषावादिनो वावेदनोदाहरणानि उक्तानीति–असहायः

3. मुद्रितनारदीयस्मृतौ लुप्तः

4. यस्य चाभ्यधिका–द

5. A. S. B, ज, द and S. B. (a)–चतुर्धा; चतुर्थो–उ.

भ्रान्तिः शङ्का समुद्दिष्टा तथ्यं दृष्टार्थदर्शनम् ।
लब्धेऽर्थेऽभ्यर्थनं मोहस्तथावृत्ते पुनः क्रिया ॥

याज्ञवल्क्यः [२, ६]

[1]प्रत्यर्थिनोऽग्रतो लेख्यं [2]यथावेदितमर्थिना ।
समामासतदर्धाहर्नामजात्यादिचिह्नितम् ॥

'प्रत्यर्थिनोऽग्रतः' [3]प्रत्यर्थिनः समक्षम् ।

कात्यायनः [१२४-१२८]

निवेश्य कालं वर्षं च मासं पक्षं तिथिं तथा ।
वेलां प्रदेशं विषयं स्थानं जात्याकृती वयः ॥

साध्यं प्रमाणं द्रव्यं च संख्या नाम तथाऽऽत्मनः ।
राज्ञां च क्रमशो नाम निवासं साध्यनाम च ॥

क्रमात्पितॄणां नामानि पीडां[4] चाहर्तृदायकौ ।
क्षमालिङ्गानि चान्यानि पक्षं सङ्कल्प्य कीर्तयेत्[5] ॥

देशः कालस्तथा स्थानं सन्निवेशस्तथैव च ।
जातिः संज्ञा निवासश्च प्रमाणं क्षेत्रनाम च ॥

पितृपैतामहं चैव [6]पूर्ववंशानुकीर्तनम् ।
स्थावरेषु विचारेषु दशैतानि निवेदयेत् ॥

1. 'यथावेदितं' इत्यनुबन्धप्रयोजनादिविशिष्टापराधज्ञापनार्थम् । समा संवत्सरः । मासः स्पष्टः । तदर्धमर्धमासः । आदिग्रहणं स्मृत्यन्तरानुसारेण भाषाप्रपञ्चनिरूपणार्थम्-विश्वरूपः

2. यदावेदित-द

3. प्रत्यर्थिसमक्षे-द

4. पीडामाहर्तृ-द, वि.

5. A. S. B. and S. B. (a)-सम्यङ् न कीर्तयेत्

6. A. S. B, ब, द and S. B. (a)-पूर्वराजानुकीर्तनम्

कात्यायनबृहस्पती[1]

प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम् ।
निश्चितं लोकसिद्धं च पक्षं पक्षविदो विदुः ॥

अल्पाक्षरः प्रभूतार्थो निःसन्दिग्धस्त्वनाकुलः ।
मुक्तो विरोधकरणैर्विरोधिप्रतिषेधकः ॥

यदा त्वेवं विधः पक्षः कल्पितः पूर्ववादिना ।
[2]दद्यात्पक्षान्तसंबन्धं पूर्ववादी तदोत्तरम् ॥

कात्यायनः [१३८]

देशकालविहीनश्च द्रव्यसंख्याविवर्जितः ।
साध्यप्रमाणहीनश्च पक्षोऽनादेय [3]इष्यते ॥

बृहस्पतिः [२, २०]

[4]मृषायुक्तं क्रियाहीनमसाराक्षरमाकुलम् ।
पूर्वपक्षं लेखयतो वादे हानिः प्रजायते ॥

नारदः [२, ८, १७, ७]

अन्यार्थमर्थहीनं च प्रमाणागमवर्जितम् ।
लेख्यं हीनाधिकं भ्रष्टं भाषादोषा उदाहृताः ॥

अन्याक्षरनिवेशेन [5]नान्यार्थगमनेन च ।
आकुलं च क्रियादानं क्रिया चैवाकुला भवेत् ॥

1. का. १४१-१४३; बृह. २, १४-१५ २, १.
2. A. S. B, द and S. B. (a)-दद्यात् पक्षान सम्बन्धं प्रतिवादी तदुत्तरम् ।
3. उच्यते-द
4. अपरार्कः पठति (पृ. ६१०)—
मृषायुक्तिक्रियाहीनमसाध्याद्यर्थमाकुलम् ।
पूर्वे पक्षं लेखयतो वादहानिः प्रजायते ॥
5. अन्यार्थगमनेन च-बि.

भाषाया उत्तरं यावत्प्रत्यर्थी नाभिलेखयेत् ।
अर्थी तु लेखयेत्तावद्यावद्वस्तु विवक्षितम्[1] ॥

लेख्यमिति विशेष्यपदम् । 'भ्रष्टम्' पूर्वनिवेदितात् च्युतम्[2] ॥

<u>बृहस्पतिः</u> [२, २२]

ऊनाधिकं पूर्वपक्षं तावद्वादी विशोधयेत् ।
न दद्यादुत्तरं यावत्प्रत्यर्थी सभ्यसन्निधौ ॥

तथा [२, ३४]

अभियोक्ताप्रगल्भत्वाद्वक्तुं नोत्सहते यदा ।
तस्य कालः प्रदातव्यः कार्यशक्त्यनुरूपतः ॥

<u>नारदः</u> [२, ३]

स्वलेखनाद्वा लभते त्र्यहं सप्ताहमेव वा[3] ।

<u>कात्यायनः</u> [१३५]

मतिर्नोत्सहते यत्र विवादे वक्तुमिच्छतोः ।
दातव्यस्तत्र कालः स्यादर्थिप्रत्यर्थिनोरपि ॥

1. विवर्जितम्–उ.

2. यदा वादी अन्यादृशार्थस्याक्षरनिवेशं कृत्वा व्यवहारकाले अन्यादृशमेव प्रभूततरार्थोत्पादकमर्थमुपन्यस्यति तदा क्रियादानमाकुलं भवति । यदा च प्रथमवादयोर्द्वयोः द्वितीयेन द्वितीयप्रथमेन सभ्याश्च द्वाभ्यामपि व्याकुलाः, तदार्थापरया क्रियापि व्याकुला भवतीति ॥

अर्थी भाषायां स्वकीयं विवक्षितं वस्तु तावदेव लेखयेत् । यावत्प्रत्यर्थी उत्तरं न निवेशयेत् । उत्तराक्रान्तभाषायां तु तस्य विवक्षितवस्तुनस्तस्यापि भूयो लेख्याधिकारो नास्ति–**असहायः**

3. 'श्वो लेखनं वा स लभेत् त्र्यहं सप्ताहमेव वा' मुद्रितनारदीये ॥

अनन्तरोक्तः प्रत्यर्थी यद्युत्तरकालं प्रार्थयति तत्र आगामिदिवस उच्यते । ततः श्वो लेखनमागामिदिवसे लेखनं वा स लभेत् । अथवा त्र्यहं सप्ताहं वा उत्तरकालस्तस्य दातव्यः (**असहायः**)

तथा [१३१]

पूर्वपक्षं [1]स्वपक्षोक्तं प्राड्विवाकोऽथ लेखयेत् ।
पाण्डुलेखेन[2] फलके[3] स्थितं पत्रे विशोधितम्[4] ॥

अधिकांश्छातयेदर्थान् हीनांश्च प्रतिपूरयेत् ।
भूमौ निवेशयेत्तावद्यावदर्थोऽभिवर्णितः ॥

नारदः [२, १९, २०; ७]

निराकुलावबोधाय धर्मस्थैः सुविचारितम् ।
तस्मादपोह्यमन्यार्थं वादिनोः प्रतिपादितम् ॥

वादिभ्यामभ्यनुज्ञातमशेषं फलके स्थितम् ।
ससाक्षिकं[5] लिखेत्पत्रे प्रतिपत्तिं तु वादिनोः ॥

शोधयेत्पूर्वपादं[6] तु यावन्नोत्तरदर्शनम् ।
अवष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेत्[7] ॥

[8]इति हृदयधरात्मज भट्टश्रीलक्ष्मीधरविरचिते
व्यवहारकाण्डे भाषापादः ॥

---

1. स्वपक्षोक्तं–ज; स्वभावोक्तं–वि.
2. लेखेन–द; लेख्येन–उ.
3. S. B. (a)–कुलके
4. 'विशोधितम्' इत्यारभ्य 'ससाक्षिकं' इत्येतत्पर्यन्तोभागः उदयपुरकोशे भ्रष्टः ॥
5. कां–ज, द.
6. शोधयेत्पूर्ववादं–वि.
7. A. S. B, ज and S. B. (a)–अवष्टब्धस्योत्तरेण निर्वृत्तं शोधनं भवेत्
8. भट्टहृदयधरात्मज भट्टलक्ष्मीधरविरचिते व्यवहारकाण्डे भाषावादः–ज; भट्टहृदयधरात्मज भट्टश्रीलक्ष्मीधरविरचिते व्यवहारकाण्डे भाषावादः–द.

## ८

# अथोत्तरम्

तत्र बृहस्पतिः [३, २-४]

विनिश्चिते पूर्वपक्षे ग्राह्याग्राह्यविशेषिते ।
प्रतिज्ञार्थे[1] स्थिरीभूते लेखयेदुत्तरं ततः ॥

शालीनत्वाद्भयार्तो[2] वा प्रत्यर्थी स्मृतिविभ्रमात् ।
कालं प्रार्थयते यत्र तत्रेमं लब्धुमर्हति ॥

एकाहत्र्यहपञ्चाहसप्ताहं पक्षमेव वा ।
मासं ऋतुत्रयं[3] वर्षं लभते शक्त्यपेक्षया ॥

'विनिश्चिते' स्वरूपतोऽवधारिते । ग्राह्याग्राह्यविशेषित इति । [4]उपादेयविशेषणोपादाने हेयविशेषणे ह्यनेन च पूर्वपक्षे[5] विशिष्टत्वेन च ज्ञापिते सति प्रतिज्ञार्थे स्थिरे जाते उत्तरं लेखयेदित्यर्थः ॥

[6]कात्यायनः [१५३, १४५, १४६, १५४, १५६, १४७, १६४, १५७, १४८]

सद्यः कृतेषु कार्येषु सद्य एव विवादयेत् ।
कालातीतेषु वा कालं दद्यात्प्रत्यर्थिने प्रभुः ॥

श्रुत्वा लेखयतो ह्यर्थं प्रत्यर्थी कारणाद्यदि ।
कालं विवादे याचेत तस्य देयो न संशयः ॥

1. 'प्रतिज्ञाते' इति अपरार्कपाठः (पृ. ६१२)
2. 'भयात्तद्वत्' (अपरार्कपाठः, पृ. ६१९)
3. 'चतुस्त्रयम्' (व्यवहारमातृकापाठः, पृ. २९८)
4. उपादेयविशेषणोपादानेन हेयविशेषणेन ह्यनेन–वि.
5. पक्षविशिष्टत्वेन–द.
6. 'कात्यायनः' एतदादि, 'प्रत्यर्थी कारणाद्यदि' पर्यन्तो भागः भ्रष्टः–वि. कोशे

सद्यो वैकाहपञ्चाहो[1] त्र्यहं वा गुरुलाघवात् ।
लभेतासौ त्रिपक्षं वा सप्ताहं वा [2]ऋणादिषु ॥

सद्यः कृते सद्योवादः समातीते दिनं क्षिपेत्[3] ।
षडब्दिके त्रिरात्रं तु सप्ताहं द्वादशाब्दिके ॥

विंशत्यब्दे दशाहं तु मासार्धं लभते नरः[4] ।
मासं त्रिंशत्समातीते त्रिपक्षं परतो भवेत् ॥

[5]अस्वतन्त्रजडोन्मत्तबालदीक्षितरोगिणाम् ।
कालं संवत्सरादर्वाक् स्वयमेव यथेप्सितम् ॥

कालशक्ती विदित्वा तु कार्याणां तु बलाबलम् ।
अल्पं वा बहु वा कालं दद्यात्प्रत्यर्थिने प्रभुः ॥

यो वा यस्मिन् समाचारः पारंपर्यक्रमागतः ।
तं प्रतीक्ष्य यथान्यायमुत्तरं दापयेन्नृपः ॥

मूलं वा साक्षिणो वाथ परदेशस्थिता यदि[6] ।
तत्र कालो भवेत्पुंसां स्वदेशे वक्तुमागमात् ॥

दिनं मासार्धमासं वा ऋतुः संवत्सरोऽपि वा ।
क्रियास्थित्यनुरूपस्तु[7] देयः कालः परेण तु ॥

1. हो–द.
2. S. B. (a)–कुलादिषु
3. क्षयेत्–ज.
4. मासार्धं वा लभेत सः- (अपरार्क, पृ. ६१९)
5. अपरार्के (तथा का. स्मृ. सा. च) लुप्तो श्लोकार्धः
6. यदा–द, बि.
7. रूपन्तु–द.

'लेखयतः[1]' अर्थिन इति शेषः। अर्थं श्रुत्वेत्यन्वयः। 'कालो देयो' राज्ञेति शेषः। 'समातीते' संवत्सरातीते। 'यस्मिन्' देशे कुल्यादौ। 'मूलं' विवादास्पदीभूतं धनममुष्यात्पुरुषाल्लब्धमित्यभियुक्तो यं कथयति स उच्यते। 'वक्तुं' उत्तरमभिधातुम्। कालो देय इत्यन्वयः, [2]समागमनपर्यन्तः॥

<u>तथा</u> [१५६-१५७]

[3]संवत्सरं वामनस्को जडो व्याधिप्रपीडितः।
दिगन्तरान् गच्छति चेद्वस्तुन्यकृतनिर्णयः॥

'संवत्सरं' प्रतीक्षणीयमित्यर्थः॥

<u>याज्ञवल्क्यः</u> [२, १२]

साहसस्तेयपारुष्यगोभिशापात्यये स्त्रियाम्।
विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः[4]॥

'साहसम्' शस्त्रादिना प्रहरणादि। गौश्च दोग्ध्री। 'अभिशापे' उपपातकाभिशंसने[5]। 'अत्यये' विवादविषयवस्तुविनाशसम्भवे। 'स्त्रियाम्' कुलस्त्रियां चारित्रविवादे, दास्यां स्वत्वविवादे। एतेषु सद्यः विवादयेदुत्तरं दापयेदित्यर्थः॥

1. लेखयत अर्थिन इति शेषः–द ; लेख्या यतः—उ.

2. एतदनन्तरो—'वस्तुन्यकृतनिर्णयः' इत्यन्तो भागः उदयपुरकोशे नास्ति

3. स्मृतिचन्द्रिका (पृ. ९९) इत्थं पठति—

काल संवत्सरादर्वाक् स्वयमेव यथेप्सितम्।
संवत्सरं जडोन्मत्तमनस्के व्याधिपीडिते॥

दिगन्तरप्रपन्ने वा अज्ञातार्थे च वस्तुनि।

4. निर्वहणमनिरूप्यैव स्वबलावष्टम्भेन सहसा यत् प्रसह्य क्रियते तत् 'साहसम्' गोवधाद्यभिशापो 'गोऽभिशापः'। गोग्रहणमुदाहरणार्थम्। सर्वपशूनां शृङ्गिणां वाभिशापः। 'अत्ययः' कालप्रतीक्षणासमर्थं कार्यम्। स्त्रियश्च यत्राभियुज्यन्ते तत्र कालप्रतीक्षणे विरोधात् सद्य एव 'विवादयेत्' विवादं समापयेदित्यर्थः। 'अन्यत्र' तु ऋणादानादौ कालप्रतीक्षणमपि कार्यम्। ध्रुवाधिकरणेच्छया वा भवति—विश्वरूपः।

5. पातकाभिशंसने–बि.

बृहस्पतिकात्यायनौ [बृ. ३, ९; का, १५]

साहसस्तेयपारुष्यगोभिशापे तथात्यये ।
भूमौ च पादपे क्षिप्रमकालेऽपि बृहस्पतिः ॥

अकालोऽत्र विवादासमयः यथा कृषीबळानां बीजवपनसङ्ग्रहणकालः ॥

नारदः [१, ४५]

गोभूहिरण्यस्त्रीस्तेयपारुष्यात्ययिकेषु च ।
साहसेष्वभिशापे च सद्य एव विवादयेत् ॥

कात्यायनः [१५०, १५१, १४९]

धेनावनडुहि क्षेत्रे स्त्रीषु प्रजनने तथा ।
न्यासे याचितके दत्ते तथैव क्रयविक्रये ॥

कन्याया दूषणे स्तेये कलहे साहसे निधौ ।
उपधौ कूटसाक्ष्ये च सद्य एव विवादयेत् ॥

व्यपैति[1] गौरवं यत्र विनाशे त्याग एव वा ।
[2]काले तत्र न कुर्वीत कार्यमात्ययिकं हि तत् ॥

'प्रजननम्' अत्र विवाहः । 'उपधौ' [3]कूटगणकादिव्यवहाररूपच्छले । 'गौरवम्' गुरुत्वम्[4] । 'विनाशे त्याग' इति, विनाशे सति यत्र त्याग एव संपद्यत इत्यर्थः ।

नारदकात्यायनौ [ना. २, २; का. १५९]

पूर्वपक्षश्रुतार्थस्तु प्रत्यर्थी[5] तदनन्तरम् ।
पूर्वपक्षार्थसम्बद्धं प्रतिपक्षं निवेदयेत्[6] ॥

1. अपैति–ज.
2. कालं तत्र न कुर्वीत–द.
3. कूटनाणकादि–बि.
4. A. S. B. ब, द and S. B. (a)–पुरुषत्वं for गुरुत्वं
5. 'प्रत्यर्थी' इति मुद्रितनारदीये
6. निवेशयेत् इति मुद्रितनारदीये

'प्रतिपक्षम्' उत्तरम्[1] ।

याज्ञवल्क्यः [२, ७]

[2]श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ[3] ।

[4]नारदप्रजापती

पक्षस्य व्यापकं सारमसन्दिग्धमनाकुलम् ।
अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः ॥

'व्यापकम्' आच्छादकम् । 'सारम्' अफल्गु । 'अनाकुलम्' पूर्वापरविरोधरहितम् । 'अव्याख्यागम्यम्' व्यक्तार्थम् ।

बृहस्पतिः [२, २]

मिथ्यासंप्रतिपत्तिश्च प्रत्यवस्कन्दनं तथा ।
प्राङ्न्यायश्चोत्तराः प्रोक्ताश्चत्वारः शास्त्रवेदिभिः ॥

तथा [३, १७]

अभियुक्तोऽभियोगस्य यदि कुर्यात्तु निह्नवम् ।
मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः ॥

व्यासः

मिथ्यैतन्नाभिजानामि तदा तत्र न सन्निधिः ।
[5]अज्ञातश्चास्मि तत्काल इति मिथ्या चतुर्विधा ॥

1. तथा धनी अर्थीत्युक्तः । ऋणी प्रत्यर्थीत्यभिहितः । तथा भाषायाः पूर्वपक्षसंज्ञा । तदुत्तरस्य प्रतिपक्षसंज्ञा । अर्थिनो लिखितपूर्वपक्षश्रुतार्थस्तु प्रत्यर्थी तदनन्तरं पूर्वपक्षार्थसंबन्धं प्रतिपक्षं निवेशयेदुत्तरं दद्यादित्यर्थः (असहायः)

2. A. S. B. and S. B. (a)-श्रुतार्थस्योत्तरं, मुद्रितयाज्ञवल्क्यीयकोशेषु च

3. श्रुतश्चासावर्थश्च श्रुतार्थः । तस्य यद्यनुरूपमुत्तरं भवति ततो लेख्यम् । अन्यथा पराजय एवेत्यभिप्रायः । सन्निधाविति सद्यो निर्णयार्थम् (विश्वरूपः)

4. Ascribed to Nārada by *Vyavahāranirṇaya* also (p. 46) but not traced in printed editions of the smṛti.

5. अज्ञातश्चास्मि-ज.

[1]बृहस्पतिर्नारदश्च द्वितीये

श्रुताभियोगं प्रत्यर्थी यदि तत्त्वं प्रपद्यते ।
सा तु संप्रतिपत्तिस्तु शास्त्रविद्भिरुदाहृता ॥

अर्थिना लेखितो योऽर्थः प्रत्यर्थी यदि तत्तथा ।
प्रपद्य कारणं ब्रूयात्प्रत्यवस्कन्दनं हि तत् ॥

'तत्त्वम्' तद्रूपत्वम् । प्रपद्य कारणं ब्रूयादिति । अर्थिनोक्तमर्थं सत्यमेतदित्यभ्युपगम्य प्रत्यर्पितमित्यादिकारणाभिधानेन यदि पूर्वपक्षमवस्कन्दति प्रत्यर्थी तदा तदुत्तरं प्रत्यवस्कन्दनं भवतीत्यर्थः ।

कात्यायनः [१७०]

योऽर्थिनाऽर्थः समुद्दिष्टः प्रत्यर्थी यदि तत्तथा ।
प्रपद्य कारणं ब्रूयादाधर्यं भृगुरब्रवीत् ॥

'आधर्यम्' प्रमाणान्वेषणानर्हत्वं पूर्वपक्षस्येत्यर्थः ।

बृहस्पतिः [३, २१-२४]

आचारेणावसन्नोऽपि पुनर्लेखयते यदि ।
सोऽभिधेयो[2] जितः पूर्वं प्राङ्न्यायः [3]सम्यगुच्यते ॥

तथ्ये तथ्यं[4] प्रयुञ्जीत मिथ्यां मिथ्यां च लेखयेत् ।
कारणं कारणोपेते प्राङ्न्याये तूभयं तथा ॥

1. बृ. ३, १८–१९ ; the second verse is not found in *Nāradasmṛti*. Nor is it in *Manusmṛti* to which *Vyavahāranirṇaya* (p. 51) ascribes it.

2. 'स विनेयो' इति माधवीयपाठः

3. S. B. (a), and द–प्राप्त्वा यः ; प्राङ्न्यायस्तु स उच्यते–वि.

4. S. B. (a)–तथ्यातथ्यं

भयदोषोद्भवा मिथ्या गर्हिता शास्त्रवेदिभिः[1] ।
सत्या[2] संप्रतिपत्तिस्तु धर्म्या सा परिकीर्तिता ॥

प्राङ्न्यायकारणं तथ्यं श्लाघ्यं सद्भिरुदाहृतम् ।
विपरीतमधर्म्यं स्यात्प्रत्यर्थी हानिमाप्नुयात् ॥

'आचारेण' व्यवहारमार्गेण । 'अवसन्नः' अवसादं प्राप्तः भग्न इति यावत् । 'पुनर्लेखयेत्' पुनरभियोगं कृत्वा सभान्तरे भाषां लेखयेत् । सोऽभिधेय इत्यादि, सः अर्थे पूर्वस्मिन् व्यवहारे मया जितः इति[3] यत्राभिधीयते सः प्राङ्न्याय इत्यर्थः ।

व्यासः

मिथ्योत्तरं कारणं वा[4] स्यातामेकत्र चेदुभे ।
सत्ये वापि सहान्येन तत्र ग्राह्यं किमुत्तरम् ॥

मिथ्याकारणयोर्वाऽपि ग्राह्यं कारणमुत्तरम्[5] ।
यत्प्रभूतार्थविषयं यत्र वा स्यात्क्रियाफलम्[6] ॥

उत्तरं तत्र तज्ज्ञेयमसङ्कीर्णमतोऽन्यथा ।

मिथ्याकारणयोर्वापीत्यादि । मिथ्योत्तरकारणोत्तरयोरेकस्मिन्नर्थे सङ्कीर्णयोः कारणोत्तरमाश्रित्य निर्णेतव्यम्[7] । तद्यथा—मदीया गौरमुष्मिन् काले नष्टा सा चैतस्य गृहे तिष्ठतीत्युक्ते, मिथ्यैतद्वदसि तत्कालात्प्रागपि च मद्गृहे स्थिता जातेत्युत्तरम् । सत्यमिथ्याकारणोत्तराणामपि सङ्करे कारणोत्तरमेव

1. द, A. S. B. and S. B (a)-शास्त्रचोदिभिः
2. सत्ये सं-ज, द.
3. जितमिति-उ.
4. द, A. S. B. ज and S. B. (a)-च for वा
5. S. B. (a)-उत्तमम्
6. S. B. (a)-क्रियाकुलम्
7. निहोतव्यं-उ.

ग्राह्यम् । मिथ्याकारणयोर्वापीति वापिशब्दाभ्यां त्रिभिरपि सङ्करे कारण-मेव ग्राह्यमिति दर्शितत्वात् । उदाहरणं यथा—नवत्यभियोगे मिथ्यैतत् षष्टिरेव[1] पणा गृहीतास्तत्रापि त्रिंशत्परिशोधिताः त्रिंशच्च धारयामीति । यत्प्रभूतार्थविषयमिति यदि पुनरेकं प्रभूतार्थविषयमुत्तरं तदा उपादाय निर्णे-तव्यम् । उदाहरणं यथा—शताभियोगे अशीतिर्मिथ्या विंशतिमात्रं गृहीतं तच्च दत्तमित्यत्र[2] मिथ्यांशस्य प्रभूतार्थविषयत्वात् मिथ्योत्तरमेव ग्राह्यम् । पूर्ववादिन एव क्रिया देयेत्यर्थः । 'यत्र वा स्यात् क्रियाफलम्' इति । यत्र मिथ्याकारणादिसङ्करे व्यक्तं निर्णयकारणं पत्रादिकमस्ति, तदुत्तरं ग्राह्य-मप्रभूतार्थमपीत्यर्थः । अतोऽन्यथा सङ्कीर्णमुत्तरं भवतीति शेषः ॥

[3]कात्यायनः [१९१]

प्रथमं कारणं पूर्वमन्यद्गुरुतरं यदि ।
प्रतिवाच्यगतं ब्रूयात्साध्यमेतद्धिनेतरम्[4] ॥

प्रथममेकं कारणमभिधाय ततोऽपरं गुरुतरं यदि कारणं वक्ति तदोत्तरं[5] तत्र प्रमाणमनुसरणीयं, न पूर्वोक्तमित्यर्थः ।

बृहस्पतिः [३, २८]

[6]प्रत्युक्तादन्यदव्यक्तं न्यूनाधिकमसङ्गतम् ।
अव्यापसारं सन्दिग्धं प्रतिपक्षं न लेखयेत् ॥

कात्यायनः [१७५, १८९-१९०]

यद्व्यस्तपदमव्यापि निगूढार्थं तथाकुलम् ।
व्याख्यागम्यमसारं च नोत्तरं स्वार्थसिद्धये ॥

1. द, ज, A. S. B. and S. B. (a) षष्टिरेव ; गौरेव–उ.
2. एतदनन्तरं 'क्रियाफलमिति । यत्र' इत्यन्तो भाग उदयपुरकोशे भ्रष्टः ॥
3. 'कात्यायनः' इत्यारभ्य 'यदि कारणं' इत्यन्तो भागः बिकानीरकोशे भ्रष्टः ॥
4. नोत्तरम्–ज.
5. A. S. B. and S. B. (a)–तदा for तदोत्तरं ; तदा तत्र प्रमाण–ज, द, बि.
6. A. S. B, ज, बि and S. B. (a)–प्रस्तुतादन्य॰ for प्रत्युक्तादन्य॰

पक्षैकदेशे यत्सत्यमेकदेशे च कारणम्[1] ।
मिथ्या चैवैकदेशे च सङ्करस्तदनन्तरम्[2] ॥

न चैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः ।
न चार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयम् ॥

'न चैकत्र विवाद' इत्यादि[3] । मिथ्याकारणयोरुभयत्र क्रिया भवेत् । न च तद्युक्तम्, उभयोः साध्याभावात्[4] । प्राङ्न्यायकारणयोरेकस्य क्रियाद्वयं विरुध्यते । एकसाध्यत्वात् । 'एकत्र' वादिनि[5] ॥

याज्ञवल्क्यः [२, ९-१०]

अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् ।
अभियुक्तं[6] न चान्येन नोक्तं विप्रकृतिं नयेत्[7] ॥

कुर्यात्प्रत्यभियोगं च कलहे साहसेषु च ।

'विप्रकृतिम्' स्वभावादन्यत्वम् ।

बृहस्पतिः [३, ७, ८; २, ४; १, १७३]

पूर्वपक्षे यथार्थं तु न दद्यादुत्तरं तु यः ।
प्रत्यर्थी दापनीयः स्यात्सामादिभिरुपक्रमैः ॥

1. वारणम्–वि.
2. A. S. B, ज and S. B. (a)–तदनुत्तरम्; तदनुत्तरत्–द, वि.
3. A. S. B. and S. B. (a)–जात्यादि
4. साध्याभावेन प्राङ्न्याय–उ.
5. एकत्र च द्वयमिति वादिनि–उ, ज, द.
6. क्तं च नान्येन द, वि.
7. स्वाभियोगमनिस्तीर्य अभियोक्तारं नाभियुञ्जीत, अनवस्थाप्रसङ्गेन व्यवहारासमाप्तेः । अतश्चान्याभियुक्तोऽप्यनभियोज्यः । न च स्वयमुक्तार्थापलापः कर्तव्य इति ॥ (विश्वरूपः)

प्रियपूर्वं वचः साम भेदो [1]वस्तूपदर्शनम् ।
अर्थापकर्षणं दण्डस्ताडनं [2]बन्धनं तथा ॥

उपायैश्चोद्यमानस्तु न दद्यादुत्तरं तु यः ।
अतिक्रान्ते सप्तरात्रे [3]जितोऽसौ दण्डमर्हति ॥

उन्मत्तमत्तनिर्धूता [4]महापातकदूषिताः ।
जडातिवृद्धा बालाश्च विज्ञेयास्ते निरुत्तराः ॥

'निर्धूतः' उद्धूतापमानः[5] । 'निरुत्तराः' व्यवहारयोग्यत्वेनादाप्योत्तराः ।

कात्यायनः [२०६, १९३]

उभयोर्लिखिते वाक्ये प्रारब्धे कार्यनिश्चये ।
अनुक्तं तत्र यो ब्रूयात्तदर्थात्स तु हीयते ॥

*पूर्वोत्तरे निविष्टे तु विचारे संप्रवेशिते ।
*निर्णिक्तं तु तयोस्तत्र वचनं वादिनो भृगुः ॥

मोहाद्वा यदि वा शाठ्याद्यन्नोक्तं पूर्ववादिना ।
[6]उत्तरान्तर्गतं [7]चापि तद्ग्राह्यमुभयोरपि ॥

*श्रुतं च लिखितं चैव चिन्तितं तद्विशोधितम् ।
*प्रथमेऽहनि तस्यैव विवादविधिरुच्यते ॥

1. A. S. B, ज, द, and S. B. (a)–भेदनं तूपदर्शनम् । भेदस्तु भयदर्शनम्–बि.

2. वञ्चनं–बि.

3. जितेऽसौ–ज.

4. तमहा–ज, द.

5. ज, द, A. S. B. and S. B. (a)–उद्धृतापमान ; उद्भूतापमानः–उ.

6. A. S. B, ज, द, and S. B. (a)–उत्तमान्तर्गतं

7. A. S. B, ज, द, बि, and S. B. (a)–वापि

* कात्यायनस्मृतिसारोद्धारे न दृश्यन्ते

'तदर्थात्' अनुक्तार्थात्। 'पूर्वोत्तरे' भाषायामुत्तरे च[1]। 'निर्णिक्तम्'[2] शोधितम्। भाषालेखनसमये मोहात् शाठ्याद्वा यन्नोक्तं तद्विचारकालेऽपि यदि केनचित्प्रकारेण व्यक्तं भवति तदा तदपि भाषान्तर्गतं[3] कार्यम्। एवमुत्तरेऽपि [4]बोध्यम्।

इत्युत्तरस्वरूपम्

---

1. A. S. B, ज, द, and S. B. (a)-वा for च
2. A. S. B, ज, द, and S. B. (a)-निर्णिक्तम्; निःशिक्तम् उ.
3. गीतं-ज.
4. बोद्धव्यम्-द.

९

# अथ प्रतिनिधिः

तत्र कात्यायनः [८९-९०]

अधिकारोऽभियुक्तस्य नेतरस्यास्त्यसङ्कृतेः[1] ।
इतरोऽप्यभियुक्तेन प्रेरितोऽविकृतो मतः[2] ॥

समर्पितोऽर्थिना[3] योऽन्यः परो धर्माधिकारिणि ।
प्रतिवादी स विज्ञेयः प्रतिपन्नश्च यः स्वयम् ॥

'प्रतिवादी' वादिप्रतिनिधिः । 'प्रतिपन्नः' स्वयं प्रत्यर्थिना योऽन्योऽपि वादित्वेनानुमतः ॥

बृहस्पतिः [१, १४२]

अप्रगल्भजडोन्मत्त[4]वृद्धस्त्रीबालरोगिणाम् ।
पूर्वोत्तरं वदेद्बन्धुर्नियुक्तोऽन्योऽथवा नरः ॥

'पूर्वोत्तरम्' भाषामुत्तरम् ।

कात्यायनः [९३, ९५]

ब्रह्महत्यासुरापाने स्तेये गुर्वङ्गनागमे ।
अन्येष्वसह्यवादेषु प्रतिवादी न दीयते ॥

मनुष्यमारणे[5] स्तेये परदाराभिमर्शने ।
अभक्ष्यभक्षणे चैव कन्याहरणदूषणे ॥

पारुष्ये कूटकरणे नृपद्रोहे तथैव च ।
प्रतिवादी न दाप्यः स्यात्कर्ता तु विवदेत्स्वयम् ॥

1. ते–द; तः–वि.
2. स्मृतिचन्द्रिका (पृ. ७२)—'प्रतिरोधीकृतो'; प्रेरितोऽधिकृतो मतः–बि.
3. 'समर्पितो' इत्यारभ्य 'वादित्वेनानुमतः' इत्यन्तो भागः उदयपुरकोशे भ्रष्टः । भ्रंशाशानेन च 'समर्पितोऽर्थिना योऽन्यो विवादित्वेन नामतः' इति श्लोकार्धं इवात्र पठितः ।
4. S. B. (a)–वृद्धस्त्री
5. A. S. B, ज, द, and S. B. (a)–मनुष्यकारणे

कात्यायननारदौ [का, ९१; ना, २, २२]

अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा ।
यो यस्यार्थे[1] विवदते तयोर्जयपराजयौ ॥

बृहस्पतिः [३, ३०]

ऋत्विग्वादे नियुक्तश्च समौ संपरिकल्पितौ ।
यत्र स्वाम्याप्नुयात्पुण्यं हानिं वादेऽथवा जयम् ॥

नारदकात्यायनौ [ना. २, २३]

यो न भ्राता न च पिता न पुत्रो न नियोगकृत् ।
परार्थवादी दण्ड्यः स्याद्व्यवहारेषु विब्रुवन्[2] ॥

कात्यायनः [९२]

दासाः कर्मकराः शिष्या नियुक्ता बान्धवास्तथा ।
वादिनो न च दण्ड्याः स्युः यः स्वतोऽन्यः[3] स दण्डभाक् ॥

बृहस्पतिः [३, ३१, ३२]

पूर्वोत्तरेऽभिलिखिते[4] यत्र वादी प्रमीयते ।
प्रत्यर्थी वा [5]सुतस्ताभ्यां व्यवहारं विशोधयेत् ॥

अनिर्णीते विवादे तु विप्रलब्धो भवेन्नरः[6] ।
जयदानं दमं[7] न स्यात्तस्मात्कार्यं विनिर्णयेत् ॥

इत्युत्तरपादः

1. यस्यार्थे इति मु. नारदीये

2. अनेके पुरुषाः कामक्रोधलोभग्रस्ताः परकीयार्थं एवासंबध्यमाना अपि अनियुक्ता अपि धनिकत्वं कृत्वा पराम्विद्वेषयन्ति । तन्निवारणार्थं श्लोक, इति—असहायः

3. A. S. B, ज, द and S. B. (a)–यस्ततोऽन्यः

4. A. S. B, ज द and S. B. (a)–अभिलपिते

5. स्वतः–द.

6. भवेन्नृपः–बि.

7. A. S. B, द, and S. B. (a)–दमो; जयदानदमौ–ज.

# १०

# अथ प्रत्याकलितम्

तत्र दृष्टलक्षणम् ।

तत्र मनुः [८, २५-२६]

[1]वाक्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम् ।
स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च ॥

आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन[2] च ।
नेत्रवक्त्रविकारेण [3]लक्ष्यतेऽन्तर्गतं मनः ॥

'विभावयेत्' निश्चिनुयात् । 'भावम्' अभिप्रायम् । 'नृणाम्' विवादि-साक्ष्यादीनाम् । 'आकारो' विकारः स्वाभाविकानां [4]स्वरादीनामन्यथात्वम् । तत्र स्वरविकारः गद्गदादिः[5] । वर्णविकारो गात्ररूपविपर्ययः । इङ्गितं स्वेद-वेपथुरोमाञ्चादि । [6]'चक्षुषा' सप्रेमक्रोधदृष्टिपातेन । [7]'चेष्टितेन' हस्तनिष्पेषणभ्रू-विक्षेपादिना । लोके चैतेषां स्वरादीनामन्तर्गतमनःप्रकाशनसामर्थ्यं प्रसिद्ध-मित्याह—आकारैरित्यादिना । 'आकारैः' आक्रियन्ते विक्रियन्त इत्याकाराः इङ्गितादयः । गतिरत्र स्खलन्ती स्वभावतोऽन्यथाभूता । भाषितमत्र पूर्वा-परविरुद्धं वचनम् । 'वक्त्रविकारः' आस्यशोषादिः ।

1. वाह्यैः इति मुद्रितपाठः
2. भाषणेन–ज
3. गृह्यते इति मुद्रितमनौ; वि.
4. स्ववादीनाम्–द.
5. गद्गदतादिः–बि.
6. 'चक्षुषा'–संभ्रमक्रोधदृष्टिपातेन (मेधातिथिः)
7. 'चेष्टितेन' हस्तनिक्षेपभ्रूविक्षेपादिना–(मेधातिथिः)

कात्यायनः [३८५-३८६]

आकारेङ्गितचेष्टाभिस्तस्य भावं विचारयेत् ।
प्रतिवादी भवेद्धीनः सोऽनुमानेन लक्ष्यते ॥

कम्पः स्वेदोऽथ वैवर्ण्यमोष्ठशोषाभिमर्शनम्[1] ।
भूलेखनं स्थानहानिस्तिर्यगूर्ध्वनिरीक्षणम् ॥

स्वरभेदश्च दुष्टस्य चिह्नमाहुर्मनीषिणः ।

'[2]आकारः' प्रक्रोधजनिता शरीरविकृतिः। प्रतिवादीति द्वयोरपि ग्रहणम् अन्योन्यं प्रतिपक्षवादात् । 'अभिमर्शनम्' जिह्वया ओष्ठप्रान्तलेहनम् ।

याज्ञवल्क्यः [२, १३-१५]

देशाद्देशान्तरं याति परिलेढि च सृक्किणी ।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥

परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ।
वाक् चक्षुः पूजयति नो तथौष्ठौ निर्भुजत्यपि ॥

स्वभावाद्विकृतं गच्छेन्मनोवाक्कायकर्मभिः ।
अभियोगे च साक्ष्ये वा स दुष्टः परिकीर्तितः ॥

'सृक्किणी' ओष्ठप्रान्तौ । 'वाक् चक्षुः पूजयति नो' परोक्तां वाचं प्रतिवचनदानेन नो पूजयति चक्षुर्वा प्रतिवीक्षणेन। 'निर्भुजति' कुटिलीकरोति ।

रामायणे [युद्धकाण्ड, १७, ६४]

आकारश्छाद्यमानोऽपि न शक्यो विनिगूहितुम् ।
बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम् ॥

1. वीरमित्रोदय, पृ. ९६, 'शोषाभिमर्शने'; शोषावमर्शने–बि. शोषावमर्शनम्–उ.

2. A. S. B, च, द, and S. B. (a)–आकारोऽत्र क्रोध; आकारोऽत्र क्रोधादिजनिता–बि.

कालिकापुराणे

वाचं न वदति त्रस्तः कम्पः स्वेदोऽथ वा न तु ।
विकारो वाऽन्यथा गात्रे [1]मतिर्वा स्यान्न चान्यथा ॥

स जयी यद्यकोपः स्यान्न चेत्प्राक्तन एव हि ।

'न तु' इति कम्पस्वेदादिभिः सम्बध्यते । 'न च' इति विकारो वेत्यनेन सम्बध्यते । 'प्राक्तन एव' पूर्ववाद्येव । जयी स्यादित्यन्वयः ।

इति दुष्टलक्षणम्

---

1. गतिर्वा–ज.

# ११

## अथ हीनः

तत्र मनुः [८- ५३-५८]

[1]अदेशं यश्च दिशति निर्दिश्यापह्नुते च यः ।
यश्चाधरोत्तरानर्थान्विगीतान्नावबुध्यते ॥

[2]अपदिश्योपदेशं च पुनर्यस्त्वपधावति ।
सम्यक् प्रणिहितं चार्थं[3] पृष्टः सन्नाभिनन्दति ॥

असंभाष्ये साक्षिभिश्च देशे संभाषते मिथः ।
निरुध्यमानं प्रश्नं च नेच्छेद्यश्चापि निष्पतेत् ॥

ब्रूहीत्युक्तश्च न ब्रूयादुक्तं च न विभावयेत् ।
न च पूर्वापरं विद्यात्तस्मादर्थात्स हीयते ॥

[4]सन्ति ज्ञातार[5] इत्युक्त्वा दिशेत्युक्तो दिशेन्न यः ।
धर्मस्थः कारणैरेतैर्हीनं तमपि निर्दिशेत् ॥

[6]अभियोगे न चेद्ब्रूयाद्वध्यो दण्ड्यश्च धर्मतः ।
न चेत्त्रिपक्षात्प्रब्रूयाद्धर्मं प्रति पराजितः[7] ॥

1. अदेशं–ज, द; अदेयं–उ. अदेश्यं इति मुद्रितपाठः

2. अपदेश्यापदेशं च–ज; अपदिश्यापदेशं च–द.

3. चार्थम्–द.

4. 'ज्ञातारः सन्ति मेत्युक्त्वा, 'साक्षिणः सन्ति मेत्युक्त्वा, इति मुद्रितपाठौ.

5. ज्ञातारः साक्षिणः पुरुषा मम सन्तीत्युक्त्वा यदोच्यते कथ्यतामिति तदा तूष्णीक आस्ते–न तान् देशनामजातिभिर्विशेषणैः कथयति–तदा एतैः प्रत्येकं पूर्वमुक्तैः कारणैरिह हीनोऽसौ व्यवहाराद्भ्रष्ट इति–मेधातिथिः

6. 'अभियोक्ता', इति मेधातिथिपाठः

7. अभियोक्ता अर्थी । प्रत्यर्थी तु न चेत् त्रिपक्षात् ब्रूयादित्यर्थः–मेधातिथिः

'अदेशो' यत्रार्थिप्रत्यर्थिनौ न तस्मिन् काले स्थितौ। 'निर्दिश्य' देशादिकमिति शेषः। 'अधरोत्तरानर्थान्' पौरस्त्यानौपरिष्टांश्च। 'विगीतान्'[1] विरुद्धान्[2]। 'अपदिश्य' उपन्यस्य। [3]'अपदेशम्' व्याजम्।'अपधावति' अपसरति। 'सम्यक् प्रणिहितमर्थम्' अनाकुलं निश्चितमुक्तम्। 'पृष्टः' यदनेनोक्तं तत्र किं ब्रवीषि केन वा प्रमाणेन साधयसि स्वपक्षमित्याद्युक्तः। 'असंभाष्ये' संभाषणानर्हे देशे। 'निष्पतेत्' अनाख्याय ग्रामान्तरं निर्गच्छेत्। ब्रूहीत्यादिना प्राप्तस्य पुनर्वचनं दार्ढ्यार्थम्। 'धर्मस्थः' धर्माधिकरणस्थः॥

नारदकात्यायनौ [ना. ३, १६५]

न परेण समुद्दिष्टानुपेयात्साक्षिणो रहः।
भेदयेन्नैव चान्येन हीयते तैः[4] समाचरन्॥

नारदः [२, ३२-३३; २४; १, ६६, ५८-५९]

पलायतेऽभियुक्तश्च[5] मौनी साक्षिपराजितः।
स्वयमभ्युपपन्नश्च अवसन्नश्चतुर्विधः॥

अन्यवादी क्रियाद्वेषी नोपस्थायी निरुत्तरः।
आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः॥

पूर्ववादं परित्यज्य योऽन्यमालम्बते नरः।
वादसंक्रमणं [6]ज्ञेयो हीनवादी स वै नरः॥

1. विगीतान् विरुद्धानभिहितान्—मेधातिथिः
2. S. B. (a)-अवरुद्धान् for विरुद्धान्
3. आदेश एव अपदेशः तमपदिश्य कथयित्वा। अथवा अपदेशो व्याजः तमपदिश्य उपन्यस्य-मेधातिथिः
4. S. B. (a), ज and द-हीयेन्नैवं; A. S. B-हीयेतेवं; हीयतेव-वि.
5. पलायते य अहूतो इति मुद्रितनारदीये.
6. S. B. (a)-वादमाक्रमणं; वादसंक्रमणो ज्ञेयः-ज.

यमर्थमभियुञ्जीत न तं विप्रकृतिं नयेत् ।
नान्यत्पक्षान्तरं गच्छेद्गच्छन् पूर्वात्स हीयते ॥

[1]सापदेशं हरेत्कालमब्रुवंश्चापि संसदि ।
उक्त्वा वाचो विब्रुवंश्च हीयमानस्य लक्षणम् ॥

आहूतो यः पलायेत[2] प्राप्तश्च विवदेन्न यः ।
विनेयः स भवेद्राज्ञा हीन एव विवादतः ॥

'अभ्युपपन्नः' अङ्गीकृतपराजयः । 'आसन्नः' प्राप्तावसादः ।

याज्ञवल्क्यः [२, १६]

संदिग्धार्थं स्वतन्त्रो यः साधयेद्यश्च निष्पतेत् ।
न चाहूतो वदेत्किञ्चिद्धीनो दण्ड्यश्च स स्मृतः[3] ॥

'स्वतन्त्रः' राजनिवेदननिरपेक्षो, यदि 'साधयेत्' गृह्णीयादित्यर्थः ।

अनिवेद्य तु यो राज्ञे संदिग्धेऽर्थे प्रवर्तते ।
प्रसह्य स विनेयः स्यात्सर्वोऽप्यर्थो न सिध्यति ॥

इति [4]नारदवचनात् ।

कात्यायनः [१९६-१९७]

लेखयित्वा तु यो वाचा न्यूनमप्यधिकं पुनः ।
वदेद्वादी स हीयेत नाभियोगं तु सोऽर्हति ॥

न मयाभिहितं कार्यमभियुज्य परं वदेत् ।
विब्रुवंश्च भवेदेवं हीनं तमपि निर्दिशेत् ॥

1. सापदेशं–वि., सोपदेशं–उ.

2. पलायते य आहूतः इति मु. ना.

3. यथैव यो राज्ञाहूतो 'निष्पतेत्' प्रणश्येत्, यो वा राजान्तिकं गतः संभावितप्रतिभाषोऽपि न किञ्चिद्वदेत् स यथा पराजितो दण्डार्हश्च स्यात्, एवं योऽपि प्रत्यर्थिसंदिग्धं न्यायेन निश्चयमकृत्वैव हठात् स्वतन्त्रः साधयेत् सोऽपि पराजितो दण्ड्यश्चेत्यभिप्रायः–विश्वरूपः

4. १, ४६.

बृहस्पतिः [३, ३३-३९]

साक्षिणस्तु समुद्दिश्य यस्तु तान्न विवादयेत् ।
त्रिंशद्रात्रात्त्रिपक्षाद्वा तस्य हानिः प्रजायते ॥

[1]आहूतः प्रपलायेत मौनी साक्षिपराजितः ।
स्ववाक्यप्रतिपन्नश्च हीनवादी चतुर्विधः ॥

प्रपलायी त्रिपक्षेण मौनकृत्सप्तभिर्दिनैः ।
साक्षिभिर्भग्नस्तत्क्षणेन प्रतिपन्नश्च हीयते ॥

निवेदितस्याकथनमनुपस्थानमेव च ।
पक्षार्थे दूष्य मौनं च हीयमानस्य लक्षणम् ॥

महापापोपपापाभ्यां पातकेनाथ संसदि ।
योऽभिशस्तस्तत्क्षमते संयुक्तं तं विदुर्जनाः ॥

तस्माद्यत्नेन कर्तव्यं बुधेनात्मविशोधनम् ।
यद्यद्गुरुतरं कार्यं तत्तत्पूर्वं विशोधयेत् ॥

महापापाभिशस्तो यः पातकात्त्रातुमिच्छति ।
पूर्वमङ्गीकृतं तेन जितोऽसौ दण्डमर्हति ॥

'पूर्वम्' महापातकम् ।

नारदः [२, २५]

[2]सर्वेष्वर्थविवादेषु वाक्छले नावसीदति ।
पशुस्त्रीभूम्यृणादाने शास्योऽप्यर्थाच्च हीयते[3] ॥

'अर्थात्' पश्वादेरुक्तात् ।

1. 'आहूतप्रपलायी' इति स्मृ. चन्द्रिकापाठः
2. 'सर्वेष्वपि विवादेषु 'वाक्छले नापहीयते' इति मु. ना.
3. अन्येषु सर्वेषु विवादेषु वाक्छले नापहीयते नावसायं प्राप्नोति—इति असहायः

बृहस्पतिः [३, ४०-४२]

आघारकरणे दिव्ये कृत्वोपस्थाननिर्णयम् ।
नोपस्थितो यदा कश्चिच्छलं तत्र न कारयेत् ॥

देवराजकृतो दोषस्तस्मिन् काले यदा भवेत् ।
अवधित्यागभावेन[1] न भवेत्स पराजितः ॥

पूर्वोत्तरे निविष्टे तु विचारे संप्रवर्तिते ।
प्रथमं ये मिथो यान्ति दाप्यास्ते द्विगुणं दमम् ॥

---

1. त्यागमात्रेण इति माधवीयपाठः; वि.

# १२

## अथ संधिः

तत्र बृहस्पतिः [३, ४३-४५; ४८-४९]

[1]पूर्वोत्तरेऽभिलिखिते प्रक्रान्ते कार्यनिर्णये ।
द्वयोः सन्तप्तयोः[2] सन्धिः स्यादयःखण्डयोरिव[3] ॥

साक्षिसभ्यविकल्पस्तु भवेत्तत्रोभयोरपि ।
[4]दोलायमानौ यौ संधिं कुर्यातां तौ[5] विचक्षणौ ॥

प्रमाणसमता यत्र[6] भेदः शास्त्रचरित्रयोः ।
तत्र राजाज्ञया संधिरुभयोरपि शस्यते ॥

धर्मार्थोपग्रहः कीर्तिः भवेत्साम्येन भूभृतः ।
न क्लिश्यन्ते साक्षिसभ्या वैरं च[7] विनिवर्तते ॥

निग्रहानुग्रहं दण्डं धर्मं प्राप्य यशोऽयशः[8] ।
विग्रहाज्जायते नृणां पुनर्द्वेषस्तथैव च ॥

तस्मात्कुलगणाध्यक्षा धर्मज्ञाः समदृष्टयः ।
अद्वेषलोभाद्यद्ब्रूयुस्तत्कर्तव्यं विजानता ॥

1. द, A. S, B and S. B (a)-सर्वोत्तरे; विलिखिते-ज.
2. द्वयोरुत्तमयोः-ज.
3. पिण्डयोरिव-वि.
4. दोलायमानयोः संधिः कुर्यातां तु विचक्षणौ-वि.
5. A. S. B, ज, द and S. B-(a)-कुर्वीयातां
6. द, A. S. B. and S. B. (a)-प्रथमं संमता यत्र; प्रथमं समता यत्र-ज.
7. A. S. B, ज, द and S. B. (a)-read च; उ reads न for च.
8. धर्मप्राप्तयशो यशः-वि., उ.

[1]साक्षिसभ्यविकल्प इति। उभयोरपि अर्थिप्रत्यर्थिनोर्यत्र साक्षिसभ्यविकल्पो भवेत् किमेते वक्ष्यन्तीति, तत्र दोलायमाने कार्यनिर्णये कथं भविष्यतीति सन्दिग्धे यौ सन्धिं कुर्यातां[2] तौ विचक्षणावित्यर्थः। समतेति। उभयोरप्यर्थिप्रत्यर्थिनोः पक्षे सभ्यानां प्रमाणसामान्यं[3] यत्र प्रतिभाति। यत्र च भेदः शास्त्रचरित्रयोः। शास्त्रे शास्त्रान्तरेण विप्रतिपत्तिः[4], व्यवहारे च[5] व्यवहारान्तरेण विप्रतिपत्तिस्तत्र राजाज्ञया संधिः प्रशस्यत इत्यर्थः। निग्रहानुग्रहमिति। अर्थिप्रत्यर्थिनोर्विग्रहे[6] सत्यवस्थितानि निग्रहादीनि भवन्तीत्यतः संधिः श्रेयानित्यर्थः।

---

1. "साक्षिसभ्यविकल्प इति॥ उभयोरप्यर्थिप्रत्यर्थिनोः किमेते वक्ष्यन्तीति साक्षिसभ्यविषयको विकल्पो भवेत्। तत्र कार्यनिर्णये दोलायमानौ संदेहदोलारूढौ यौ अर्थिप्रत्यर्थिनौ संधिं कुर्यातां तौ विचक्षणौ चतुरौ पराजयजनिताप्रतिष्ठादितिरोधानादित्यर्थ इति कल्पतरुः"—इति शरभोजीकृतव्यवहारप्रकाशे.

2. A. S. B, ज, द and S. B. (a)-कुरुतः

3. प्रमाणसाम्यं-बि.

4. त्तिः तत्र राजाज्ञया-ज, द.

5. A. S. B. and S. B. (a)-omit व्यवहारे च

6. विनिग्रहे—ज.

# १३

## अथ क्रियादानम्

तत्र बृहस्पतिः [४, २]

ये तु तिष्ठन्ति करणे तेषां सभ्यैर्विभावना ।
[1]कारयित्वोत्तरं सम्यग्दातव्यैकस्य वादिनः ॥

प्रतिज्ञां साधयेद्वादी प्रत्यर्थी कारणे तथा ।
प्राग्वृत्तवादी विजयं जयपत्रेण भावयेत् ॥

'ये तु तिष्ठन्ति' विप्रतिपत्तिवादिन इति शेषः । 'विभावना' क्रिया दातव्येत्यन्वयः । प्रमाणं ब्रूहीत्यर्थः । 'प्रतिज्ञां साधयेत्' प्रतिज्ञातमर्थं प्रमाणेन साधयेत् । एतच्च मिथ्योत्तरे । प्रत्यर्थी कारणं साधयेदित्यर्थः । एतच्च प्रत्यवस्कन्दनोत्तरे ॥

व्यासः[2]

प्राङ्न्याये कारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम् ।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ [3]न साधयेत् ॥

कात्यायनः [२११]

कारणात्पूर्वपक्षोऽपि ह्युत्तरं प्रतिपद्यते ।
अतः क्रिया सदा प्रोक्ता पूर्वपक्षप्रसाधिनी ॥

1. A. S. B, S. B. (a), ज and द--कलयित्वा (निश्चयित्वा)
2. अयं बृहस्पतिश्लोक [३, १३] इति व्यवहारनिर्णये (पृ. ६१)
3. स for न--उ. न संभवेत् इति व्यवहारनिर्णये

मनुः [८, ५२]

अपह्नवेऽधमर्णस्य देहीत्युक्तस्य संसदि ।
अभियोक्ता दिशेद्देशं[1] कारणं वाऽन्यदुद्दिशेत् ॥

यदा राज्ञा[2] प्राड्विवाकेन च 'संसदि' व्यवहाराधिकरणादिदेशे उत्तमर्णवचनमित्युक्तस्यापह्नवोऽधमर्णस्य भवति तदा 'अभियोक्ता' धनस्य प्रयोक्ता उत्तमर्णो 'दिशेद्देशं' साक्षिणो प्रमाणभूतान् निर्दिशेत् 'अन्यद्वा कारणं' लेख्यादि निर्दिशेदित्यर्थः[3] ।

नारदः [३, १६३]

द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु ।
पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिणः ॥

याज्ञवल्क्यः [२, १७]

साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ।
पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः[4] ॥

'पूर्ववादिनः' पूर्वकालमेव मया क्रीतं प्रतिगृहीतं चेत्येवं वादिनः ।

नारदः [४, १६४; २, ३१]

आधर्यं पूर्वपक्षस्य यस्मिन्नर्थवशाद्भवेत् ।
विवादे साक्षिणस्तत्र प्रष्टव्याः प्रतिवादिनः[5] ॥

1. A. S. B, ज, and S. B. (a)–देशं

2. राजा–द.

3. व्यवहाराधिकरणादिदेशे देह्युत्तमर्णाय धनमिति उक्तस्य अपह्नवो अपलापः अधमर्णेन भवति तदाभियोक्ता धनस्य प्रयोक्ता उत्तमर्णो दिशेद्देशं साक्षिणं प्रमाणभूतं निर्दिशेत् (मेधातिथिः)

4. तत्र द्वयोः साक्ष्यभ्युपगमे पूर्ववादिन एव साक्षिणो भवेयुः तत्प्राधान्यात् व्यवहारप्रवृत्तेः । यत्र त्वप्रमाणीकृतः पूर्वः पक्षः तत्रोत्तरवादिन एव साक्षिणः स्युः—(विश्वरूपः)

5. तत्राधरभावो लाघवं असाध्यमानत्वं पूर्वपक्षस्य यस्मिन् भवति विवादे उत्तरपक्षो गरीयान् साध्यास्तदा साक्षिणः प्रतिवादिना प्रष्टव्याः—(असहायः)

[1]कारणप्रतिपत्तौ तु पूर्वपक्षे विरोधिते ।
अभियुक्तेन वै भाव्यं विज्ञेयं पूर्वपक्षवत् ॥

'कारणप्रतिपत्तौ' प्रत्यवस्कन्दने । 'पूर्वपक्षवत्' यथा भाषावादी मिथ्योत्तरे सति स्वपक्षं साधयति तथा कारणवादी स्वपक्षं साधयेदित्यर्थः ।

<u>व्यासः</u>

[2]प्राङ्न्यायजयपत्रेण प्राड्विवाकादिभिस्तथा ।
सत्यवादी समाप्नोति [3]पद्यते न निवेदितम् ॥

'सत्यवादी' यथार्थवादी प्राङ्न्यायवादी ।

इति प्रत्याकलितपादः

---

1. कारणप्रतिपत्या च, इति मु. नारदीये
2. प्राङ्न्यायैर्जयपत्रेण—ज, द.
3. वदानेन निवेदितम्—ज, द.

# १४

## अथ क्रियापादः

### तत्र प्रमाणविषयः

तत्र बृहस्पतिः [४, ५]

श्रुत्वा पूर्वोत्तरं सभ्यैर्निर्दिष्टा यस्य भावना ।
विभावयेत्प्रतिज्ञातं [1]सोऽखिलं लिखितादिना ॥

कात्यायनः [२१३, २२२]

वादिना यदभिप्रेतं स्वयं साधयितुं स्फुटम् ।
तत्साध्यं साधनं येन तत्साध्यं [2]साध्यतेऽखिलम् ॥

सारभूतं पदं मुक्त्वा [3]असाराणि बहून्यपि ।
संसाधयेत्क्रियां यां तु तां जह्यात्सारवर्जिताम् ॥

पक्षद्वयं साधयन्तीं[4] तां जह्याद्दूरतः क्रियाम् ।
क्रियां बलवतीं[5] मुक्त्वा दुर्बलां योऽवलम्बते ॥

स जयेऽवधृते[6] सभ्यैः पुनस्तां नाप्नुयात् क्रियाम् ।

नारदः [१, ६२-६३]

निर्वृत्ते[7] व्यवहारे तु[8] प्रमाणमफलं भवेत् ।

1. A. S. B. and S. B. (a)-योऽखिलं
2. संधिते—ज.
3. निस्साराणि इति वी. मि. १०८
4. साधयेद्या—बि. साधयेद्वा इति वी. मि.
5. A. S. B. and S. B. (a)-मूलवतीं
6. द, S. B. (a) and A. S. B-जये; जयेऽवधृते सभ्यैः-ज; स जयी वृते सभ्यैः (!)-उ.
7. द, A. S. B. and S. B. (a)-निर्णिक्ते; निर्मिते-ज, बि.
8. निर्णिक्तव्यवहारेषु इति मुद्रितनारदीये

[1]लिखितं साक्षिणो वापि पूर्वमावेदितं न चेत् ॥

यथा पक्केषु धान्येषु निष्फला प्रावृषो गुणाः ।
[2]निर्वृत्तव्यवहाराणां प्रमाणमफलं भवेत्[3] ॥

याज्ञवल्क्यः [२, ७-८]

ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ।
तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा ॥

अर्थीति द्वयोरप्यर्थिनोरुपादानम् । [4]स्वपक्षसाधनेनार्थित्वेन द्वयोरपि ग्रहणात् ।

नारदः [१, ६]

सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता ।
[5]तद्धानौ हीयते वादी तरंस्तामुत्तरो भवेत् ॥

'तरन्' निर्वाहयन् । 'उत्तरो' विजयवान् ।

बृहस्पतिः [४, ६, ८]

द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी तथा ।
एकैकानेकधा भिन्ना ऋषिभिस्तत्त्ववेदिभिः ॥

साक्षिलेख्यानुमानं च मानुषी त्रिविधा क्रिया ।
[6]धटाद्या धर्मजान्ता[7] च दैविकी नवधा स्मृता ॥

1. 'लिखितं' इत्यारभ्य सार्धश्लोकः बिकानीरकोशे भ्रष्टः ।

2. निर्णिक्तव्यवहाराणामिति मुद्रितनारदीये

3. प्राप्तावसरं यदुपन्यस्तं भवति तत्प्रदुष्टसाक्षिकं परीक्ष्य परिहरेत् । यत्पुनरतिक्रान्तस्वकीयावसरं तद्भूतमप्युपन्यस्तं वादिप्रमादात्तस्य ग्रन्थिच्छुटितद्रव्यमिव तदेवापुण्यैरेव तद्भूतं प्रणष्टम्—(असहायः)

4. स्वपक्षसाधनार्थित्वेन–द; साधनार्थेन–बि.

5. द, ब, A. S. B. and S. B. (a)–तद्धाचा

6. धटाद्या इति अर्धश्लोकः वीरमित्रोदये उक्तः (पृ. ११०); स्मृ. च. पृ. ११४ इह:

7. न्त्या च दैवी नवविधा स्मृता–बि.

साक्षी द्वादशभेदस्तु लिखितं दशधा स्मृतम् ।
अनुमानं च द्विविधं नवधा दैविकी क्रिया ॥

कात्यायनः [२१४, २३३]

साक्षिणो लिखितं भुक्तिः प्रमाणं त्रिविधं विदुः ।
लेशोद्देशस्तु युक्तिः [1]स्याद्दिव्यानीह विषादयः ॥

ऋणं लेख्यं साक्षिणो वा युक्तिलेशादयोऽपि[2] च ।
दैविकी वा क्रिया प्रोक्ता प्रजानां हितकाम्यया ॥

याज्ञवल्क्यः [२, २२]

प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् ।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥

नारदबृहस्पती[3]

[4]दिवा कृते कार्यविधौ ग्रामेषु नगरेषु च ।
संभवे साक्षिणां चैव न दिव्या भवति क्रिया ॥

कात्यायनः [२१८, २१९, २२३]

यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम् ।
मानुषीं तत्र गृह्णीयान्न तु दैवीं क्रियां नृपः ॥

यद्येकदेशप्राप्तापि क्रिया विद्येत मानुषी ।
[5]सान्याय्या न तु पूर्णापि दैविकी वदतां नृणाम् ॥

1. 'लेख्योद्देशस्तु युक्तिः स्यात्'—वीरमित्रोदय, पृ. ११०
'लेखोद्देशस्तु युक्तिः स्यात्'-वि.

2. लेख्यादयो-द.

3. ना., २, २९; बृ. ७, १०.

4. दिव्या-वि.

5. सान्याय्या ननु पूर्णापि-द; साम्या यानन्यपूर्णापि-उ.

क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु ।
लेख्ये च सति वादेषु न स्याद्दिव्यं न साक्षिणः ॥

'एकदेशप्राप्ता' प्रतिज्ञातैकभागविषया ।

<u>पितामहः</u>[1]

[2]स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत् ।
साक्षिभिर्लिखितेनाथ भुक्त्या चैतान् प्रसाधयेत् ॥

<u>बृहस्पतिः</u> [४, १०]

ऋणादिषु तु[3] कार्येषु कल्पयेन्मानुषीं क्रियाम् ।

<u>कात्यायनः</u> [२३९, २२७, २२४, २२५, २२६, २२९]

वाक्पारुष्ये च भूमौ च दिव्यं न परिकल्पयेत् ।
दत्वादत्ते तथादत्ते[4] स्वामिनां निर्णये सति ॥

विक्रयादानसंबन्धे कृत्वा धनमनिच्छति ।
द्यूते समाह्वये चैव विवादे समुपस्थिते ॥

साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेख्यकम् ।
पूगश्रेणिगणादीनां या स्थितिः परिकीर्तिता ॥

1. स्मृतिचन्द्रिका, पृ. ५३.

2. तदपि लिखितसाक्ष्यादिसंभवे दिव्यानि परिवर्जयेदिति व्याख्येयम् । ननु विवादान्तरेष्वपि दिव्यानामवकाश एव । ऋणादिषु विवादेषूक्तलक्षणसाक्ष्युपन्यासेऽर्थिना कृतेऽपि प्रत्यर्थी दण्डमुपगम्यावष्टम्भेन दिव्यमालम्बते, तदा दिव्यमपि भवति । साक्षिणामाश्रये दोषसम्भवाद्दिव्यस्य निर्दोषत्वात् । स्थावरेषु विवादेषु, पुनः प्रत्यर्थिना दण्डावष्टम्भेन दिव्यावलम्बने कृते लेख्यसाक्ष्यादिदृष्टप्रमाणसम्भवे न दिव्यं ग्राह्यमिति पितामहवचनस्यार्थः । न पुनरस्थावरिकदिव्यनिराकरणार्थं तद्वचनम् । तथात्वे लिखितसाक्ष्यभावे स्थावरविवादेष्वनिर्णयप्रसङ्गात् ॥ (व्यवहारनिर्णय, पृ. १९२) ॥

3. ऋणादिकेषु इति व्यवहारसौख्यपाठः.

4. दत्वादत्ते तथादत्ते स्वामिनां–ज, द; दत्तादत्तेऽथ भृत्यानां–ड.

तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः ।
*द्वारमार्गक्रियाभोगजलवाहादिके तथा ॥

*भुक्तिरेव हि गुर्वी स्यान्न दिव्यं न च साक्षिणः ।
प्रक्रान्ते साहसे वादे पारुष्ये दण्डवाचिके ॥

बलोद्भूतेषु कार्येषु साक्षिणो दिव्यमेव च[1] ।

'दत्त्वदत्ते' दत्तमिति प्रतिश्रुत्यानर्पिते[2] । '[3]तथादत्ते' पुनराच्छिद्य गृहीते । स्वामिना निर्णये सतीति । एतत्स्वामिकमेतदिति निश्चये सति । दत्त्वादत्तविवादेषु साक्षिणः प्रमाणं न पुनर्दिव्यं न च लेखकं चेत्यर्थः । 'धनं' मूल्यरूपम् । 'अनिच्छति' दातुमिति शेषः ।

व्यासः

रहः कृतं प्रकाशं च [4]द्विविधं दिव्यमुच्यते ।
प्रकाशं साक्षिभिर्भाव्यं दैविकेन रहः कृतम् ॥

'भाव्यम्' शोधनीयम् ।

बृहस्पतिः

लिखिते साक्षिवादे तु संदिग्धं जायते यदा ।
अनुमानेन संभ्रान्ते तत्र दिव्यं विशोधनम् ॥

नृपद्रोहे साहसे च कल्पयेद्दैविकीं क्रियाम् ।

नारदः [२, ३०; ३, २४७, २४२]

अरण्ये विजने रात्रावन्तर्वेश्मनि साहसे ।

* Omitted in द.

1. वा–द, वि.

2. श्रुत्यर्पिते–द; नर्पिते, उ.

3. दत्वा for तथा–उ.

4. कार्ये द्विविधमुच्यते–वि.

न्यासापह्नवने चैव दिव्या संभवति क्रिया[1] ॥

यदा साक्षी न विद्येत विवादे वदतां नृणाम् ।
तदा दिव्यैः परीक्षेत शपथैश्च पृथग्विधैः ॥

स्त्रीणां शीलाभियोगे च स्तेयसाहसयोरपि ।
एष एव विधिर्दृष्टः सर्वार्थापह्नवेषु च[2] ॥

कात्यायनः [२३०, २३४]

पतनं क्रियते यत्र अङ्गच्छेदो[3] वधोऽपि वा ।
दिव्यं चेद्देशयेद्वादी सम्यग्दृष्टैः प्रपादयेत्[4] ॥

गूढसाहसिकानां तु प्राप्तं दिव्यैः परीक्षणम् ।
युक्तिलेशेङ्गिताकारवाक्चक्षुश्चेष्टितैर्नृणाम् ॥

अलेखेऽसाक्षिके दैवीं व्यवहारे विनिर्दिशेत्[5] ।
दैवसाध्ये पौरुषेयीं न लेख्यं वा प्रयोजयेत् ॥

बृहस्पतिः [४, १४, २१]

मणिमुक्तानाणकानां कूटकृन्न्यासहारकः ।
हिंसकोऽन्यङ्गनासेवी परीक्ष्याः शपथैः सदा ॥

1. अरण्ये वनमध्ये पत्तने वा निर्जनप्रदेशे रात्रौ च मानुषासंभवे एकान्ते गृहमध्ये वा तथा साहसे व्यवहारे तथा न्यासापह्नवे एतेषु प्रदेशेष्वर्थेषु च मानुषीक्रियाभावे दिव्या संभवति क्रियेति—(असहायः)

2. यदा स्त्रीणां शीले चरित्रेऽभियोगो भवति । तथा स्तेयसाहसाभियोगो भवति । तथा ये केचिदर्थास्तेषामपह्नवेषु मिथ्यासु एवंविधेषु महाभियोगेषु एष महादिव्यविधिर्दृष्टः शपथादिरिति—(असहायः)

3. S. B. (a)–तदुच्छेदो

4. का. स्मृ. सारोद्धारे लुप्तः

5. From "देवसाध्ये...प्रयोजयेत्" and 'बृहस्पतिः to मणिमुक्ता......हारकः' is missing in the Udaipur Ms. but is present in A. S. B., S. B. (a), द and ज.

महापापाभिशापेषु निक्षेपहरणे तथा ।
दिव्यैः कार्यं परीक्षेत राजा सत्स्वपि साक्षिषु ॥

चिरन्तनोपांशुकृते चिरनष्टेषु साक्षिषु ।
प्रदुष्टेषु समानेषु[1] दिव्यैः कार्यं विशोधयेत् ॥

'चिरन्तनोपांशुकृते' चिरन्तनकृते रहस्यकृते च । 'समानेषु' सदृशेषु ॥

व्यासः

प्रथमा यत्र भिद्यन्ते साक्षिणश्च तथा परे ।
परेभ्यश्च तथा चान्ये[2] तं वादं शपथैर्नयेत् ॥

'भिद्यन्ते' प्रतिपद्यन्ते ।

कात्यायनः [२३२-२३१]

समत्वं साक्षिणां यत्र दिव्यैस्तत्रापि शोधयेत् ।
प्राणान्तिकविवादेषु विद्यमानेषु साक्षिषु ॥

दिव्यमालम्बते वादी न पृच्छेत्तत्र साक्षिणः ।
उत्तमेषु तु सर्वेषु साहसेषु विचारयेत् ।
सद्भावं दिव्यदृष्टेन सत्सु साक्षिषु वै भृगुः[3] ॥

समत्वं साक्षिणां यत्रेति । उभयोरर्थिप्रत्यर्थिप्रयुक्तपक्षयोरपि[4] यत्र साक्षिणां तुल्यता तुल्यसंख्यता च भवतीत्यर्थः ।

व्यासः[5]

न मयैतत्कृतं लेख्यं[6] कूटमेतेन कारितम् ।
अधरीकृत्य तत्पत्रमर्थे दिव्येन निर्णयः ॥

1. प्रदुष्टेष्वनुमानेषु इति माधवीयपाठः
2. A. S. B, ज, द and S. B. (a), चान्ये; वान्ये–उ.
3. *Manusmṛti* has no such rule.
4. प्रयुक्तयोरपि–वि.
5. Ascribed to Kātyāyana by *Vyavahāranirṇaya*, p. 96, and not included in Kane's colleetion.
6. पत्रं इति व्यवहारनिर्णयपाठः

[1]प्रजापतिः

यन्नामगोत्रैर्यल्लेख्यं तुल्यं लेख्यं कचिद्भवेत् ।
अगृहीते धने तत्र कार्यो दिव्येन निर्णयः ॥

मूललेख्येन नामगोत्रैस्तुल्यं लेख्यान्तरं विपरीतार्थं यदा भवति तदा तदप्रमाणीकृत्य दिव्येन निर्णयः कर्तव्य इत्यर्थः ।

कात्यायनः [२३८]

यत्र स्यात्सोपधं लेख्यं तद्राज्ञे श्रावितं यदि ।
दिव्येन शोधयेत्तत्र राजा[2] धर्मासनस्थितः ॥

'सोपधम्' छलसहितम् ।

[3]नारदकात्यायनौ

प्रमाणानि प्रमाणज्ञैः पालनीयानि यत्नतः ।
सीदन्ति हि प्रमाणानि प्रमाणैरव्यवस्थितैः ॥

'सीदन्ति हि प्रमाणानि' इति । अविषयव्यापारेण प्रमाणैरव्यवस्थितैः तानि सीदन्ति न [4]निर्णयकारीणि भवन्तीत्यर्थः ॥

॥ इति क्रियापादे प्रमाणविषयः ॥

---

1. व्यवहारनिर्णय, पृ. ९१.
2. A. S. B, ज and S. B. (a)–तं तु प्रजा; राज्ञे इति वी. मि., ११५.
3. ना. १, ९८, एवं पठति—
   प्रमाणानि प्रमाणस्थैः परिकल्प्यानि यत्नतः ।
   सीदन्ति हि प्रमेयाणि प्रमाणैरव्यवस्थितैः ॥
4. निर्णयकारणानि–वि.

## १५

# अथ साक्षिणः

तत्र नारदः [४, १४७]

[1]सन्दिग्धेषु तु कार्येषु द्वयोर्विवदमानयोः ।
[2]दृष्टश्रुतानुभूतत्वात्साक्षिभ्यो व्यक्तिदर्शनम्[3] ॥

मनुः [८, ७४]

समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव[4] सिध्यति ।

समक्षदर्शनश्रवणोपादानं प्रमाणमात्रोपलक्षणार्थम् तेन प्रमाणतो येनानुभूतं विवादपदं[5] स साक्षीत्यर्थः ।

कात्यायनः

अर्थिप्रत्यर्थिसान्निध्यादनुभूतं तु यद्भवेत् ।
[6]तद्ग्राह्यं साक्षिणो वाक्यमन्यथा न बृहस्पतिः ॥

नारदः [४, १४९-१५०]

एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः ।
कृतः पञ्चविधस्तेषां त्रिविधोऽकृत[7] उच्यते ॥

1. यानि कानिचित् संदिग्धानि कार्याणि तेषु द्वयोर्वादिप्रतिवादिनोरपि विवदतोरिति विवादं कुर्वतोः साक्षिभ्यः सकाशात् कार्यव्यक्तिदर्शनं स्फुटीभवति । यतस्ते उदासीनाः श्रुतार्थत्वादनुभूतार्थत्वाद्वा यत्साक्षिकाले किमपि ब्रुवते तस्माद्व्यक्तिदर्शनं कार्यनिर्णयो भवतीत्यर्थः—असहायः

2. So A. S. B, ज and द; उ. reads दृष्टा श्रुता.

3. व्यक्तदर्शनम्–ज, द and बि.

4. श्रवणा चैव–ज

5. विवादवादं–बि.

6. तद्ग्राह्यं–ज.

7. 'षड्विधोऽकृत उच्यते'–बि. अयमेव सुपाठः ।

लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च ।
गूढश्चोत्तरसाक्षी च साक्षी पञ्चविधः कृतः[1] ॥

नारदकात्यायनौ[2]

अन्ये पुनरनिर्दिष्टाः साक्षिणः समुदाहृताः[3] ।
[4]ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् ॥

कार्येष्वभ्यन्तरो यश्च अर्थिना[5] प्रहितश्च यः ।
कुल्याः कुलविवादेषु भवेयुस्तेऽपि साक्षिणः ॥

बृहस्पतिः[6] [५, ४, १३]

लिखितो लेखितो गूढः स्मारितः कुल्यदूतकौ ।
यादृच्छश्चोत्तरश्चैव कार्यमध्यगतोऽपरः ॥

नृपोऽध्यक्षस्तथा ग्रामः साक्षी द्वादशधा स्मृतः ।
प्रभेदमेषां वक्ष्यामि यथावदनुपूर्वशः ॥

जातिनामाभिलिखितं येन स्वं पित्र्यमेव च ।
निवासश्च स विज्ञेयः साक्षी लिखितसंज्ञकः ॥

अर्थिक्रियां क्रियाभेदैस्तस्य कृत्वा ऋणादिके[7] ।
प्रत्यक्षं लेख्यते[8] यश्च लेखितः[9] स उदाहृतः ॥

1. लिखितः पत्रारूढः । स्मारितः कर्णकथितः । यदृच्छाभिज्ञोऽनुरोधितागतः कृतः । गूढो कुड्यन्तरितश्रोता । उत्तरसाक्षी साक्षिजल्पितश्रोता । एवं पञ्चविधः साक्षी कृतो भवति—असहायः

2. नारद, ४, १५१–१५२; कात्या., ३५६–३५७.

3. षडेते पुनरुद्दिष्टाः साक्षिणस्त्वकृताः स्वयम्. इति, मु. नारदीये

4. ग्राम्यश्च–ज.

5. अर्थिनः–ज.

6. बृहस्पतिस्मृतिः, पृ. ४९–५२.

7. द, A. S. B. and S. B. (a)–ऋणादिकैः

8. लिख्यते–बि.

9. लिखितः–बि.

कुड्यव्यवहितो[1] यस्तु श्राव्यते ऋणिभाषितम् ।
विनिह्नुते यथाभूतं गूढसाक्षी स कीर्तितः ॥

आहूय यः कृतः साक्षी ऋणे न्यासक्रियादिके ।
स्मार्यते च मुहुर्यश्च स्मारितः सोऽभिधीयते ॥

विभागदाने विपणे ज्ञातिर्यत्रोपदिश्यते ।
द्वयोः समानो धर्मज्ञः स कुल्यः परिकीर्तितः ॥

अर्थिप्रत्यर्थिवचनं शृणुयात्प्रेषितस्तु [2]यः ।
उभयोः संमतः साधुर्दूतकः स उदाहृतः ॥

क्रियमाणे तु कर्तव्ये यः कश्चित्स्वयमागतः ।
[3]अस्ति साक्षित्वमस्माकमुक्तो यादृच्छिकस्तु सः ॥

यत्र साक्षी दिशं गच्छन्मुमूर्षुर्वा[4] यथाश्रुतम् ।
अन्यं संश्रावयेत्तं तु विद्यादुत्तरसाक्षिणम् ॥

**व्यासः**

साक्षिणामपि यः साक्ष्यमुपर्युपरि भाषते ।
श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञितः[5] ॥

**[6]बृहस्पतिकात्यायनौ**

उभाभ्यां यस्य विश्वस्तं कार्यं वाऽपि निवेदितम् ।
गूढचारी स विज्ञेयः कार्यमध्यगतस्तथा ॥

1. A. S. B, ज, द and S. B. (a)–कुल्यव्यवहितो
2. ज्ञ यः–बि.
3. 'अत्र सक्षी त्वमस्माकं' इति अपरार्कपाठः
4. A. S. B., अमृष्यन् वा for मुमूर्षु र्वा; S. B. (a)–has a lacuna here.
5. संज्ञकः–द; संज्ञिकः–बि.
6. बृह., ५, १५–१७; व्यवहारनिर्णये तु (पृ. १००) बृहस्पतिवचनानीति

अर्थिप्रत्यर्थिनोर्वाक्यं यच्छ्रुतं [1]भूभृता स्वयम् ।
स एव तत्र साक्षी स्याद्विसंवादे द्वयोरपि ॥

निर्णीते व्यवहारे तु पुनर्न्यायो यदा भवेत् ।
अध्यक्षः सभ्यसहितः साक्षी स्यात्तत्र नान्यथा ॥

उभाभ्यां यत्र विश्वस्तमिति । उभाभ्यामर्थिप्रत्यर्थिभ्यां यस्य विश्वासः कृतः स गूढचारी कार्यमध्यगतो विज्ञेय इत्यर्थः ।

कात्यायनः [३५५]

लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्वशः
नृपे पश्यति तत्कार्यं साक्षिणः समुदाहृताः ॥

बृहस्पतिः [५, १८]

[2]मुषितं घातितं यत्र सीमायाश्च समन्ततः ।
अकृतोऽपि भवेत्साक्षी ग्रामस्तत्र[3] न संशयः ॥

मनुः [८, ७६]

यत्रानिबद्धो वीक्ष्येत शृणुयाद्वाऽपि किञ्चन ।
पृष्टस्तत्रापि[4] तद्ब्रूयाद्यथादृष्टं यथाश्रुतम्[5] ॥

कात्यायनः [३५२]

अशक्य आगमो यत्र विदेशप्रतिवादिनाम् ।
त्रैविद्यप्रहितस्तत्र लेख्यं साक्ष्यं प्रवादयेत् ॥

1. भूभृतां-ज.
2. 'व्युषितं छादितं यत्र' इति पराशरमाधवीये (पृ. १०३)
3. A. S. B, ज, द and S. B. (a)-ग्रामस्थन (?)
4. A. S. B; द, ज and S. B. (a)-तद्ब्रूयात् । न ब्रूयात्-उ. The text in Jolly's edn. and Nirnayasagara edn. of this passage of Manu reads thus: यत्रानिबद्धोऽपीक्षेत शृणुयाद्वापि किंचन । पृष्टस्तत्रापि तद्ब्रूयाद्यथा दृष्टं यथा श्रुतम् ॥
5. अनिबद्धो लेख्यमनारूढोऽपि इति मेधातिथिः

'आगमः' आगमनम् ।

<u>मनुः</u> [८, ६०]

पृष्टोऽपव्ययमानस्तु कृतावस्थो धनैषिणाम्[1] ।
त्र्यवरैः साक्षिभिर्भाव्यो नृपब्राह्मणसन्निधौ[2] ॥

'पृष्टः' प्राड्विवाकेन । 'अपव्ययमानः' अपह्नवं कुर्वन् । 'कृतावस्थः' आसेधादिना कृतमवस्थानं यस्य स तथा । 'भाव्यः' विभावनीयः ।

<u>बृहस्पतिः</u> [५, १, १९, २]

नव सप्त पञ्च वा स्युश्चत्वारस्त्रय एव वा ।
उभौ वा श्रोत्रियौ ख्यातौ[3] नैकं पृच्छेत्कदाचन ॥

लिखितौ द्वौ तथा गूढौ त्रिचतुःपञ्चलेखिताः ।
यदृच्छास्मारिताः कुल्यास्तथा चोत्तरसाक्षिणः ॥

दूतकः [4]खटिकाग्राही कार्यमध्यगतस्तथा ।
एक एव प्रमाणं स्यान्नृपोऽध्यक्षस्तथैव च ॥

[5]लिखितौ द्वाविति, एतौ द्वौ साक्षिणौ भवतः अन्ये तु दूतकादिव्यतिरिक्तास्त्र्यवरा एवेत्यर्थः ।

1. The printed text (ed. Jolly etc.), VIII 60, has धनैषिणा for धनैषिणाम्; so वि. also.

2. यः कृतावस्थः आहूतोऽभियुक्तो गृहीतप्रतिभूश्च प्राड्विवाकादिना पृष्टः सन्नपव्ययतेऽपह्नुते धनैषिणा स्वधनं पूर्वप्रयुक्तमात्मनः साधयितुमिच्छता साक्षिभिर्भाव्यो विप्रतिपन्नः प्रतिपादयितव्यः—मेधातिथिः ॥

3. द, ज, A. S. B. and S. B. (a)–प्राज्ञौ for ख्यातौ;

4. धूतकः शटिकाग्राही इति माधवीये (पृ. ९५); भृतकः खनिकाग्राही इति व्यवहारसारे; खण्डिकाग्राही इति दवभञ्जाकोशे ।

5. लिखितौ द्वावपि, एतौ द्वौ साक्षिणौ भवतः–वि.

याज्ञवल्क्यः [२, ७२]

उभयानुमतः साक्षी भवेदेकोऽपि धर्मवित् ।

व्यासः

शुचिक्रियश्च धर्मज्ञः साक्षी यत्रानुभूतवाक्[1] ।
प्रमाणमेकोऽपि भवेत्साहसेषु विशेषतः ॥

'अनुभूतवाक्' सत्यत्वेनानुभूता वाग्यस्य ।

कात्यायनः [३५३-३५४]

अभ्यन्तरे तु निक्षेपे साध्यमेकोऽपि बाध्यते ।
अर्थिना प्रहितः साक्षी भवत्येकोऽपि याचितः ॥

संस्कृतं येन तत्पण्यं तत्तेनैव विभावयेत् ।
एक एव प्रमाणं स विवादे तत्र कीर्तितः ॥

संस्कृतं येन तत्पण्यमिति । येन सुवर्णकारादिना यत्पण्यं कुण्डलादिघटितं तत्तेनैव साक्षिणा साधयेदित्यर्थः ।

नारदः [४, १६७]

सुदीर्घेणापि[2] कालेन[3] लिखितः सिद्धिमाप्नुयात्[4] ।
[5]संजानन्नात्मनो लेख्यमजानन्तं न लेखयेत् ॥

1. भूतभाक्–द.

2. A. S. B. and S. B. (a)–read भदीर्घेणापि, which is against the spirit of the author.

3. कालेपि–द.

4. सुदीर्घेणापि कालेन लिखितस्य साक्षित्वं, तेन च लिपिसमये तेनात्मनैव स्वनाम लेख्यम् । यथा कस्मिंश्चिद्देशे साक्षिणः स्वहस्तेन मतमारोपयिष्यन्ति इति । लेखकेन विलिखिते आत्मनैव लिखेदत्राहं साक्षी देवदत्त इति । न चेल्लिपिशस्तदान्येन लेखयेत् । तस्य कालान्तरं निरूपयतभिज्ञाय भवतीति ॥ (असहायः)

5. 'आत्मनैव लिखेज्जानन्न चेदन्येन लेखयेत्; इति, मु. ना.

अजानन्तं न लेखयेत् । अत्रायमर्थः—यत्र कारणसमये [1]लेखितुमजानन्तमात्मानं योऽन्येन लिपिज्ञेनाहमत्रामुको [2]अमुकग्रामीयोऽमुकपुत्रः साक्षीत्येवं[3] लेखयेत् सोऽपि चिरेणापि सिद्धिमाप्नुयात् ।

कात्यायनः [३७०]

अथ स्वहस्तेनारूढस्तिष्ठेच्चैकः स एव तु ।
न चेत्प्रत्यभिजानीयात्तत्स्वहस्तैः प्रसाधयेत् ॥

नारदः [६, १६८-१७१]

अष्टमाद्वत्सरात्सिद्धिः स्मारितस्येह साक्षिणः ।
आपञ्चमात्तथा सिद्धिर्यदृच्छोपगतस्य तु ॥

आतृतीयात्तथा वर्षात्सिद्धिर्गूढस्य साक्षिणः ।
आ संवत्सरात्सिद्धिं तु वदन्त्युत्तरसाक्षिणः ॥

अथवा कालनियमो न दृष्टः साक्षिणः प्रति ।
स्मृत्यपेक्षं हि साक्षित्वमाहुः शास्त्रविदो जनाः ॥

यस्य नोपहता बुद्धिः स्मृता[4] श्रोत्रं च नित्यशः ।
सुदीर्घेणापि कालेन स वै साक्षित्वमर्हति ॥

मनुः [८, ६१-६३]

यादृशा अर्थिभिः [5]कार्या व्यवहारेषु साक्षिणः ।
तादृशान् संप्रवक्ष्यामि यथा वाच्यमृतं च तैः[6] ॥

1. लिखितु–वि.
2. अमुकस्वामीयो–वि.
3. साक्षीत्येवं लेखयेत्–वि. साक्षित्वे च–उ
4. द, A. S. B.–स्मृतः ; ज, S. B. (a)–स्मृत ; स्मृतिः श्रोत्रे च–वि.
5. 'यादृशा धनिभिः'–इति मेधातिथिपाठः
6. यथा च 'ऋतं' सत्यं 'वाच्यं' वक्तव्यं पृष्टैः सद्भिः तैः—पूर्वाह्ण इत्यादि—तमपि प्रकारं वक्ष्यामीति—मेधातिथिः ॥

[1]गृहिणः पुत्रिणो मौलाः [2]क्षत्रविट्शूद्रयोनयः ।
इत्युक्त्वा[3] सा्क्ष्यमर्हन्ति [4]न ये केचिदनापदि ॥

[5]आप्ताः सर्वेषु वर्णेषु [6]कार्याः कार्येषु साक्षिणः ।
[7]सर्वधर्मविदोऽलुब्धा[8] विपरीतांस्तु वर्जयेत् ॥

'ऋतम्' सत्यम् । 'मौलाः' प्रसिद्धकुलोद्भवाः ।

याज्ञवल्क्यः [२, ६८-६९]

तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः ।
धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः[9] ॥

त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियापराः[10] ।
यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः ॥

गौतमः [१३, २-४]

बहवः स्युरनिन्दिताः स्वकर्मसु प्रात्ययिका [11]राज्ञाम् ।
[12]निष्प्रीत्यभितापाश्चान्यतरस्मिन् । अपि शूद्राः ॥

1. 'गृहिणः' कृतदारपरिग्रहाः । 'पुत्रिण' इति पुत्रस्नेहात् पुत्रिणः । 'मौलाः' जानपदास्तद्देशाभिजनाः—मेधातिथिः ॥

2. त्रविट्–ज.

3. अर्थज्ञाः साक्ष्यमर्हन्ति–इति मुद्रितपाठः–बि. च

4. नयेत्केचिदनापदि–द.

5. आप्ताः सर्वेषु वर्णेषु—इति मुद्रितपाठः–वि. च

6. कार्याः साक्ष्येषु–द.

7. सर्वधर्मविदः—श्रौतं स्मार्तमाचारनिरूढं च सर्वं धर्मं जानन्ति ते—मेधातिथिः ॥

8. दोऽलुब्धाः–द.

9. तपोदानादिभिर्ये धर्मप्रधानतया सत्यवादिनः, ये वा कुलीनाः स्वकुलकलङ्कभीत्या, ये पुत्रिणो धनिनश्च तद्विनाशभीत्या, प्रकृत्या ऋजवः उपलब्धातिरिक्तवचनाशक्त्यानन्यथावादिनः ते त्र्यवराः साक्षिणो ज्ञेयाः । त्रयो येषामवरास्ते त्र्यवराः त्रिप्रभृतय इत्यर्थः—विश्वरूपः ॥

10. 'पञ्चयज्ञक्रियारताः'–-इति विश्वरूपाचार्यपाठः

11. राज्ञां निमीत्यां भमतापाश्च–ज; राज्ञां निःप्रीत्यभितापाश्चान्यतरस्मिन्नपि शूद्राः–द.

12. 'निष्प्रीत्यनभितापाः' इति मस्करिपाठः

14

'प्रात्ययिका राज्ञाम्' प्रत्ययोत्पादका राज्ञाम्। 'निष्प्रीत्यभितापाः' मैत्र-शात्रववर्जिताः।

कात्यायनः [३४७-३४८]

प्रख्यातकुलशीलाश्च लोभमोहविवर्जिताः।
आप्ताः शिष्टा विबुद्धा ये[1] तेषां वाक्यमसंशयम्॥

विभाव्यो वादिना यादृक् सदृशैरेव भावयेत्।
नोत्कृष्टं चापकृष्टैस्तु[2] साक्षिभिर्भावयेत्सदा॥

शङ्खलिखितौ

अथ साक्षिणः। श्रोत्रियो गुणवान् रूपवान् माणवकः शीलवान् क्षत्रियस्तथा, वैश्यः शूद्रो वा धर्मवांश्च यः शीलोपपन्नः, कर्मवादैर्विदितो[3] नत्वेकः।

व्यासः

मणिमन्त्रौषधिबलात्प्रदत्तं [4]वा विधानतः।
[5]विसंवदेद्दिव्यमपि [6]न तु साक्षी गुणान्वितः॥

नारदः [४, १५५]

[7]श्रेणीषु श्रेणिपुरुषाः स्वेषु वर्गेषु वर्गिणः।
बहिर्वासिषु बाह्याः स्युः स्त्रियः स्त्रीषु च साक्षिणः॥

1. S. B. (a), शिष्टविरुद्धा ये; A. S. B. and ज, शिष्टाविदूरा ये
2. कृष्टस्तु–द.
3. कर्मप्रदानैर्विदितो–बि.
4. S. B. (a) च for वा; A. S. B. has वा; चाविधानतः–ज. द.
5. विसंवादे दिव्यमपि–बि.
6. A. S. B. and S. B. (a)–न त्वसाक्षी for न तु साक्षी; ननु साक्षि–ज; ननु साक्षी–द.
7. 'श्रेणीषु' अष्टादशप्रकृतिनिबद्धासु; 'बहिर्वासिषु' अन्त्यजातिषु—अपरार्कः

<u>कात्यायनः</u> [३४९-३५०]

लिङ्गिनः श्रेणिपूगाश्च वणिग्जातास्तथापरे ।
समूहस्थाश्च[1] ये चान्ये वर्गास्तानब्रवीद्भृगुः ॥

दासचारणमल्लानां[2] हस्त्यश्वायुधजीविनाम् ।
प्रत्येकैकसमूहानां नायका वर्गिणः स्मृताः[3] ॥

तेषां वादः [4]स्ववर्गेषु वर्गिणस्तेषु साक्षिणः ।

<u>मनुकात्यायनौ</u> [म, ८, ६८; का, ३५१]

स्त्रीणां साक्ष्यं स्त्रियः कुर्युर्द्विजानां [5]द्विजसत्तमाः ।
शूद्राश्च सन्तः शूद्राणां मर्त्यानां मर्त्ययोनयः[6] ॥

[7]इति भट्टहृदयधरात्मज महासन्धिविग्रहिक भट्टश्रीम-
लक्ष्मीधरविरचिते कृत्यकल्पतरौ व्यवहारकाण्डे
साक्षिप्रकरणम्

---

1. स्ताश्च–द.
2. चारण–ज, द; बारण–उ.
3. 'वर्गिणस्तथा' इति वीरमित्रोदये; वर्णिनः–उ.
4. सवर्गेषु–उ.
5. सदृशा द्विजाः–बि.
6. A. S. B, द, ज, and S. B. (a)–अन्त्यानां अन्त्ययोनयः
7. इति महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेवमहासांधिविग्रहिकेन भट्टहृदयधरात्मजभट्टश्रीलक्ष्मीधरेण विरचिते कृत्यकल्पतरौ व्यवहारकाण्डे साक्षिप्रकरणम् ॥ [बि.]

१६

# अथाऽसाक्षिणः

तत्र नारदः [४, १५७-१५८]

असाक्ष्यपि हि शास्त्रेषु[1] दृष्टः पञ्चविधो बुधैः ।
वचनाद्दोषतो [2]भेदात्स्वयमुक्तिर्मृतान्तरः ॥

श्रोत्रियाद्या वचनतः स्तेनाद्या दोषदर्शनात् ।
भेदाद्विप्रतिपत्तिः स्याद्विवादे यत्र साक्षिणाम् ॥

स्वयमुक्तिरनिर्दिष्टः स्वयमेवैत्य यो वदेत् ।
मृतान्तरोऽर्थिनि प्रेते[3] मुमूर्षुश्रावितादृते ॥

श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजिता नराः ।
असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः ॥

स्तेनाः साहसिकाश्चण्डाः कितवा वञ्चकास्तथा ।
असाक्षिणस्ते दुष्टत्वात्तेषु सत्यं न विद्यते ॥

मनुः [८, ६४]

[4]नार्थसम्बन्धिनो नाप्ता न सहाया न वैरिणः ।
न दृष्टदोषः कर्तव्या न [5]व्याध्यार्ता न दूषिताः ॥

1. शास्त्रेऽस्मिन् इति मु. पाठः

2. भेदात्स्वयमुक्तिरनिर्दिष्टः–ज.

3. 'प्रेते' इत्यारभ्य 'स्तेनाः' इत्येतत्पर्यन्तो भागः भ्रष्टः–वि. कोशे

4. 'अर्थसंबन्धिनः'–उत्तमर्णाधमर्णाद्याः । 'आप्ताः' पितृव्यमातुलादयः । 'सहायाः' प्रतिभूप्रभृतयः । 'दृष्टदोषाः' अन्यत्र कृतकौटसाक्ष्याः । 'व्याध्यार्ताः' रोगपीडिताः । 'दूषिताः' पातकिनः अभ्यस्तोपपातकाश्च—(मेधातिथिः)

5. So, द, ज, A. S. B., S. B. (a), and Medhātithi; उ. reads नष्टदोषा न कर्तव्या

<u>नारदः</u> [४, १७८-१८५, १५६]

[1]दासनैकृतिकाश्रद्धवृद्धस्त्रीबालवञ्चकाः[2] ।
मत्तोन्मत्तप्रमत्तार्तकितवग्रामयाजकाः ॥

महापथिकसामुद्रवणिक्प्रव्रजितातुराः ।
व्यङ्गैकश्रोत्रियाचारहीनक्लीबकुशीलवाः ॥

[3]नास्तिकव्रात्यदाराग्नित्यागिनोऽयाज्ययाजकाः ।
[4]एकस्थालीसहायारिचरज्ञातिसनाभयः ॥

[5]प्राग्दृष्टदोषशैलूषविषजीव्याहितुण्डिकाः ।
गरदाग्निदकीनाशशूद्रीपुत्रोपपातिकाः ॥

1. तत्र 'दासो' गृहजातः । 'नैकृतिकः' छलव्यवहारी । 'अश्राद्धो' न श्राद्धमर्हतीति । दुर्बलादि 'वृद्धः' संव्यवहारायोग्यो लुप्तस्मृत्यादिकरणत्वात् । 'उन्मत्तो' वायुदोषात् । 'प्रमत्तः' प्रमादशीलः । 'आर्तः' व्यसनार्तः । 'कितवो' द्यूतकारः । 'ग्रामयाजकः' ग्रामर्त्विक् । 'महापथिकः' दीर्घाध्वगः । 'सामुद्रो वणिक्' समुद्रयात्रानिरतः । 'प्रव्रजितो' भिक्षुः । 'आतुरो' रोगी । 'व्यङ्गः' अङ्गहीनः । 'एकः' एक एव । 'श्रोत्रिय' श्छान्दसः । 'आचारहीनः' प्रच्युतः स्वधर्मात् । 'क्लीबः' षण्ढः प्रजननासमर्थः । 'कुशीलवं' चारण इति—असहायः ॥

2. 'चक्रिकाः for वञ्चकाः' इति मु. ना. स्मृ.

3. तत्र 'नास्तिको' मिथ्यादृष्टिः । 'व्रात्यो'ऽकृतसंस्कारः । 'दाराग्नित्यागिनो' धर्मभार्याव्रतानाग्नित्यागिनः । 'अयाज्ययाजको' निन्दितयाजकः । एकस्थालीसहभोजनः सहायः । 'अरिः' शत्रुः । 'चरो' राजनियुक्तः । 'ज्ञाति'र्बन्धुः । 'सनाभिः' सोदर्य इति—असहायः

4. द, A. S. B. and S. B. (a)-सहायपरिचरा ; सहायारिवरा-उ.

5. तत्र प्राग्दोषो यस्य सः 'प्राग्दृष्टदोषः' प्राग्जन्माशुभदोषकर्मपरिणामप्राप्तरोगचिह्नः स्तेनादिदृष्टदोषोऽपीति । 'शैलूषो' नट इति । 'विषजीवी' विषक्रेता विक्रेता वा । 'आहितुण्डिकः' सर्पादिदन्तशूकग्राही । 'गरदो' द्वेषसंबन्धाद्विषस्य दाता । 'अग्निदो' गृहादिदाहकः । 'कीनाशः' शूद्रः कदर्यो वा । शूद्या पुत्रः 'शूद्रीपुत्रः' । 'औपपातिकः' उपपातकसंयोगात् ।

[1]क्लान्त [साहसिकाश्रान्तनिर्धूतान्त्यावसायिनः] ।
भिन्नवृत्तासमावृत्तजलतैलिकमूलिकाः ॥

[2]भूताविष्टनृपद्विष्टवर्षनक्षत्रसूचकाः ।
अघशंस्यात्मविक्रेतृहीनाङ्गभगवृत्तयः ॥

कुनखी [3]श्यावदच्छित्रतिमित्रध्रुकुच्छठशौण्डिकाः[4]
ऐन्द्रजालिकलुब्धोग्रश्रेणीगणविरोधिनः ॥

[5]वधकश्चित्रकृच्छद्मः पतितः कूटकारक[6]ः ।
कुहकः प्रत्यवसितस्तस्करो राजपूरुषः ॥

मनुष्यपशुमांसास्थिमधुक्षीराम्बुसर्पिषाम् ।
विक्रेता ब्राह्मणस्त्वेषां[7] द्विजो वार्धुषिकश्च यः ॥

1. तत्र 'क्लान्तः' खिन्नः । 'साहसिकः' प्रसह्यायुक्तकारी । 'श्रान्तो' निःसङ्गः । 'निर्धनो' द्यूतादिव्यसनदोषाद्धृतसर्वस्वः । 'अन्त्यावसायी' चाण्डालः । 'भिन्नवृत्तो' मिथ्यादृष्टिः । 'असमावृत्तो' ब्रह्मचारी प्राक् स्नानात् । 'जडो' निरिन्द्रियः । 'तैलिकः' चक्रादितैलिकचक्रिकः । 'मूलिको' मूलद्रव्यविक्रयजीवन इति—असहायः

2. तत्र 'भूताविष्टः' सग्रहः । 'नृपद्विष्टो' राजद्विषः । 'वर्षनक्षत्रसूचकः' सांवत्सरसूचकः । 'अघशंसी' पापस्तेनो हिंस्रो वा । 'आत्मविक्रेता' धनेन दासत्वमुपगतः । 'हीनाङ्गो' बाहुपादहीनः । 'भगवृत्तिः' स्त्रीजीवनः मुखभगो वा—असहायः

3. श्यावदन्तश्च मित्रध्रुक्शवशौण्डिकाः–द.

4. A. S. B. and S. B. (a)–च्छव॰ for च्छठ

5. 'वधकः' सौनिकः । 'चित्रकृ' लेख्यक्रयोपजीवी । 'पतितः' पातकी । 'कूटकारकः' कूटलेख्यककार्षापणादिकर्ता । 'कुहको' मन्त्रौषध्याद्युपायाद्वशीकरणकर्ता । 'प्रत्यवसितः' प्रव्रज्य प्रत्यावृत्तः । 'तस्कर'श्चोरः । 'राजपुरुषः' सेवक इति—असहायः

6. काः–ज

7. णस्तेषां–द; णश्चैव–वि

च्युतः स्वधर्मात्कुलिकः सूचको[1] हीनसेवकः ।
पित्रा विवदमानश्च भेदकृच्चेत्यसाक्षिणः ॥

[2]श्रेण्यादिषु तु वर्गेषु [3]कश्चिद्दै द्वेष्यतामियात् ।
तस्य तेभ्यो न साक्ष्यं स्याद्द्वेष्टारः सर्व एव ते ॥

'नैकृतिकः' [4]वञ्चकः । 'अश्रद्धः' श्रद्धारहितः । 'महापथिकः' दीर्घाध्वनिकः । 'कुशीलवो' रङ्गोपजीवी । 'एकस्थाली' एकपाकभोजी । 'अरिधरः' शस्त्रधारी । 'आहितुण्डिकः' व्यालग्राही । [5]'उपपातिकः' पातकाक्रान्तः । 'साहसिकः' सहसाविचारितकारी । 'अश्रान्तः' अयोग्यकारी । 'निर्धूतः' ग्रामराजकुलश्रेण्यादिभिर्निस्सारितः । 'भिन्नवृत्तः' स्वधर्मानवस्थितः । 'मूलिकः' तत्र[6] मूलं विप्रलम्भस्तत्कारी । 'शङ्खः' बलीवर्दनाटनेन भिक्षाटनशीलः । 'प्रत्यवसितः' प्रव्रज्याच्युतः । 'कुलिकः' परिच्छेदकत्वेन वियुक्तः ॥

मनुः [८, ६५-६७]

न साक्षी नृपतिः कार्यो न कारुककुशीलवौ ।
न श्रोत्रियो न लिङ्गस्थो [7]न सङ्गेभ्यो निवर्तकः[8] ॥

नाध्यधीनो न वक्तव्यो न दस्युर्न विकर्मकृत् ।
न वृद्धो न शिशुर्नैको नान्त्यो न विकलेन्द्रियः ॥

1. 'स्नावको' इति मु. नार.
2. मुद्रितकोश एवं पठति—
 श्रेण्यादिषु च सर्वेषु कश्चिच्चेद्द्वेष्यतामियात् ।
 तेभ्य एव न साक्ष्यं स्यात् द्वेष्टारस्सर्व एव ते ॥ इति
3. कश्चिच्चेद्द्वेष्यतामियात्–वि
4. विम्बकः for वञ्चकः–उ.
5. उपयाशः–द
6. अत्र–वि
7. न सङ्गेभ्यो–ज. द. वि
8. 'न सङ्गेभ्यो विनिर्गतः' इति मेधातिथिपाठः

नार्तो न मत्तो नोन्मत्तो न क्षुत्तृष्णोपपीडितः ।
न श्रमार्तो न कामार्तो न क्रुद्धो नापि तस्करः[1] ॥

'आध्यधीनो' बन्धके धृतः ।

याज्ञवल्क्यः [२, ७०-७१]

[2]स्त्रीवृद्धबालकितवमत्तोन्मत्ताभिशस्तकाः ।
रङ्गावतारपाखण्डिकूटकृद्विकलेन्द्रियाः ॥

पतिताप्तार्थसम्बन्धिसहायरिपुतस्कराः ।
साहसे दृष्टदोषाश्च निर्धूताश्चेत्यसाक्षिणः ॥

बृहस्पतिः [५, ३९-४०]

मातुः पिता पितृव्यश्च भार्याया भ्रातृमातुलौ ।
भ्राता सखा च जामाता सर्ववादेष्वसाक्षिणः ॥

परस्त्रीपानसक्ताश्च कितवाः सर्वदूषिताः ।
उन्मत्तार्ताः साहसिका नास्तिकाश्च न साक्षिणः ॥

कात्यायनः [३६२-३६४]

तद्वृत्तिजीविनो ये च तत्सेवाहितकारिणः ।
तद्बन्धुसुहृदो भृत्याः आप्तास्ते तु न साक्षिणः ॥

1. 'कारुकाः' शिल्पोपजीविनः सूपकारायस्कारादयः । 'कुशीलवाः' नटनर्तकगायनाद्याः । 'श्रोत्रियो' वेदपाठकः । 'लिङ्गस्थो' ब्रह्मचारी । 'सङ्गेभ्यो विनिर्गताः' वेदसन्यासिनो गृहस्थाः—मेधातिथिः ॥ 'अध्यधीन' शब्दो अत्यन्तपरतन्त्रगर्भदासादौ रूढया वर्तते । अन्ये तु तुल्यसंहितत्वात् 'आध्यधीन' इति पठन्ति । 'आध्यधीनो' बन्धकीकृतः । 'वक्तव्यो' अनुशास्यः शिष्यपुत्रादिः । 'दस्युः' भृतिदासः वैतनिकः । कठिनहृदयो वा 'दस्युः' क्रूरचेष्टः । 'विकर्मकृत्' शास्त्रविरुद्धं यः करोति । 'वृद्धो' वयःपरिमाणादसंस्मृतिः । 'शिशुः' बालोऽप्राप्तव्यवहारः । 'एकः' त्र्यवरग्रहणेनैकस्याप्राप्तेः प्रतिषेधो द्वयोः कस्याश्चिदवस्थायामभ्यनुज्ञानार्थः । 'अन्त्यो' बर्बरचण्डालादिः—स्ववर्गादन्यत्र । 'विकलेन्द्रियो' अन्धबधिरादिः—'आर्तो' बन्धुधनादिनाशेन । 'मत्तो' मद्यमदक्षीबः । अपसारगृहीत 'उन्मत्तः' पिशाचकी—मेधातिथिः ॥

2. स्त्रीबालवृद्ध–द, वि.

[1]मातृष्वसृसुताश्चैव पितृष्वसृसुतास्तथा ।
मातुलस्य सुताश्चैव सोदर्यासुतमातुलाः ॥

एते सनाभयस्तूक्ताः साक्ष्यं तेषु न योजयेत् ।

[2]एवं पितृमातृसनाभयो बोद्धव्याः ।

कुल्याः सम्बन्धिनश्चैव विवाह्यो भगिनीपतिः ॥

पिता बन्धुः पितृव्यश्च श्वशुरो गुरवस्तथा ।
नगरग्रामदेशेषु नियुक्ता [3]ये पदेषु च ॥

वल्लभाश्च न पृच्छेयुरुक्तास्ते राजपूरुषाः ।
[4]न क्रुद्धैर्नापि संसृष्टैर्नासीनै र्न रुजाऽन्वितैः ॥

[5]न निन्द्यैर्नापि संमूढैः साक्षिभिस्तु विभावयेत्[6] ।
विरुद्धा वर्जिताः[7] स्युश्चेत्साक्ष्यं वर्गस्य न कचित् ॥

1. स्मृतिचन्द्रिका (पृ. १८०) च एवं पठति ॥ अपरार्कपाठस्तु (पृ. ६६९)

मातृष्वसृसुताश्चैव विवाह्यो भगिनीपतिः ।
पिता बन्धुः पितृव्यश्च सोदर्यासुतमातुलाः ॥
एते सनाभयः प्रोक्ताः ............... । इति

Kane omits the second and third quarters and makes a half-verse out of the remainder (p. 47)

2. एवमित्यादिवाक्यं बिकानीरकोशे नास्ति ॥

3. यें–द; ये–बि; र्थि–उ; 'नियुक्ता ये पदेषु च' इति अपरार्कः ।

4. The three lines which begin here are found only in the *Kalpataru* and the *Vyavahāra Saukhya*, which has obviously taken them from the former.

5. 'न निन्द्यैः' इति व्यवहारसौख्ये; नानिन्द्यैः–उ.

6. विचारयेत्–इति तत्रैव

7. 'वर्गिणः' इति व्यवहारसौख्ये

अथासाक्षिण इत्यधिकारे शङ्खलिखितौ—

शुल्कगुल्माधिकृतो,[1] दूतो, वेष्टितशिराः, स्त्रियश्च सर्वाः, गुरुकुलवासिनः, परिव्राजकवानप्रस्थनिर्ग्रन्थ[2] शङ्खव्यालग्राहिणः ॥

'शुल्काधिकृतः' शुल्कग्रहणस्थानाधिकारी । 'गुल्माधिकृतः' पदातिसमूहो गुल्मस्तदधिकृतः । 'गुरुकुलवासिनो' ब्रह्मचारिणः । 'निर्ग्रन्थः' क्षपणकः[3] ।

नारदः [४, १६०, २३०, १६१]

राज्ञा परिगृहीतेषु साक्षिष्वेकार्थनिश्चये ।
वचनं यत्र भिद्येत ते स्युर्भेदादसाक्षिणः ॥

स्मृतिमत्साक्षिसाम्यं तु विवादे यत्र दृश्यते ।
सूक्ष्मत्वात्साक्षिधर्मस्य साक्ष्यं [4]व्यावर्तते ततः ॥

अनिर्दिष्टस्तु साक्षित्वे स्वयमेवैत्य यो वदेत् ।
[5]स्वयमुक्तः स शास्त्रेषु न च साक्षित्वमर्हति ॥

स्मृतिमत्साक्षिसाम्यमिति । स्मृतिमत्त्वाद्द्विगुणेन समाः सन्तो यत्र साक्षिणो भिद्यन्ते तत्र [6]ते वचनभेदादसाक्षिणो न पुनरसमास्तेऽपि[7] ।

कात्यायनः [४०४, ३७७]

यः साक्षी नैव निर्दिष्टो नाहूतो नापि चोदितः ।
ब्रूयान्मिथ्येति तथ्यं वा दण्ड्यः सोऽपि नराधमः ॥

1. कृतो–ब, द.
2. 'निर्गन्ध' इति अपपाठः सर्वेषाम् ।
3. Comments reproduced in व्यवहारसौख्य
4. A. S. B, and S. B. (a)–च वर्तते for व्यावर्तते
5. सूचीत्युक्तः स शास्त्रेषु न च साक्षित्वमर्हति ॥ इति मु. पा. कस्तु शास्त्रेषु–ड.
6. तत्र वचनभेदा–द; A. S. B, and S. B. (a)–बलभेदात्
7. पुनरसमास्तेऽपि–ड.

अर्थी यत्र विपन्नः स्यात्तत्र साक्षी मृतान्तरः ।
प्रत्यर्थी वा मृतो यत्र तत्राप्येवं प्रकल्पयेत् ॥

नारदः [४, १६२, ९४-९६]

योऽर्थः श्रावयितव्यः स्यात्तस्मिन्नसति वाऽर्थिनि ।
क्व तद्वदतु साक्षित्वमित्यसाक्षी मृतान्तरः ॥

सन्तोऽपि न प्रमाणं स्युर्मृते धनिनि साक्षिणः ।
अन्यत्र श्रावितं यत्स्यात्स्वयमासन्नमृत्युना ॥

न हि प्रत्यर्थिनि प्रेते प्रमाणं साक्षिणां वचः ।
साक्षिमत्कारणं तत्र प्रमाणं [1]स्याद्विनिश्चयः ॥

श्राविनेनान्तरेणापि यस्त्वर्थो धर्मसंहितः ।
मृतोऽपि [2]तत्र साक्ष्यं स्यात् षट्सु चान्वाहिताग्निषु[3] ॥

योऽर्थः श्रावयितव्य इत्यादेरयमर्थः—येनार्थिना साक्षीकृतः सोऽर्थे यस्य साक्षिणो मृतोत्तरं स मृतान्तरनामासौ न साक्षित्वमर्हति । यदि मुमूर्षुणा अर्थिना पित्रा अमुकं द्रव्यमियद्वृद्ध्या अमुककाले देवदत्ताय दत्तं अत्रार्थेऽमी साक्षिण इत्येवं पुत्रः श्रावितो भवेत् । तस्य साध्यादि-विवेकाभावात् । अर्थिना[4] योऽर्थः श्रावयितव्यः साक्षिणामस्मिन्नर्थे भवन्तः[5]

1. तस्य जीवतः इति मुद्रितनारदीये; स्याद्विनिश्चये-वि.

2. यत्र-ज.

3. A. S. B, ज and द read षट्सु नस्वाहितादिषु

The printed Nārada reads thus:—

श्रावितश्चातुरेणापि यस्त्वर्थो धर्मसंहितः ।
मृतेऽपि तत्र साक्ष्यं स्यात् षट्सु चान्वाहितादिषु ॥

4. नो-ब, द.

5. भवता-द.

साक्षिण इति । श्रावितादृते तत्साध्यादिविशेष[1]परीक्षाभावाच्चार्थं श्रावयितुं साक्षिणां शक्नोतीत्यतः[2]—'क तद्वदतु साक्षित्वमिति साक्षी मृतान्तर' इति । यदा तु मुमूर्षुणा श्रावितास्तदा मृतेऽप्यर्थिनि भवन्त्येव साक्षिण इति ।

कात्यायनः [३६०]

अन्येन हि कृतः साक्षी नैवान्यस्तं विवादयेत् ।
तदभावे विनिर्युक्तो बान्धवो वा विवादयेत् ॥

[3]भावयेत्साक्षिभिः कार्यं मृते त्वर्थिनि बान्धवः ।
कुलादीनां समक्षं चेल्लिखितं भावयेत्सदा ॥

॥ इत्यसाक्षिणः ॥

---

1. परिज्ञानाभावात्-ज, द, वि. च
2. शक्नोत्यतः-द.
3. श्लोकोऽयं व्यवहारसौख्ये दृश्यते; कात्यायनस्मृतिसारोद्धारे न दृष्टः

# १७

## अथ साक्षिप्रत्युद्धारः

तत्र मनुनारदौ[1] [म. ८, ७२; ना. ४, १८९]

साहसेषु तु सर्वेषु स्तेयसंग्रहणेषु च ।
वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः ॥

कात्यायनः [३६६-३६७]

व्याघातेषु नृपाज्ञायाः[2] सङ्ग्रहे साहसेषु च ।
स्तेयपारुष्ययोश्चैव न परीक्षेत साक्षिणः ॥

अन्तर्वेश्मनि रात्रौ वा बहिर्ग्रामाच्च यो भवेत् ।
एतेष्वेवाभियोगे तु[3] परीक्षा नात्र साक्षिणाम् ॥

मनुः [८, ६९-७०]

[4]अनुभावी तु यः कश्चित्कुर्यात्साक्ष्यं विवादिनाम् ।
अन्तर्वेश्मन्यरण्ये वा शरीरस्यापि चात्यये ॥

स्त्रिया वा संभवे कार्यं[5] बालेन स्थविरेण वा ।
शिष्येन बन्धुना वाऽपि दासेन भृतकेन वा ॥

1. S. B. (a), ज, द, and A. S. B; omitted in उ.

2. व्याख्यातेषु नृपाज्ञायाः–उ; A. S. B. and S. B. (a)–'नृपाज्ञायां संग्रहे साहसेषु च'–ज, द.

3. भियोगश्चेत्–ज, द; एतैर्योऽप्यभियोगश्च—उ.

4. 'अनुभावी' साक्षाद्द्रष्टा । 'अन्तर्वेश्मनि' इति विरलजनोपलक्षणार्थम् । तेन शून्य-देवतायतनादीन्यपि विरलजनानि गृह्यन्ते—मेधातिथिः

5. 'स्त्रियाप्यसंभवे कार्यम्' इति मेधातिथिधृतपाठः

अनुभूतमनेनेत्यनुभावी ।

उशनाः—

[1]दासोऽन्धो बधिरः कुष्ठी[2] स्त्रीबालस्थविरादयः ।
एतेऽप्यनभिसम्बन्धाः साहसे साक्षिणो मताः ॥

नारदः [४, १८८, १९०-१९१]

असाक्षिणो ये निर्दिष्टा दासनैकृतिकादयः ।
कार्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः ॥

तेषामपि न बालः स्यान्नैको न स्त्री न कूटकृत् ।
न बान्धवो न चारातिर्ब्रूयुस्ते साक्ष्यमन्यथा ॥

बालोऽज्ञानादसत्यात्स्त्री पापाभ्यासाच्च कूटकृत् ।
[3]विक्रियाद्बान्धवः स्नेहाद्वैरनिर्यातनादरिः ॥

मनुः [८, ७७]

एकोऽलुब्धस्तु साक्षी[4] स्यात् बह्व्यश्शुच्योऽपि न स्त्रियः[5] ।
स्त्रीबुद्धेरस्थिरत्वात्तु दोषैश्चान्येऽपि ये वृताः ॥

कात्यायनः [३६५]

ऋणादिषु[6] परीक्षेत साक्षिणः स्थिरकर्मसु ।
साहसात्ययिके चैव परीक्षा कुत्रचित्स्मृता ॥

1. 'दासो' इत्यारभ्य 'ये निर्दिष्टा' इत्येतत्पर्यन्तो भागः बिकानीरकोशे भ्रष्टः।
2. द, ज, A. S. B. and S. B. (a)-कुब्ज for कुष्ठी
3. विब्रूयात् इति मुद्रितनारदीये
4. 'एको लुब्धस्त्वसाक्षी स्यात्' इति—मेधातिथिपाठः
5. च्यो न तु स्त्रियः—ज, द.
6. S. B. (a)-कुलादिषु परीक्षेत

मनुः [८, ७१]

बालवृद्धातुराणां च[1] साक्ष्येषु वदतां मृषा[2] ।
जानीयादस्थिरां वाचमुत्सिक्तमनसां तथा[3] ॥

इति साक्षिप्रत्युद्धारः

---

1. तु–द, उ.

2. A. S. B. ज, द and S. B. (a) supply the second half of this śloka, which is missing in उ.

3. 'उत्सिक्तमनसः' प्रकृत्यैवोपप्लुता अधीरधियः—मेधातिथिः

## १८

# अथ साक्षिदूषणम्

तत्र बृहस्पतिः [५, २१]

साक्षिणोऽर्थिसमुद्दिष्टान् सत्सु दोषेषु दूषयेत् ।
अदुष्टान् दूषयन्वादी तत्समं दण्डमर्हति ॥

कात्यायनः [२७८, २७५]

नातथ्येन प्रमाणं तु दोषेणैव तु दूषयेत् ।
मिथ्याभियोगे दण्ड्यः स्यात्सोऽर्थाद्वापि प्रहीयते[1] ॥

प्रमाणस्य हि ये दोषा वक्तव्यास्ते विवादिना ।
गूढास्तु प्रकटाः सभ्यैः काले शास्त्रप्रदर्शनात् ॥

विवादिनाऽविदितत्वेनानुद्भाविताः दोषाः शास्त्रप्रदर्शनेन प्रकटीकृत्य सभ्यैर्वक्तव्या इत्यर्थः ।

बृहस्पतिकात्यायनौ[2]

लेख्यदोषास्तु ये केचित्साक्षिणां चैव ये स्मृताः ।
वादकाले तु वक्तव्याः पश्चादुक्तांस्तु दूषयेत्[3] ॥

व्यासः

सभासदां प्रसिद्धं यल्लोकसिद्धमथापि वा ।
साक्षिणां दूषणं ग्राह्यमसाध्यं दोषवर्जनात् ॥

1. साध्यार्थाद्वापि हीयते-वि. स्मृतिचन्द्रिका, p. 143 च
2. बृह, ५, २२; का. स्मृ. सा. २७८.
3. हुक्तान्न दूषयेत्-द, वि. च; the others read पश्चादुक्तांस्तु दूषयेत्

अन्यैस्तु[1] साक्षिभिः साध्ये दूषणे पूर्वसाक्षिणाम् ।
अनवस्था भवेद्दोषः तेषामप्यन्यसंभवात् ॥

'असाध्यं दोषवर्जनात्'—'असाध्यम्' साधनानर्हम्; 'दोषवर्जनात्' अनवस्थादिदोषरहितत्वात् ।

बृहस्पतिः [५, २९]

लेख्यं वा साक्षिणो वापि विवादे यस्य दूषिताः ।
तस्य कार्यं न सिध्येत्तु[2] यावत्तन्न विशोधयेत् ॥

तत् लेख्यं साक्षिणश्च प्रमाणमिति यावत् ।

तथा [५, ३०]

साक्षिभिर्गदितैः सभ्यैः प्रक्रान्ते[3] निर्णये तु यत्[4] ।
पुनर्विवादं कुरुते तस्य राजा विचारयेत् ॥

व्यासः* [का॰ स्मृ॰ सा, ३८२-३८४ ; बृहस्पति, ५, २३-२५,२७]

साक्षिदोषाः प्रयोक्तव्याः संसदि प्रतिवादिना ।
[5]पत्रेऽभिलिखितान् सर्वान् वाच्याः प्रत्युत्तरं तु ये[6] ॥

1. A. S. B. ज, and S. B. (a)-अन्यैस्तु; अयैक–उ. को.

2. तथा स्मृ. चं. पाठः; शोध्यं तु इति मुद्रित बृहस्पतौ

3. प्रयोक्ता–ज, द.

4. Though A. S. B. and S. B. (a) also have यत्, स्मृतिचन्द्रिका reading यः is better; यः–वि.

* Attributed to Vyāsa by *Vīramitrodaya* (p. 165) and *Vyavahāramayūkha* also, but cited as Kātyāyana's by Vijñāneśvara, Varadarāja and Mādhava, and as from Bṛhaspati by Jīmūtavāhana.

5. A. S. B. विलिखितान्; the स्मृतिचंद्रिका reading of this half-verse is:—

पत्रेऽभिलेख्य तान् सर्वान् वाच्याः प्रत्युत्तरं तु ते ।

6. प्रत्युत्तरं ततः, इति व्यव. निर्ण., (११२)

प्रतिपत्तौ न साक्षित्वमर्हन्ति तु कदाचन ।
अतोऽन्यथा भावनीयाः क्रियया प्रतिवादिना[1] ॥

अभावयन्[2] दमं दाप्यः प्रत्यर्थी साक्षिणः स्फुटम्[3] ।
भाविताः साक्षिणो वर्ज्याः साक्षिधर्मनिराकृताः ॥

जितः सविनयं दाप्यः शास्त्रदृष्टेन कर्मणा ।
यदि वादी निराकाङ्क्षः [4]साक्षिसभ्येष्ववस्थितः ॥

'प्रत्युत्तरम्' उत्तरमुत्तरं प्रति, ते[5] दोषा वक्तव्या इत्यर्थः । 'अन्यथा' असंप्रतिपत्तौ ।

कात्यायनः [४०७-३७९]

येन कार्यस्य लोभेन निर्दिष्टाः कूटसाक्षिणः ।
गृहीत्वा तस्य सर्वस्वं कुर्यान्निर्विषयं ततः ॥

उक्तेऽर्थे साक्षिणो यस्तु दूषयेत्प्रागदूषितान् ।
[6]न च तत्कारणं ब्रूयात्प्राप्नुयात्पूर्वसाहसम् ॥

---

1. द, ज, A. S. B. and S. B. (a)–प्रतिपादिता.

2. *Smṛticandrikā* reading is असाधयन्; अनावयं–ज.

3. S. B. (a)–स्मृतम्

4. A. S. B, ज, द, and S. B. (a)–read साक्षिसत्ये, which is also the *Smṛticandrikā* reading; *Vyavahāranirṇaya* reads साक्षिष्वेव with the variant साक्षिसत्ये

5. 'ते' बि. कोशे लुप्तः

6. द, A. S. B. and S. B. (a)–नैव

## १९

## अथ साक्षिश्रावणम्[1]

तत्र कात्यायनः [३३९]

न कालहरणं कार्यं राज्ञा साक्षिप्रभाषणे[2] ।
महान् दोषो भवेत्कालाद्धर्मव्यावृत्तिलक्षणः ॥

नारदः [४, १९८]

[3]आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशम् ।
समस्तान् विदिताचारान्विज्ञातार्थान्[4] पृथक् पृथक् ॥

विष्णुः [८, १९]

साक्षिणश्चाहूय आदित्योदये कृतशपथान्[5] पृच्छेत ।

कात्यायनः [३८८-३९०]

अर्थिप्रत्यर्थिसान्निध्ये साध्यार्थस्य च सन्निधौ ।
प्रत्यक्षं [6]चोदयेत्साक्ष्यं न परोक्षं कथञ्चन ॥

अर्थस्योपरि वक्तव्यं तयोरपि विना क्वचित् ।
चतुष्पदेष्वयं धर्मो द्विपदस्थावरेषु च ॥

1. 'अथ साक्षिश्रावणम्' इति भ्रष्टं उ. कोशे

2. क्षिप्रप्रभाषणे–द.

3. सादरमाहूय साक्षिणः समस्तान् पृच्छेत् पूर्वश्रुतार्था नेकैकशो विज्ञाताचारानथवा समस्तान् विदिताचारान् पृच्छेदविज्ञाताचारांश्चैकैकशः । अप्रतिदूषिता ह्यविज्ञाताचारा अपि । प्रश्नश्चोभयथापि युक्तः । नियम्य शपथैर्भृशं सुतरामिति—असहायभाष्ये

4. विज्ञानार्थान्–उ.

5. शपथाननुमतस्तेन–ज, द.

6. देशयेत् इति टोडरानन्दपाठः

तौल्यगणिममेयानामभावेऽपि [1]हि वादयेत् ।
क्रियाकारेषु सर्वेषु साक्षित्वं [2]न ततोऽन्यथा ॥

'तौल्यम्' सुवर्णादि । 'गणिमम्' कपर्दकादि । 'मेयम्' व्रीह्यादि । 'क्रियाकारेषु' व्यवहारेषु ।

मनुः [८, ८७, ७९-८६]

[3]देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान् ।
उदङ्मुखान् प्राङ्मुखान्वा पूर्वाह्णे वा शुचिः शुचीन् ॥

[4]सभान्तः साक्षिणः [5]सर्वानर्थिप्रत्यर्थिसन्निधौ ।
प्राड्विवाकोऽनुयुञ्जीत विधिनानेन सान्त्वयन् ॥

यद्द्वयोरनयोर्वेत्थ[6] कार्येऽस्मिंश्चेष्टितं मिथः[7] ।
तद्ब्रूत सर्वं सत्येन युष्माकं ह्यत्र साक्षिता ॥

[8]सत्यं साक्ष्ये ब्रुवन् साक्षी लोकानाप्नोति[9] पुष्कलान्[10] ।

1. विवादयेत् इति टोडरानन्दपाठः

2. A. S. B. and टोडरानन्द–न ततोऽन्यथा; तत्त्वतोऽन्यथा–उ; नत्वतोऽन्यथा–ज, द.

3. 'देवाः' दुर्गामार्तण्डादयः प्रतिमाः । 'शुचीन्' कृतस्नानाचमनादिविधीन् । ऋतमिति श्लोकपूरणार्थमेव ॥ (मेधातिथिः)

4. 'सान्त्वयन्' अपरुषं वदन् । पारुष्येण हि प्राड्विवाकाद्बिभ्यतोऽप्रकृतिस्था न सर्वं स्मरेयुः, संस्कारभ्रंशहेतुत्वाद्भयस्य । पृच्छतीति प्राट्; विशेषेण धर्मसङ्कटेषु विवेक्तीति विवाकः; प्राट् चासौ विवाकश्च प्राड्विवाकः ॥ (मेधातिथिः)

5. द, A. S. B. and S. B. (a)–पूर्वान् for सर्वान्; प्राप्तान् इति मेधातिथिपाठः

6. A. S. B, ज, द and S. B. (a)–अनयोरर्थे

7. 'मिथः' प्रत्यक्षं रहसि वा । 'चेष्टितं' वृत्तम् ॥ (मेधा.)

8. सम्यक् साक्ष्ये ब्रुवन्–ज.

9. लोकान् प्राप्नोति–बि.

10. 'लोकानाप्नोत्यनिन्दितान्'–इति मेधातिथिपाठः; लोकानाप्नोति अनुत्तमान् इति गोविन्दराजपाठः ।

इह चानुत्तमां कीर्तिं वागेषा[1] ब्रह्मपूजिता ॥

साक्ष्येऽनृतं वदन् साक्षी पाशैर्बध्येत वारुणैः ।
विवशः शतमाजातीस्तस्मात्साक्ष्ये वदेदृतम् ॥

सत्येन पूयते साक्षी धर्मः सत्येन वर्धते ।
तस्मात्सत्यं हि वक्तव्यं[2] सर्ववर्णेषु साक्षिभिः ॥

आत्मैव ह्यात्मनः शाक्षी गतिरात्मा तथात्मनः ।
मावसंस्थाः स्वमात्मानं नृणां साक्षित्वमुत्तमम् ॥

मन्यन्ते वै पापकृतो न कश्चित्पश्यतीति नः ।
तांश्च देवाः प्रपश्यन्ति स्व[श्चै]वान्तरपूरुषः ॥

द्यौर्भूमिरापो हृदयं चन्द्रार्काग्नियमानिलाः ।
रात्रिः संध्ये च धर्मश्च वृत्तज्ञाः सर्वदेहिनाम् ॥

'सभान्तः' सभामध्ये । 'अनुयुञ्जीत' पृच्छेत् । 'शतमाजातीः' शतं जन्मानि ॥

याज्ञवल्क्यः [२, ७३-७४]

साक्षिणः श्रावयेद्वादी प्रतिवादिसमीपगान् ।
[3]ये पातककृतां लोका महापातकिनां तथा ॥

अग्निदानां च ये लोका ये च स्त्रीबालघातिनाम् ।
तान् सर्वान् समवाप्नोति यः साक्ष्यमनृतं वदेत् ॥

1. A. S. B, ज, द and S. B. (a)-वाग्यथा; प्रागेषा-वि.

2. प्रवक्तव्यं-वि.

3. स्मृत्यन्तराम्न्यायाच्च प्राङ्मुखानुदङ्मुखान् वा प्रयतान् पूर्वाह्णे प्रणिहितैकाग्रानर्थि प्रत्यर्थिसभ्यसमक्षं तथाभूत एव प्राड्विवाकोऽपि हि 'ये पातककृतां लोका' इति श्रावयेत्—विश्वरूपः

[1] बृहस्पतिः

सत्यप्रशंसावचनैरनृतस्यापवर्जनैः ।
सभ्यैः संबोधनीयास्तु धर्मशास्त्रप्रवेदिभिः[2] ॥

आजन्मनश्चामरणात्सुकृतं यदुपार्जितम्[3] ।
तत्सर्वं नाशमायाति [4]अनृतस्याभिशंसनात् ॥

[5]कूटसभ्यः कूटसाक्षी ब्रह्महा च समाः स्मृताः ।
भ्रूणहा वित्तहा चैषां नाधिकः समुदाहृतः ॥

एवं विदित्वा तत्साक्षी यथा भूतं[6] वदेत्ततः ।
तेनेह कीर्तिमाप्नोति परत्र च शुभां गतिम् ॥

साक्षिश्रावणे विष्णुनारदौ [वि. ८, ३६; ना. ४, २११]

अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥

नारदः [४, २००-२०२-२०६, २१२-२१६, २२६-२२८]

[7]पुराणैर्धर्मवचनैः सत्यमाहात्म्यदर्शनैः[8] ।
अनृतस्यापवादैश्च भृशमुत्त्रासयेदपि[9] ॥

1. ५, ३२-३५.

2. प्रवेदिभिः इति व्यवहारसौख्ये च; धर्मशास्त्रार्थवेदिभिः इति व्यवहारमातृका (p. 329)

3. यत्त्वयार्जितम् इति व्यव. मा. (p. 329)

4. वितथस्याभिशंसनात्, इति व्यव. मा., व्यव. सौ. च

5. गूढसभ्यः इति व्यव. मा.

6. यथार्थं इति व्यव. मा.

7. पौराणैः इति स्म, वी. मि. च

8. कीर्तनैः इति वीर. मि., मु. नार. च

9. S. B. (a)-उल्लासयेत् for उत्तासयेत्; उत्त्रासयेदिमान् इति वीरमित्रोदये, मु. नार. च

नगरप्रतिरुद्धः सन् बहिर्द्वारे बुभुक्षितः[1] ।
[2]अमित्रान् भूयशः पश्येद्यः साक्ष्यमनृतं वदेत् ॥

यां रात्रिमधिविन्ना स्त्री यां चैवाक्षपराजितः ।
यां च भाराभितप्ताङ्गो दुर्विवक्ता [3]स तां वसेत् ॥

साक्षी साक्ष्यसमुद्देशे गोकर्णशिथिलं चरन्[4] ।
सहस्रं वारुणान् पाशानात्मनि प्रतिमुञ्चति ॥

तस्य वर्षशते पूर्णे पाश एकः[5] प्रमुच्यते ।
एवं स बन्धनात्तस्मान्मुच्यते नियतं क्रमात्[6] ॥

एकमेवाद्वितीयं यत्प्राहुः[7] पावनमात्मनः ।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥

वरं कूपशताद्वापी वरं वापी शतात्क्रतुः ।
वरं क्रतुशतात्पुत्रः सत्यं पुत्रशताद्वरम् ॥

भूर्धारयति सत्येन सत्येनोदेति भास्करः ।
सत्येन वायुः पवते[8] सत्येनापः स्रवन्ति च ॥

1. 'नग'र प्रतिरुद्धः इति ना. मनु. सं. पृ. ७१; 'नागरैः' इति व्यव. मा., ३१०.

2. अग्निदग्धं स्वयं पश्येत्–द.

3. A. S. B, ज, द and S. B. (a)–दुर्विवक्ता; दुर्विरक्तः–उ.

4. So द, A. S. B. and S. B. (a) and ना. म. सं., ७२; मु. नारदौ—

साक्षी साक्ष्ये समुद्दिशन् गोकर्णशिथिलं वचः ।
सहस्रं वारुणान् पाशान् मुंक्ते स बन्धानध्रुवम् ॥

5. Jolly has एव for एकः which is not so good a reading.

6. Jolly reads–एवं संबन्धनात्तस्मान् मुच्यते नियतात्म सः । ना. म. सं., ७१, 'नियताः समाः'

7. A. S. B. and S. B. (a)–प्रोक्तं for प्राहुः; तत्प्राहुः, ना. म. सं.

8. द, S. B. (a), A. S. B. and Jolly have प्लवते for पवते, which is the better reading; सत्येन वहते वायुः–बि.

सत्यमेव परं धाम[1] सत्यमेव परं तपः ।
सत्यमेव परो धर्मो लोकानामिति नः श्रुतम् ॥

सत्यं देवाः समासेन मनुष्यास्त्वनृतं स्मृतम् ।
इहैव तस्य देवत्वं यस्य सत्ये स्थिता मतिः[2] ॥

नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम् ।
साक्षिधर्मे विशेषेण सत्यमेव वदेत्ततः ॥

पुराणानुमतौ चात्र द्वौ श्लोकौ समुदाहृतौ[3] ।
[4]यौ श्रुत्वा सत्यमेवेह सदा वाच्यं नरैर्बुधैः ॥

यः परार्थेऽपहरति[5] स्वां वाचं पुरुषाधमः ।
आत्मार्थे किं न कुर्यात्स पापं[6] नरकनिर्भयः[7] ॥

[8]अर्था वै वाचि नियता वाङ्मूला वाग्विनिस्सृताः ।
यस्तु तां स्तेनयेद्वाचं स सर्वस्तेयकृन्नरः ॥

'गोकर्णशिथिलं चरन्' गोकर्णवच्छिथिलं व्यवहरन् दृढमब्रुवन्नित्यर्थः ।

1. Jolly and ना. म. सं., read दानं for धाम (=स्थानं); द. reads धर्मः for धाम.

2. द, ज, बि, A. S. B. and S. B. (a)–स्थितं मनः for स्थिता मतिः

3. मुद्रितनारदो इत्थं पठति—"पुराणोक्तौ द्वौ श्लोकौ भवतः"; ना. मनु. सं. तथैव

4. Line missing in the printed editions of *Nāradasmṛti.*

5. Jolly reads प्रहिणुयात् for ऽपहरति । 'प्रहरतस्तांवाचं' इति ज, द; प्रहरते–उ. बि. ना. म. सं., ७७, reads अपहरति.

6. Jolly reads पापो for पापं, which is ना. म. सं. reading.

7. निर्णयम्–द.

8. So ना. म. सं., ७७; Jolly reads (p. 107)—

वाच्यर्था नियतास्सर्वे वाङ्मूला वाग्विनिश्रिताः ।
यो हितां स्तेनयेद्वाचं स सर्वस्तेयकृन्नरः ॥

बौधायनः[1]

त्रीनेव च पितॄन् हन्ति त्रीनेव च पितामहान्[2] ।
सप्तजातानजातांश्च साक्षी साक्ष्यं मृषा ब्रुवन्[3] ॥

[4]पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
[5]शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥

सर्वं भूम्यनृते हन्ति साक्षी साक्ष्यं मृषा ब्रुवन्[6] ।

॥ इति साक्षिश्रावणम् ॥

---

1. बौ. ध. सू., १, १९, १३–१५

2. प्रपितामहान्–वि.

3. वदन्निति मु. बौ. ध. सू.

4. मनुस्मृति, ८, ९८; ९ नारदस्मृति, ४, २०९; बौ. ध. सू, १, १९, १५, supplies this half verse—हिरण्यार्थेऽनृते हन्ति त्रीनेव च पितामहान् । *vide* p. 138 *infra*.

5. हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
सर्वं भूम्यनृते हन्ति मास्म भूम्यनृतं वदेत् ॥ [मनु, ८, ९९; नारद, ४, २०९]

6. मु. बौ. reads वदन् for ब्रुवन्

## २०

# अथ साक्षिशपथः

तत्र गौतमः[1]

शपथेनैके[2] सत्यकर्म । तद्देवराजब्राह्मणसंसदि[3] स्यात् अब्राह्मणानाम् ।

'सत्यकर्म' सत्ये [4]व्यवस्थापनम्[5] ।

शङ्खलिखितौ

साक्षिणः सुवर्णरजतरत्नगोधान्यसूर्याग्निगजस्कन्धाश्वपृष्ठरथोपस्थशस्त्रादिभिस्तथा पुत्रपौत्रैर्यथावर्णं परिग्रहविशेषतः स्याद्देवब्राह्मणस्वामिनामग्रतः ॥

सुवर्णादिस्पर्शनेन, सूर्यादिदर्शनेन, शापयेदिति शेषः । तथा पुत्रपौत्रैरिति । पुत्रपौत्रशिरःस्पर्शनेन स्वल्पेऽर्थे शापयेदित्यर्थः । यथावर्णमिति । यस्य वर्णस्य यद्द्रव्यस्पर्शनेन शपथ आम्नातः, [6]स्मृत्यन्तरे स तेनैव कारयितव्य इत्यर्थः ।

1. १३, १३-१४.

2. शपथेनैकेन-द.

3. द, A. S. B. and S. B. (a)-supply the words that follow, which are missing in the other manuscripts.

4. व्यवस्थानम्-द.

5. यदा तु साक्ष्यादिप्रमाणाभावः प्रत्यन्तमयः तथा 'शपथेन' कोशादिना 'एके' 'सत्यकर्म' सत्यव्यवस्थापनं इच्छन्ति । ......गौतमस्तु न्यायेनैव । तत्र प्रमाणक्लेशे सति शपथं, असति न्याय एवेति द्रष्टव्यम (मस्करि)

6. "तथा च स्मृत्यन्तरम्—

अब्राह्मणान्नृपः सम्यक्कारयेद्देवसन्निधौ ।
शपथं तदलाभे च ब्राह्मणस्य समीपतः ॥
तदलाभे नृपस्यापि भगवान् काश्यपोऽब्रवीत् ।" (मस्करिभाष्ये, p. 219)

नारदः [४, १९९]

[1]सत्येन श्रावयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥

सत्येन श्रावयेत्[2] विप्रमित्यपकृष्टब्राह्मणविषयं, न ब्राह्मणमात्रविषयम् । तस्य गौतमेन शपथनिषेधात् । 'श्रावयेत्' शापयेदित्यर्थः ।

[3]मनुर्नारदश्च षष्ठे

ब्रूहीति ब्राह्मणं पृच्छेत्सत्यं ब्रूहीति पार्थिवम् ।
गोबीजकाञ्चनैर्वैश्यं शूद्रमेभिस्तु पातकैः[4] ॥

ब्रह्मघ्नो ये स्मृता लोका ये च स्त्रीबालघातिनाम्[5] ।
मित्रद्रुहः कृतघ्नस्य ते ते स्युर्ब्रुवतो[6] मृषा[7] ॥

जन्मप्रभृति यत्किञ्चित्पुण्यं [8]भद्र त्वया कृतम् ।
तत्ते सर्वं [9]शुनो गच्छेद्यदि ब्रूयास्त्वमन्यथा ॥

एकोऽहमस्मीत्यात्मानं यस्त्वं कल्याण मन्यसे ।
नित्यं स्थितस्ते हृद्येष पुण्यपापेक्षिता मुनिः ॥

1. Identical with *Manusmṛti*, VIII, 113.
2. द, A. S. B. and S. B. (a)-भावयेत्; शापयेत्-ड, त्रि, and ज.
3. मनु, ८, ८८-९६; नारद, ४, २०९
4. 'गोबीजकाञ्चनैः पातकैः' गोबीजकाञ्चनविषयैः पातकप्रदर्शनैः पृच्छेदित्यर्थः —मेधातिथिः
5. A. S. B. and S. B. (a)-०घातिनः
6. द, ज, A. S. B. and S. B. (a)-वदतो for ब्रुवतो
7. Compare नारद, ४, २२५—

   ब्रह्मघ्नस्य तु ये लोका ये च स्त्रीबालघातिनाम् ।
   ये च लोकाः कृतघ्नस्य ते ते स्युर्ब्रुवतो वृथा ॥

8. भद्रम्-द.
9. 'शुनो गच्छेत्' निष्फलं स्यात् भवत इत्यर्थः—मेधातिथिः

यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः ।
तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः[1] ॥

नग्नो मुण्डः कपालेन[2] भिक्षार्थी क्षुत्पिपासितः ।
[3]क्रुद्धः शत्रुगृहं गच्छेद्यः साक्ष्यमनृतं वदेत् ॥

अवाक्शिरास्तमस्यन्धे किल्बिषी नरकं [4]व्रजेत् ।
यः प्रश्नं वितथं ब्रूयात्पृष्टः सन् धर्मनिश्चये ॥

अन्धो मत्स्यानिवाश्नाति [5]निरपेक्षः सकण्टकान् ।
यो भाषतेऽर्थवैकल्य [6]मप्रत्यक्षं [7]सभां गतः ॥

यस्य विद्वान् हि वदतः क्षेत्रज्ञो[8] नाभिशङ्कते ।
तस्मान्न देवाः श्रेयांसं लोकेऽन्यं पुरुषं विदुः ॥

म. नारदौ[9]

यावतो बान्धवान् यस्मिन् हन्ति साक्ष्येऽनृतं वदन् ।
तावतः संख्यया तस्मिञ्छृणु [10]सौम्यानुपूर्वशः ॥

1. व्रज–द. 'गम' इति मेधातिथिपाठः
2. कपाली च इति मेधातिथिपाठः; नारदस्मृतिः, ४, २०१.
3. 'अन्धः शत्रुकुलं' इति मेधातिथिपाठः; 'क्रुद्धः शत्रुकुलं'–वि.
4. 'पतेत्' इति मेधातिथिपाठः
5. मेधातिथि [८, ९५]—स नरः कण्टकैस्सह for निरपेक्षः सकण्टकान् ।
6. 'अर्थवैकल्यं' सत्यादपेतं भाषते—मेधातिथिः
7. सभागतः–द.
8. 'क्षेत्रज्ञो', अन्तर्यामी पुरुषः—मेधातिथिः
9. मनु, ८, ९७–९९; नारद. ४, २०७–२०९.
10. सौम्यानि पूर्वशः–द.

[1]पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥

हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदीः ॥

मनुः [८, १००-१०१]

[2]अप्सु भूमिवदित्याहुः स्त्रीणां भोगे च मैथुने ।
अब्जेषु चैव रत्नेषु सर्वेष्वश्ममयेषु च ॥

[3]पशुवत्क्षौद्रघृतयोर्यानेषु च तथाश्ववत् ।
गोवद्रजतवस्त्रेषु धान्ये ब्रह्मणि चैव हि ॥

एतान् दोषानवेक्षस्व[4] सर्वाननृतभाषणे ।
यथा श्रुतं यथा दृष्टं सत्यमेवाञ्जसा वद ॥

'अब्जेषु रत्नेषु' मुक्ताफलादिषु । 'ब्रह्मणि' वेदे ।

नारदः [४, २१६—२२४]

सत्यं ब्रूह्यनृतं त्यक्त्वा सत्येन स्वर्गमेष्यसि ।
उक्त्वाऽनृतं महाघोरं नरकं प्रतिपत्स्यसे ॥

1. पञ्च बान्धवांश्चानृतं हन्ति । ततश्च तेषां नरकपातनम् । मातापितरौ जायामिथुनं चापत्यमिति पञ्च । ...अर्थवादश्चायं न तत्कार्योपदेशः । तत्कार्योपदेशे हि हिंसाप्रायश्चित्ती स्यात् । कौटसाक्ष्यप्रायश्चित्तमेतद्भवति । उत्तरोत्तरसंख्यादिवृद्धिः प्रायश्चित्तगौरवार्था न पुनर्विवक्षितैव । अयं पुरुषः कस्य दास इत्येवं संशये यदनृतं तत् 'पुरुषानृतं' इत्युच्यते—मेधातिथिः

2. उ, A. S. B. and S. B. (a) and मेधा. have अप्सु for पशु, in others. This is in accord with Gautama [१३, १६–१९]:–'गोऽश्वपुरुषभूमिषु दशगुणोत्तरम् । सर्वं वा भूमौ । हरणं वा नरकः । भूमिवदप्सु मैथुनसंयोगे च ।'

3. This śloka missing in Medhātithi's text and later recensions. Chowkhamba ed. reads धान्ये ब्राह्मणवद्विधिः

4. S. B. (a)-अवेक्ष्य त्वं, which is also Medhātithi's *pāṭha*.

नरकेषु च ते शश्वज्जिह्वामुत्कृत्य दारुणाः ।
असिभिः शातयिष्यन्ति बलिनो यमकिङ्कराः ॥

[1]शनैर्भेत्स्यन्ति चाक्रम्य क्रोशन्तमपरायणम् ।
अवाक्छिरसमुत्क्षिप्य क्षेप्स्यन्त्यग्नौ ह्रदेषु च[2] ॥

अनुभूय [3]सुदुःखांस्तांश्चिरं नरकवेदनाः ।
इह [4]यास्यस्यभव्यासु गृध्रकाकादियोनिषु ॥

ज्ञात्वैताननृते दोषान् तथा सत्येषु सद्गुणान् ।
[5]सत्यं वदोद्धरात्मानं नात्मानं पातय स्वयम् ॥

न बान्धवा न सुहृदो न धनानि महान्त्यपि ।
[6]अलं धारयितुं सर्वे तमस्युग्रे निमज्जतः ॥

[7]पितरस्त्त्ववलम्बन्ते त्वयि साक्षित्वमागते ।
तारयिष्यति किं वास्मान् किं वास्मान् पातयिष्यति ॥

सत्यमात्मा मनुष्यस्य सत्ये सर्वं प्रतिष्ठितम् ।
[8]सर्वथैवात्मनात्मानं श्रेयस्येव[9] नियोजय ॥

1. शतै र्भेत्स्यन्ति–ज, द; शूलैः इति मु. नार. पृ. १०४
2. अवस्थितं समुत्कृत्य क्षेप्स्यन्ति त्वां हुताशने. इति मु. ना.
3. अनुभूय च तास्तीव्राश्चिरमिति, मु. नार., १०५
4. यास्यसि पापासु–मु. नार.
5. द, ज, A. S. B. and S. B. (a) read—
   सत्यं धर्मेण सततमात्मानं पावयेत् स्वयम् ।
6. A. S. B. and S. B. (a) read —अथ वारयितुं सर्वे तमस्यध्वनि मज्जतः; ज and द read सजतः; मु. नार. reads शक्ताः for सर्वे
7. द, A. S. B. and S. B. (a) read—
   पितरस्तस्य कल्पन्ते; 'पितरस्तस्य कम्पन्ते' इति–ज.
8. 'सत्यमुत्कृत्वात्मनात्मानं', इति मु. ना.
9. A. S. B.–श्रेयस्येनं; श्रेयसा इति मु. नारदीये

[1]यां रात्रिमजनिष्ठास्त्वं यां च रात्रिं मरिष्यसि ।
वृथा तदन्तरं ते स्यात् साक्ष्यं चेदन्यथा वदेः[2] ॥

याज्ञवल्क्यः [२, ७५]

सुकृतं यत्त्वया किञ्चिज्जन्मान्तरशतैः कृतम् ।
तत्सर्वं तस्य जानीहि यं पराजयसे मृषा[3] ॥

मनुः [८, १०२]

गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान् ।
प्रेष्यान्वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥

ये व्यपेताः स्वकर्मभ्यः परपिण्डोपजीविनः ।
द्विजत्वमभिकाङ्क्षन्ति तांश्च शूद्रवदाचरेत् ॥

एते ब्राह्मणा अपि सन्तः साक्ष्ये शूद्रवदेव शपथं कारयितव्या इत्यर्थः ॥

॥ इति साक्षिशपथः ॥

---

1. The text follows *Nāradīya-Manusamhitā*; and the first half is identical with *Baudhāyana*, १, १०, ३२; but Jolly's *Nārada* has

यस्यां रात्रावजनिष्ठा यस्यां रात्रौ मरिष्यसि ।
वृथा तदन्तरं तुभ्यं साक्ष्यं चेदन्यथा कृथाः ॥

2. वदेत्–व.

3. वृथा–वि. Viśvarūpa reads मृषा.

# २१

# अथ साक्ष्योक्तविधिः

तत्र कात्यायनः [३८७; ३९१]

सभान्तस्थैस्तु[1] वक्तव्यं साक्ष्यं नान्यत्र साक्षिभिः ।
सर्वसाक्ष्येष्वयं [2]धर्मोऽन्यत्र स्यात्स्थावरेषु च ॥

वधे च प्राणिनां साक्ष्यं वादयेच्छिवसन्निधौ[3] ।
तदभावे तु चिह्नस्य नान्यत्रैवं प्रवादयेत्[4] ॥

[5]अनुद्विग्नेन चित्तेन दृष्टं सम्यग्यदा तु यत् ।
प्रत्यक्षं तत्स्मृतं कार्यं साक्षी साक्ष्यं तु तद्वदेत् ॥

'तदभावे' [6]शिवाभावे । 'चिह्नस्य' अस्थिकेशादेः सन्निधावित्यर्थः ।

बृहस्पतिः [५, ४२]

विहायोपानदुष्णीषं दक्षिणं पाणिमुद्धरेत् ।
हिरण्यं[7] गोशकृद्दर्भान् समादाय [8]ऋतं वदेत् ॥

गौतमः [१३, ६]

नासमवेता अपृष्टाः प्रब्रूयुः ॥

'असमवेता' अमिलिताः ।

1. ज, द, A. S. B. and S. B. (a)-सभां गतैस्तु
2. धर्मो अन्या तु स्यात्स्थावरेषु च-ज.
3. A. S. B. and S. B. (a)-शुक्रसन्निधौ; वादयेच्छत्रुसन्निधौ-द; 'शवसन्निधौ' इति टोडरानन्दे
4. ज, द, वि, A. S. B. and S. B. (a)-नान्यथैव च दापयेत्
5. Cited by *Todarānanda* but missed by Kane.
6. A. S. B. and S. B. (a)-शुक्राभावे; शवाभावे-ज.
7. 'हिरण्यगोशकृद्दर्भमादाय ऋणमुद्धरेत्'-वि.
8. सत्यं वदेत्-द.

कात्यायनः [३९४-३९५]

समवेतैस्तु यद्दृष्टं वक्तव्यं तैस्तथैव तत्[1] ।
[2]विभिन्नैर्नैककार्ये च [3]वक्तव्यं तत्पृथक् पृथक् ॥

भिन्नकाले तु यत्कार्यं विज्ञातं तत्र साक्षिभिः ।
एकैकं[4] वादयेत्तत्र भिन्नकालं[5] तु तद्भृगुः ॥

[6]नापृष्टैरनियुक्तैर्वा समं सत्यं प्रयत्नतः ।
वक्तव्यं सक्षिभिः साक्ष्यं विवादस्थानमागतैः ॥

नैककार्यमिति । अनेककार्यमित्यर्थः । 'अनियुक्तैः' साक्षित्वेन अनुपन्यस्तैः ।

बौधायनः [१, २०, २९]

[7]लोकाः प्रतिग्रहार्थं यथादृष्टं यथाश्रुतं[8] साक्ष्यं ब्रूयुः ।

[9]मनुः [८, ७४]

तत्र सत्यं ब्रुवन् साक्षी धर्मार्थाभ्यां न हीयते ।

कात्यायनः [३९२]

स्वभावोक्तं वचस्तेषां ग्राह्यं यद्दोषवर्जितम् ।
उक्ते तु साक्षिणो राज्ञा प्रष्टव्या न पुनः पुनः ॥

इति साक्षिवादविधिः[10] ।

---

1. ज, द, A. S. B. and S. B. (a)–तत्तथैव हि
2. विभिन्नेनैव कार्यन्तु–द; 'विभिन्नैकैककार्ये यत्' इति अपरार्कपाठः
3. तद्वक्तव्यं पृथक् पृथक्–द.
4. एकैके–ज.
5. A. S. B. and S. B. (a)–काले च
6. Not found in Kane's collection; ascribed to *Bṛhaspati* also, (८, ४२)
7. लोकसङ्ग्रहणार्थं for लोकप्रतिग्राहार्थम् मुद्रितबौधायने, द. च
8. यथादृष्टं श्रुतं–द
9. The citation from Manu is missing in उ and बि.
10. A. S. B, ज, द and S. B. (a)–इति साक्षिवादविधिः

# २२

## अथ साक्षिपरीक्षा

कात्यायनः [३४०, ४०९]

उपस्थितान् परीक्षेत साक्षिणो नृपतिः स्वयम् ।
साक्षिभिर्भाषितं[1] वाक्यं सह सभ्यैः परीक्षयेत् ॥

यदा शुद्धा क्रिया पाल्या[2] तदा तद्वाक्यशोधनम् ।
[3]शुद्धार्थवाक्यात् यश्शुद्धः स शुद्धार्थोऽन्यथा न तु ॥

'क्रिया' अत्र साक्षिरूपं प्रमाणम् ।

बृहस्पतिः [५, ४३]

उपस्थिताः परीक्ष्याः स्युः स्वरवर्णेङ्गितादिभिः ।

1. भावितं–द.

2. A. S. B., S. B. (a) and मितक्षरा, २, ८०–न्याय्यात् for पाल्या; न्याय्या–ज; न्यायात्–द.

3. Lacunae in उ. supplied by ज, A. S. B. and S. B. (a); शुद्धाच्च वाक्यादिति मिताक्षरापाठः [२, ८०]; "शुद्धतायां तु वाक्यार्थः शुद्धः शुद्धोऽन्यथा न तु" इति व्य. मातृकायाम् ।

## तत्र कूटसाक्षिणः

शङ्खलिखितौ

[1]मन्त्रिभिः शास्त्रसामर्थ्याद्दुष्टलक्षणं ग्राह्यम् । तिर्यक् प्रेक्षते, समन्तादेवावलोकयति, अकस्मात् मूत्रपुरीषं विसृजति, देशाद्देशं गच्छति, पाणिना पाणिं पीडयति, नखान्निकृन्तति, मुखमस्य विवर्णतामेति, प्रस्विद्यति चास्य ललाटं, चक्षुर्वाचं न प्रतिपूजयति, अकस्माद्ददाति, प्रशंसति, पुनः पुनः अन्यमपनुदति, बहिर्निरीक्षते, शास्त्रं परामृशति, [शोकमुपवर्णयति][2], भूमिं विलिखति, शिरः प्रकम्पयति, ओष्ठौ निर्भुजति,[3] सृक्किणी परिलेढि, अविस्मितः कर्मसु महत्सु भ्रुवौ संहरति, हसति, तूष्णीं ध्यायति, [4]पूर्वापरविरुद्धं व्याहरति, एवमादि· दुष्टलक्षणम् । क्रुद्धस्य च स्वामिनोऽन्यत्र प्रकृतिशीलात्[5] । तत्र राजमूला व्यवहाराः[6] ॥

क्रुद्धस्य चेति क्रोधाविष्टस्यापि राज्ञो मन्त्रिभिरेतान्येव चिह्नानि गृहीतव्यानि । 'अन्यत्र प्रकृतिशीलात्' स्वभावत एव य एवंविधः तद्व्यतिरेकेणैतानि [7]दुष्टस्य लक्षणानि । राजक्रोधावधारणे प्रयोजनमाह—'राजमूला[8] व्यवहाराः' । यत इति शेषः ।

1. A. S. B., S. B. (a) ज, द. and व्यव. सौ. prefix तत्र to मन्त्रिभि
2. ज, द, A. S. B. and S. B. (a)-शोकं उपवर्णयति ; लुप्तं उदयपुरकोशे
3. S. B. (a)-तूष्णौ, but ओष्ठौ makes sense ; ओष्ठौ निर्भुजति-ज, द.
4. पूर्वोत्तर-द.
5. प्रकृतिशीलात् । स्वभावत एव य एवंविधः-द.
6. राजमूलो व्यवहारः-उ.
7. द, ज, A. S. B. and S. B. (a)-दुष्टत्वस्य क्रोधस्य च लक्षणानि ।
8. लो व्यवहारः-द.

<u>नारदः</u> [४, १९३-१९८]

[1]यस्त्वात्मदोष[2]दुष्टत्वादस्वस्थ इव लक्ष्यते ।
स्थानात्स्थानान्तरं गच्छेदेकैकं चानुधावति[3] ॥

[4]कासत्यकस्माच्च भृशमाभीक्ष्णं निश्वसत्यपि ।
[5]विलिखत्यवनिं पद्भ्यां बाहू वासश्च धूनयेत् ॥

भिद्यते मुखवर्णोऽस्य ललाटं स्विद्यते यथा[6] ।
[7]शोषमागच्छतश्चौष्ठौ ऊर्ध्वं तिर्यक् च वीक्षते ॥

त्वरमाण [8]इवा[विद्धमपृष्टो] बहु भाषते ।
कूटसाक्षी स विज्ञेयस्तं पापं विनयेद्भृशम्[9] ॥

[10]श्रावयित्वा तथाऽन्येभ्यः साक्षित्वं [11]योऽपनिह्नुते ।
स विनेयो भृशतरं कूटसाक्ष्यधिको हि सः ॥

'आविद्धम्' आकुलम्[12] ॥

---

1. यश्चात्र–द.
2. दोषमिन्नत्वादिति मु. ना.
3. अत्र प्राड्विवाकस्य व्यवहारदर्शनमुपदिश्यते । साक्षिप्रश्नकाल उपस्थित इङ्गिताकारादि परीक्षेत । न केवलमुक्तदोषदूषित एव प्रभाहः । एवंक्रियोऽपि न प्रष्टव्यः, कूटसाक्षी सः–असहायः
4. द, ज, A. S. B. and S. B. (a)–कासत्यकस्माच्च, which is also the reading adopted by Nīlakaṇṭha (ed. Kane, p. 40); कामत्यकस्माच्च–उ. 'कामत्यनिभृतोऽकस्मादि'ति मु. ना.
5. 'भूमिं लिखति पादाभ्यां' इति मु. ना.
6. Nīlakaṇṭha like Jolly reads 'तथा' for 'यथा'; A. S. B. and S. B. (a) have ऽन्यथा for यथा; तथा makes a better reading; स्विद्यते-ऽन्यथा–ज. द.
7. शोकमाग–द.
8. इवाविद्धमपृष्टो–द. इवात्यर्थमपृष्टो–मु. ना.
9. 'विनयेन्नृपः' इति मु. ना.
10. भावयित्वा–द; मु. ना.
11. बोधि–द.
12. द, ज, A. S. B. and S. B. (a)–'आविद्धं' आकुलम्

# २३

## अथ साक्षिदण्डः

तत्र कात्यायनः [४०६]

उक्त्वाऽन्यथा ब्रुवाणाश्च दण्ड्याः स्युर्वाक्छलान्विताः ॥

मनुः [८, ११८-१२३]

लोभान्मोहाद्भयान्मैत्र्यात्कामात्क्रोधात्तथैव च ।
अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते ॥

एषामन्यतमः[1] स्थाने यः साक्ष्यमनृतं वदेत् ।
तस्य दण्डविशेषांस्तु प्रवक्ष्याम्यनुपूर्वशः ॥

लोभात्सहस्रं दण्डस्तु[2] मोहात्पूर्वन्तु साहसम् ।
भयाद्द्वौ मध्यमौ दण्ड्यौ मैत्र्यात्पूर्वं[3] चतुर्गुणम् ॥

कामाद्दशगुणं प्रोक्तं[4] क्रोधात्तु त्रिगुणं परम् ।
अज्ञानात् द्वे शते पूर्णे [5]बालिश्याच्छतमेव तु ॥

एतानाहुः कूटसाक्ष्ये [6]प्रोक्तो दण्डो मनीषिभिः ।
धर्मस्याव्यभिचारार्थमधर्मनियमाय च ॥

1. ज, द, A. S. B. and S. B. (a)-न्यतमे
2. दण्ड्यस्तु-द.
3. पूर्वे-द.
4. पूर्वे-द.
5. S. B. (a)-बाणिज्यात्
6. S. B. (a) ज and द-प्रोक्तान् दण्डान्

कूटसाक्ष्यं तु[1] कुर्वाणांस्त्रीन् वर्णान् धार्मिको नृपः ।
[2]प्रवासयेद्दण्डयित्वा [3]ब्राह्मणांस्तु विवासयेत्[4] ॥

'सहस्रम्' पणानामिति शेषः । 'मोहात्'वैचित्त्यात्, 'पूर्वसाहसः', सार्धं पणशतद्वयम् । 'द्वौ मध्यमौ' साहसावित्यर्थः[5] । पणसहस्रमित्युक्तं भवति । पूर्वसाहसचतुर्गुणः[6] पणसहस्रमित्युक्तं भवति । '[7]त्रिगुणं परम्' पूर्वापेक्षया परो मध्यमसाहसस्तस्मिंस्त्रिगुणे पञ्चदशशतानि संपद्यन्ते । 'अज्ञानात्' व्यवहारकाल एव विपरीतज्ञानात् । 'बालिश्यं' अत्र प्राप्तयौवनमात्रं,[8] न बाल्यम्, बालस्य साक्ष्यनिषेधात् । 'विवासयेत्' स्वदेशान्निःसारयेत् ॥

विष्णुः [५, १७९]

कूटसाक्षिणां सर्वस्वापहारः [कार्यः]

याज्ञवल्क्यः [२, ८१-८२]

पृथक् पृथक् दण्डनीयाः कूटकृत्साक्षिणस्तथा ।
विवादात् द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः ॥

यः साक्ष्ये श्रावितेऽन्येभ्यो निह्नुते तत्तमोवृतः ।
स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत् ॥

1. च for तु–द.

2. 'प्रवासनं' राष्ट्रान्निष्कासनं मरणं वा—मेधातिथिः

3. S. B. (a) ज and द—ब्राह्मणं तु for ब्राह्मणांस्तु

4. 'विवासनं' वाससोऽपहरणं गृहभङ्गो वा—मेधातिथिः

5. ज, द, A. S. B. and S. B. (a)–भग्नयः

6. A. S. B. ज and S. B. (a)–पूर्वं पूर्वसाहसं, स चतुर्गुणः; पूर्वं पूर्वसाहसं–द.

7. S. B. (a), ज and द have परं after त्रिगुणं, which agrees with the text commented upon.

8. द, A. S. B.–यौवनस्थं

[1]मनुनारदौ

यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः ।
रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः ॥

याज्ञवल्क्यः [२, ७६]

अब्रुवन् हि नरः साक्ष्यमृणं सदशबन्धकम् ।
राज्ञा सर्वं प्रदाप्यः षट्चत्वारिंशत्तमेऽहनि[2] ॥

[3]'सदशबन्धकम्' दशमांशसहितम् ।

मनुः [८, १०७]

त्रिपक्षादब्रुवन् [4]साक्ष्यमृणादिषु नरोऽगदः[5] ।
तदृणं प्राप्नुयात्सर्वं दशबन्धं[6] तु [7]सर्वशः ॥

विष्णुः [८, ३७]

[8]पारयन्तोऽपि ये साक्ष्ये[9] तूष्णीं भूता उपासते ।
ते कूटसाक्षिणां पापैस्तुल्या दण्डेन चैव हि ॥

1. मनु ८, १०८; 'मनुनारदौ' इति उ. वि. कोशयोर्नास्ति । नारदस्मृतौ न दृष्टः ।

2. This is Aparārka's reading; *Mitākṣarā* has •रिंशकेऽहनि, which suits the metre better.

3. ज, द, A. S. B. and S. B. (a)-supply सदशबन्धकं which is necessary; it is omitted by उ.

4. ज, द, S. B. (a)-वाक्यं for साक्ष्यं

5. 'गदो' रोगः—मेधातिथिः

6. 'दशबन्धं' दशमं च भागं दण्डनीयस्तस्मादृणात्-मेधातिथिः

7. ज, द, A. S. B. and S. B. (a)-पूर्वशः

8. जानन्तोऽपि इति मुद्रितविष्णुस्मृतिः

9. ज, A. S. B. and S. B. (a)-साक्ष्यं for साक्ष्ये

कात्यायनः [४०५]

साक्षी साक्ष्यं न चेद्ब्रूयात्समदण्डं [1]वहेदृणम् ।
अतोऽन्येषु विवादेषु त्रिशतं[2] दण्डमर्हति ॥

बृहस्पतिः [५, ४५, ४७]

अहूतो यस्तु नागच्छेत्साक्षी रागविवर्जितः ।
[3]ऋणं दमं[4] च दाप्यः स्यात्पक्षात्परतस्तु सः ॥

अपृष्टाः सत्यवचने प्रश्नस्याकथने तथा ।
साक्षिणः सन्निरोद्धव्या[5] गर्ह्या दण्ड्याश्च धर्मतः ॥

गौतमः [१३, ५]

[6]ब्राह्मणस्त्वब्राह्मणवचनादनवरोध्योऽनिबद्धश्चेत् ।

'अनिबद्धः' पतकेऽनवरोपितः[7] ।

1. A. S. B. ज, द, and S. B. (a)–ददेदृणम्
2. त्रिशतं–द.
3. S. B. (a)–कालं; 'ऋणं' इत्यादि सार्धश्लोकः भ्रष्टः–वि. कोशे
4. A. S. B, ज, द and S. B. (a)–दण्डं
5. A. S. B. and S. B. (a)–प्रतिबोद्धव्या; प्रतिषेद्धव्याः–ज.

6. ब्राह्मणग्रहणं श्रोत्रियपरिहारार्थम्। इतरो ग्राह्य एव। तुशब्दात् अन्येऽपि लिङ्गिनो न ग्राह्याः विशेषेण ब्राह्मणा इति। अब्राह्मणवचनादनवरोध्यो न ग्राह्यः—'अस्य वृत्तान्तस्यासौ ब्राह्मणः साक्षी' इति अब्राह्मणस्योक्ते, राज्ञासौ साक्षित्वेन न ग्राह्य इत्यर्थः। अनिबद्धश्चेत् ब्राह्मणः पतकेऽनारोपितश्चेत्। आरोपितो भवत्येवेत्यभिप्रायः—मस्करिभाष्ये

मानवे [८, ६५] यथा—

न साक्षी नृपतिः कार्यो न कारुककुशीलवौ ।
न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्यो विनिर्गतः ॥

7. पत्रके नावरोपितः–वि.

काल्यायनः [३४१]

सम्यक्क्रियापरिज्ञाने देयः कालस्तु साक्षिणाम् ।
[1]सन्दिग्धं यत्र साक्ष्यं तु सद्यःपृष्टान्विवादयेत् ॥

'सम्यक् क्रियापरिज्ञाने' सम्यक् कार्यज्ञानार्थम् ।

मनुः [८, ७५]

साक्षी दृष्टश्रुतादन्यद्विब्रुवन्नार्यसंसदि ।
[2]अवाङ्नरकमाप्नोति प्रेत्य स्वर्गाच्च हीयते ॥

कात्यायनः[3]

अवीचि नरके कल्पं वसेयुः[4] कूटसाक्षिणः ।

गौतमः [१३, ७-८]

अवचने दोषिणः स्युः । स्वर्गः सत्यवचने, विपर्यये नरकः ॥

---

1. उत्तरार्धे अपरार्कः (प. ६७७) इत्थं पठति—
संदिग्धं यत्र साक्ष्यं स्यात्सद्यः पृष्टं विवादयेत् ।
सद्यस्पष्टं विचारयेत्–द ; 'सद्यः स्पष्टं इति टोडरानन्दः

2. S. B. (a) आरात् ; 'अवाङ्' अधोमुखः, 'नरकमभ्येति' इति मेधातिथिः ; 'अवैति' इति कुल्लूकपाठः

3. Not found in Kane's collection.

4. S. B. (a) has रमेयुः for वसेयुः which is absurd.

# २४

## अथ सत्यापवादः[1]

तत्र वसिष्ठः[2] [विष्णुः, ८, १४-१५]

साक्षिणः सत्येन पूयन्ते । वर्णिनां यत्र वधस्तत्रानृतेन ॥

मनुः [८, १०४, १०३]

[3]शूद्रविट्क्षत्रविप्राणां यत्रर्तोक्तौ भवेद्वधः ।
तत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यते ॥

तद्वदन्धर्मतोऽर्थेषु जानन्नप्यन्यथा नरः ।
न स्वर्गाच्च्यवते लोकाद्दैवीं वाचं वदन्ति ताम्[4] ॥

'ऋतोक्तौ' सत्यवचने ।

गौतमः [१३, २४ २५]

नानृतवचने दोषो जीवनं चेत्तदधीनम् । न तु पापीयसो जीवनम् ।

'पापीयसः' स्तेनादेः यत्रानृतवचनेन जीवनं[5] संपद्यते तत्रानृतं न [6]वक्तव्यम् ।

1. 'साक्ष्यपवादः' इति टोडरानन्दः

2. A. S. B. ज, द and S. B. (a) ascribe this correctly to *Viṣṇu.*

3. शूद्रविट्क्षत्रियाणाञ्च ऋतोक्तौ च भवेद्वधः–द.

4. A. S. B. द, ज and S. B. (a) वदेन्निजम्

5. वचनेन–द.

6. A. S. B. and S. B. (a) correctly insert न before वक्तव्यम्; न तत्राप्यनृतं–ज, द ; न omitted in उ. and वि.

[1]याज्ञवल्क्यः [२, ८३]

वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् ।
तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः ॥

विष्णुः [८, १६-१७]

तत्पावनाय कूष्माण्डीभिः [द्विजोऽग्निं] [2]जुहुयात् । शूद्रश्चैकाह्निकं गोदशकस्य ग्रासं दद्यात् ।

मनुः [८, १०५-१०६]

वाग्दैवत्यैश्च चरुभिर्यजेरंस्ते सरस्वतीम् ।
अनृतस्यैनसस्तस्य कुर्वाणा निष्कृतिं पराम् ॥

कूष्माण्डैर्वापि जुहुयाद्घृतमग्नौ यथाविधि ।
उदित्यृचा च वारुण्या तृचेनाब्दैवतेन वा[3] ॥

---

1. चतुर्ष्वपि भवा ब्राह्मणादयो 'वर्णिनः' । तेषां यत्र साक्षिणि सत्याभिधातरि वधः स्यात् तत्र साक्ष्यनृतं वक्तुमर्हति । सदोषमपि गुणभूयस्त्वादनृतवचनमभ्युपगम्यते—विश्वरूपः ॥ तत्र च यथाशास्त्रं प्रायश्चित्तं कर्तव्यम्—मिताक्षरा

2. A. S. B. ज, द, and S. B. insert द्विजो अग्निं जुहुयात् ; द्विजोग्निं—omitted–उ. बि.

3. कूष्माण्डः ( तैत्तरीयारण्यकम्, १०, ३-४) ; वारुण्या (ऋग्वेदः, १, २४, १५); अब्दैवताः (ऋग्वेदः, १०, ९, १-३)

## २५

# अथ साक्षिबलत्वम्[1]

तत्र मनुः[2] [८, ७३]

[3]बहुत्वं परिगृह्णीयात्साक्षिद्वैधे नराधिपः ।
समेषु च गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान् ॥

बृहस्पतिः [५, ४६]

साक्षिद्वैधे [4]प्रभूताः स्युर्ग्राह्याः साम्ये गुणान्विताः ।
गुणिद्वैधे क्रियायुक्तास्तत्साम्ये [5]स्मृतिमत्तराः ॥

नारदः [४, २२९]

साक्षिविप्रतिपत्तौ तु प्रमाणं बहवो यतः[6] ।
तत्साम्ये गुणिनो[7] ग्राह्यास्तत्साम्ये स्मृतिमत्तराः[8] ॥

1. A. S. B. ज, द and S. B. (a) and टोडरानन्द, बलाबलम्

2. द. ज, A. S. B. and S. B. (a) मनुविष्णू correctly as the verse occurs also in *Viṣṇusmṛti*, VIII, 69.

3. 'बहुत्वं परिगृह्णीयाद्' बहूनां वचनं प्रमाणीकुर्यात्—मेधातिथिः

4. 'तु बहवः' इति व्यवहारनिर्णयपाठः (पृ. १२३)

5. 'मतिमत्तराः' इति व्यवहारनिर्णयपाठः

6. मताः—ज, द.

7. A. S. B. like Jolly's text reads शुचयो for गुणिनो ; तत्साम्येषु च ये ग्राह्या—ज.

8. तस्मात् स्मृतिमत्साक्षिसाम्याद्व्यावर्तते साक्ष्यमनुसरणसर्कं न भवति—असहायः

याज्ञवल्क्यः [२, ७८]

द्वैधे बहूनां वचनं[1] समेषु गुणिनां तथा ।
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तराः[2] ॥

तथा [२, ८०]

[3]उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तराः[4] ।
द्विगुणा वान्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः ॥

कात्यायनः [४०८]

यत्र वै भावितं कार्यं साक्षिभिर्वादिना भवेत् ।
प्रतिवादी यदा तत्र भावयेत्कार्यमन्यथा ॥

[5]बहुभिश्च कुलीनैर्वा कूटाः स्युः पूर्वसाक्षिणः[6] ।

---

1. साक्षिद्वैधे प्रभूतानाम्—इति विश्वरूपपाठः
2. 'यत् गुणवत्तरम्' इति तस्यैव पाठः
3. उक्तेषु—द.
4. 'गुणवत्तमाः' इति मिताक्षरापाठः
5. बहुभिस्तत्कुलीनैर्वा—ज.
6. Kane adopts the reading of the *Smṛticandrikā* (p.218) पूर्वास्स्युः कूटसाक्षिणः

## २६

# अथ साक्षिनिगदः

तत्र व्यासः[1]

काळाकृतिवयोद्रव्यदेशजातिप्रमाणतः ।
अन्यूनं चेन्निगदितं सिद्धं साध्यं विनिर्दिशेत् ॥

विष्णुयाज्ञवल्क्यौ[2]

यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।
[3]अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः ॥

1. Ascribed to *Bṛhaspati* (५. ४८.) with the variant देशकालवयो-द्रव्यसंख्याजातिप्रमाणतः by व्यवहारनिर्णय (पृ. १२०) and व्यवहारमाधवीय (पृ. ११४), which is the first half of *Nāradasmṛti* ४, २३२ (see p. 151 below).

2. ८, ३४. (वि); २, ७९ (या).

3. 'अन्यथा' इति, विपरीतवादिन इत्यर्थः। यस्य साक्षिणो विपरीतं वदन्ति तस्य पराजय इत्यर्थः (टोडरानन्दः)

## अथानिगदः

[[1]तत्र] नारदः [४, २३२-२३४]

निर्दिष्टेष्वर्थजातेषु साक्षी चेत्साक्ष्यमागतः[2] ।
न ब्रूयादक्षरसमं न तन्निगदितं भवेत् ॥

देशकालवयोद्रव्यप्रमाणाकृतिजातिषु ।
यत्र विप्रतिपत्तिः स्यात्साक्ष्यं [3]तदपि कुत्सितम् ॥

[4]न्यूनमभ्यधिकं [5]चार्थं प्रब्रूयुर्यत्र साक्षिणः ।
तदप्यनुक्तं[6] विज्ञेयमेष साक्षिविधिः स्मृतः ॥

1. A. S. B. and S. B. (a)-ज and द.

2. मग्रतः-द.

3. तदपि चान्यथा—इति मु. पा.

4. द, ज, A. S. B. and S. B. (a)-ऊनमभ्यधिकं for न्यूनमभ्यधिकं; शून्यमभ्यधिकं वार्थं इति मु. पा.

5. वार्थे-द.

6. A. S. B ज, द, and S. B. (a)-अयुक्तं

# २७

# अथ लिखितम्

तत्र बृहस्पतिः[1]

साक्षिणामेष निर्दिष्टः सङ्ख्यालक्षणनिश्चयः ।
लिखितस्याधुना वच्मि विधानमनुपूर्वशः ॥

[2]षाण्मासिकेऽपि समये भ्रान्तिः संजायते यतः ।
धात्राऽक्षराणि सृष्टानि पत्त्रारूढान्यतः पुरा ॥

राजलेख्यं स्थानकृतं स्वहस्तलिखितं तथा ।
लेख्यं तु त्रिविधं प्रोक्तं भिन्नं तद्बहुधा पुनः ॥

[3]भागदानक्रयाधानसंविद्दासऋणादिभिः[4] ।
सप्तधा लौकिकं लेख्यं त्रिविधं राजशासनम् ॥

मरीचिः

स्थावरे विक्रयाधाने[5] विभागे दान एव च ।
लिखितेनाप्नुयात्सिद्धिमविसंवादमेव च ॥

सिध्यते[6] वाचिकोऽप्याधिः स्थावरे च दशाब्दिकः[7] ।
प्रतिग्रहे च क्रीते च नालेख्या सिध्यति क्रिया ॥

1. ६, १-२, ४, ५.

2. षाण्मासिकेति व्यवहारमातृकायाम् ; ऋणादिकेऽपि समये इति पराशरमाधव-पाठः मुद्रितबृहस्पतौ धृतः ।

3. द, ज, A. S. B. and S. B. (a)-भोगदान ; भावधान—इति उ, स्मृ. चं.

4. S. B. (a)-संविद्ममलादिभिः ; संविद्दामऋणादिभिः-द.

5. दाने-द.

6. द, ज, A. S. B. and S. B. (a)-सिध्यते for लिखिते ; लिखिते—उ.

7. A. S. B. ज. द. and S. B. (a)-स्थावरेषु दशाब्दिकः

स्थावर इति। क्षेत्रादिविषये विक्रयादीनां लेख्यं विना सिद्धिर्न भवतीत्यर्थः। सिध्यते वाचिकोऽपीत्यादि। स्थावरेषु[1] विषये आधिर्दशवर्षपर्यन्तमुपभुक्तः [2]स तथा वाचिकोऽपि लेख्यं [3]विनापि सिध्यतीत्यर्थः।

कात्यायनः [२५७; ३०१]

सीमाविवादे निर्वृत्ते[4] सीमापत्रं विधीयते।

नारदः [४, १३५]

लेख्यं तु द्विविधं ज्ञेयं स्वहस्तान्यकृतं[5] तथा।
असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थिते[6] स्तयोः॥

'तयोः' ससाक्षिकासाक्षिकयो[7]र्देशाचाराद्व्यवस्थितिरित्यर्थः।

विष्णुः [७, १-३]

अथ लेख्यं [त्रि] विधम्। राजसाक्षिकं[8] ससाक्षिकमसाक्षिकं च।
राजाधिकरणे तन्नियुक्तकायस्थकृतं तदध्यक्षकरचिह्नितं [9]राजसाक्षिकम्।

कात्यायनः [२५८]

राज्ञः स्वहस्तसंयुक्तं स्वमुद्राचिह्नितं तथा।
राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत्[10]॥

1. स्थावरविषय आधिर्दश–द.

2. A. S. B. ज, द, and S. B. (a)–स तथा वाचिकोऽपि; 'स न वाचिकोऽपि' इति उ, बि.

3. विना सिध्य–ज, द

4. A. S. B. ज, द, बि, व्यव. मयू. and S. B. (a)–निर्णीते

5. A. S. B. ज, द, बि and S. B. (a)–अन्याक्षरं

6. द, ज, A. S. B. and S. B. (a)-स्थितिः

7. A. S. B. ज, बि. and S. B. (a)–देशसमाचारात्.

8. कम्। ससाक्षिकञ्च राजाधिकरणे–द

9. The corrections are according to A. S. B. and S. B. (a)-तदक्षरचिह्नितं–उ, बि, को.

10. द, ज, A. S. B. and S. B. (a)–साक्षिकम्

विष्णुः [७, ४-५]

यत्र क्वचन येन केनचिल्लिखितं साक्षिभिः स्वहस्तचिह्नितं ससाक्षिकम् । स्वहस्तलिखितमसाक्षिकम् ।

बृहस्पतिः[1]

भ्रातरः संविभक्ता ये स्वरुच्या[2] तु परस्परम् ।
विभागपत्रं[3] कुर्वन्ति भागलेख्यं तदुच्यते ॥

भूमिं दत्वा तु यः पत्रं कुर्याच्चन्द्रार्ककालिकम् ।
अनाच्छेद्यमनाहार्यं दानलेख्यं तु तद्विदुः ॥

गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम् ।
पत्रं कारयते यस्तु क्रयलेख्यं तदुच्यते ॥

जङ्गमं स्थावरं बन्धं दत्वा लेख्यं करोति यः ।
गोप्यभोग्यक्रियायुक्तमाधिलेख्यं तु तत्स्मृतम् ॥

ग्रामो देशश्च यः कुर्यान्मतं[4] लेख्यं परस्परम् ।
राजाऽविरोधिधर्मार्थे सन्धिपत्रं[5] वदन्ति तत् ॥

वस्त्रान्नहीनः कान्तारे लिखितं कुरुते तु यः[6] ।
कर्माणि [7]तु करिष्यामि दासपत्रं तदिष्यते ॥

धनं वृद्ध्या गृहीत्वा तु स्वयं कुर्याच्च कारयेत् ।
उज्जामपत्रं[8] तत्प्रोक्तमृणलेख्यं मनीषिभिः ॥

1. ९, ११-१७; ६, ३
2. 'विरुद्धत्वात्' इति व्यवहारमातृका
3. A. S. B, ज, द and S. B. (a)-विभागं यत्र
4. A. S. B. ज, द and S. B. (a)-सत्यं लेख्यं
5. A. S. B. ज, द and S. B. (a)-संवित्पत्रं; तथा अपरार्कश्च
6. यत् इति अपरार्कपाठः (p. 683)
7. ते-द; व्यव. मातृ. च; 'कर्माहं ते' इति अपरार्कपाठः
8. उद्धारपत्रं इति अपरार्कः (p. 683); उज्जाभ इति स्मृ. चं, p. 137; उद्धारपत्रमिति व्यव. मातृका, p. 337; उज्जारपत्रमिति व्य. मयूखः

देशाचारयुतं[1] [2]वर्षमासपक्षाहवृद्धिमत् ।
ऋणिसाक्षिलेखकानां हस्ताङ्कं लेख्यमुच्यते ॥

'अनाहार्यम्' अभोग्यम् । 'कान्तारे' आपदि । 'उज्जामपत्रम्' ऋणपत्रम् ॥

याज्ञवल्क्यः [२, ८४-८८]

यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम् ।
लेख्यं वा साक्षिमत्कार्यं तस्मिन् [3]धनिकपूर्वकम् ॥

समामासतदर्धाहर्नामजातिसगोत्रकैः ।
सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् ॥

[4]मासे वर्षे ऋणी नाम स्वहस्तेन निवेशयेत् ।
मतं मेऽमुकपुत्रस्य यदत्रोपरिलेखितम् ॥

साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम् ।
[5]अत्राहममुकः साक्षी लिखेयुरिति ते समाः[6] ॥

उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना ।
लिखितं ह्यमुकेनेति लेखकोऽन्ते ततो लिखेत् ॥

1. रेषु तं कार्य–द.

2. A. S. B. and S. B. (a)–कार्ये for वर्षे. The reading in the text is better; भार्ये–ज.

3. A. S. B. ज, द and S. B. (a)–वणिक for धनिक.

4. This is omitted by S. B. (a); समातेऽर्थे ऋणी नाम; इति ज, द, मिताक्षरापाठश्च

5. अत्राहममुकः साक्षीत्येवं लिखेयुः । असमाः त्रय इत्यर्थः । अन्ये तु समा इति च्छेदभ्रान्त्या द्वावित्याहुः । तत्तु बहुवचनविरोधादयुक्तम् । न च चतुरभिप्रायं तदिति युक्तम् । 'लेख्ये तु परमास्त्रयः' इति वचनात्—(विश्वरूपः)

6. तेऽसमाः इति विश्वरूपाचार्य-अपरार्कसंमतपाठः ॥ मिताक्षरायां तु—'ते समाः' इति पाठ एवाङ्गीकृतः, "ते च समाः संख्यातो गुणतश्च कर्तव्या" इति व्याख्यातश्च ॥

'निष्णातः' निरूपितः । 'सब्रह्मचारिकम्' बह्वृचादि [शाखा][1] प्रयुक्त-गुणनाम[2] । 'बह्वृचः' कठ इति । 'समाः' समगुणाः ॥

व्यासः [याज्ञ., २, ९०]

[3]अलिपिज्ञऋणी यः स्याल्लेखयेत्स्वमतं तु सः[4] ।
साक्षी वा साक्षिणाऽन्येन सर्वसाक्षिसमीपगः ॥

कात्यायनः [२५१]

[5]उत्पत्तिजातिसंज्ञां च धनसंज्ञां च लेखयेत् ।
[6]स्मरत्येवं प्रयुक्तस्य [7]नश्येदर्थस्त्वलेखितः ॥

स्मरत्येवंप्रयुक्तस्येति कर्मणिषष्ठी । तेनैवं प्रयुक्तं स्मरति [8]नान्यदित्यर्थः ।

---

1. A. S. B. and S. B. (a)-गामिशाखाध्ययन (?)

2. A. S. B. and S. B. (a)-गुणनामस्य लेखनस्य मनीषिणः प्रयुक्तबह्वृचः क च इति यथा । This is unintelligible.

3. Included as २, ९० in याज्ञवल्क्य by विश्वरूप, and ascribed to नारद by मिताक्षरा and अपरार्क (२, ८७)

4. वः-द; व्यव. मातृका, p. 338.

5. उत्पत्तिं ज्ञानसंज्ञां च-ज. उत्पत्तिं ज्ञानसंज्ञा च-द. A. S. B. and S. B. (a)-ज्ञानसंज्ञा; तः सब्रह्मचारिकारिका ब्रह्मचारिगदिशाख्याध्यायनप्रयुक्तं गुणनाम बह्वृचः कठ इति यथा । समाः समगुणाः-ज. 'संख्यां च' इति उ.

6. स्मरत्येवं-ज. द.

7. लेखनस्य मनीषिणः । प्रयुक्तस्येति कर्मणिषष्ठी-ज.

8. A. S. B. ज, द and S. B. (a)-नान्यथा इत्यर्थः

# २८

## अथ शासनम्

तत्र व्यासः

राज्ञा तु स्वयमादिष्टः सन्धिविग्रहलेखकः ।
ताम्रपट्टे पटे[1] वाऽपि प्रलिखेद्राजशासनम् ॥

स्थानं वंशानुपूर्वीं च देशं ग्राममुपागतान् ।
[2]ब्राह्मणांश्च तथा चान्यान् मान्यान्यानधिकृतान् लिखेत् ॥

कुटिम्बिनोऽथ कायस्थ दूतवैद्यमहत्तरान्[3] ।
[4]म्लेच्छचाण्डालपर्यन्तान् सर्वान् संबोधयन्निति ॥

[5]मातापित्रोरात्मनश्च पुण्यायामुकसूनवे ।
दत्तं मयाऽमुकीयाय दानं सब्रह्मचारिणे ॥

[6]चन्द्रार्कसमकालीनं पुत्रपौत्रान्वयागतम् ।
[7]अनाच्छेद्यमनाहार्यं सर्वभाव्यविवर्जितम् ॥

1. S. B. (a)-ताम्रपट्टे पत्रे वाँपि; it spoils the metre.

2. S. B. (a)-ज and A. S. B. ब्राह्मणांस्तु तथावान्यान् माम्यानधिकृता लिखेत्; ब्राह्मणांस्तु तथाबाम्यस्सर्वान्संबोधयन्निति-द; ब्राह्मणांश्च तथाचाम्यानमात्याधिकृता भवेत्-उ.

3. *Parāśara-Mādhavīya* (*Bib. Ind.*, p. 88.)

कुटुम्बिनायका यस्य दूतवैद्यमहत्तराः ।
ते च चण्डालपर्यन्ताः सर्वान् संबोधयन्निति ॥

4. S. B. (a)-स्रेद; मेद-उ. ज; मद-ड.

5. The three Ślokas beginning with this are ascribed to Bṛhaspati in *Vīramitrodaya-Vyavahāra* (Jibananda's edn., p. 192)

6. and 7. in the reverse order, ascribed to Bṛhaspati by परा. माध. p. 120 (see बृह. व्य. ६, २२; संस्का, ५०८)

[1]दातुः पालयितुः स्वर्गं[2] हर्तुर्नरकमेव च ।
ज्ञातं मयेति लिखितं [3]तदा व्यक्ताक्षरैर्युतम् ॥

अब्दमासतदर्धाहो राजमुद्राङ्कितं तथा ।
अनेन विधिना लेख्यं राजशासनकं लिखेत् ॥

स्थानमत्र राजधानी । 'उपागतान्' तत्काल आगन्तुकान् । 'सब्रह्मचारिणे' सहाध्यायिने । एतच्च पात्रमात्रोपलक्षणम् । 'सर्वभाव्यविवर्जितम्' दैवब्राह्मणनापितादिलभ्यवर्जितम् ।

याज्ञवल्क्यः [१, ३१८-३२०]

दत्त्वा भूमिं निबन्धं[4] वा कृत्वा लेख्यं तु कारयेत् ।
आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ॥

[5]पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् ।
अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः ॥

[6]प्रतिग्रहपरीमाणं [7]दानच्छेदोपवर्णनम् ।
स्वहस्तकालसंपन्नं शासनं कारयेत् स्थिरम्[8] ॥

1. बृह. व्य. ६, २३, संस्का. ५०८.
2. स्वर्गं–द. स्वर्ग्यम् इति इतरे
3. तंचात्र व्यक्ताक्षरैः युतं–द.
4. निबन्धोऽक्षयनिधिः–(विश्वरूपः)
5. पटवचनं भूर्जनिवृत्त्यर्थम् । परिशब्दात् प्रशादूतकस्वहस्तमुद्रास्कन्धावारसमावासनामदेशादिचिह्नितम् । आदावेवाभिलेखनीयाः पूर्वपुरुषास्त्रयः । वंश्यत्ववचनाच्च स्त्रियोऽपि । अनन्तरमात्मानम् । ततः प्रतिग्रहपरीमाणम् । अस्मिन् देशे अमुकनामेयान् ग्राम इति । ततो दानाच्छेदमुपवर्ण्य । एतद्दानफलं एतदाच्छेदनफलम्—"षष्टिवर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः । आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत्" इत्यादि । लेखनामाङ्कितं स्वहस्तसंयुक्तमागामिक्षुद्रनृपत्यशोचनं स्थिरं भूमेश्छिद्रन्यासेनाचन्द्रात स्थिति संस्थानं कारयेत्––(विश्वरूपः)
6. A. S. B. ज, द, बि. and S. B. (a)–प्रतिग्रहप्रमाणं च.
7. दानाच्छेदो–द.
8. रम् । आपत्स्थाने शुल्कशालादौ–द.

[1]'निबन्धः' आयस्थाने शुल्कशालादौ प्रत्यहं नियतवस्तुदानम्, यथा पर्णभारकं प्रति[2] पर्णशतं ग्राह्यं त्वयेति ॥

<u>बृहस्पतिः</u> [६, २५, २७, २६]

[3]वंशादिकं यस्य राजा लिखितेन प्रयच्छति ।
सेवाशौर्यादिना तुष्टः प्रसादलिखितं तु तत् ॥

यद्वृत्तं व्यवहारे तु पूर्वपक्षोत्तरादिकम् ।
क्रियावधारणोपेतं जयपत्रेऽखिलं लिखेत् ॥

[4]पूर्वोत्तरक्रियायुक्तं निर्णयान्तं यदा नृपः ।
प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते ॥

[5]<u>वृद्धवसिष्ठः</u>

यथोपन्यस्तसाध्यार्थसंयुक्तं चोत्तरक्रियम् ।
सावधारणकं चैव जयपत्रकमिष्यते ॥

प्राड्विवाकादिनामाङ्कं[6] मुद्रितं राजमुद्रया ।

1. अस्मिन् ग्रामे प्रतिक्षेत्रं क्षेत्रस्वामिनैतद्धनमस्मै प्रत्यब्दं प्रतिमासं वा देयमित्यादिनियमो 'निबन्धः' (अपरार्कः पृ. ५७९ ॥) निबन्धं वा एकस्य भाण्डभारकस्येयन्तो रूपकाः, एकस्य पर्णभरकस्येयन्तो पर्णानीति निबन्धं कृत्वा लेख्यं कारयेत् इति मिताक्षरा.

2. द, and A. S. B–पर्णभारवाहक प्रति.

3. द, A. S. B. and S. B. (a)–देशादिकम्; माधवीये स्मृतिचन्द्रिकायाञ्च तथैव.

4. पूर्वोक्तं–ज.

5. Ascribed to कात्यायन by *Vyavahāranirṇaya* (p. 85) along with a third half-verse—सभासभ्यस्तचिह्नं च वादिप्रत्यर्थिसंयुतम् ।

6. A. S. B. ज, द, मि. and S. B. (a)–हस्ताङ्कम्.

[1]कात्यायनः [२५९, २६० (अ), २६३, २६० (अ), २६१, २६४]

अर्थिप्रत्यर्थिवाक्यानि प्रतिज्ञा [2]साक्षिवाक् तथा ।
निर्णयश्च यथा तस्य यथा चावधृतं स्वयम् ॥

एतद्यथाक्षरं लेख्ये यथापूर्वं निवेशयेत् ।
सभासदश्च ये तत्र स्मृतिशास्त्रविदः स्थिताः[3] ॥

यथालेख्यविधौ तद्वत्स्वहस्तं [4]तत्र दापयेत् ।
अभियोक्त्रभियुक्तानां[5] वचनं प्राङ्निवेशयेत् ॥

सभ्यानां प्राड्विवाकस्य[6] कुलानां वा ततः परम् ।
निश्चयं स्मृतिशास्त्रस्य मतं तत्रैव लेखयेत् ॥

अनेन विधिना लेख्यं पश्चात्कारं विदुर्बुधाः[7] ।
निरस्ता तु क्रिया यत्र प्रमाणेनैव वादिना ॥

पश्चात्कारो भवेत्तत्र न सर्वासु विधीयते ॥

'पश्चात्कारो' जयपत्रम् ।

---

1. The first three half-verses are ascribed to *Vṛddha-Vasiṣṭha* by the *Vyavahāranirṇaya*, p. 85.

2. A. S. B. ज, द and S. B. (a)–साक्षिणः

3. द, ज A. S. B. ane S. B. (a)–स्मृताः

4. *Vīramitrodaya* (p. 195) दद्युरेव ते for तत्र दापयेत्.

5. क्ताभियुक्तानां–द, बि.

6. स्तु–द. बि.

7. 'विदुर्बुधाः' एतदनन्तरं 'प्रत्यक्षे लिङ्गभिर्व्यक्तं चाष्टशतम्' इत्येतत्पर्यन्तो बहुपत्राणि बिकानीरकोशे नोपलभ्यन्ते ॥

# २९

## अथ सल्लेख्यम्

तत्र कात्यायनः [२५२]

लेख्यं तु साक्षिमत्कार्यमविलुप्तक्रमाक्षरम्[1] ।
देशाचारस्थितियुतं समग्रं सर्ववस्तुषु ॥

[2]नारदः [३, १३६]

देशाचाराविरुद्धं यद्व्यक्ताधिविधिलक्षणम् ।
तत्प्रमाणं स्मृतं लेख्यमविलुप्तक्रमाक्षरम् ॥

'व्यक्तादिविधिलक्षणम्' [3]स्पष्टं वक्ष्यमाण[4] लक्षणं यत्र तत्तथा ।

कात्यायनः [२५३, २६७]

वर्णवाक्यक्रियायुक्तमसंदिग्धं स्फुटाक्षरम् ।
अहीनक्रमचिह्नं च लेख्यं तत्सिद्धिमाप्नुयात् ॥

याज्ञवल्क्यः [२, ८९]

विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत् ।
तत्प्रमाणं स्मृतं सर्वं[5] बलोपधिकृतादृते ॥

'उपधि'श्छलम्[6] ।

1. A. S. B, द, टोडरानन्द and S. B. (a)–अविलुप्ताक्षरक्रमम् ।
2. A. S. B, द and S. B. (a) alone–नारदः
3. स्पष्टं बन्धकप्रकारलक्षणं यत्र तत्तथा–द.
4. A. S. B. and S. B. (a)–प्रकार; बन्धकप्रकारलक्षणं–ज.
5. 'सर्वं' इति अपरार्कः; 'लेख्यं' इति मिताक्षरा
6. A. S. B. ज, द and S. B. (a)–छद्म

कात्यायनः [२७२]

ख्यापितं चेद्द्वितीयेऽह्नि [1]न कश्चिद्विनिवर्तयेत् ।
तथा तु स्यात्प्रमाणं तन्मत्तोन्मत्तकृतादृते ॥

याज्ञवल्क्यः [२, ९१]

[2]देशान्तरस्थे दुर्लेख्ये तथोन्मृष्टे हृते तथा ।
भिन्ने [3]दग्धे तथा च्छिन्ने[4] लेख्यमन्यत्तु[5] कारयेत् ॥

कात्यायनः [३१२]

[6]मलैर्यच्छेदितं दग्धं छिद्रितं वीतमेव वा[7] ।
[8]तदन्यत्कारयेल्लेख्यं [9]स्वात्मना लिखितं तथा ॥

---

1. A. S. A. ज, and S. B. (a)–न किंचित्

2. लेख्यदोषो यत्र प्रमादाल्लिख्यमाने सञ्जातः तद्दुर्लेख्यम् । उन्मृष्टं भग्नाक्षरम् । छिन्नं मूषिकादिभिः । भिन्नं पाटितम्—(विश्वरूपः)

3. दिग्धे–ज.

4. The Nirṇayasāgar ed. of Yājñavalkya (p. 176) has **अथवा** for **तथा**. But Viśvarūpa (ed. Gaṇapati Śāstri, p. 233), has **तथा** as in the text, with the variant छिन्ने भिन्ने तथा दग्धे.

5. न्यं तु–ज, द.

6. मलैर्य–द.

7. च–द.

8. तदन्यं–द.

9. द, A. S. B. and S. B. (a)–स्वेदेनोल्लिखितं तथा, and so do Aparārka (p. 687) *Toḍarānanda* and *Smṛticandrikā*, p. 138; स्वेदनोलिखितं–ज.

## ३०

# अथ दुष्टलेख्यम्[1]

[तत्र] कात्यायनः [२७३-२७४]

साक्षिदोषाद्भवेद्दुष्टं [2]पत्रं वै लेखकस्य वा ।
[3]धनिकस्योपधादोषात्तथा[4] धारणिकस्य वा ॥

दुष्टैर्दुष्टं भवेल्लेख्यं शुद्धैः शुद्धं विनिर्दिशेत् ।
तत्पत्रमुपधादुष्टैः साक्षिलेखककारकैः ॥

'उपधा' भावदोषः ।

बृहस्पतिः [६, ३०]

[5]मुमूर्षुशिशुभीतार्तैः स्त्रीमत्तव्यसनातुरैः ।
निशोपधिबलात्कारकृतं लेख्यं न सिध्यति ॥

नारदः [४, १३७]

[6]मत्ताभियुक्तस्त्रीबालबलात्कारकृतं च यत् ।
तदप्रमाणं लिखितं[7] भीतोपधिकृतं[8] तथा ॥

1. A. S. B. ज, द and S. B. (a)–दुष्टलक्षणम्; असल्लेख्यमिति टोडरानन्द.

2. यत्र वै लेखकस्य च–द.

3. *Smṛticandrikā* (p. 142), reads धनिकस्यापि वा; The MS. of *Todarānanda* reads धनिकस्युपधालेख्यम्; धनकस्योपधादोषात्तथा च धानकस्य च–ज.

4. तथा चाधानकस्य च–द.

5. *Parāśaramādhavīya*, (*Bib. Ind.* p. 95) has:

मुमूर्षुधनलुब्धार्थसोन्मत्तव्यसनातुरैः ।
तत्सोपाधिबलात्कारकृतं लेख्यं न सिध्यति ॥

6. अत्र मत्तेन लिखितम्, तथा ब्रह्महत्याद्यभिशस्तेन यत्, स्त्रिया यत्, बालेन च कृतं यत्, तथा अर्थसंबन्धेन विनैव बलात्कारेण कारितं यत् तथैव भीतोपधिकृतं यत्कारणमिति तत्कारणमप्रमाणमिति—असहायभाष्ये ॥

7. द, ज, A. S. B. and S. B. (a)–प्रमाणं करणं

8. भीतोपाधिकृतं–ज.

कात्यायनः [२८१; २७०]

धनिकेन स्वहस्तेन लिखितं साक्षिवर्जितम् ।
भवेत्कूटं न चेत्कर्ता कृतं हीति विभावयेत्[1] ॥

देशाचारविरुद्धं यत्संदिग्धं क्रमवर्जितम् ।
कृतमस्वामिना[2] यच्च साध्यहीनं च दुष्यति ॥

बृहस्पतिः [६, ३१-३२]

दूषितो गर्हितः साक्षी यत्रैको[3] विनिवेशितः ।
कूटलेख्यं तु तत्प्रोक्तं[4] लेखको वापि तद्विधः ॥

यदुज्ज्वलं[5] चिरकृतं मलिनं स्वल्पकालिकम् ।
भग्नोन्मृष्टाक्षरयुतं लेख्यं कूटत्वमाप्नुयात् ॥

कात्यायनः [२६९]

स्थानभ्रष्टास्त्वपङ्क्तिस्थाः संदिग्धा लक्षणच्युताः ।
[6]यत्रैवं स्युः स्थिता वर्णाः लेख्यं दुष्टं तथा भृगुः ॥

व्यासः [कात्यायनः, ३११[7]]

स्थावरे विक्रियाधाने कूटं लेख्यं करोति यः ।
स सम्यग्भावितः कार्ये जिह्वापाण्यङ्घ्रिवर्जितः ॥

---

1. A. S. B. and S. B. (a); so also Aparārka, (p. 686) *Smṛticandrikā* (p. 143) and *Vīramitrodaya*, (p. 197); द, ज–विभावयन्
2. *Smṛticandrikā* has a wrong reading: कृतं च स्वामिना (p. 141)
3. A. S. B. ज, द and S. B. (a)–यच्चैको
4. *Mādhavīya*, ज, द–प्राहुः for प्रोक्तं
5. A. S. B. and S. B. (a)–यदुल्वणं; *Mādhavīya*–अत्युज्ज्वलम्
6. 'यदा तु संस्थिता वर्णाः कूटलेख्यं तदा भवेत्' इति पराशरमाधवीये, (p. 130) स्मृतिचन्द्रिकायां च (p. 141)
7. Ascribed to Kātyāyana by Mādhava (p. 138) and Devaṇṇa Bhaṭṭa (p. 150) and to Vyāsa by Toḍarmal and Mitramiśra.

## ३१
# अथ दूषितलेख्यपरीक्षा

[तत्र] कात्यायनः [२७६; ३२३]

साक्षिलेख्यककर्तारः कूटतां यान्ति ते यथा ।
तथा दोषाः प्रयोक्तव्या दुष्टैर्लेख्यं प्रदुष्यति ॥

आहर्ता भुक्तियुक्तोऽपि लेख्यदोषान्विशोधयेत् ।
[1]तत्सुतो भुक्तिदोषांस्तु [2]लेख्यदोषांस्तु नाप्नुयात् ॥

'आहर्ता' गृहीता ।

बृहस्पतिः [६, ३९]

उद्धरेल्लेख्यमाहर्ता तत्सुतो भुक्तिमेव तु ।
अभियुक्तः प्रमीतश्चेत् [तत्पुत्रोऽपि समुद्धरेत्[3]] ॥

[4]यद्याहर्ताऽभियुक्तः सन् म्रियेत तदा पुत्रोऽपि[5] लेख्यमुद्धरेदित्यर्थः ॥

कात्यायनः [२६६; ३०८]

[6]राजाज्ञया समाहूय यथान्यायं विचारयेत् ।
लेख्याचारेण लिखितं साक्ष्याचारेण साक्षिणः ॥

1. तत्स्वतो–द.
2. 'लेख्यदोषानवाप्नुयात्' इति व्यवहारप्रकाशे (p. 199).
3. [ ] Supplied from; 'तदुद्धरेत्' इति व्यव-प्रकाशे A. S. B. and S. B. (a)
4. अभियुक्तः प्रमीतश्चेदिति । यद्याहर्ता–ज, द.
5. तत्पुत्रोपि–द.
6. द, ज, A. S. B. and Mitramiśra S. B. (a)–राजा क्रियां समाहूय

दर्पणस्थं यथा बिम्बमसत्सदिव दृश्यते ।
तथा लेख्यस्य बिम्बानि कुर्वन्ति कुटिला नराः[1] ॥

व्यासः [बृहस्पतिः ६, ४१[2]]

लेख्यमालेख्यवत्केचिल्लिखन्ति कुशला नराः ।
तस्माच्च लेख्यसामर्थ्यात्सिद्धिरैकान्तिकी मता ॥

बृहस्पतिः [६, ४०; ४२-४४]

[3]श्रुत्वा कालं देशकार्यौ कुशलाः कूटकारकाः ।
कुर्वन्ति सदृशं लेख्यं तद्यत्नेन विचारयेत् ॥

[4]स्त्रीबालार्तान् लिप्यविज्ञान् वञ्चयन्ति स्वबान्धवाः ।
[5]लेख्यं कृत्वा स्वनामाङ्कं ज्ञेयं युक्त्यागमैस्ततः ॥

त्रिविधस्यास्य लेख्यस्य भ्रान्तिः संजायते यदा ।
ऋणिसाक्षिलेखकानां [6]हस्तोक्त्या शोधयेत्ततः[7] ॥

1. Kane adopts the reading कुशलाः जनाः on the authority of *Smṛticandrikā* (p. 148) and *Mādhavīya* (p. 339), as well as *Vīramitrodaya*, (p. 197) which confirms only the reading adopted above.

2. Ascribed to Bṛhaspati by *Vyavahāramālā*, p. 24, and to Vyāsa by *Vyavahāranirṇaya*, p. 92.

3. A. S. B. ज, द, and S. B. (a)–ज्ञात्वा कालं देशकार्ये; *Vīramitrodaya* (p. 197) has ज्ञात्वा देशं च कालं च ।

4. ज, द and S. B. (a) wrongly give लिपिज्ञान्; *Vīramitrodaya* has, as in A. S. B., स्त्रीबालार्तलिपिज्ञाश्च

5. A. S. B. ज, द and S. B. (a) have a gap up to Kātyāyana's verse–'अथ पञ्चत्वमापन्नो' lower down.

6. Mādhava has हस्तात्संशोधयेत् ततः । 'साधयेत्ततः' इति व्य. प्र.

7. This śloka is a attributed to Kātyāyana by *Vīramitrodaya* (p. 198); Jīmūtavāhana attributes it to Nārada, and Mādhava ascribes it to Bṛhaspati.

उज्जाममुदयादानादाधानं फलसंग्रहात् ।
प्रतियोगिधनाढ्यत्वाल्लेख्ये यत्नोपधिः कृतः ॥

'उज्जामम्' ऋणम् । 'उदयादानात्' कालान्तरग्रहणात् । 'आधानम्' आधिः । 'फलसङ्ग्रहात्' फलोपभोगात् । 'प्रयोगित्वम्' उत्तमर्णत्वम् ।

नारदः [४, १४३-१४४]

यस्मिन् स्यात्संशयो लेख्ये भूताभूतकृते क्वचित् ।
तत्स्वहस्तक्रियाचिह्नयुक्तिप्राप्तिभिरुद्धरेत् ॥

लेख्यं यच्चान्यनामाङ्कं हेत्वन्तरकृतं भवेत्[1] ।
विप्रत्यये परीक्ष्यं[2] तत्सम्बन्धागमहेतुभिः[3] ॥

'क्रिया' तु साक्ष्योपन्यासः । 'चिह्नम्' असाधारणं स्वीकारादि । 'युक्तिप्राप्तिः' अस्मिन् देशे अस्मिन् काले प्रयुज्यते तस्य पुरुषस्येदं द्रव्यमित्यादिरूपा । 'विप्रत्यये' विप्रतिपत्तौ । संबन्धोऽत्रार्थिप्रत्यर्थिनोः परस्परविश्वासेन पूर्वमपि धनग्रहणादिसंबन्धः । 'आगमः' अस्यैतावतो धनस्य संभावितः प्राप्नुयाद्य इति । एतैः स्वहस्तादिभिः कारणैः संदिग्धं लेख्यं [4]साधयेदित्यर्थः ।

व्यासः

[5]यच्चान्यस्य कृतं लेख्यमन्यहस्तेषु दृश्यते ।
अवश्यं तेन वक्तव्यं पत्रस्यागमनं ततः ॥

1. A. S. B. and S. B. (a)-क्वचित् for भवेत्

2. S. B. (a)-परीक्षेत for परीक्ष्यं तत्

3. अत्र अन्यनामरूप अङ्को यस्य लेख्यस्य तदन्यनामाङ्कमुच्यते । यस्य सक्तं द्रव्यं भवति तस्यैव नाम्ना लिखितं किन्तु तस्य पार्श्वाद्येन किमपि क्रीतं लब्धं वा तस्य तद्द्रव्यं प्रार्थयतः तत्पत्रमन्यनामाङ्कं भवति— असहायभाष्य ॥

4. शोधयेत्–ज.

5. 'यत्रान्यस्य' इति व्यवहारनिर्णये (पृ. ९१), ज, द च.

कात्यायनः [२७७, २९०, २८५, २८६]

न लेखकेन लिखितं न दृष्टं साक्षिभिस्तथा ।
एवं प्रत्यर्थिनोक्ते तु कूटलेख्यं प्रकीर्तितम् ॥

कूटोक्तौ साक्षिणां वाक्याल्लेखकस्य च पत्रकम् ।
[1]नयेच्छुद्धिं न यः कूटं स दाप्यो दममुत्तमम् ॥

[2]अथ पञ्चत्वमापन्नो लेखकः सह साक्षिभिः ।
तत्स्वहस्तादिभिस्तेषां विशुध्येत्तु न संशयः ॥

ऋणिस्वहस्तसंदेहे जीवतो वा मृतस्य वा ।
तत्स्वहस्तकृतैरन्यैः पत्रैस्तल्लेख्यनिर्णयः ॥

तथा [२८७]

समुद्रेऽपि यदा लेख्ये मृताः सर्वेऽपि तत्स्थिताः ।
लिखितं तत्प्रमाणं तु मृतेष्वपि हि तेषु वै ॥

प्रजापतिः

कार्यो बलेन[3] महता निर्णयो राजशासने ।
राज्ञः स्वहस्ततो मुद्रालेखकाक्षरदर्शनात् ॥

1. A. S. B. and S. B. (a)–नयेत् शुद्धिं यदा दाप्यः तत्पत्रं दोषवर्जितम् । *Viramitrodaya*, p. 199, reads
नयेत् शुद्धिं नयेत् कूटं स दाप्यो दममुत्तमम् ।

2. All that precedes up to लेख्यं कृत्वा on p. 166, is omitted by A. S. B. द, ज, and S. B. (a) and brought lower down, after Nārada's verse beginning वर्षाणि विंशतिं यावत्, in a confused manner.

3. A. S. B. ज, द, टोडरानन्द and S. B. (a)–यत्नेन for बलेन

कात्यायनः [२९६, २९४, २९६]

[1]मुद्राशुद्धं क्रियाशुद्धं पारम्पर्यानुमोदितम् ।
[2][अदूषितं च स्पृष्टं च क्रियाचिह्नं विभावितम् ।]
ईदृशं सिद्धिमाप्नोति शासनं नृपचिह्नितम् ॥

पश्चात्कारनिबद्धं यत्तद्यत्नेन विचारयेत् ।
[3]यदि स्याद्युक्तियुक्तं तु प्रमाणं लिखिते तदा ॥

अन्यथा मूलतः कार्यं पुनरेव विनिर्णयेत्[4]
अतथ्यं तथ्यभावेन स्थापितं ज्ञानविभ्रमात् ।
निवर्त्यं तत्प्रमाणं [5]स्याद्यत्नेनापि कृतं नृपैः[6] ॥

'क्रियाशुद्धम्' साक्ष्यनुगृहीतम् । 'पारम्पर्यानुमोदितम्' बहुभिरनुमोदितम्[7] ॥

---

1. A. S. B. ज, द, टोडरानन्द and S. B. (a) read thus.

2. [ ] from *Todarānanda*. "मुद्राशुद्धं क्रियाशुद्धं भुक्तिशुद्धं सचिह्नकम् । राज्ञः स्वहस्तसंशुद्धं शुद्धिमायाति शासनम्"—इति अपरार्कः, ६८४.

3. A. S. B. द, ज and S. B. (a)—यदि स्यात्प्रक्रियायुक्तं प्रमाणं लिखितं तदा ; 'प्रमाणलिखितं' इति टोडरानन्दः.

4. A. S B. ज, द and S. B. (a)- विचिन्तयेत् for विनिर्णयेत्

5. A. S. B. ज, द, टोडरा., and S. B. (a)—आत्मनापि कृतं नरैः ; 'आत्मनापि कृतं नृपैः' इति टोडरानन्दः.

6. नरैः—द.

7. रनुमतं—ज, द.

# ३२

## अथ लेख्यबलम्

तत्र बृहस्पतिः [६, ४९]

कुलश्रेणिगणादीनां यथाकालं प्रदर्शयेत् ।
श्रावयेत्स्मारयेच्चैव यथा स्याद्बलवत्तरम् ॥

नारदः [४, १४०]

दर्शितं प्रतिकालं [1]यच्छ्रावितं स्मारितं च यत् ।
लेख्यं सिध्यति सर्वत्र मृतेष्वपि हि साक्षिषु[2] ॥

कात्यायनः[3] २९८-२३०]

दृष्टं पत्रे स्फुटं दोषं नोक्तवानृणिको यदि ।
ततो विंशतिवर्षाणि काले[4] [क्रान्तं] पत्रं स्थिरं भवेत् ॥

शक्तस्य सन्निधावर्थो[5] यस्य लेख्येन भुज्यते ।
[6]वर्षाणि विंशतिं यावत् तत् पत्रं दोषवर्जितम् ॥

1 'यत्प्रार्थितं श्रावितं तथा' इति मु. नार. 'स्मारितं तथा' इति टोड.

2. अत्र धनिकसंतत्या ऋणिकसंततेः यत्प्रतिकालं दर्शितम् । यदा यदा किञ्चित् फलं प्रार्थ्यते तत्प्रार्थितम् । यथा यत्प्रतिकालं श्रावितं कालान्तरे स्कन्धकं वा गृहीतम् । अथवा श्रावितमेव भूयो भूयः कथितम् । तदेवमृणिकसंततेः संतानारूढप्रत्ययमेव मृतेष्वपि हि साक्ष्यादिषु सर्वेष्वपि प्रमाणमेवेति—**असहायभाष्ये** ॥

3. द, ज, A. S. B. and S. B. (a)-have कात्यायनः

4. द, ज, A. S. B. and S. B. (a)-क्रीतं for कालं; क्रान्तपत्रमिति **व्यवहारमातृका**; स्थितमिति व्य. प्र., p. 200.

5. धावन्यो–ज, द. 'सन्निधौ बन्धो' इति **व्यव. मातृ.** p. 340.

6. S. B. (a) and A. S. B. have: वर्षाणि विंशतिं तस्य ज्ञेयो भोगोऽप्यनिश्चितः; वर्षाणि विंशतिं तस्य ज्ञेयो भोगस्तु निश्चितः–द.

[1]अथवा विंशतिं वर्षाण्याधिर्भुक्तस्तु निश्चितः ।
तेन लेख्येन तत्सिद्धिर्लेख्यदोषविवर्जिता ॥

सीमाविवादे निर्णीते सीमापत्रं विधीयते ।
तस्य दोषाः प्रयोक्तव्या यावद्वर्षाणि विंशति ॥

[2]आधानसहितं यत्र ऋणं लेख्यनिवेशितम् ।
मृतसाक्षिप्रमाणात्तु[3] स्वल्पभोगेन[4] तद्विदुः ॥

प्राप्तं वानेन चेत्[5] किञ्चिद्देयं चार्थनिरूपितम् ।
विनापि मुद्रया लेख्यं प्रमाणं मृतसाक्षिकम् ॥

व्यासः

[6]स्वहस्तकाज्जानपदं तस्माच्च नृपशासनम् ।
प्रमाणतरमिष्टं हि व्यवहारार्थमागतम् ॥

1. S. B. (a) and A. S. B. omit this śloka and give it earlier on p. 168. *Vīramitrodaya*, p. 200 gives it thus:

अथ विंशतिवर्षाणि आधिर्भुक्तस्तुनिश्चितः ।
तेन लेख्येन तत्सिद्धिः लेख्यदोषविवर्जिता ॥

*Mādhavīya* reads p. 99:

अथ विंशतिवर्षाणि अधिकं भुक्तिस्तुनिश्चिता ।
न लेख्येन तु तत्सिद्धं लेख्यदोषविवर्जितम् ॥

2. प्रधान–ज, द. ऋणलेख्यं निवेशितमिति अपरार्कः (p. 691.)
3. प्रमाणं तु–द, ज. मृतं साक्षिप्रमाणम् इति माधवीये.
4. स्वल्पभोगे तु–ज, द. स्वल्पभोगेऽपि इति अपरार्कः.
5. प्राप्तं वा तेन ते किंचित् इति व्यवहारप्रकाशः, p. 200.
6. 'स्वहस्तैककृताज्जानपदं' 'प्रमाणतरमिष्टं हि' व्यवहारनिर्णयपाठः (८९)

[1]द्विलिखिपिज्ञः स्वकृतमन्यलेख्येन युक्तिभिः ।
कुर्याच्च[2] सदृशं लेख्यं तस्माज्जानपदं शुभम् ॥

अप्रकाशात्साक्षियुक्तं लेखकाक्षरमुद्रितम् ।
लोकप्रसिद्धं स्वकृताद्धीन[3]मन्यकृतं शुभम् ॥

[4]देशाध्यक्षादिना लेख्यं पत्रं जानपदं कृतम् ।
समकालं पश्चिमं वा तत्र राजकृतं शुभम् ॥

'स्वहस्तात्' स्वहस्तकृतात् लेख्यात् ।

संवर्तः

लेख्ये लेख्यक्रिया प्रोक्ता वाचिके वाचिकी मता ।
[5]वाचिकी तु न सिध्येत्सा लेख्यस्योपरि या कृता[6] ॥

लेख्यस्योपरि यत्साक्ष्यं कूटं तदभिधीयते ।
अधर्मस्य हि तद्द्वारमतो राजा विवर्जयेत् ॥

1. A. S. B. द, and S. B. (a)—
द्विलिखिपिज्ञः सुकृतान्यथोऽलेख्येन युक्तिभिः ; स्वकृतान्यथा–ज.

2. A. S. B. ज, द, S. B. (a) टोडरा., and वी. मि–कुर्याद्विसदृशं लेख्यं

3. S. B. (a) ज, द, टोडरा., and वी. मि–वरं for हीनं

4. *Vīramitrodaya* (p. 201)–देशाध्यक्षादिलिखितं तत्र जानपदं कृतम् ।

5. *Vīramitrodaya* (p. 201) gives the apparently contrary sense: वाचिकी तत्र सिद्धयेत् सा ; it reconciles it by the comment : लेख्ये सति लेख्यक्रिया प्रोक्ता सैव बलीयसीत्यर्थः । वाचिके साक्षिरूपे प्रमाणे सति वाचिकी क्रिया साक्षिरूपा क्रिया सैव मता बलीयसी । लेख्यस्योपरि या वाचिकी साक्षिरूपा क्रिया लेख्या नारूढेति यावत् तत्र सा सिद्धयेत् ॥ अधर्मस्य च तद्द्वारमित्यत्र हेतुर्वाचिकीति ॥ *Dharmakośa* (p. 377) corrects this comment by inserting न between सा and सिद्धयेत्.

6. क्रिया–ज, द. and टोडरानन्द.

वाचिकैर्यदि सामर्थ्यमक्षराणां विहन्यते ।
क्रियाणां सर्वनाशः स्यादनवस्था च जायते ॥

'लेख्ये लेख्य[1] क्रिया प्रोक्ता' बलीयसीति शेषः । 'वाचिकी' साक्षिक्रिया अत्राऽपि बलीयसीति शेषः । 'लेख्यस्योपरि' क्रिया, लेख्यक्रियाविरोधिनी[2] या क्रिया न[3] सा प्रमाणमित्यर्थः ।

कात्यायनः [२०६-२०७]

न दिव्यैः साक्षिभिर्वापि हीयते लिखितं क्वचित् ।
लेख्यधर्मः सदा श्रेष्ठो ह्यतो नान्येन हीयते ॥

तद्युक्तिप्रतिलेख्येन तद्विशिष्टेन वा सता ।
लेख्यक्रिया निरस्येत न साक्षिशपथैः क्वचित्[4] ॥



1. लेख्यक्रिया–ब, द. 'लेख्ये क्रिया' इत्यन्यत्र.
2. नी या साक्षिक्रिया–ब ; नी या क्रिया–द.
3. सा न प्रमा–ब, द.
4. 'निरस्यान्येन न क्वचित्' [अपरार्कः, p. 692.]

# अथ लेख्यदौर्बल्यम्

तत्र बृहस्पतिः [६, ५१, ४७, ४८]

> आढ्यस्य निकटस्थस्य यच्छक्तेन न याचितम् ।
> शुद्धर्णाशङ्कया[1] तत्तु लेख्यं दुर्बलतामियात् ॥
>
> लेख्यं त्रिंशत्समातीतमदृष्टाश्रावितं च यत् ।
> न तत्सिद्धिमवाप्नोति संतिष्ठत्स्वपि साक्षिषु ॥
>
> प्रयुक्ते शान्तलाभे तु लिखितं यो न दर्शयेत् ।
> न याचते च [2]ऋणिकः तत्संदेहमवाप्नुयात् ॥

'शुद्धर्णाशङ्कया' शुद्धमृणमिति शङ्कया । 'शान्तलाभे' अधमर्णापीडाकरे ।

व्यासः

> अदृष्टाश्रावितं लेख्यं प्रमीतधनिकर्णिकम् ।
> अबन्धलग्नकं चैव बहुकालं न सिध्यति ॥

[3] 'अबन्धलग्नकम्' बन्धलग्नकाभ्यां हीनम् ।

बृहस्पतिः [६, ५१]

> उन्मत्तजडबालानां राजभीतप्रवासिनाम् ।
> [4]अप्रगल्भभयातानां न लेख्यं हानिमाप्नुयात् ॥

1. 'शुद्धं तु शङ्कया तत्र' इति अपरार्कपाठः

2. A. S. B. and S. B. (a) have more correctly ऋणिकं for ऋणिकः ; ऋणिकं तत्सन्दिग्धतामियात्–ज ; 'न याचते च ऋणिकस्तत्समं दण्डमाप्नुयात्' इति उ ; ऋणिकं तत्सन्दिग्धमवाप्नुयात्–द.

3. अबन्धलग्नकाभ्यां हीनम्–द.

4. A. S. B. and S. B. (a) have for the fourth quarter लेख्यं हानिमवाप्नुयात् । *Vīramitrodaya*, p. 198, correctly gives the text as above : and so does *Mādhavīya*, p. 99, substituting मूकानां for बालानां. The readings in A. S. B. and S. B. (a) are obviously wrong. अप्रगल्भाभयार्तानां लेख्यं हानिमवाप्नुयात्–द.

**नारदकात्यायनौ**[1]

लेख्ये देशान्तरं[2] नीते दग्धे दुर्लिखिते [3]कृते ।
[4]सतस्तत्कालहरणमसतो द्रष्टृदर्शनम्[5] ॥

1. नारद, ४, १४२—लेख्ये देशान्तरन्यस्ते दग्धे दुर्लिखिते हृते । इति मुद्रितपाठः । 'कात्यायन' इति व्यवहारसौख्ये च ।

2. रे न्यस्ते-ज, द, व्य. सौ. च

3. 'हृते' इति व्य. मा.

4. ततस्तत्कालहरणमसतो दृष्ट-ज ; सतस्तत्कालहरण-द.

5. अस्य श्लोकस्यार्थो द्वयोरपि वादिप्रतिवादिनोः सोपयोगः । वादिनस्तावत्—यदा वादिना प्रतिवादी लिखितद्रव्यसंबन्धे पृष्टः, न च तत्पत्रं तस्य हस्ते । ऋणी च वदति दर्शयतु ममायं पत्रम् । यदि विद्यमानं स्यात् तदानपेक्षया तदानयनाय धर्माधिकरणेन विशिष्टैर्वा कालहरणं देयम् । अथवा यदीदं पत्रं दग्धं हृतं वा ; तदा असत अविद्यमानस्य तद्द्रष्टृदर्शनमपि साधुजनसाक्ष्यपेक्षया प्रमाणम् । ते च ते द्रष्टारः साक्षिलेखकाः साधवो यदि जीवन्ति । अथवा केचिदुदासीनाः प्रश्नकाले आगता यैस्तल्लिख्यमानं दृष्टम् । अविद्यमानं पत्रमानीतं च वादिना । किं तु यावद्वाच्यते तावदङ्कनष्टत्वादक्षरभ्रष्टत्वाद्वा असत्पत्रसंदेहमागतं, तदा तस्याशोभनस्य ये तत्काललिख्यमानस्य साक्षिलेखकोदासीनादयो द्रष्टारः केचित् तेऽङ्कभ्रान्त्यपनोदने नाम्वर्णभ्रान्त्यपनोदने वा प्रमाणं भवन्ति । एवमयं वादिसंबध्यमानः श्लोकोऽभिहितः । इदानीं प्रतिवादिसंबध्यमानोऽयमेवोच्यते—यदा अगृहीतधनपत्रेण वा प्रवेशितधनपत्रेण वा पत्रारूढपितृनामजातिद्रव्यप्रमाणर्णिमतसाक्षिलेखाद्यङ्गपरिपूर्णलिखितबलात् कश्चिदृणी धर्माधिकरणमानीतः । तेन चोत्तरकालेऽभिहितम्—यथा सत्यमिदमस्मि । मया तत्पत्रं लिखितमासीत् । किं तु किल कार्यार्थं द्वितीयदिने द्रव्यमभिग्रहीष्यामि, तावत्कार्यं वोढनीयम् । मया द्रव्यं न गृहीतम् । पत्रं च प्रमादात् पार्श्वे स्थित्वा मया न पाटितम् । तावत् कतिपयदिवसागमेनैवास्य पित्रा उक्तोऽहं यथा त्वदीयमगृहीतार्थं पत्रं मया तस्मिन्नेव दिने अनादरेण बहिरेव मुक्तं किल निरर्थकत्वात् । त्वन्निरोधात् पाटयिष्यामि । तावत्तदेयं नष्टं, येनातिप्रयत्नेनान्वेषयतापि मया तत्कचिन्न दृष्टम् । तन्मा कश्चिद्दैवयोगात्कालान्तरेऽपि तव यः चाकरीभवति । ततोऽहमेव प्रणष्टिविशुद्धिपत्रं प्रयच्छामि । एवमुक्त्वा तेनास्य पित्रा तत्काल एव मम प्रणष्टिविशुद्धिपत्रं दत्तम् । तच्च मयातिप्रयत्नेन तत्कालेऽमुकायतने वसता तत्रैवामुकपार्श्वे धवलगृहमञ्जूषायां स्थापितम् । इत्येवं प्रतिवादिनोत्तरे दत्ते तदानयनापेक्षया तदानार्थं तस्य सतस्तत्कालहरणं देयम् । असतस्तद्द्रष्टृदर्शनं प्रमाणमित्यादिकं प्रतिवादिनोऽपि सोपयोगार्थमिति—(असहायभाष्ये)

सतस्तत्कालहरणमिति, देशान्तरादौ विद्यमाने लेख्ये तदानयनं यावत्, अविद्यमाने च तल्लेख्यदर्शितपुरुषदर्शनं यावत्प्रतीक्षणीयमित्यर्थः ।

कात्यायनः

यल्लेख्यं [1]प्राड्विवाकेन न दृष्टं न प्रतिश्रुतम् ।
अलब्धधर्णे कृते लेख्ये कथं तत्प्राप्नुयाद्धनी ॥

आधानमुपरुद्धो वा यावत्तिष्ठति लग्नकः ।
[2]लेख्यालाभात् स्मृतं तावत्प्रमाणं द्रष्टृदर्शनम् ॥

[3]यल्लेख्यमित्यादि । यल्लेख्यं दर्शनीयमिति प्रतिश्रुतं तत्प्राड्विवाकेन न दृष्टं, तस्मिन् कृते कथमलब्धधनो धनं प्राप्नुयादित्यर्थः



1. प्राड्विवाकेन दृष्टं दृश्यं प्रतिश्रुतमिति टोडरानन्दे

2. लेख्याभावे स्मृतं–द, टोडरानन्दे च

3. 'दृश्यं प्रतिश्रुतम्' दर्शनीयत्वेनाभ्युपगतम् । 'आधानं' आधिः । 'उपरुद्धः' प्रतिरुद्धः। (टोडरानन्द). The two ślokas are not found in Kane's collection. See *Dharmakośa*, p. 369.

## ३४

# अथ भुक्तिः

तत्र बृहस्पतिः [२७, २२-२८]

एतद्विधानमाख्यातं साक्षिणां लिखितस्य च ।
[1]संप्रति स्थावरे प्राप्ते भुक्तस्य विधिरुच्यते ॥

विद्यया क्रयबन्धेन शौर्यभार्यान्वयागतम् ।
सपिण्डस्याप्रजस्यांशं स्थावरं सप्तधा स्मृतम्[2] ॥

पित्र्ये लब्धक्रयाधाने [3]सत्वशौर्यप्रवेदनात् ।
प्राप्ते सप्तविधे भोगः सागमः सिद्धिमाप्नुयात् ॥

क्रमागतः शासनिकः क्रयाधानागमान्वितः ।
एवंविधस्तु यो भोगः स तु सिद्धिमवाप्नुयात् ॥

[4]संविभागक्रयप्राप्तं पित्र्यं लब्धं च राजतः ।
स्थावरं सिद्धिमाप्नोति भुक्त्या हानिमुपेक्षया ॥

प्राप्तमात्रं येन भुक्तं स्वीकृत्यापरिपन्थिनम् ।
तस्य तत्सिद्धिमाप्नोति हानिं चोपेक्षया तथा ॥

1. द, A. S. B. and S. B. (a)-सांप्रतं and भुक्तेश्च, which are the readings also in *Vīramitrodaya*, (p. 203) and *Mādhavīya* (p. 101) साम्प्रतं-ज.

2. ज, द, A. S. B. and S. B. (a)-सप्तधोच्यते । *Vīramitrodaya* has कृतं for स्मृतम् (p. 203)

3. द, ज, A. S. B. has रिक्थ, which is also the *Vīramitrodaya* (p. 203) reading.

4. संविभागं-द ; अपरार्कः (६३५) मित्रमिश्रश्च. संधिभाग-ज.

[1]अध्यासनात्समारभ्य भुक्तिर्यस्याविघातिनी ।
त्रिंशद्वर्षाण्यविच्छिन्ना तस्य [2]तां न विचालयेत् ॥

'विद्यया' प्रतिग्रहादिप्रकारेण । 'बन्धः' आधिः । 'शौर्यागतम्' युद्धादिना[3] यत्प्राप्तम् । 'भार्यागतम्' भार्यया सह लब्धम् । 'अन्वयागतम्' पित्रादिक्रमेणायातम्[4] । 'प्रवेदनम्' विवाहः । 'पित्र्य' इत्यादिना पूर्वोक्तसप्तप्रकारानुवादः । 'अपरिपन्थिनम्' अविरोधिनम् । 'अध्यासनम्' [5]अधिकृतावस्थानम् । 'अविघातिनी' अविच्छिन्ना[6] ।

विष्णुकात्यायनौ[7]

सागमेन तु भोगेन भुक्तं सम्यग्यदा तु यत् ।
[8]आहर्ता लभते [9]तत्तु नापहार्यं[10] तु तत्क्वचित् ॥

[11]पित्रा भुक्तं तु यद्द्रव्यं भुक्त्याचारेण धर्मतः ।
तस्मिन्प्रेते न वाच्योऽसौ भुक्त्या प्राप्तं हि तस्य तत् ॥

त्रिभिरेव तु या भुक्ता पुरुषैर्भूर्यथाविधि ।
लेख्याभावेऽपि तां तत्र[12] चतुर्थः समवाप्नुयात् ॥

1. अध्यासनं समारभ्य–द.
2. तां न विचालयेत्–द; अपरार्कः मित्रमिश्रश्च । तन्न विचालयेत्–उ. बि.
3. ना प्राप्तं–द.
4. क्रमेणोपात्तम्–द
5. अधिविकृत्यावस्थानम्–द.
6. अविघ्ना–द
7. विष्णु, ५, १८५–१८७; कात्या., ३१९, ३२६, ३२७.
8. द, S. B. (a), A. S. B. and the printed *Viṣṇusmṛti*–
   आहर्ता लभते यत्र नापहार्यं तु तत्क्वचित्
9. तत्र नापहार्यं तु तत्क्वचित्–ज; मुद्रित विष्णुश्च.
10. 'नयेद्वयर्थं तु तत्क्वचित्'–उ.
11. S. B. (a)–ज, द and A. S. B. omit this śloka.
12. तत्र–द

'भुक्त्याचारेण' सम्यग्भुक्त्या ।

नारदः [४, ९७]

अन्यायेन तु यद्भुक्तं पित्रा[1] पूर्वतरैस्त्रिभिः ।
न तच्छक्यमपाहर्तुं[2] क्रमात्त्रिपुरुषागतम् ॥

'पित्रा पूर्वतरैस्त्रिभि'रिति पित्रा सह त्रिभिः पूर्वतरैरन्यैरित्यन्वयः ।

तथा

[3]आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा ।
कारणं भुक्तिरेवैका सन्तता या चिरन्तनी ॥

'कारणम्' प्रमाणम् ।

कात्यायनः [३२९, ३२१]

भुक्तिर्बलवती शास्त्रे सन्तता या चिरन्तनी ।
विच्छिन्नापि तु सा ज्ञेया या तु पूर्वप्रसाधिता ॥

आदानकालादारभ्य भुक्तिर्या तु निरन्तरा ।
आदानं प्राप्य तस्यां तु प्रायः साक्ष्यं प्रवर्तते[4] ॥

स्मार्ते काले क्रिया भूमेः सागमा भुक्तिरिष्यते ।
[5]अस्मार्तेऽनुगमाभावात् क्रमात्त्रिपुरुषागता ॥

1. पितुः–इति मु. पाठः

2. आकर्तुम्–द

3. Ascribed to Nārada by Jīmūtavāhana, Dēvaṇṇa Bhaṭṭa and the *Sarasvatīvilāsa*, but not found in Jolly's edn. or *Nāradasamhitā*.

4. Ascribed to Kātyāyana by *Vyavahāracintāmaṇi* and *Vyavahārasāukhya* apparently following the *Kalpataru*. Not in Kane's collection.

5. असार्ते त्वागमाभावात्–द.

'पूर्वप्रसाधिता' पूर्वैः पुरुषैः कृता। 'निरन्तरा' या भुक्तिरल्पकाला भवति तस्यामाहर्तुः प्रतिग्रहादिकं प्राप्य साक्ष्यं प्रवर्तत इत्यर्थः। 'स्मार्ते' स्मरणयोग्यकाले। 'क्रिया' प्रमाणम्। 'आगमः' स्वत्वे हेतुः क्रयप्रतिग्रहादि। 'अनुगमाभावात्' अनुगमस्यानुसंधानस्याभावादित्यर्थः[1]।

याज्ञवल्क्यः [२, २७]

[2]आगमोऽभ्यधिको भोगाद्विना पूर्वक्रमागतात्[3]।

कात्यायनः [३१८]

मुख्या पैतामही भुक्तिः पैतृकी चापि संमता।
त्रिभिरेतैरविच्छिन्ना स्थिरा षष्ट्याब्दिका मता॥

व्यासः

पिता पितामहो यस्य जीवेच्च प्रपितामहः।
त्रयाणां जीवनं भोगो [4]विज्ञाप्यस्त्वेकपूरुषः॥

[5]पितामहेन भुक्तस्य तत्पुत्रेणापि पालनम्।
तौ विना यस्य पिता च तस्य भोगस्त्रिपूरुषः॥

1. "अनुगम आगमाभावनिश्चयः। कल्पतरुकारस्तु अनुगम आगमानुसन्धानमिति व्याचख्यौ। तत्रागमाभावनिश्चयस्य बाधकत्वेनानुमितिप्रतिबन्धकस्याभाववचनस्यावश्यकत्वात् आगमानुसन्धानस्य च भोगेनैव क्रियमाणत्वेन तदभावासम्भवाच्च हेयम्॥" इति **वीरमित्रोदये** (पृ. २०५)

2. आगमो लेख्यम्। तद्भुक्तेर्बलीयः निश्चितत्वात्, अन्यथापि भुक्त्युपपत्तेः। पूर्वक्रमे तु सति भुक्तेर्बलीयस्त्वं लेख्यान्तरनिरस्तस्यापि लेख्यस्य प्रमादतः स्थितिसंभवात्। त्रिपुरुषभुक्तिः पूर्वक्रमः॥ (विश्वरूपः)

3. गमात्-द.

4. S. B. (a), A. S. B. and *Vīramitrodaya*, (p. 205) **विज्ञेयः** for विज्ञाप्यः; भोग्ये विज्ञेयस्त्वैकपौरुषः-ज; जीवतां भोग्ये विज्ञेयस्त्वेकपौरुषः-द.

5. A. S. B. ज, द and S. B. (a) give the first line thus:—

प्रपितामहेन भुक्तस्य तत्पुत्रेण विना च तम्।

*Vīramitrodaya*, (p. 206) reads:—

पितामहेन यद्भुक्तं तत्पुत्रेण विना च तम्।

[1]वर्षाणि विंशतिं भुक्ता स्वामिनाऽव्याहता सती ।
भुक्तिः सा पौरुषी भूमेर्द्विगुणा च द्विपौरुषी ॥

त्रिपौरुषी च त्रिगुणा न तत्रान्वेष्य आगमः ।

[2]तथा [बृहस्पतिः [८, ६४]

सागमो दीर्घकालश्च निश्छिद्रोऽन्यरवोज्झितः[3] ।
प्रत्यर्थिसन्निधानश्च पञ्चाङ्गो भोग उच्यते ॥

'निश्छिद्रः' विच्छेदरहितः । 'अन्यरवोज्झितः' विप्रतिपत्तिशून्यः । 'प्रत्यर्थिसन्निधानः' [4]प्रत्यर्थिनः सन्निधानं यस्य स तथा[5] ।

बृहस्पतिः [७, ३२-३५]

यद्येकशासने ग्रामक्षेत्रारामाश्च लेखिताः ।
एकदेशोपभोगेऽपि सर्वे भुक्ता भवन्ति ते ॥

अनुमानाद्गुरुः साक्षी साक्षिभ्यो लिखितं गुरु ।
अव्याहता त्रिपुरुषी भुक्तिरेभ्यो गरीयसी ॥

1. व्यवहारनिर्णये (पृ. १२८)

2. बृहस्पतिरिति व्यवहारनिर्णये (पृ. १२९). व्यासश्लोकमिति वीरमित्रोदये (पृ. २०४) दृश्यते:—

सागमो दीर्घकालश्च विच्छेदोपरवोज्झितः ।
प्रत्यर्थिसन्निधानश्च परिभोगोऽपि पञ्चधा ॥

3. द्रोन्यरवोक्तितः–ज.

4. प्रत्यर्थिनः सन्निधानं यस्य स तथा–'तया' इत्यन्यत्र

5. 'विच्छेदो'ऽन्तरायः, 'उपरव' आक्रोशः, ताभ्यां 'उज्झितो' रहितः । यद्वा छेदो व्यवधानं तद्विगमवान् 'विच्छेदो' निरन्तर इति यावत् । 'अपरवो' वर्जनविषयो रवः । मदीयं क्षेत्रादि त्वया किमिति भुज्यत इति प्रतिषेधः । अपशब्दस्य वर्जनार्थत्वात् । तेनोज्झितः ॥ (वीरमित्रोदय, २०४) ॥

अनुमानं सद्य एव साक्षी चामरणाद्भवेत् ।
अव्याहतं लेख्यभोगं[1] प्रमाणं तत्त्रिपौरुषम् ॥

अनुमानं सद्य एवेति । आकारेङ्गितादिलिङ्गैः विवादकाल [2]एवानुमानं प्रवर्तते ॥

नारदः [४, ७५-७६]

लिखितं बलवन्नित्यं जीवन्तस्त्वेव[3] साक्षिणः ।
कालातिहरणाद्भुक्तिरिति[4] शास्त्रेषु निर्णयः[5] ॥

त्रिविधस्यास्य दृष्टस्य प्रमाणस्य यथाक्रमम् ।
[6]पूर्वं पूर्वं गुरु ज्ञेयं भुक्तिरेभ्यो गरीयसी ॥

एभ्यस्त्वल्पकालभुक्तिसाक्षिलिखितेभ्यो [7]बहुकालीना वा भुक्ति'गरीयसी' बलवती ।

याज्ञवल्क्यः [२, २८]

आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत्[8] ।
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी[9] ॥

1. भोग्यप्रमाणं तु त्रिपूरुषम्–द.
2. एवानुमानं प्रवर्तते–द ; एव प्रवर्तते– उ.
3. तस्त्वेव–द.
4. A. S. B. ज, द and S. B. (a)–क्रमणात् for हरणात्
5. A. S. B. ज, द and S. B. (a)–निश्चयः for निर्णयः 'शास्त्रवि.,' इति मु. ना.
6. आगमद्वारेणैव साक्षिभ्यो लिखितं श्रेय इति । एवं चागमप्रतिष्ठिता सती भुक्तिः तेभ्यः साक्षिलिखितदिव्येभ्यो गरीयसीति योजितमिदम्–(असहायः)
7. बहुकाला भुक्तिर्बलवती–द,
8. सोऽपि युक्तस्तमुद्धरेत्–द.
9. लेख्यकर्तुः पुत्रो न लेख्यदोषानपाकुर्यात् । न ह्यसौ पितृवल्लेख्यस्वरूपज्ञो यतः । धनं तु न तत्पुत्रस्य । तस्य तु यः पुत्रः तस्य धनमपि स्यात् । यस्मात् भुक्तिस्तत्र गरीयसी लेख्यादित्युक्तमेवेत्यभिप्रायः–(विश्वरूपः ॥)

<u>बृहस्पतिः</u> [७, ३९]

आहर्ता शोधयेद्भुक्तिमागमं चापि[1] संसदि ।
तत्सुतो भुक्तिमेवैकां पौत्रादिस्तु न किञ्चन ॥

<u>कात्यायनः</u> [३२४]

[2]येनोपात्तं हि यद्द्रव्यं सोऽभियुक्तस्तदुद्धरेत् ।
चिरकालोपभोगेऽपि भुक्तिस्तस्यैव नेष्यते[3] ॥

<u>बृहस्पतिः</u> [७, ३८]

[4]यदाऽऽहर्ताऽभियुक्तः स्याल्लेख्यं साक्षी तदा गुरुः ।
लेख्याभावे [5]तु युक्तिस्तु भुक्तिस्ताभ्यां गरीयसी[6] ॥

<u>तथा</u> [? कात्यायनः, ३१६]

नोपभोगे बलं कार्यमाहर्त्रा तत्सुतेन वा ।
पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः ॥

1. वापि–द and अपरार्क, p. 636.
2. A. S. B. ज, द and S. B. (a)–येनोपनिहितं
3. A. S. B. and S. B. (a)–लेख्यते for नेष्यते : भुक्तिस्तस्य तु नेष्यते–द.
4. यदोहर्ताऽभियुक्त–द 'यदा कर्ताभियुक्त' इति व्यवहारसौख्यम्
5. हि युक्तिस्तु–ज, द. 'भोक्ताभावे हि भुक्तिस्तु स्वतस्ताभ्यो' इति व्य. सौ.
6. *Smṛticandrikā* (p. 164) ascribes this verse to Bṛhaspati in the undermentioned form:—

यत्राहर्ताऽभियुक्तः स्याल्लेख्यं साक्षी तदा गुरुः ।
तदभावे तु पुत्राणां भुक्तिरेका गरीयसी ॥

*Vyavahārasaukhya* cites it thus :

यदा कर्त्राभियुक्तस्स्याल्लेख्यं साक्षी तदा गुरुः ।
भोक्त्राभावे हि भुक्तिस्तु स्वतस्ताभ्यो गरीयसी ॥

याज्ञवल्क्यः [२, २९]

योऽभियुक्तः परेतः स्यात्तस्य रिक्थी तमुद्धरेत्[1] ।
न तत्र कारणं भुक्तिरागमेन [2]कृता विना[3] ॥

नारदः [४, ९३, ८५]

[4]तथारूढविवादस्य प्रेतस्य व्यवहारिणः ।
पुत्रेण सोऽर्थः संशोध्यो न तं भोगो निवर्तयेत् ॥
आगमेन विशुद्धेन भोगो याति प्रमाणताम् ।
अविशुद्धागमो भोगः प्रामाण्यं नाधिगच्छति ॥

तथा [नारद ४, ८७-८८, ९२]

[5]अनागमेन भुक्तं यत्र तद्भुक्तिवशान्नयेत् ।
एतत्तु कर्तरि धनं याति तद्वंशिनो मतम् ॥

1. समुद्धरेत्–द.
2. विना कृता–द; मिताक्षरा, अपरार्कपाठश्च.
3. यदि हि लेख्यदोषापकरणाभियुक्तः परेतो मृतः स्यात्, तदा तदीयधनग्राह्यपाकुर्यात्। एतच्च लेख्यकर्तृविषयम्। इतरस्य द्रव्यापहार एव स्यात्। यस्मान्न तत्र स्वामित्वे भुक्तिरागमशून्या कारणं भवति, कृतापि तु व्यभिचारिणीत्यर्थः (विश्वरूपः)
4. एवमेतेषां प्रकाराणामेकेनाप्यन्यायेन परकीयमर्थं भुञ्जन्यः कश्चिदर्थधनिना न्यायार्थं प्रारब्धो अनिष्पन्नव्यवहार एव प्रेतीभूतः। तस्य सक्तः स तदवस्थ एव व्यवहारः पुत्रेण सशोध्यः। सोऽर्थः पितृकामभुक्त्या ततो न भवतीत्यर्थः—(असहायः)
5. A. S. B. ज, द and S. B. (a) give the following version of this śloka, and they place it below the next śloka—

अनागमं भुज्यते यत्तत् भुक्त्या वशं नयेत् ।
प्रेते तस्मिन्नो याति जातु तद्वंश्यभोग्यताम् ॥

व्यवहारसौख्य adopts this version, with the variants 'यन्न तद्भुक्तिर्बलं भवेत्' and 'प्रेते तु कर्तरि धनं याति'

The printed *Nāradasmṛti* (४, ८८, p. 71) gives this version—

भुज्यतेऽनागमं यत्तु न तद्भोगवशं नयेत् ।
प्रेते तु भोक्तरि धनं याति तद्वंशभोग्यताम् ॥

and the comment of असहाय—अत्र यावद्भोक्ता जीवति तावदनागमं भुज्यमानं परकीयं भवति। यथा तथाऽस्योद्धरणसंभवो भवति। यदा पुनरसौ भोक्तापि अप्रार्थित एव मृतः। तदा तद्धस्तु तदीयवंश्यभोग्यतां याति। अतो नोपेक्षणीयमित्यर्थः ॥

अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि ।
चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः ॥

अन्वाहितं हृतं न्यस्तं बलावष्टब्धयाचितम् ।
अप्रत्यक्षं च यद्भुक्तं षडेतान्यागमं विना ॥

अथानुपभोगेनासिद्धिः

तत्र याज्ञवल्क्यः [२, २७]

[1]आगमेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो ॥

नारदः [४, ७७-८८]

विद्यमानेऽपि लिखिते जीवत्स्वपि हि साक्षिषु ।
विशेषतः स्थावराणां [2]यन्न भुक्तं न तत्स्थिरम् ॥

भुज्यमानान् परैरर्थान्यः [3]स्वान्मोहादुपेक्षते ।
समक्षं जीवतोऽप्यस्य तान् भुक्तिः कुरुते वशे[4] ॥

व्यासः

उपेक्षिता यथा धेनुर्विना पालेन नश्यति ।
पश्यतोऽन्यैस्तथा भुक्ता भूमिः [5]कालेन हीयते[6] ॥

1. S. B. (a). द and ज read the line thus :—
आगमोऽपि बलं चैव भुक्तिस्तत्कोऽपि यत्र नो ।

2. यत्र भुक्तं च–द.

3. स्वान् मौर्ख्यादुपेक्षते इति मुद्रितनारदीये

4. स्वकीयानर्थान् द्विपदचतुष्पदस्थावरादिकान् प्रीतिसमर्पितबलात्कारगृहीतशून्याक्रान्तादिप्रपञ्चैः परैर्भुज्यमानानुपेक्षते । तस्य जीवतोऽपि चिरकालातिक्रान्ता भुक्तिः तान् पराणामेव वशीकुरुते । प्रत्यक्षं प्रापयति । किं पुनर्मृतस्येति । (असहायः)

5. कालेन हीयते–द ; काले महीयते–ज.

6. षष्टिवर्षाख्यकालेन पश्चाद्भोगेन हीयत इत्यर्थः । (व्यवहारनिर्णयः, १३१)

[1]वर्षाणि विंशतिं यस्य भूर्भुक्ता तु परैरिह ।
सति राज्ञि समर्थस्य तस्य सेह न सिध्यति ॥

नारदः [४, ४२]

प्रत्यक्षपरिभोगात्तु[2] स्वामिनो द्विदशाः समाः ।
आध्यादीन्यपि जीर्यन्ति स्त्रीनरेन्द्रधनादृते ॥

'द्विदशाः समाः' विंशतिवर्षाणि । 'स्त्रीनरेन्द्रधनादृते' स्त्रीधनराजधन व्यतिरेकेण[3] ।

याज्ञवल्क्यः [२, २४]

पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी ।
परेण भुज्यमानाया धनस्य दशवार्षिकी[4] ॥

1. Ascribed to Kātyāyana by *Vyavahāranirṇaya*(p. 136) Not found in Kane's edition of Kātyāyana

2. S. B. (a). ज, द and A. S. B. परिभोगादि

3. The idea is further enforced by the next verse of Nārada (४. ४३) स्त्रीधनं च नरेन्द्राणां न कथंचन जीर्यते । अनागमं भुज्यमानं वत्सराणां शतैरपि ॥

Asahāya brings land under नरेन्द्रधनं–"नरेन्द्रधनशब्देन भूमिरुक्ता किल । नरेन्द्राणां भूमिरेव धनमित्यतः । स्त्रीनरेन्द्रधने विंशतिवर्षैरपि न नश्यत इति "

4. इत्येवमादिभिः वचनैरेतावन्तं कालमुपेक्षमाणस्यान्यत्र स्वद्रव्यार्थे प्राणपरित्यागेनापि अभिनिविशमानस्य परेण भुज्यमानमात्मीयं चेत् किमित्युपेक्षत इति विक्रयादिवदुपेक्षया दैर्घ्य-लिङ्गेनास्य स्वत्वनिवृत्तिः, परस्य स्वत्वप्राप्तिरनुमीयत इति धारेश्वरासहायश्रीकरादयो मन्यन्ते ॥ तथा चिरकालापेक्षया क्वचित् स्वरूपहानिः संभाव्येत । अतः तूष्णीं न स्थातव्यमिति व्यवहारोपदेशमात्रं क्रियत इति । विंशतिवर्षा भुक्तिः भोगहानिकरी, न स्वरूपहानिकरी, तथात्वे सकलवचनविरोधादिति विश्वरूपभट्टकुमारब्रह्मवित्प्रवरादयो मन्यन्ते ॥ (व्यवहार-निर्णयः, १३५)

मनुनारदौ [मनु, ८, १४३ ; ना. ४, ७९]

[1]यत्किञ्चिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी ।
भुज्यमानं परैस्तूष्णीं[2] न स तल्लब्धुमर्हति ॥

गौतमः [१२, ३४]

अजडापोगण्डधनं दशवर्षभुक्तं परैः सन्निधौ भोक्तुः ॥

'अजडस्य' ['अपोगण्डस्य'] च धनं तत्सन्निधाने अविवादं परैर्दशवर्षपर्यन्तमुपभुक्तं [3]भोक्तुरेवैतत्स्वं संपद्यत इत्यर्थः ।

मनुः [८, १४५]

आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः ।
अवहार्यौ भवेतां तौ दीर्घकालमवस्थितौ ॥

'आधिः' बन्धकः । 'उपनिधि'रपि प्रीत्या भोगार्थं समर्पितं क्षेत्रादि[4] । न तु "वासनस्थमनाख्याय" इत्यादिस्मृतिलक्षणः[5] । तस्य भोगानर्हत्वात् । 'कालात्ययः' उक्तावधिकालातिक्रमः । 'न कालात्ययमर्हतः' मोक्षणकालेऽवश्यं मोक्षणीयावित्यर्थः । तत्र हेतुमाह—'अवहार्यौ भवेतां' इत्यादिना । तौ हि चिरकालावस्थितौ भोक्तुरवहार्यौ भवेतां, भोक्ता कदाचिदपहरेदपीत्यर्थः ।

1. 'यत्किञ्चित्' दासीदासाभरणभाण्डादि–(मेधातिथिः)

2. S. B. (a). द, ज and A. S. B. have परैरर्थं for परैस्तूष्णीं.

3. A. S. B., ज, द and S. B. (a) insert न before भोक्तुः, but Maskari and Haradatta omit it, as above.

4. 'उपनिधिः' यात्रान्तरवदन्तर्हितो [यत्रान्तर्हितो] न्यासः–(मेधातिथिः)

5. याज्ञवल्क्यः (२,६५)

वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्प्यते ।
द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत् ॥

<u>बृहस्पतिः</u> [७, ४०, ४१]

ऋक्थिभिर्वा परैर्द्रव्यं समक्षं यस्य दीयते ।
अन्यस्य भुञ्जतः पश्चान्न स तल्लब्धुमर्हति ॥

पश्यन्नन्यस्य ददतः[1] क्षितिं यो न निवारयेत् ।
स्वामी सतापि लेख्येन न पुनस्तां समाप्नुयात् ॥

<u>तथा</u> [७, ६६-६७]

भूमेरभुक्तिर्लेख्यस्य यथाकालमदर्शनम् ।
[2]अस्मारणं साक्षिणां च स्वार्थहानिकराणि तु ॥

तस्माद्यत्नेन कर्तव्यं प्रमाणपरिपालनम् ।
तेन कार्याणि सिध्यन्ति स्थावराणि चराणि च ॥

1. A. S. B.–अन्यस्य ददतः पश्यन्; स्वन्यस्य ददतः क्षितिं यो न विचारयेत्–द.

2. A. S. B. and S. B. (a)–अस्मारणं साक्षिणोक्तं; अस्मारणं साक्षिणोथ–च, द; स्मरणात्साक्षिणां चैव–उ.

## ३५

# अथान्यभोगहान्यपवादः

तत्र बृहस्पतिः [७, ४३, ४४, ४६]

भुक्तिस्त्रिपौरुषी सिध्येत्परेषां नात्र संशयः ।
अनिवृत्ते सपिण्डत्वे सकुल्यानां न सिध्यति ॥

अस्वामिना तु यद्भुक्तं गृहक्षेत्रापणादिकम् ।
सुहृद्बन्धुसकुल्यस्य न तद्भोगेन हीयते ॥

[1]विवाह्यश्रोत्रियैर्भुक्तं राजामात्यैस्तथैव च ।
सुदीर्घेणापि कालेन तेषां सिध्येन्न तद्धनम्[2] ॥

'अनिवृत्ते सपिण्डत्व' इति । सपिण्डत्वे विद्यमाने सत्यपि त्रिपुरुषभुक्तौ सकुल्यानां [3]भुज्यमानं स्वं न भवतीत्यर्थः । 'विवाह्यो' जामाता ।

गौतमः [१२, ३४-३६]

[4]अजडापोगण्डधनं दशवर्षपर्यन्तमुपभुक्तं परैः सन्निधौ भोक्तुः । न श्रोत्रियप्रव्रजितराजपुरुषैः । [5]पशुभूमिस्त्रीणामनतिभोगः ॥

अतिभोगतो हानिरित्यर्थः ।

कात्यायनः [३३५]

सनाभिभिर्बान्धवैश्च भुक्तं यत्स्वजनैस्तथा ।
भोगात्तत्र न सिद्धिः स्याद्भोगमन्येषु कल्पयेत् ॥

1. विवाहे श्रोत्रियैर्भुक्तं–उ.
2. A. S. B., ज, ढ and S. B. (a)-तेषां सिध्यति वर्द्धनम् ।
3. तद्भुज्यमानं पुनर्न भवतीत्यर्थः–द.
4. पौगण्ड–ढ
5. पशुपुष्पस्त्रीणामनतिभोगः । अतिभोगेन न हानिरित्यर्थः–ढ.

'अन्येषु' [1]असम्बन्धिषु भोक्तृषु ।

मनुनारदौ[2]

[3]आधिः सीमा बालधनं निक्षेपोपनिधी स्त्रियः ।
राजस्वं श्रोत्रियस्वं च न भोगेन प्रणश्यति[4] ॥

बृहस्पतिः [७, ४७]

अशक्तालसरोगार्तबालभीतप्रवासिनाम् ।
शासनारूढमन्येन भुक्तं भुक्त्या न हीयते ॥

'शासनारूढं' ताम्रपट्टादिलिखितम् ।

कात्यायनः [३३०]

न भोगं कल्पयेत्स्त्रीषु देवराजधनेषु च ।
बालश्रोत्रियवित्ते च मातृतः[5] पितृतः क्रमात् ॥

1. S. B. (a), द, ज and A. S. B अन्येष्वसंबद्धेषु which harmonizes with *Vīramitrodaya* (p. 221) "अन्येषु, असंबद्धेषु."

2. मनु, ८, १४९ ; ना. ४, ७१.

3. 'आधिः' बन्धकद्रव्यं गोभूहिरण्यादि । 'सीमा' मर्यादा ग्रामादीनाम् । 'स्त्रियः' दास्यः भार्या वा- (मेधातिथिः) ॥ यत्किंचिदाधीकृतं वस्तु तत्सुचिरेण कालेनापि तेन द्रव्येण लभ्यते । न भोगेन प्रणश्यति । तथा परसीमा चिराक्रान्तापि स्वस्थीभूते देशे पुनर्लभ्यते न प्रणश्यति । तथा मातापित्रोः परोक्षं येन सधनो बालः परिगृहीतः तद्बालधनं चिरभोगेनापि न प्रणश्यति । तथा निक्षेपो न्यासः, उपनिधिर्निक्षेपमध्येऽन्तर्हितसारद्रव्यम् । तथा स्त्री निक्षेपभूता या भुक्ता । तथा राजस्वशब्देन भूमिरुक्ता । श्रोत्रियस्वशब्देन गावोऽभिहिताः । एतेषु सविशेषन्यासाः चिरकालातिक्रमेऽपि न नश्यन्ति । (असहायः)

4. नोपभोगेन नश्यति-द.

5. द, A. S. B., ज, and S. B. (a)-प्राप्ते पितृपितृः क्रमात् for मातृतः पितृतः क्रमात्; *Vīramitrodaya* reads प्राप्ते च पितृतः क्रमात् ।

न स्त्रीणामुपभोगः स्याद्विना लेख्यात्कदाचन[1]
शत्रुश्रोत्रियराज्ञां तु तथा बालधने मतः[2] ॥

मनुः [८, १४६]

संप्रीत्या भुज्यमानानि न नश्यन्ति कदाचन ।
धेनुरुष्ट्रो वहन्नश्वो यश्च दम्यः प्रयुज्यते ॥

[3] 'दम्यः प्रयुज्यते' दमनार्थं यः समर्प्यते ।

कात्यायनः

क्रयं शिल्पिषु निक्षिप्तं [4]बन्धान्वाहितयाचितम् ।
[5]प्रसह्यातिहरन्मोहाद्धीनो दण्ड्यः स वै भवेत् ॥

'क्रयो' मूल्यम्

याज्ञवल्क्यः [२, २६]

आध्यादीनां निहन्तारं[6] धनिने दापयेद्धनम् ।
दण्डं च तत्समं राज्ञे शक्त्यपेक्षमथापि वा ॥

'शक्त्यपेक्षम्' यथाशक्ति, 'दण्डं' 'दापयेत्[7]' ।

---

1. 'लेख्यं कदाचन' इति व्यवहारचिन्तामणिः

2. द, A. S. B. and S. B. (a)-बालधने स तु ; धनं सतः-ज ; 'न स्त्रीणामुपभोगः स्यात्' 'तथा बालधने मतः' This verse is not found in Kane's edn.

3. From S. B. ज, द and S. B. (a), 'दम्यः' बलीवर्दः : 'प्रयुज्यते' वाहनार्थं यो दीयते । (मेधातिथिः)

4. बन्धान्वाहितयाचितम्-द ; स्वगन्धाहितयाचितम्-उ.

5. द, A. S. B. and S. B. (a)- विहर्तारं ; निहर्तारं-ज.

7. A. S. B., ज, and S. B. (a)-दाप्यते for दापयेत्.

## ३६

# अथ विच्छिन्नभोगनिर्णयः

तत्र बृहस्पतिः [७, ४८-६२]

छिन्नभोगे गृहक्षेत्रे संदिग्धं यत्र जायते ।
लेख्येन भोगविद्भिर्वा साक्षिभिस्तद्विभावयेत्[1] ॥

[2]नामघाटागमं संख्यां कालं दिग्भागमेव[3] वा ।
भोगच्छेदनिमित्तं च ये विदुस्तेऽत्र[4] साक्षिणः ॥

[5]तदुत्पन्नाश्च सामन्ता [6]येऽन्यदेशान्तरस्थिताः ।
मौळास्ते[7] तु समुद्दिष्टाः प्रष्टव्याः कार्यनिर्णये ॥

अदुष्टास्ते तु यद्ब्रूयुः सन्दिग्धे समदृष्टयः ।
तत्प्रमाणं तु कर्तव्यमेवं धर्मो न हीयते ॥

स्थावरस्यैतदाख्यातं लाभभोगप्रसाधनम् ।
प्रमाणहीने वादे[8] तु निर्देश्या दैविकी क्रिया ॥

---

1. A. S. B., द, ज and S. B. (a) as well as वी. मि. २१२–शुद्धिमाहरेत्; for तद्विभावयेत्.
2. घाटागमं संख्याकालं द.
3. ग एव च द.
4. विदुस्तत्र–द, वी. मि. २१२.
5. समुत्पन्नाश्च–द.
6. येऽन्यदेशे व्यवस्थिताः–द, वी. मि.
7. मौनास्ते तु द.
8. हीनवादे–द; वी. मि. २१२.

# ३७

## अथ युक्तिः

तत्र <u>बृहस्पतिः</u> [७, ६८]

असाक्षिके चिरकृते पृच्छेदुत्तरसाक्षिणः ।
[1]शपथान्वा प्रयुञ्जीयादुपधां वापि योजयेत् ॥

'उपधा' युक्तिः[2] ॥

<u>नारदः</u> [४, २३५-२३७]

[3]प्रमादाद्धनिनो यत्र न स्याल्लेख्यं न साक्षिणः ।
अर्थं वाऽपह्नुते वादी तत्रोक्तस्त्रिविधो विधिः ॥

[4]चोदना प्रतिकालं च युक्तिलेशस्तथैव च ।
तृतीयः शपथः प्रोक्तस्तैरेनं साधयेत्क्रमात् ॥

1. द, A. S. B. and S. B. (a)-उपधां for उपाधिं in उ. The reading of the *Vīramitrodaya*, (p. 223) is—

शपथैर्वाऽनुयुञ्जीथ उपधां वा प्रयोजयेत् ।

2. Omitted in उ. and given as 'उपधानं शुद्धिः' in A. S. B., ज, द, and S. B. (a). But, the correct version is given in *Vīramitrodaya*, (p. 224) which cites the *Kalpataru*—उपधा युक्तिरिति कल्पतरौ ।

3. प्रमादध्वनिनो यत्र तस्योल्लेख्यं-द.

4. तत्र चोदना साक्षिप्रयुक्ते प्रयोजने साक्षिणामृणिकस्य प्रतिकालं संस्मरणम् । युक्तिलेशः पूर्वदत्तस्य द्रव्यस्य पूर्वसंप्रतिपत्तिर्यस्य वा युक्त्युद्देशः, तृतीयः शपथः । दत्तमुद्रकृतनाशतण्डुलकोशादिकैरुपायैरेनमर्थापह्नविनं साधयेदिति (असहायः) ॥

अभीक्ष्णं चोद्यमानो यः प्रतिहन्यान्न तद्वचः ।
त्रिचतुःपञ्चकृत्वो वा परतोऽर्थं स दाप्यते ॥

'चोदना प्रतिकालम्' 'देवदत्त धनं देहि' इति प्रतिक्षणं प्रेरणा ।

कात्यायनः [१४४ ; ३३६]

श्राव्यमाणोऽर्थिना यत्र यो ह्यर्थो न विघातितः ।
दानकालेऽथवा तूष्णीं स्थितः सोऽर्थोऽ[1]नुमोदितः ॥

अर्थिनाभ्यर्थितो तत्र विघातं न प्रयोजयेत्[2] ।
त्रिचतुःपञ्चकृत्वो वा परतस्तदृणी वहेत्[3] ॥

[4]स्वामिना नृपतिर्विप्रं क्रमेणोक्तं प्रदापयेत् ।
ततोऽन्यं दापयेत्पूर्वं सकृदुक्तं विघातिनम् ॥

नारदः [४, २३८]

[5]चोदनाप्रतिघाते तु युक्तिलेशैस्तमन्वियात्[6] ।
देशकालार्थसम्बन्धपरिमाणक्रियादिभिः ॥

कात्यायनः [३३७-३३८]

दानं प्रज्ञापनाभेदः[7] संप्रलोभक्रिया च या ।
चिन्तापनयनं चैव हेतवो हि विभावकाः ॥

1. न for नु–द.

2. द, A. S. B. and S. B. (a) have विघानं तत्र योजयेत्; विघानं तत्र योजयेत्–ज.

3. 'तदृणी भवेत्' इति वीरमित्रोदयपाठः (पृ. २२४)

4. Not in Kane's edn.

5. अत्र चोदनाप्रतिघाते सामान्यवचनपृच्छाया असंप्रतिपत्तौ युक्तिलेशैस्तमन्वियात् । अथ कैस्तैः देशकालार्थसंबन्धपरिमाणक्रियाभिः यथाक्रमं स्वयं स्मृतैस्तस्य स्मारितैरिति असहायभाष्ये

6. स्तमन्वियात्–द.

7. द, ज, A. S. B. and S. B. (a)–प्रज्ञापनाभेदः.

एषामन्यतमो यत्र वादिना[1] भावितो भवेत् ।
मूलक्रिया तु तत्र [2]स्याद्भाविते वादिनिह्नवे ॥

'एषामन्यतम' इति । एषां हेतूनामन्यतमोऽपि चेत्प्रदर्शितः सिद्धैव तदा[3] मूलक्रिया ।

नारदः [४, १७२-१७५]

असाक्षिप्रत्ययास्त्वन्ये[4] षड्विवादाः प्रकीर्तिताः ।
लक्षणान्येव साक्षित्वे [5]येषामाहुर्मनीषिणः ॥

उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिश्च घातकः ।
केशाकेशिगृहीतश्च युगपत्पारदारिकः ॥

कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समीपगः ।
तथा कुठारहस्तश्च वनच्छेत्ता प्रकीर्तितः ॥

प्रत्यक्षचिह्नैर्विज्ञेयो दण्डपारुष्यकृन्नरः[6] ।
असाक्षिप्रत्यया ह्येते पारुष्ये तु परीक्षणम् ॥

'साक्षित्वे' साक्षिस्थाने ।

शङ्खलिखितौ

केशाकेशिग्रहणात्पारदारिकः । उल्काहस्तोऽग्निदः । शस्त्रपाणिर्घातकः ।

1. नो–द.

2. द, ज, A. S. B. and S. B. (a)–भावितेर्वापि निह्नवे ; वी. मि. २२५ confirms our reading.

3. तथा–द.

4. S. B. (a)–तुल्ये for त्वन्ये.

5. द, ज, A. S. B. and S. B. (a)–भाषामाहुः for येषामाहुः

6. ॰ष्यको नरः–द.

कोप्त्रहस्तश्चोरः । क्षेपेऽष्टशतं यथानुरूपं [1]वा । रुधिरस्रावे [2]प्रहारैश्चाभिव्यक्ते न साक्षिणः । [3]प्रत्यक्षलिङ्गाभिव्यक्ते चाष्टशतम् ॥

[4]इति भट्टश्रीलक्ष्मीधरविरचिते

कृत्यकल्पतरौ युक्तिः ॥



1. द omits 'वा'; 'यथास्वरूपं वा' इति व्य. चिन्तामणिः

2. 'प्रवाहे चाभिव्यक्ते'–व्य. चिन्तामणिः

3. लिङ्गिभिर्व्यक्तं वाष्टशतम्–द ; चिह्नाभिव्यक्ते–व्य. चि.

4. द, ज, A. S. B. and S. B. (a)–इति भट्टहृदयधरात्मजश्रीमल्लक्ष्मीधर-विरचिते कृत्यकल्पतरौ व्यवहारकाण्डे व्यवहारविचारविधिप्रकरणम् ।

# ३८

# अथ दिव्यानि

## (क) दिव्यभेदादिः

तत्र नारदः [४, २३९, २५२, २५३]

[1]युक्तिष्वप्यसमर्थासु शपथैरेनमर्दयेत् ।
[2]अर्थकालबलापेक्षमग्न्यम्बु[3]सुकृतादिभिः ॥

धटोऽग्निरुदकं चैव विषं कोशश्च पञ्चमः ।
उक्तान्येतानि दिव्यानि विशुद्ध्यर्थं महात्मभिः ॥

सन्दिग्धेऽर्थेऽभियुक्तानां परीक्षार्थं महात्मभिः[4] ।
प्रोक्तानि नारदेनेह सत्यानृतविशुद्धये ॥

'अर्दयेत्' पीडयेत् ।

शङ्खलिखितौ

असाक्षिप्रणिहिते पुरुषप्रत्ययः शासनं भेदनं ताडनम् । संन्यस्ते वा विवादे वा दैवं वा कोशविषभक्षणअग्निजलम् ॥

'असाक्षिप्रणिहिते' साक्षिभिरनिर्णीते[5] । 'पुरुषप्रत्ययः' पुरुषः प्रतीयते येन मिथ्याकारितया, पुरुषप्रत्ययः शासनादिः । 'भेदनं' प्रतोदादिः[6] । 'संन्यस्ते' लिखितादिप्रमाणरहिते । 'दैवं' दिव्यं धटादि[7] ।

1. ष्वथ समर्थासु–ह.
2. देशकाल–इति मु. नारदीये.
3. स्वकृता–ह.
4. स्मनाम्–ह.
5. A. S. B. ज, बि. and S. B. (a)–अनिर्णीते; अनन्विते–ङ.
6. 'भेदनम्' प्रक्षोभादिः–ङ. बि.
7. धर्मकोश, ४४४.

बृहस्पतिः [८, ३-४]

घटोऽग्निरुदकं चैव विषं कोशश्च पञ्चमम् ।
षष्ठं च तण्डुलाः प्रोक्तं[1] सप्तमं तप्तमाषकः ॥

अष्टमं फाल इत्युक्तं नवमं धर्मजं भवेत् ।
दिव्यान्येतानि धर्माणि[2] निर्दिष्टानि स्वयंभुवा ॥

तथा [८, ५-६]

अष्टमुद्देशतो वच्मि सन्दिग्धार्थविशुद्धये ।
देशकालार्थसंख्याभिः[3] प्रयुक्तान्यनुपूर्वशः ॥

अपराधानुपूर्वेण[4] साध्वसाधुविवक्षया ।
शास्त्रोदितेन विधिना प्रदातव्यानि नान्यथा ॥

अथ द्रव्यसंख्यादिना[5] दिव्यविशेषः—

तत्र [6]विष्णुः [९, १-३]

अथ शपथक्रिया[7] । राजद्रोहसाहसेषु यथाकमम् । निक्षेपस्तेयेष्वर्थप्रमाणात् ।

'शपथो' दिव्यम् ।

1. क्ता–द.
2. सर्वाणि–द.
3. संस्याभिः–द.
4. अपराधानुरूपेण–द.
5. संख्यादितो दिव्यविशेषः–द, ज, बि.
6. तत्र बृहस्पतिरिति उ. कोशे.
7. अथ समयक्रिया । राजद्रोहसाहसेषु यथाकामम् । निक्षेपस्तेयेष्वर्थप्रमाणम् ॥ इति, मु. विष्णौ ; अलौकिकं प्रमाणं समयः इति केशववैजयन्तौ ।

दैवी क्रियेत्यनुवृत्तौ बृहस्पतिः [८, ७]

ऋणादिकेषु कार्येषु विसंवादे परस्परम् ।
द्रव्यसंख्यान्विता देया पुरुषापेक्षया तथा ॥

कात्यायनः [४१६]

दत्तस्यापह्नवो यत्र प्रमाणं तत्र कल्पयेत् ।
स्तेयसाहसयोर्दिव्यं [1]स्वल्पेप्यर्थे प्रदापयेत् ॥

'प्रमाणम्' अपह्नुतद्रव्यानुसारेण दिव्यादिप्रमाणं दापयेत् ।

बृहस्पतिः [८, २७-३२]

संख्या रश्मिरजोमूला मनुना समुदाहृता ।
कार्षापणान्ता सा दिव्ये नियोज्या विनये तथा ॥

विषं सहस्रेऽपहृते[2] पादोने च हुताशनः ।
त्रिभागोने च सलिलमर्धे देयो धटस्तथा ॥

चतुःशतेऽभियोगे[3] तु दातव्यस्तप्तमाषकः ।
त्रिशते तण्डुला देयाः कोशश्चैव तदर्धके ॥

शते हृतेऽपह्नुते च दातव्यं धर्मशोधनम्[4] ।

1. A. S. B. and S. B. (a)–सत्यप्यर्थे; but, *Vīramitrodaya*, (p. 231) gives our reading ; समेप्यर्थे प्रदापयेत्–ज ; सत्येप्यर्थे प्रदापयेत्–द.

2. सहस्रापह्नुते च–द.

3. So, in *Mādhavīya* (p. 141) ; A. S. B. and S. B. (a)–शतनियोगे तु ; चतुश्शतनियोगे तु–ज, द, and अपरार्क ६९९.

4. A. S. B. ज, द, and S. B. (a) have धर्मशासनम् ; *Mādhavīya*, (p. 144) :—

शते हृते निवृत्ते वा दातव्यं धनशोधनम् ।

*Vīramitrodaya* reads धर्मशोधनं which is interpreted as 'धर्मजं दिव्येन शोधनं" (p. 230)

गोचोरस्य प्रदातव्यं सभ्यैः[1] फालं प्रयत्नतः ॥

[2]यथासंख्या निकृष्टानां मध्यानां द्विगुणा स्मृता ।
चतुर्गुणोत्तमानां च कल्पनीया प्रयत्नतः[3] ॥

'रश्मिरजोमूला'—

रश्मिमूलगते भानौ यत्सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते[4] ॥

इत्यादिका । 'विनयो' दण्डः । 'निकृष्टानां' जातिकर्मगुणैः । एवं मध्यमानामुत्तमानां च ।

याज्ञवल्क्यः [२, ०९]

[5]नासहस्राद्धरेत्फालं न विषं न तुलां तथा ।
नृपार्थेष्वभिशापे च वहेयुः शुचयस्तदा[6] ॥

[7]'नासहस्रात्' पणसहस्रादूर्ध्वं [8]चापह्नवे फालादिक्रियेत्यर्थः । 'नृपार्थेषु' नृपविषयेषु द्रोहादिषु । 'अभिशापे' पातकाभियोगे । 'शुचयः' स्नानादिना ।

विष्णुः [९, ४]

सर्वेष्वेवार्थजातेषु [9]मूल्यं कनकं प्रकल्पयेत् ।

1. A. S. B. ज, द, बि, and S. B. (a)-सभ्यैः; *Mādhavīya* शस्ये; मध्ये-उ. *Vīramitrodaya* (p. 230) सद्यः कालावलेहनम् ।

2. *Vīramitrodaya* (p. 230) and *Mādhavīya* (p. 144)-एषा संख्या

3. *Vīramitrodaya* (p. 230)-परीक्षकैः for प्रयत्नतः

4. मनु. ८, १३२-१३८.

5. न सहस्रात्-द.

6. स्तथा-द ; सदा इति मु. कोशे.

7. न सहस्रात्-द.

8. नैवापह्नवे-द.

9. मूल्ये स्वर्णं प्रक-द.

तथा [९, १०-१९]

[1]सुवर्णार्धोने कोशो दातव्यः शूद्रस्य। ततः परं यथार्हं घटाग्न्युदकविषाणामन्यतमम्। द्विगुणे[2]ऽर्थे यथाभिहिता समयक्रिया वैश्यस्य। त्रिगुणाथ[3] राजन्यस्य। कोशवर्जं चतुर्गुणार्थे[4] ब्राह्मणस्य। न ब्राह्मणस्य कोशं दद्यात्। अन्यत्रागामिकालसमयनिबन्धनक्रियातः। कोशस्थाने ब्राह्मणं सीरोद्धृतमहीकरमेव शापयेत्। प्राग्दृष्टदोषं स्वल्पेऽप्यर्थे दिव्यानामन्यतममेव कारयेत्। सत्सु विदितं सच्चारितं न महत्यर्थेऽपि॥

'सुवर्णार्धोने' परिकल्प्यमाने किञ्चिन्न्यूने, सुवर्णार्धमूल्ये। 'द्विगुणेऽर्थे' पूर्वार्थोक्तसुवर्णार्धरूपे[5] द्विगुणीभूते। एवं त्रिगुणादावपि[6]। 'यथाभिहितसमयक्रिया' कोशपानरूपा। [7]अन्यत्रागामीत्यादि। अस्माभिर्मिलित्वा एवं कर्तव्यमेवेति [8]समयकरणम्, तस्मादन्यत्र। 'सीरोद्धृत महीकरम्' हलोत्खातमृत्तिकाहस्तम्। [9]'दिव्यानाम्' घटादीनाम्। 'सत्सुविदितम्' शिष्टेषुप्रसिद्धम्। 'न महत्य[र्थे]ऽपि' घटादीनामन्यतमं कारयेदित्यर्थः॥

[10]कात्यायनः [४१७, प्रथमे]

सर्वद्रव्यप्रमाणं तु ज्ञात्वा हेम प्रकल्पयेत्।
हेमप्रमाणयुक्तं तु तदा दिव्यं प्रयोजयेत्॥

1. सुवर्णार्थे न कोशोदातव्यः-द.
2. णार्थविहिता समक्रिया वैश्यस्य-द, द्वि : णेऽर्थे यथाभिहिता-इति मुद्रितपाठः
3. त्रिगुणार्थे राजन्यस्य-द ; त्रिगुणे-इति मुद्रितपाठः.
4. गुणार्थे-उ.
5. रूपे-द. न्यूने-उ.
6. पंचत्रिगुणादावपि-द.
7. अन्नगामीत्यादि-द.
8. यत्समकरणं-द.
9. दिव्यानां घटादीनां-द.
10. Cited in *Vyavahāranirṇaya*, p. 201.

शते विषं तु पादोने हुतभुक् तत्र दृश्यते ।
आपस्त्रिभागहीने तु शतार्धे तु तुला स्मृता ॥

कोशपानं तदर्धे वा दशपञ्चकसप्तसु ।
तदर्धे तण्डुला ज्ञेया[1] तदर्धे तप्तमाषकः[2] ॥

'शते' सुवर्णस्येति शेषः ।

वृद्धः[3] । [कात्यायनः ४१८-४२०]

ज्ञात्वा संख्यां सुवर्णस्य शतनाशे विषं स्मृतम् ।
अशीतेस्तु विनाशे वै[4] दद्याच्चैव हुताशनम् ॥

षष्ट्या नाशे जलं ज्ञेयं[5] स्याच्चत्वारिंशता[6] घटः ।
त्रिंशद्दशविनाशे वा कोशपानं बृहस्पतिः[7] ॥

पञ्चार्धिकस्य वा नाशे तदर्धस्य च तण्डुलाः ।

'पञ्चार्धिकस्य' पञ्चार्धं सार्धद्वयम् ।

1. A. S. B. ज, and S. B. (a)–देया for ज्ञेया–a better reading.

2. The two verses beginning with 'शते विषं तु' and ending with 'तदर्धे तप्तमाषकः' are not found in Kane's edition.

3. These ślokas, assigned to *Vṛddha* in all our Mss., are attributed by the *Mādhavīya* (p. 114), *Vīramitrodaya* (p. 231), *Smṛticandrikā* p. 232, *Mitākṣarā* (II, 99) and Aparārka (p. 707) to Kātyāyana. *Sarsasvatīvilasa* attributs the verses to Vṛddhā Manu. (p. 174–8) ॥ वृद्धः ॥ ज्ञात्वा संख्यां–ज, बि.

4. विनाशे तु–द.

5. A. S. B–देयं for ज्ञेयं; Kane, 419.

6. तो–द.

7. A. S. B. and S. B. (a), like the text, attributes it to Bṛhaspati; *Sarasvatīvilāsa* (p. 174) attributes the verses to Vriddha Manu.

## (ख) अथ दिव्यकाल विशेषः

तत्र पितामहः[1]

[2]यो यस्य विहितः कालो विधिर्यस्य च यो यथा ।
तं प्रवक्ष्यामि तत्वेन वादिनश्च बलाबलम् ॥

चैत्रो मार्गशिरश्चैव वैशाखश्च तथैव च ।
एते साधारणा मासा दिव्यानामविरोधिनः ॥

धटः सर्वर्तुकः प्रोक्तो वाते वाति विवर्जयेत् ।
अग्नः शिशिरहेमन्तवर्षाश्चैव[3] प्रकीर्तिताः ॥

शरद्ग्रीष्मे तु सलिलं हेमन्ते शिशिरे विषम् ।

नारदः [४, २६०, २५४]

[4]विचार्य धर्मनिपुणै[5] धर्मशास्त्रविशारदैः ।
[6]धर्म्यं सर्वर्तुकं प्रोक्तं पण्डितै धंटधारणम्[7] ॥

[8]वर्षासु समये वह्निः हेमन्ते शिशिरे तथा ।
ग्रीष्मे सलिलमित्युक्तं [9]विषं काले तु शीतले ॥

1. cf. **स्मृतिचन्द्रिका**, p. 242 (ed. Mysore)

2. This verse is not found in **स्मृतिचन्द्रिका** but is cited in **बालम्भट्टीय** (२, ९७) पृ. ३४०

3. र्षासु च प्रकीर्तितः–द. 'वर्षाण्येवेति **कल्पतरुधृतो**ऽपपाठः' (**बालंभट्टी, ३४०**)

4. एतेषामग्न्यम्बुविषाणां दिव्यानां देशकालयात्रादीनां बहुविरोधान् **दृष्ट्वा सर्वधर्म**-विशारदैः पण्डितैरिदमेव सर्वकालाविरुद्धं धटधारणा दिव्यं दृष्टमिति—**असहायभाष्ये ॥**

5. धर्म निपुणैः–द.

6. 'इदम्' इति, मु. नार.

7. So in *Vīramitrodaya*, p. 239. But, A. S. B., **ज, द,** and S. B. (a)–धटधारिभिः

8. **वर्षासु** वह्निरित्युक्तः शिशिरे तु धटस्स्मृतः, इति मु. पाठः

9. **'विषं काले तु शीतले'** इत्यतः 'अव्यवस्थितमर्यादं' इत्यन्तः भागः भ्रष्टः बि. कोशे

न शीते तोयसिद्धिः[1] स्यान्नोष्णकालेऽग्निशोधनम् ।
न प्रावृषि विषं दद्यात्प्रवाते तु[2] [न?] तुलां नृपः ॥

पितामहः[3]

अव्यवस्थितमर्यादं विषं प्रावृषि जायते ।

(ग) अथ वर्णनियतो दिव्यविशेषः

तत्र नारदः [४, ३३४]

ब्राह्मणस्य घटो देयः क्षत्रियस्य हुताशनः ।
वैश्यस्य सलिलं देयं शूद्रस्य विषमेव तु ॥

साधारणः समस्तानां कोशः प्रोक्तो मनीषिभिः ।
विषवर्जं ब्राह्मणस्य सर्वेषां वा तुला स्मृता ॥

कात्यायनः [४२२]

[4]राजन्येऽग्निर्घटं विप्रे वैश्ये तोयं नियोजयेत् ।
सर्वेषु सर्वदिव्यं वा विषं वर्ज्यं[5] द्विजोत्तमे ॥

याज्ञवल्क्यः [२, ९८]

तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम् ।
अग्निर्जलं वा शूद्रस्य यवाः[6] सप्त विषस्य वा[7] ॥

1. शुद्धिस्स्यात्-द.
2. न for तु द, स्मृतिचन्द्रिका च
3. बालंभट्टी-(२, ९७)
4. राजन्यमिघटं-द.
5. वर्जं-द.

6. A. S. B. द, ज, and S. B. (a) have 'यवाः' for 'जनाः' in others So also *Mitākṣarā* (II, 98), Viśvarūpa (II 103), and *Vīramitrodaya*. 'विषस्य यवा उक्तपरिमाणाः' इति मिताक्षरायाम् ।

7. स्त्र्यादिग्रहणं क्षत्रियाद्यर्थम् । अग्निर्जलं वाऽशूद्रस्येति । अशूद्रस्याग्निर्जलं वा स्यात् । व्यवस्थितविकल्पश्चायम् । क्षत्रियस्याग्निः, वैश्यस्य च जलं, शूद्रस्य तु यवाः सप्त विषस्य वा जलं अग्निर्वेत्यर्थः । यद्वा अग्निर्जलं वाशूद्रस्य क्षत्रियादिजातस्येत्यर्थः । ततश्च क्षत्रियादीनामग्न्यादिष्विच्छाविकल्पः—(विश्वरूपः)

कात्यायनः [४२३]

गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान् ।
प्रेष्यान्वार्धुषिकांश्चैव ग्राहयेच्छूद्रवद्द्विजान् ॥

कालिकापुराणे

वैश्यस्य च जलं देयं विषं शूद्रस्य दापयेत् ।
वर्णान्तस्य [1]सदा देयं माषकं तप्तहेमजम् ॥

[2]'वर्णान्तस्य' अत्यन्तस्य ।

नारदः [४, २५५, ३१३, ३१४, ३१५]

*क्लीबातुरान् सत्वहीनान्[3] पतितांश्चार्दितान्नरान् ।
बालवृद्धातुरान् [4]स्त्रींश्च परीक्षेत धटे सदा ॥

नार्तानां तोयशुद्धिः स्यान्न विषं पित्तरोगिणाम् ।
श्वित्र्यन्धकुनखीनां[5] च नाग्निकर्म विधीयते ॥

एतेषां [स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणां] शोधनार्थं तुलैवेति नियम्यते । अग्निः पालसप्तमाषश्च क्षत्रियस्य । जलमेव वैश्यस्य । वाशब्दोऽवधारणे । विषस्य यवा उक्तपरिमाणाः । सप्तैव शूद्रस्य शोधनार्थं भवन्ति । ब्राह्मणस्य तुलाभिधानात्, शूद्रस्य यवा सप्त विषस्य वेति विषविधानात्, अग्निर्जलं वा इति क्षत्रियवैश्यविषयमुक्तम् ॥ इति मिताक्षरा

1. द, S. B. (a)-वर्णान्तस्य for वर्मान्तस्य in the other manuscripts, except ज, which gives the reading वर्गान्तस्य

2. वर्गान्तस्य प्रत्यक्षस्य–ज ; वर्णान्तस्य–द.

* Missing in Jolly's ed.

3. सत्यहीनान् यतींश्चैवोज्झितान्तरान्–द.

4. स्त्रींश्च परीक्षेद्घटे सदा–द. बालवृद्धातुरादींश्च इति

5. नखादीनां नाग्निकर्म–द, बि.

[1]न मज्जनीयं स्त्रीबालं धर्मशास्त्रविचक्षणैः ।
रोगिणो ये च वृद्धाः स्युः पुमांसो ये च दुर्बलाः ॥

[2]निरुत्साहान्व्याधिक्लिष्टानार्तान्[3] तोये निमज्जयेत् ।
सद्यो म्रियन्ते मज्जन्तः स्वल्पप्राणा हि ते स्मृताः ॥

[4]साहसेऽप्यागतानेतान्नैव तोये निमज्जयेत् ।
न चापि हार[साध?] येदग्निं न विषेण विशोधयेत् ॥

कात्यायनः [४२४]

न लोहशिल्पिनामग्निं सलिलं नाम्बुसेविनाम् ।
मन्त्रयोगविदां चैव विषं दद्यात्तु न क्वचित् ॥

*दिव्यं तु वर्जयेत्सम्यगातानां[5] तु गदैर्नृणाम् ।
तण्डुलैर्न नियुञ्जीत व्रतिनां मुखरोगिणाम् ॥

विष्णुः [९, २५-३२]

न कुष्ठ्यसमर्थलोहकाराणामग्निर्देयः । शरद्ग्रीष्मयोश्च । न कुष्ठिपैत्तिक-ब्राह्मणानां विषं देयम् । प्रावृषि च । [6]न श्लेष्मव्याध्यर्दितानां भीरूणां

1. न मज्जनीयौ स्त्रीबालौ--द.
2. A. S. B. and S. B. (a)--निर्मोहात्याधिकृशानार्तान्स्तोये निमज्जयेत् ।
3. कृशानार्तान्--द.
4. *Mādhavīya* (p. 118)—

सहसाभ्यागतान्नेतान्नैव तोये निमज्जयेत् ।

and *Vīramitrodaya* (p. 118)--

निरुत्साहान् व्याधिक्लिष्टान्नार्तान् तोये निमज्जयेत् ।

साहसेनागतानिति मु. नारदीये ।

* This half verse is not found in Kane's collection.

5. A. S. B., द, ज, and S. B. (a)-प्रगदैर्नृणां
6. A. S. B., ज, द, and S. B. (a)-न श्लेष्मिणाम्

श्वासकासिनामम्बुजीविनां[1] चोदकम् । [2]हेमन्तशिशिरयोश्च । न नास्तिकेभ्यः[3] कोशो देयः, [4]देशे व्याधिमरणकोपसृष्टे च ॥

नारदः [४, ३३२]

महापराधे[5] निर्धर्मे[6] कृतघ्ने क्लीबकुत्सिते ।
नास्तिके दृष्टदोषे च कोशदानं विवर्जयेत् ॥

पितामहः

मद्यपस्त्रीव्यसनिनां कितवानां तथैव च ।
कोशः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः ॥

कात्यायनः [४३६]

[7]कालदेशविरोधे तु यथायुक्तं प्रकल्पयेत्[8] ।
अन्येन हारयेद्दिव्यं विधिरेष विपर्यये[9] ॥

नारदः [४, २५६]

सव्रतानां भृशार्तानां[10] व्याधितानां तपस्विनाम् ।
स्त्रीणां न तु भवेद्दिव्यं यदि धर्मस्त्व[11]वेक्ष्यते[12] ॥

1. जीविनामुदकम्–ज, द, वि.
2. *Ibid*, हिमशिशिरयोश्च ।
3. *Ibid*, नास्तिकाय.
4. *Ibid*, दृष्टदोषव्याधितमरणोद्युक्तस्य for the text.
5. 'महापराधो महापातकः इति असहायः
6. *Ibid*, निर्देशे
7. A. S. B., ज, द, वि, and S. B (a)–कालदिव्यविरोधे तु
8. *Ibid*, विशोधयेत् for प्रकल्पयेत्
9. *Ibid*, प्रकीर्तितः for विपर्यये
10. *Ibid*, कृशार्तानां, ४, २५६., ज, द, वि.
11. अवेक्षते–ज, द.
12. यद्यपि दिव्यशब्देन सर्वदिव्यमुच्यते तथाप्यनन्तरोक्तविधिप्रतिषेध इति । सव्रता दीक्षितास्तेषामग्निदिव्यमेव निषिद्धम्—(असहायभाष्य)

कात्यायनः [४२७-४३०]

मातापितृद्विजगुरुबालस्त्रीराजघातिनाम् ।
महापातकयुक्तानां नास्तिकानां विशेषतः ॥

लिङ्गिनां प्रसन्नानां[1] तु मन्त्रयोगक्रियाविदाम् ।
वर्णसङ्करजातानां पापाभ्यासप्रवर्तिनाम् ॥

एतेष्वेवाभियोगेषु [2]निन्दितेष्वेव यत्नतः ।
दिव्यं प्रकल्पयेन्नैव [3]राजा धर्मपरायणः ॥

एतैरेव नियुक्तानां साधूनां दिव्यमर्हति ।
न सन्ति[4] साधवो यत्र तत्र शोध्याः स्वकैर्नरैः ॥

तथा [४३१-४३२]

महापातकयुक्तेषु नास्तिकेषु विशेषतः ।
न देयं तेषु दिव्यं तु पापाभ्यासरतेषु च[5] ॥

एषु वादेषु[6] दिव्यानि प्रतिषिद्धानि यत्नतः ।
[7]कारयेत्सज्जनैस्तानि नाभिशस्तं त्यजेन्मनुः[8] ॥

1. A. S. B., ज, द, and S. B. (a)–प्रमदानां तु

2. निन्द्येष्वेवं प्रयत्नतः–द, बि.

3. राजधर्मपरायणः–द, बि.

4. A. S. B., ज, द, बि, and S. B. (a)–नेच्छन्ति for न सन्ति

5. A. S. B., ज, द, बि, and S. B. (a)–पापाभ्यासरते भृगुः ॥ **अपरार्क,** p. 696 as in the text.

6. A. S. B. and S. B. (a)–पापेषु for वादेषु; येषु पापेषु–ज. द. **बि.**

7. *Ibid.*, तारयेत् सज्जनैस्तानि नाभिशस्तं त्यजेन्नरः ।; तारयेत् सज्जनैस्तानि अभिशस्तं त्यजेन्नरः–ज. द. बि.

8. Aparārka, (p. 696) as in the text.

## (घ) अथावष्टम्भवादः

तत्र पितामहः[1]

अवष्टम्भाभियुक्तानां घटादीनि विनिर्दिशेत्[2]
तण्डुलाश्चैव कोशश्च शङ्कास्वेतौ नियोजयेत्[3] ॥

'अवष्टम्भो' निश्चयः ।

तथा

चौर्यशङ्काभियुक्तानां तप्तमाषो विधीयते ।

कात्यायनः [४१५]

शङ्का विश्वाससंधाने विभागे रिक्थिनां सदा ।
क्रियासमूहकर्तृत्वे कोशमेव प्रदापयेत् ॥

पितामहः[4]

विस्रम्भे सर्वशङ्कासु सन्धिकार्ये तथैव च ।
एषु कोशः प्रदातव्यो नित्यं चित्तविशुद्धये ॥

याज्ञवल्क्यः [२, ९५]

तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये ।
[5]महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि[6] ॥

'शीर्षकम्' शिरः । तच्च दिव्यग्राहिणो [7]जये स्वयं दण्डाङ्गीकारः ॥

1. व्यवहारनिर्णय, १४३.

2. घटादीनि तु दापयेत्–द ; व्य. नि. १४३ confirms the reading of the text.

3. तण्डुलांश्चैव कोशश्च कार्ये तौ विनियोजयेत्–द.

4. स्मृतिचन्द्रिका, p. 226 ; प्रजापतिवचनमिति व्यवहारनिर्णयः (पृ. १७७)

5. महाभियोगे महापातकाद्यभियोगे–(विश्वरूपः)

6. ज and A. S. B (a)-श्रीर्षकंस्त्वभियोक्तरि ; शीर्षकस्त्वभियोक्तरि–द, बि.

7. जयं–द.

पितामहः

[1]शिरःस्थायिविहीनानि दिव्यानि परिवर्जयेत् ।
चत्वारि तु घटादीनि कोशस्त्वेवाशिराः स्मृतः[2] ॥

अभियोक्ता [3]शिरःस्थायी दिव्येषु परिकल्पयेत् ।
अभियुक्ताय दातव्यं दिव्यं [4]स्मृतिनिदर्शनात् ॥

याज्ञवल्क्यः [२, ९६]

[5]रुच्या वान्यतरः कुर्यादितरो [6]वर्तयेच्छिरः ।
विनापि शीर्षकात्कुर्यान्नृपद्रोहे च[7] पातके ॥

कालिकापुराणे

परदाराभिशापे च चौर्येऽगम्यागमेषु च ।
महापातकशस्तेषु[8] स्याद्दिव्यं नृपसाहसे ॥

विप्रतिपत्तौ [9]विवादे चावर्णस्थापने कृते ।
[10]तत्रैतद्दापयेद्दिव्यं शिरःपूर्वं महीपतिः ॥

1. *Mādhavīya* (p. 114) gives this śloka thus:

शिरस्थोऽपि विहीनानि दिव्यादीनि विवर्द्धयेत् ।
घटादीनि विषान्तानि कोश एको शिरःस्थितः ॥

2. A. S. B. and S. B. (a)-कोशग्न्यस्थं शिरांसि च; कोषाग्न्यम्बुशिरांसि च-ज, द.
3. *Vīramitrodaya*. (p. 228) शिरःस्थाने
4. श्रुतिदर्शनात्-वी. मि., पृ. २२८.
5. A. S. B., द, ज and S. B. (a)-तुला for रुच्या
6. *Ibid.*, वर्जयेत् for वर्तयेत्
7. हेऽथ-द, वि.
8. शस्तेषु-द; शस्त्रेषु-उ; शस्ते च-वी. मि., २२९
9. विवादेऽवर्णस्य-वि.
10. तत्रैव दापयेद्दिव्यं द; वी मि., २२९.

परदाराभिमर्शे च बहवो यत्र वादिनः ।
शिरोहीनं भवेद्दिव्यमात्मनः शुद्धिकारणात् ॥

'विप्रतिपत्तौ' परदाराभिशापादिविषयायाम् । 'विवादे' ऋणादानादिविषये । ['अवर्णो' अपवादः ।] 'परदाराभिमर्शे चे'ति चौर्यादीनामप्युपलक्षणम् ।[1]

विष्णुः [९, २२]

राजद्रोहे साहसेषु विना[2] शीर्षप्रवर्तनात् ।

इति ॥

पितामहः[3]

राजभिः शङ्कितानां च निर्दिष्टानां च दस्युभिः ।
आत्मशुद्धिपराणां[4] च दिव्यं देयं शिरो विना ॥

नारदः [४, २७०]

अशिरांसि च दिव्यानि राजकृत्येषु दापयेत् ।
अभियोक्ताभियुक्तानामन्येषां च यथाक्रमम् ॥

(ङ) अथ देशकालः

कात्यायनः [४३४-४३५]

इन्द्रस्थानेऽभिशस्तानां महापातकिनां नृणाम् ।
नृपद्रोहप्रवृत्तानां राजद्वारेषु योजयेत् ॥

1. Omitted in Udaipur Ms. but supplied by A. S. B., ज and S. B. (a). The comment is reproduced in *Vīramitrodaya*, p. 229, without acknowledgment–ज.

2. विनापि शीर्षवर्तनात् इति वि., मु. पाठश्च.

3. मिताक्षरा (२, ९६)

4. वृद्धि for शुद्धि–The śloka is attributed to Kātyāyana by *Vīramitrodaya*, (p. 229).

प्रातिलोम्यप्रसूतानां दिव्यं देयं चतुष्पथे ।
अतोऽन्येषु[1] [तु] कार्येषु सभामध्ये विदुर्बुधाः[2] ॥

'इन्द्रस्थानम्' इन्द्रध्वजपूजास्थानम् ।

बृहस्पतिकात्यायनौ [बृ, ८, १५-१६; का, ४३९-४४०]

यथोक्तविधिना देयं दिव्यं दिव्यविशारदैः ।
[3]अयथोक्तप्रदत्तं च [4]न शक्यं साध्यसाधने ॥

अदेशकालदत्तानि बहिर्वादिकृतानि च ।
व्यभिचारं सदाऽर्थेषु[5] कुर्वन्तीह न संशयः ॥

'बहिर्वादिनं' वादिनमभियोक्तारं विना ॥

## (च) अथ दिव्यविधिः

बृहस्पतिः [८, १४]

स्नेहात्क्रोधाल्लोभतो वा भेदमायान्ति साक्षिणः ।
विधिदत्तस्य दिव्यस्य न भेदो जायते क्वचित् ॥

पितामहः

प्रत्यक्षं दापयेद्दिव्यं राजा [6]वाधिकृतोऽपि वा ।
ब्राह्मणानां श्रुतवतां प्रकृतीनां तथैव च ॥

1. षु तु–द.
2. 'अतोऽन्येषु सभामध्ये दिव्यं देयं विदुर्बुधाः' इति वीरमित्रोदयः, २४१.
3. अयथोक्तं प्रदत्तं च न दत्तं साध्यसाधने–ज ; न सत्यं साध्यसाधने–बि.
4. A. S. B., द and S. B. (a)–न दत्तं for न शक्यं
5. A. S. B., ज, द and S. B. (a)–सदा ह्येवं for सदाऽर्थेषु
6. स्मृतिचन्द्रिका, २४४–'अधिकृतः' प्राड्विवाकः ।

विष्णु[याज्ञवल्क्यौ][1]

सचैलं स्नातमाहूय सूर्योदय उपोषितम् ।
कारयेत्सर्वदिव्यानि नृपब्राह्मणसन्निधौ ॥

[2]नारदः [४, २६८]

अहोरात्रोषिते स्नाते आर्द्रवाससि मानवे ।
पूर्वाह्णे सर्वदिव्यानां प्रदानमनुकीर्तितम् ॥

[2]पितामहः

त्रिरात्रोपोषितायैव[3] एकरात्रोषिताय वा ।
नित्यं दिव्यानि देयानि शुचये चार्द्रवाससे ॥

[4]दिव्येषु सर्वकार्याणि प्राड्विवाकः समाचरेत् ।
अध्वरेषु यथाऽध्वर्युः सोपवासो नृपाज्ञया ॥

कात्यायनः [४३८]

साधयेत्तत्पुनः साध्यं व्याघाते साधनस्य हि ।
दत्तान्यपि यथोक्तानि राजा दिव्यानि वर्जयेत् ॥

[5]मूर्खैर्लुब्धैश्च दुष्टैश्च पुनर्देयनि तानि वै ।

'दत्तानी'त्यस्य 'मूर्खै'रित्यादिनान्वयः । 'वर्जयेत्' न प्रमाणीकुर्यात् ।

---

1. विष्णु, ९, ३३ ; याज्ञ. २, ९७. The manuscripts wrongly substitute कात्यायन for याज्ञवल्क्य.

2. मिताक्षरा, [२, ९७]

3. 'ताय स्यु' इति मिताक्षरापाठः ; 'अहोषिताय विधिवदेकरात्रोषिताय वा' इति व्यवहारनिर्णयः (१४४).

4. मिताक्षरा [२, ९७]

5. A. S. B., ज, द and S. B. (a)—

मूर्खैर्लुब्धैर्न देयानि अविनीतैस्तथैव च ।

# अथ धटविधिः

तत्र विष्णुः [१०, १-३]

अथ धटः । चतुर्हस्तोच्छ्रितो द्विहस्तायतः । तत्र च सारवृक्षोद्भवा पञ्च-हस्तायता उभयतः शिक्यया तुला ।

पितामहः

[1]चतुर्हस्ता तुला कार्या पादौ कार्यौ तथाविधौ ।
अन्तरं तु तयोर्हस्तौ भवेदध्यर्धमेव वा ॥

[2]छित्वा तु यज्ञियं वृक्षं [3]यूपवन्मन्त्रपूर्वकम् ।
प्रणम्य लोकपालेभ्यस्तुला कार्या मनीषिभिः ॥

नारदः [४, २६४-२६५, २६३, २६१]

खादिरीं कारयेत्तत्र निर्व्रणां शुष्कवर्जिताम्[4] ।
शांशपीं तदभावे तु सालां वा कोटरैर्विना ॥

अर्जुनस्तिलकोऽशोकास्तिमिशो रक्तचन्दनम्[5] ।
एवंविधानि काष्ठानि[6] धटार्थे परिकल्पयेत् ॥

1. A. S. B., ज, द and S. B. (a)–द्विहस्ता च तथाविधा; *Mādhavīya*, (p. 126) gives the reading of this text.

2. Ascribed to प्रजापति by व्यवहारनिर्णय, १४८.

3. हेतुवत्–उ.

4. A. S. B. ज, द and S. B. (a)–शोकवर्जिताम्. *Vīramitrodaya*, (p. 246) gives the better reading, शुष्कवर्जिताम्, which असहाय explains as शुष्ककोटरवर्जितानि

5. अञ्जनं तिन्दुकं सारं तिमिशं रक्तचन्दनम्–द; अञ्जनं तिन्दुकीसारं तिमिशो रक्तचन्दनम्–वि.

6. वृक्षाणि–द.

ऋज्वी घटतुला कार्या खादिरी तैन्दुकी तथा ।
चतुरस्रा त्रिभिः स्थानैर्घटः[1] कर्कटकादिभिः ॥

हस्तद्वयं निखेयं तु प्रोक्तं मुण्डकयोस्तयोः[2] ।
[3]षड्हस्तं तु तयोः प्रोक्तं प्रमाणं परिमाणतः[4] ॥

[5]<u>पितामहः</u>

तोरणे तु तथा कार्ये पार्श्वयोरुभयोरपि ।
[6]घटादुच्चतरे स्यातां नित्यं दशभिरङ्गुलैः ॥

अवलम्बौ च कर्तव्यौ तोरणाभ्यामधोमुखौ ।
मृण्मयौ सूत्रसंबद्धौ घटमस्तकचुम्बकौ ॥

प्राङ्मुखो निश्चलः कार्यः शुचौ देशे घटः सदा ।
इन्द्रस्थाने सभायां वा राजद्वारे चतुष्पथे ॥

<u>नारदः</u> [४, २६५-२६७]

सभा-राजकुलद्वार[7]-सुरायतनचत्वरे[8] ।
निखेयो निश्चलः कार्यो गन्धमाल्यानुलेपनैः ॥

1, A. S. B., ज, द and S. B. (a)–बद्धः for घटः

2. *Ibid.*, द्वयोः for तयोः

3. घटहस्तं–उ. वि.

4. *Mādhavīya*, (p. 126) and *Vīramitrodaya*, (p. 247) ascribe this śloka to व्यास The latter refers to it as माधवीये पाठः

5. 'पितामहः' इति नास्ति जम्मुकोशे ; स्मृतिचन्द्रिका, (p 248)

6. घटादुच्यते स्यातां–द, वि.

7. द्वारि–द.

8. एते प्रदेशा धर्मदेवतावतारयोग्या भवन्तीति–अ. भा. (p. 115 अयं च यदा प्रथमं) निखेयः तदा अतिशोभनदिनलग्नकृताग्निकार्यद्विजवेदमङ्गलनिर्घोषशब्देन दध्यक्षतहविर्गन्धधूपाक्षतपावनैश्चेति–असहायः ॥

दध्यक्षतहविर्गन्धैः[1] कृताध्ययनमङ्गलः ।
धर्मरक्षार्थमाहूतैर्लोकपालैरधिष्ठितः ॥

<u>पितामहः</u>

[2]तत्रैव लोकपालांश्च सर्वदिक्षु निवेशयेत् ।
त्रिसन्ध्यं पूजयेन्नित्यं धूपमाल्यानुलेपनैः ॥

लोकपालास्तथादित्या रुद्राश्च वसवस्तथा ।
पूजाप्रभावयुक्ताश्च सान्निध्यं कल्पयन्ति ते ॥

विशालामुच्छ्रितां शुद्धां धटशालां तु कारयेत् ।
यत्रस्था नोपहन्येत श्वभिश्चाण्डालवायसैः ॥

[3]कवाटबीजसंयुक्तां परिचारकरक्षिताम् ।
पानीयाग्निसमायुक्तामशून्यां कारयेन्नृपः ॥

[4]धटं तु कारयेन्नित्यं पताकाध्वजशोभितम् ।
[5]वादित्रतूर्यघोषैश्च धूपमाल्यानुलेपनैः ॥

<u>नारदः</u> [४, २७१-२७२]

[6]शिक्यद्वयं समासाद्य[7] धटकर्कटयोर्दृढम् ।
एकत्र शिक्ये पुरुषमन्यत्र तुलयेच्छिलाम् ॥

1. A. S. B. and S. B. (a)-दुग्धैः कृतायतनमङ्गलः ; गन्धैः कृत्वाऽयतन-मङ्गलः-ज.

2. स्मृतिचन्द्रिका, (p. 248, first śloka only ; अपरार्क, ७०२, all.

3. कपाट-बि ; कवाट-उ, अपरार्कः

4. घटं प्रकारयेन्नित्यं-द.

5. वादित्रतूर्यनिर्घोषैः-बि.

6. अत्रानेन श्लोकचतुष्टयेन प्रथमं पुरुषपाषाणपिटिकयोस्तोलनसमानधारणाधारणार्थं विधिर्दृष्टः । ... -अ. भा. (p. 116)

7. समासज्य-बि.

धारयेदुत्तरे पार्श्वे पुरुषं दक्षिणे शिलाम् ।
[1]पिटिकां पूरयेत्तस्मिन्निष्टकायां सुलोष्टकैः[2] ॥

विष्णुः [१०, ५]

तत्रैकस्मिन् शिक्ये पूरुषमारोपयेत् द्वितीये प्रतिमानं शिलादि ।

[3]पितामहः

शिक्यद्वयं समासज्य पार्श्वयोरुभयोरपि ।
प्रागग्रान् कारये[4]द्दर्भास्तत्र विप्रः समाहितः ॥
[5]एकस्मिन् तोलयेन्मर्त्यमन्यस्मिन् मृत्तिकां शुभाम् ।
[6]इष्टकाभस्मपाषाणकपालास्थिविवर्जिताम् ॥
परीक्षका नियोक्तव्याः तुलामानविशारदाः ।
वणिजो हेमकाराश्च कांस्यकारास्तथैव च ॥

[7]तथा

कार्यः परीक्षकैर्नित्यमवलम्बसमो धटः ।
उदकं च प्रदातव्यं धटस्योपरि पण्डितैः ॥

1. पट्टिका–द, बि॰ च

2. तु लोष्टकैः–द. 'इष्टकालोष्टपांसुभिः' इति मु. ना.

3. **मिताक्षरा**, २, १०२; अपरार्क, २, १०२ (व्यासवचनमिति); **स्मृतिचन्द्रिका**, 253–254.

4. '॰द्दर्भान् शिक्ययोरुभयोरपि' इति स्मृ. च., **मिताक्षरा** पाठः; 'कारयेदग्रान् शिक्ययोरुभयोरपि' इति **अपरार्कः** पठति.

5. 'पश्चिमे तोलयेत्कर्तॄनन्यस्मिन्' इति ते.

6. **स्मृ. च. कल्पतरुवत्**; 'पिटिकां कारयेत्तस्मिन्निष्टकायां शसलोष्टकैः' **इति अपरार्कः**; 'पिटकं पूरयेत्तस्मिन्निष्टकाग्रावपांसुभिः' इति **मिताक्षरा** ('पिटकं' वंशभाण्डविशेषः.)

7. द, omits 'तथा', which is justified by **अपरार्क** (p. 702) and the *Mitākṣarā's* continuing the two verses without interruption; **स्मृ. चं.**, (p.255.)

[1]यस्मिन्न प्लवते तोयं स विज्ञेयः समो घटः ।

**नारदः** [४, २७३; २७५]

प्रथमारोपणे ग्राह्यं प्रमाणं निपुणैः सह ।
[2]तुलाशिलाभ्यां तुल्यं च तोरणं न्यस्तलक्षणम् ॥

तुलयित्वा नरं पूर्वं चिह्नं कृत्वा घटस्य तु ।
कक्षास्थाने यदा तुल्यमवतार्य ततो घटात्[3] ॥

**याज्ञवल्क्यः** [२, १००-१०२]

[4]तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः[5] ।
प्रतिमानसमीभूतो रेखां कृत्वाऽवतारितः[6] ॥

त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता ।
तत्सत्यं वद कल्याणि संशयान्मां विमोचय ॥

यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय ।
शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ॥

1. यत्र न प्लवते तोयं–द.

2. 'तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः'–ज, द; 'तुलाशिरोभ्यां तुल्यं तु तोरणं-न्यस्तलक्षणम्' इति स्मृ. च., p. 255 ; तुलाशिरोभ्यामुद्भ्रान्तं विचलं व्यस्तलक्षणम्' इति अपरार्के' (p. 704)

3. एवमनेन प्रयत्नेन नरं प्रथमं तुलायां पिटिकया समं समानतुलितमुपलक्षयेत् । यदा कक्षास्थाने सलिलप्रक्षेपसमत्वं प्रसिद्धं भवति तदा घटात् पुरुषमवतार्य (असहायः)

4. वक्ष्यमाणं कर्म कुर्यादिति शेषः । अभियुक्तो व्यवहारेऽभिशस्तः । स तुलामारूढः प्रतिमानसमत्वेन तुलाधारणविद्वद्भिर्यदा लक्षितः तदास्यास्मिन् प्रदेशे इदमङ्गमित्येवं चिह्नार्थं लेखाः कृत्वावतारणीयः । तुलाधारणविद्वांसः स्वर्णकारादयः । प्रतिमानम् अपरभागस्थित शिक्यस्थं पांसुलोष्ठपूर्णं पिटकम्–(विश्वरूपः ॥)

5. स्तुलाधृतः–बि.

6. धारिताः–द, बि.

[1]'रेखां कृत्वा' येन सन्निवेशेन प्रतीयमानसमीकरणदशायां यत्र पादौ स्थितौ शिक्यरज्जवश्च[2] तत्र पाण्डुलेख्येनाङ्कयित्वा ।

पितामहः

तुलयित्वा [3] नरं पूर्वं तस्मात्तमवतार्य च[4] ।
प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत्[5] ॥

[6]एह्येहि भगवन् धर्म दिव्यमेतत्समाविश ।
सहितो लोकपालैस्त्वं वस्वादित्यमरुद्गणैः ॥

[7]तस्यार्थमभियुक्तस्य लेखयित्वा तु पत्रकम्[8] ।
मन्त्रेणानेन सहितं कुर्यात्तस्य शिरोगतम् ॥

आदित्यचन्द्रावनिलानलौऽच[9]
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्मश्च जानाति नरस्य वृत्तम् ॥

इमं मन्त्रविधिं[10] कृत्स्नं सर्वदिव्येषु कारयेत् ।
आवाहनं च देवानामथैवं परिकीर्तयेत्[11] ॥

1. रेखां कृत्वा येन सन्निवेशेन प्रतिमानसमीकरणदशायां शिक्यतलेऽवस्थितस्तस्मिन् पाण्डुलेखेनाङ्कयित्वा अवतारितस्तुलां अभिमन्त्रयेत प्रार्थयेतानेन मन्त्रेण' (मिताक्षरा)

2. रक्षकश्च–द.

3. 'तोलयित्वा' इति स्मृतिचन्द्रिका, (p. 255)

4. तस्मात्तमवधार्य च–बि. 'अवतारयेत्' इति सरस्वतीविलासे (p. 186)

5. कमतो वदेत्–द.

6. पश्येह भगवन्धर्म–द; अपरार्कः, ७०२, as above.

7. तस्यार्थः मतियुक्तस्य–त्रि.

8. 'पत्रके' इति अपरार्कः

9. लोऽनलश्च–द; तथैव अपरार्कः

10. मन्त्रविधिं–द; धर्मविधिं–अपरार्कः

11. 'अथैनं परिकल्पयेत्' (अपरार्कः)

घट त्वं ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम् ।
धकाराद्धर्ममूर्तिस्त्वं टकारात्कुटिलं[1] नरम् ॥
[2]धृतो धारयसे तस्माद्धटस्तेनाभिधीयसे[3] ।

विष्णुः [१०, ७-११]

घटं च समयेन गृह्णीयात् । तुलाधारं च ।

धर्मपर्यायवचनैर्धट इत्यभिधीयसे ।
त्वमेव घट जानीषे [4]न विदुर्यानि मानवाः[5] ॥
व्यवहाराभिशस्तोयं मानुषस्तोल्यते त्वयि[6] ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥
[7]ब्रह्मघ्नां ये स्मृता लोका ये लोकाः कूटसाक्षिणाम् ।
तुलाधारस्य[8] ते लोकास्तुलां धारयतो मृषा ॥
[समयेन च गृह्णीयात् नियमेन च योजयेत् ।
उपोषितं तथा स्नातं मृण्मयं प्रथमं तुलाम् ॥
संतोल्य कारयेदेवमवतार्यानुमन्त्रयेत् ।

'समयेन गृह्णीयात्' नियमेन योजयेत् ।]

'त्वमेव घट जानीष' इत्यादिना 'ब्रह्मघ्नां ये स्मृता लोका' इत्यादिना च तुलां धारयन् जपेदित्यर्थः ।

1. कुटिलो नृणाम्–बि, अपरार्के च.
2. धृतो धारयसे यस्माद्ध–द, बि; 'धटो धारयसे' (अपरार्कः)
3. न विधीयते–द.
4. न च जानन्ति मानवाः–द.
5. 'देवताः–(अपरार्क)
6. त्वया–द.
7. ब्रह्मघ्ना ये स्मृता लोके ये लोका येलोकाः कूटसाक्षिणः–ज, अपरार्कश्च
8. धरस्य–ज, द.

कालिकापुराणे

उपोषितं तथा स्नातं मृण्मयं प्रथमं तुलाम् ।
संतोल्य कारयेद्देवमवतार्याभिमन्त्रयेत् ॥

त्वं तुले सत्यधामासि पूर्वं देवेन निर्मिता ।
तत्सत्यं वद कल्याणि [1]मोचयैनं महापदः ॥

[2]यद्ययं पापकृन्मातस्ततश्चामुमधो नय ।
शुद्धश्चेद्गमयोर्ध्वं च[3] तुलामित्यभिमन्त्रयेत्[4] ॥

नारदः [४, २७६-२७८, २८१, २७९]

समयैः परिगृह्याथ पुनरारोपयेन्नरम् ।
[5]निर्वाते वृष्टिरहिते शिरस्यारोप्य पत्रकम् ॥

तस्मिन्नेव कृते कक्ष्ये कक्षां कृत्वा द्विजो वदेत्[6] ।
धर्मपर्यायवचनैः[7] धट इत्यभिधीयसे ॥

त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च ।
[8]त्वमेव देव जानीषे न विदुर्यानि मानवाः ॥

व्यवहाराभिशस्तोयं मानवस्तौल्यते[9] त्वया ।
तदेनं संशयारूढं धर्मतस्त्रातुमर्हसि ॥

1. संशयात्मां विमोचय–ज. द.
2. यद्यस्मिन्–ज; यद्यसि पापकृन्मातः ततो मां त्वमधोनय–द; ततो मां त्वमधोनग–ज.
3. मां–ज, द.
4. Compare *supra* p. 218, from याज्ञवल्क्य, २, १०१-१०२.
5. न वाते वृष्टिरहिते–द; 'निवाते' इति अपरार्कः, ७०३.
6. कृते कक्षे कक्षं कृत्वा द्विजो वदेत्–द; तस्मिन्नेव समारूढे–उ.
7. शब्देन–द, वि.
8. This line is missing in Jolly's edn.
9. तोल्यते. द.

देवासुरमनुष्याणां [1]सत्ये त्वमतिरिच्यसे[2] ।
सत्यसंधोसि भगवन् शुभाशुभविभावने[3] ॥

आदित्यचन्द्रावनिलानलौ च
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्मश्च जानाति नरस्य वृत्तम्[4] ॥

तस्मिन्नेव कृते कक्ष्ये[5] इति । [6]कक्षां तुलनां मर्यादाकृतानामेव परीक्षार्थमारोहणसमयेऽपि कृत्वा धर्मपर्यायशब्देनेत्यादि परीक्षकः पठेदित्यर्थः ।

पितामहः[7]

तुलितो यदि वर्धेत शुद्धो भवति धर्मतः ।
[8]हीयमानो न[9] शुद्धः स्यादेकेषान्तु समो शुचिः ॥

अल्पपाप समो ज्ञेयो बहुपापस्तु हीयते ।
धर्मगौरवमाहात्म्यादतिरिक्तो विशुध्यति ॥

1. सत्यैस्त्वमभिषिच्यते–ज, द.

2. A. S. B. and S. B. (a)–अभिषिच्यसे; *Mādhavīya* (p. 129) gives the reading of the text.

3. 'त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता' reads Jolly's edn.

4. Not found in Jolly's edn.

5. कक्ष इति–द.

6. कक्षं तुलायां–द.

7. 'प्रजापतिः' इति व्यवहारनिर्णये (पृ. १५५); प्रथमश्लोके पूर्वार्धः नारदात् गृहीतेति **स्मृतिचन्द्रिका** (p. 258); तत्रैव उत्तरार्धः–'समो वा हीयमानो वा न विशुद्धो भवेन्नरः ॥' इति.

8. पितामहश्लोकमिति **स्मृतिचन्द्रिका**, p. 258.

9. हीयमानेन–द.

[1]**बृहस्पतिः** [८, ४९]

घटेऽभियुक्तस्तुलितो हीनश्चेद्धानिमाप्नुयात् ।
तत्समस्तु पुनस्तौल्ये वर्धितो विजयी भवेत् ॥

**व्यासः**

अधोगतिर्न शुध्येत शुध्यत्यूर्ध्वगतिस्तथा ।
समोऽपि न च शुद्धः स्यादेषा शुद्धिरुदाहृता ॥

[2]कक्षाच्छेदे तुलाभङ्गे घटकर्कटयोस्तथा ।
रज्जुच्छेदेऽक्षभङ्गे वा दद्याच्छुद्धिं पुनर्नृपः ॥

**कात्यायनः** [४४०]

शिक्यच्छेदे तुलाभङ्गे तथा चापि गुणस्य वा ।
[3]शुद्धेस्तु संशये चैव परीक्षेत पुनर्नरम् ॥

---

1. This śloka is ascribed to पितामह by all our manuscripts, but it is cited as from Bṛhaspati by *Smṛticandrikā*, (p. 259), *Vyavahāranirṇaya* (p. 156) and Aparārka (p. 704.)

2. This is identical with Nārada, ४, २८४, and is ascribed to him by *Smṛticandrikā*, p. 260.

3. विशुद्धिसंशये चैव–द.

## ४०

# अथाग्निविधिः

तत्र बृहस्पतिः[1] [पितामहः]

> अग्नेर्विधिं प्रवक्ष्यामि यथावच्छास्त्रचोदितम् ।
> कारयेन्मण्डलान्यष्टौ[2] पुरस्तान्नवमं[3] तथा ॥
>
> आग्नेयं मण्डलं त्वाद्यं द्वितीयं वारुणं [4]स्मृतम् ।
> तृतीयं वायुदैवत्यं चतुर्थं यमदैवतम् ॥
>
> पञ्चमं त्विन्द्रदैवत्यं षष्ठं कौबेरमुच्यते ।
> सप्तमं सोमदैवत्यमष्टमं सर्वदैवतम् ॥
>
> पुरस्तान्नवमं यत्तु तन्महापार्थिवं विदुः ।
> गोमयेन कृतानि स्युरद्भिः पर्युक्षितानि च ॥
>
> द्वात्रिंशदङ्गुलान्याहुर्मण्डलान्मण्डलान्तरम्[5] ।
> कर्तुः समपदं कार्यं मण्डलं तु प्रमाणतः ॥

'महत्' पूर्वमण्डलेभ्योऽधिकपरिमाणम्[6] । 'पार्थिवम्' पृथिवीदेवताकम् ।

1. A. S. B., द, ज and S. B. (a) have पितामहः for बृहस्पतिः । Aparārka (p. 707) and *Vīramitrodaya*, (p. 255) also attribute these ślokas to पितामह. See *Bṛhaspatismṛti* (G. O. S.), ८, ५३-५७.

2. लानष्टौ-द.

3. कं-द.

4. स्तथा-द.

5. लम्मण्डलान्तरमिति । कर्तुः पदसमं कार्यं-द.

6. प्रमाणम्-द.

नारदः [४, २८५-२८६, २९९]

अतःपरं प्रवक्ष्यामि विधिमग्नेस्तथोत्तमम्[1] ।
द्वात्रिंशदङ्गुलान्याहुर्मण्डलान्मण्डलान्तरम् ॥

[2]अष्टभिर्मण्डलैरेवमङ्गुलानां शतद्वयम् ।
[3]चतुर्विंशतिराख्याता भूमेस्तु परिकल्पना[4] ॥

मण्डलस्य प्रमाणं तु कुर्यात्तत्पदसंमितम् ।
[5][न मण्डलमतिक्रामेन्नाप्यर्वाक् स्थापयेत्पदम् ॥]

प्रथमान्मण्डलादपरं च द्वात्रिंशदङ्गुलपरिमितं मण्डलं तदतिरिक्तं वा मण्डलान्तरमप्येवं कार्यम् । एवं गम्यभूमेः सप्तभिर्मण्डलैरन्तरालं शतद्वयं [6]चतुर्विंशत्यधिकं संपद्यते ॥

याज्ञवल्क्यः [२, १०६]

षोडशाङ्गुलकं ज्ञेयं मण्डलान्मण्डलान्तरम्[7] ।

1. रम्-द.

2. 'सप्तभिर्मण्डलैरेव' इति अपरार्कपाठः

3. 'षट्पञ्चाशत्समधिका'-ना. स्मृ. (Jolly's edn.); the reading of the author is commented on below in the extract from the *Vīra-mitrodaya.*

4. A. S. B., ज, द and S. B. (a)-परिमण्डला.

5. [ ] omitted by the manuscripts, which repeat instead of it the second half of the first śloka.

6. "अत्रवमाष्टमयोरङ्गुलयोः यदन्तरालं षोडशाङ्गुलं तस्यागन्तव्यत्वादनन्तराभावेनाङ्गुलानां परिगणनमिति न कश्चिद्विरोधः । यत्तु कल्पतरुकारेण एतदेव वाक्यं—'चतुर्विंशतिराख्याता भूमेस्तु परिकल्पना'—इति पठितम् । तत् षोडशाङ्गुलस्य प्रथमावस्थानं मण्डलस्यागन्तव्यत्वेन । तदपि अनन्तर्भावगम्यभूमेरङ्गुलानां परिगणनविषयमिति न कश्चिद्विरोधः । यदा तु दिव्यकर्तुः पदं षोडशाङ्गुलादधिकं तदा तत्पदसम्मितं मण्डलं अवशिष्टाङ्गुलं अन्तरालमित्येवं द्वात्रिंशदङ्गुलता संपादनीया ॥" (वीरमित्रोदय, २५६)

7. 'मण्डलं तावदन्तरम्' इति मुद्रितमिताक्षरा अपरार्क वीरमित्रोदयानामादृत-पाठः.

<u>पितामहः</u>

मण्डले मण्डले देयाः कुशाः शास्त्रप्रचोदिताः ।
विन्यसेत्सु पदं कर्ता तेषु नित्यमिति स्थितिः ॥

<u>हारीतः</u>

प्राङ्मुखस्तत्र तिष्ठेच्च प्रसारितकराङ्गुलिः ।
आर्द्रवासाः शुचिश्चैव शिरस्यारोप्य पत्रकम्[1] ॥

<u>पितामहः</u>[2]

पश्चिमे मण्डले तिष्ठेत्प्राङ्मुखः प्राञ्जलिः शुचिः ।
लक्षयेयुः क्षतादीनि हस्तयोस्तस्य कारिणः ॥

<u>विष्णुः</u> [११, २०]

करौ प्रमर्दितव्रीहेस्तस्यादावेव लक्षयेत् ।

<u>नारदः</u> [४, ३०१]

हस्तक्षतेषु सर्वेषु कुर्याद्धंसपदानि तु ।
तान्येव पुनरालक्षेत्तद्धस्तौ बिन्दुचित्रितौ[3] ॥

1. A. S. B., ज, द and S. B. (a) bring after this verse of Hārīta *all* the ślokas of Nārada on p. 227 below, beginning with the second half of the second śloka. Their text is also faulty in many cases.

2. The passages which follow are given in confused order by A. S. B. द, ज, and S. B. (a) Our text follows the Udaipur Ms., corrected from other *nibandhas*, where necessary.

3. लक्षेद्धस्तौ बिन्दुविचित्रितौ–द; 'पुनरवेक्षेद्धस्तौ बिन्दुविचित्रितौ', मु. ना. स्मृ.

तथा[1] [पितामहः]

सप्ताश्वत्थस्य पत्राणि शमीपत्राक्षतानि च ।
हस्तयोर्निक्षिपेत्तस्य [2]तन्तून् सूत्रस्य सप्त च ॥

पिप्पलाज्जायते ह्यग्निः[3] पिप्पलो वृक्षराट् स्मृतः ।
[4]ततस्तस्य पलाशानि नियोज्यानि मनीषिभिः ॥

अंस्रिहीनं[5] समं कृत्वा अष्टाङ्गुलमयोमयम् ।
पिण्डं तु तापयेदग्नौ [6]पञ्चाशत्पलिकं समम् ॥

'अंस्रिहीनम्' कोणरहितम् ।

नारदः [२८८-२९५]

जात्यैव लोहकारो यः कुशलश्चापि कर्मणि ।
दृष्टप्रयोगश्चैवाग्नौ तेनाग्नौ तं तु तापयेत् ॥

अग्निवर्णमयःपिण्डं सुस्फुलिङ्गं [7]सुरक्तिकम् ।
पञ्चाशत्पलिकं भूयः कारयित्वा शुचिर्द्विजः ॥

तृतीयतापतप्तं तं ब्रूयात्सत्यपुरस्कृतः ।
शृण्विमं मानवं धर्मं लोकपालैरधिष्ठितम् ॥

1. The three verses are *not* found in the printed 'Narada' (ed. Jolly), and one is attributed to पितामह by the मिताक्षरा (२, १०३-१०५)

2. ततः सूत्रेण वेष्टयेत्–द, ज, A. S. B. and S. B. (a)

3. वह्निः–द.

4. अतः तस्य–ज, द.

5. अग्निहीनं–ज, द.

6. A. S. B., ज and S. B. (a)–पञ्चाशत्पणिकं समम्

7. A. S. B., ज, द and S. B. (a)–सुरंजितम् ।

त्वमग्ने सर्वदेवानां पवित्रं परमं सुखम् ।
त्वमेव सर्वभूतानां हृदिस्थो वेत्सि चेष्टितम् ॥

सत्यानृते च जिह्वायास्त्वत्तः समुपलक्ष्यते ।
वेदादिभिरिदं प्रोक्तं नान्यथा कर्तुमर्हसि ॥

अनेनासाविदं प्रोक्तं मिथ्या चेदमसौ वदेत् ।
सर्वथा च यथा मिथ्या तथाऽग्निं धारयाम्यहम् ॥

स एष त्वां धारयति सत्येनानेन मानवः ।
सत्यवाक्यस्य चास्य त्वं शीतो भव हुताशन ॥

मृषावाक्यस्य पापस्य दह हस्तौ च [1]शापितः ।
अमुमर्थं च पत्रस्थमभियुक्तं यथार्थतः ॥

संश्राव्य मूर्ध्नि तस्यैव न्यस्य देयं यथाक्रमम् ।

**पितामहः**

[2]तापयित्वा ततः पश्चादग्निमावाहयेच्छुचिः ।
[3][आवाहनन्तु देवानां कृत्वा पूर्वं विधानवित् ॥]
त्वमग्ने वेदाश्चत्वारस्त्वं च यज्ञेषु हूयसे ॥

त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम् ।
उदरस्थो हि भूतानां तथा वेत्सि शुभाशुभम् ॥

[4]पापं पुनासि वै यस्मात्तस्मात्पावक उच्यसे ।
पापेषु दर्शयात्मानमर्चिष्मान् भव पावक ॥

1. 'पापिनः'–वि.

2. 'तपिते तु', वी. मि., २६१.

3. Half-verse omitted by the Mss. but necessary; restored from वी. मि., २६१

4. वी. मि., A. S. B. and S. B. (a)–पापात्पुनासि

अथवा शुद्धभावेषु शीतो भव महाबल[1] ।
[2]आयसं लेलिहानस्य जिह्वयापि समादिशेत् ॥

आयसं लेलिहानस्येति । जिह्वया लेलिहानस्याप्यायसयोगे तन्मन्त्रं समादिशेदित्यर्थः ।

[3]विष्णुः [११, १०-१२]

अभिमन्त्र्यास्य करयोर्न्यसेत्तं लोहपिण्डकम् ।
त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत् ॥

त्वमेवाग्ने विजानीषे न विदुर्यानि मानवाः ।
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ॥

तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ।

याज्ञवल्क्यः [२, १०४-१०५]

त्वमग्ने सर्वभूतानामन्तश्चरसि पावक ।
साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं [4]कवे मम ॥

तस्येत्युक्तवतो लोहं पञ्चाशत्पलिकं समम् ।
अग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि[5] ॥

1. वी. मि., A. S. B. and S. B. (a)–हुताशन for महाबल

2. This line is omitted by most digests but is necessary. Aparārka (p. 706) gives it, and so does Raghunandana in his *Divyatatva*, p. 608.

3. A. S. B. and S. B. (a) wrongly attribute these verses to Nārada. The confused order in A. S. B., of which ज, द and S.B. (a) are obviously copies—shows that A. S. B. was transcribed from an earlier Ms. whose folia were wrongly arranged.

4. करे–उ.

5. The confused order in the gro[illegible] of manuscripts ends here.

नारदः[1]

इत्युक्त्वा हस्तयोस्तस्य प्रदद्यात्पिण्डपावकम् ।
[2]सुप्रतप्तं सुसंयुक्तं विस्फुलिङ्गार्चिरुद्धतम्[3] ॥
पिण्डं गृहीत्वा सन्दंशैर्विद्युद्ज्वालासमप्रभम् ।

पितामहः

[4]ततः समग्रुपादाय राजा धर्मपरायणः ।
सन्दंशेन नियुक्तो वा हस्तयोस्तस्य निक्षिपेत् ॥

विष्णुः [१२, ५-७]

ततस्तत्राग्निवर्णं लोहपिण्डं पञ्चाशत्पलिकं दद्यात् । तमादाय नातिद्रुतं न च विलम्बितं मण्डलेषु पदन्यासं कुर्वन् व्रजेत् । ततः सप्तमं मण्डलमतीत्य भूमौ लोहपिण्डं पातयेत्[5] ।

शङ्खलिखितौ

अथवा [6]सप्ताश्वत्थपर्णान्तरितं षोडशपलमग्निवर्णं लोहपिण्डं अञ्जलिनादाय[7] सप्तपदमर्यादां गच्छेत् ॥

नारदः [४, २९६-२९७, २९९]

[8]हस्ताभ्यां तं समादाय प्राड्विवाकसमीरितः ।
स्थित्वैकस्मिंस्ततोऽन्यानि व्रजेत्सप्त त्वजिह्मगः[9] ॥

1. Not found in any printed text of *Nāradasmṛti.*
2. सुसन्तप्तं सुसंभुक्तं–द.
3. भिर्वृतम्–द.
4. ततस्तत्समुपादाय–द.
5. जह्यात्–मु. वि. स्मृ. (12, 7)
6. सप्ताश्वत्थपर्णान्तरितषोडशपल–द.
7. तथा–वी. मि., २५८.
8. Missing in Jolly's edn.
9. व्रजेत्सप्त शनैः शनैः–ना. स्मृ. (Jolly's edn.)

[1]असम्भ्रान्तः शनैर्गच्छेदक्रुद्धः सोऽनलं प्रति ।
न पातयेत्तामप्राप्य[2] या भूमिः परिकल्पिता ॥

न मण्डलमतिक्रामेन्न [3]चार्वाक् स्थापयेत्पदम् ।
अष्टमं मण्डलं गत्वा [4]नवमे निक्षिपेद्बुधः ॥

[5]पितामहः

त्वरमाणो न गच्छेत्तु स्वस्थो गच्छेत् शनैश्शनैः ।
न मण्डलमतिक्रामेत् नान्तरा स्थापयेत् पदम् ॥

अष्टमं मण्डलं गत्वा नवमे निक्षिपेद्बुधः ।

कालिकापुराणे

मण्डलानि तथा सप्त षोडशाङ्गुलमात्रतः[6] ।
तावदन्तरतो गच्छेत् [7]धृत्वा नवतृणे क्षिपेत् ॥

याज्ञवल्क्यः [२, २०७]

अन्तरा पतिते पिण्डे सन्देहे वा पुनर्हरेत् ।

1. This line is not found in Jolly's edn.

2. तां सम्प्राप्य–द.

3. नाप्यर्वाक् स्थाप–द.

4. ततोऽग्निं विसृजेन्नरः–ना. स्मृ. This line is placed immediately after पातयेन्न तमप्राप्य in Jolly's edn.

5. The four lines of पितामह and का. पु. are missing in the Udaipur manuscript.

6. मानतः–द.

7. गत्वा–द

पितामहः

[1]भयार्तः पातयेद्यस्तु व्रणं[2] च न विभाव्यते ।
पुनरारोहयेल्लोहं स्थितिरेषा दृढीकृता ॥

कात्यायनः [४४१]

[3]प्रज्वालेनाभिशस्तश्चेत्स्थानादन्यत्र दह्यते ।
अदग्धं तं विदुर्देवास्तस्य भूयोऽपि दापयेत् ॥

पितामहः

ततस्तद्धस्तयोः प्रास्येद्व्रीहीन्वा यदि वा यवान् ।
निर्विशङ्केन तेषां तु हस्ताभ्यां मर्दने कृते ॥

निर्विकारे दिनस्यान्ते शुद्धिं तस्य विनिर्दिशेत् ।

नारदः [४, ३०२-३०३]

[4]तस्यैवं मुक्तपिण्डस्य कुर्यात्करनिरीक्षणम् ।
पूर्वदृष्टेषु चिह्नेषु ततोऽन्यत्रापि लक्षयेत् ॥

मण्डलं रक्तसङ्काशं यत्रान्यद्वाग्निसम्भवम् ।
[5]सोऽविशुद्धः सुविज्ञेयोऽसत्यधर्मव्यवस्थितः ॥

[6]यदा तु न [3]विभाव्येते दग्धाविति करौ तदा ।
[7]व्रीहीनतिप्रयत्नेन सप्तवारांस्तु मर्दयेत् ॥

1. भयार्त्तं पातयेद्यस्तु–द.
2. तृणे–द.
3. प्रस्खलद्भिश्च युक्तश्चेत्स्थानादन्यत्र दह्यते ।
तं दग्धं न विदुर्देवास्तस्य भूयोऽपि दापयेत् ॥ दण्डविवेके
4. The first two ślokas are missing in Jolly's edn.
5. सोविशुद्धस्तु–द. 'स विशुद्धः' इति उ; 'सत्यधर्मं' 'सोऽवि' 'असत्यधर्मं' इति अपरार्क (७०८), स्मृतिचन्द्रिका (p. 269), व्यव. सौ.
6. यत्पुनर्न–मु., ना. स्मृ.; 'दग्धावेतौ' मु. ना.
7. 'व्रीहीन् प्रगृह्य यत्नेन' इति मु. ना.

मर्दितो यदि नो दग्धः सभ्यैरेव[1] विनिश्चितः ।
मोच्यः[2] शुद्धः स सत्कृत्य दग्धो [3]दण्ड्यो यथाक्रमम् ॥

विष्णुः [११, ८]

यो हस्तयोः क्वचिद्दग्धस्तमशुद्धं विनिर्दिशेत् ।
न दग्धः सर्वथा यस्तु स विशुद्धो भवेन्नरः ॥

वृद्धः[4]

अयस्तप्तं तु पाणिभ्यामर्कपत्रैस्तु सप्तभिः ।
अन्तर्हितं हरन् शुद्धस्त्वदग्धः सप्तमे पदे ॥

---

1. रेवं–द.

2. वाच्यः–द.

3. दग्धो यथाक्रमात्–ज; दग्धोऽदग्धो यथाक्रमात्–द.

4. A. S. B., ज, द and S. B. (a) as well as Aparārka (p. 705) cite the śloka below as from 'वृद्धः. *Mitākṣarā* cites it thus–'यदपि स्मरणम्' (२, १०३). Other writers also treat it as anonymous.

४१

# अथ तोयविधिः

तत्र पितामहः

तोयस्यातः प्रवक्ष्यामि विधिं धर्म्यं सनातनम् ।
मण्डलं पुष्पधूपाभ्यां कारयेत्तु[1] विचक्षणः ॥

[2]शरान् संपूजयेद्भक्त्या वैष्णवं च धनुस्तथा ।
मण्डपे पुष्पधूपैश्च ततः कर्म समाचरेत् ॥

कात्यायनः[3] [४४२]

[4]शरांस्तानायसैरग्रैः प्रकुर्वीत विशुद्धये ।
वेणुकाण्डमयांश्चैव क्षेप्ता च सुदृढं क्षिपेत् ॥

पितामहः

क्षेप्ता च क्षत्रियः कार्यस्तद्वृत्तिर्ब्राह्मणोऽपि वा ।
अक्रूरहृदयः शान्तः सोपवासस्तथा शुचिः ॥

इषूंश्च प्रक्षिपेद्विद्वान् मारुते चातिधावति ।
विषमे भूप्रदेशे [5]च वृक्षस्थाणुसमाकुले ॥

नारदः [४, ३०७]

क्रूरं धनुः सप्तशतं मध्यमं षट्छतं स्मृतम् ।
मन्दं पञ्चशतं ज्ञेयमेष ज्ञेयो धनुर्विधिः ॥

1. A. S. B., ज, द and S. B. (a)-पूजयेत् for कारयेत्
2. शरं सुपूजयेद्भक्त्या-वि.
3. Name supplied by A. S. B., ज, द and S. B. (a)
4. शरांस्तनायसैरग्रै-द.
5. तु-ड.

धनुः सप्तशतमिति। यद्धनुः बद्धज्यं सप्तभिर्पलशतैः शरपूरणपर्यन्तं नमति तत्तथोच्यते। एवं षट्छतमित्याद्यपि॥

पितामहः

मध्यमेन तु चापेन प्रक्षिपेत्तु शरत्रयम्।
हस्तानां तु शते सार्धे लक्ष्यं कृत्वा विचक्षणः॥

तेषां च[1] प्रेषितानां तु शराणां शास्त्रचोदनात्'
मध्यमस्तु शरो ग्राह्यः पुरुषेण बलीयसा॥

शराणां पतनं ग्राह्यं सर्पणं परिवर्जयेत्।
सर्पन् सर्पन् शरो याति दूराद्दूरतरं तु सः॥

कात्यायनः [४४३]

क्षिप्तैस्तु मज्जनं कार्यं गमनं समकालिकम्।
गमने [2]त्वागमः कार्यः पुमानन्यो जले विशेत्॥

'क्षिप्तैः' शरैः।

विष्णुः [१२, ३-४]

[अभिमन्त्रितमम्भः प्रविशेत्।] तत्समकालं च नातिक्रूरमृदुना धनुषा पुरुषोऽपरः शरमोक्षं[3] कुर्यात्।

बृहस्पतिः [८, ६२]

अप्सु प्रविश्य[4] पुरुषं प्रेषयेत्सायकत्रयम्।

1. तु–द.
2. चागमे चान्यः–द; त्वागमे तुल्यं–ब्रि.
3. शरक्षेपम्–मु. वि. स्मृ.
4. प्रवेश्य–द, वी. मि., २७१.

पितामहः

स्थिरे तोये निमज्जेत्तु[1] न ग्राहिणि न चाल्पके ।
तृणशैवालरहिते जलौकामत्स्यवर्जिते ॥

देवखातेषु यत्तोयं तस्मिन् कुर्याद्विशोधनम् ।
[2]आहार्यं वर्जयेत्तोयं [3]शीघ्रवेगनदीषु च ॥

'ग्राहिणि' ग्राहाख्यप्राणियुक्ते ।

नारदः [४, ३०५]

[4]नदीषु नातिवेगासु तटागेषु सरःसु च ।
ह्रदेषु स्थिरतोयेषु कुर्यात्पुंसां निमज्जनम् ॥

विष्णुः [१२, २-३]

पङ्कशैवालदुष्टग्राहमत्स्यजलौकादिवर्जितेऽम्भसि । तत्रानाभिमग्नस्यारागद्वेषिणः पुरुषस्यान्यस्य जानुनी गृहीत्वाभिमन्त्रितमम्भः प्रविशेत् ।

नारदः [४, ३०८]

[5]ब्राह्मणः क्षत्रियो वैश्यो रागद्वेषविवर्जितः ।
नाभिमात्रजले स्थाप्यः पुरुषः स्थाणुवद्बली ॥

तस्योरुं प्रतिगृह्याथ[6] निमज्जेदभिशापवान् ।

1. त–द.
2. आहारं वर्जयेन्नित्यं–द, बि, ज.
3. A. S. B., शीघ्रगासु नदीषु
4. 'नदीषु नातिवेगासु सागरेषु वहेषु च ।
ह्रदेषु देवखातेषु तडागेषु सरःसु च ॥' इति मु. ना.
5. This half-verse is not found in ना. स्मृ. (Jolly's ed.)
6. A. S. B., ज, द and S. B. (a)–परिसंगृह्य

याज्ञवल्क्यः [२, १०८]

सत्येन माभिरक्षस्व[1] वरुणेत्यभिशाप्य कम् ।
नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत्[2] ॥

'अभिशाप्य' शपथं कारयित्वा । 'कम्' पानीयम् ।

विष्णुः [१२, ७-८]

त्वमम्भः सर्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेवाम्भो विजानीषे न विदुर्यानि मानवाः[3] ॥

व्यवहाराभिशस्तोऽयं[4] मानुषस्त्वयि मज्जति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥

पितामहः

तोय त्वं प्राणिनां प्राणः सृष्टेराद्यं तु निर्मितम् ।
शुद्धेस्त्वं कारणं प्रोक्तं द्रव्याणां देहिनां तथा ॥

अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे ।

नारदः [४, ३१६-३१७]

सत्यानृतविभागस्य तोयाग्नी स्पष्टकृत्तमौ[5] ।
अद्भ्यश्चाग्निरभूद्यस्मात्तस्मात्तोये विशेषतः ॥

क्रियते धर्मतत्त्वज्ञैर्दूषितानां विशोधनम् ।
तस्मात्सत्येन भगवन् [6]जलेश त्रातुमर्हसि ॥

1. सत्येन माभिरक्ष त्वम्–इति मिताक्षरापाठः

2. 'सत्येन माभिरक्षस्व वरुण' इत्येवमन्तेनोदकमभिमन्त्र्य नाभिप्रमाणोदकस्थस्याति-दृढस्य बलिनः पुरुषस्योरू हस्ताभ्यां गृहीत्वोदकं प्रविशेत् । पुनर्जलग्रहणमादरार्थम् (विश्वरूपः)

3. येन मानुषाः–द.

4. शस्तोऽयं–द.

5. कारिणौ–द.

6. जल संत्रातुमर्हसि–बि.

कालिकापुराणे[1]

पापेनं वरुण त्वं हि अस्मादेवाभिशापतः ।
शुद्धश्चेदतिकारुण्यादभिमन्त्र्य जले क्षिपेत् ॥

नाभिमात्रोदकस्थस्य पुरुषस्योरुं प्रगृह्य वै ।
प्रणम्य देवतामिष्टां तस्मिन् मग्नो जले विशेत् ॥

शङ्खलिखितौ

[2]सदसच्च त्वमेव वरुण उभयोः प्रतितिष्ठतः । त्वयि सत्यं त्विदं देव, वरुण, त्वमेव तद्ब्रूहि वरेण्यं तदादिशस्व । इति

पितामहनारदौ[3]

शरप्रक्षेपणस्थानाद्युवा जवसमन्वितः ।
गच्छेत्परमया शक्त्या यत्रासौ मध्यमः शरः ॥

मध्यमं शरमादाय पुरुषोऽन्यस्तथाविधः ।
प्रत्यागच्छेत्तु वेगेन यतः स पुरुषो गतः ॥

आगतस्तु शरग्राही न पश्यति यदा जले ।
अन्तर्जलगतं सम्यक् तदा शुद्धिं विनिर्दिशेत् ॥

बृहस्पतिः [८, ६१]

आनीते मध्यमे चापे[4] मग्नाङ्गः शुचितामियात् ।

1. A. S. B., द, ज and S. B. (a)–supply the name. The verses which follow are not Nārada's.

2. Restored from *Vīramitrodaya*, p. 270—which cites it thus: वरुणाभिमन्त्रणमन्त्रः शंखलिखिताभ्यां दर्शितः ।

3. ना. स्मृ. ४, ३०९–३२२.

4. A. S. B., ज, द and S. B. (a)–बाणे for चापे

[1]पितामहनारदौ

अन्यथा न विशुद्धः स्यादेकाङ्गस्यापि दर्शनात् ।
स्थानाद्वान्यत्र गमनाद्यस्मिन् पूर्वं निवेशितः ॥

कात्यायनः [४४४, ४४५]

[2]शिरोमात्रं तु दृश्येत न कर्णौ नापि नासिका ।
अप्सु प्रवेशने यस्य शुद्धं तमपि निर्दिशेत् ॥

[3]निमज्योत्प्लवते यस्तु दृष्टश्चेत्प्राणिना नरः ।
[4]पुनस्तत्र निमज्जेत्स देशचिह्नविभावितः ॥



1. नारद, ४, ३१२.
2. A. S. B., ज, द and S. B. (a)–राशिमात्रं
3. निमग्नः प्लवते यस्तु–द.
4. A. S. B., ज, द and S. B. (a)–पुनस्तत्र निमज्जेत स्वदेशचिह्नभावितः ।

# ४२

## अथ विषविधिः

तत्र नारदः [४, ३१८-३२१]

अतःपरं प्रवक्ष्यामि विषस्य विधिमुत्तमम् ।
[1]यस्मिन् काले यदा देयं यादृशं च प्रकीर्तितम्[2] ॥

यावन्मात्रं समुद्दिष्टं धर्मतत्त्वार्थदर्शिभिः ।
तुलयित्वा शरत्काले[3] देयमेतद्धिमागमे ॥

नापराह्णे न मध्याह्ने न सन्ध्यायां च धर्मवित् ।
शरद्ग्रीष्मवसन्तेषु वर्षासु च विवर्जयेत् ॥

[4]भग्नं च [5]चारितं चैव धूपितं मिश्रितं तथा ।
कालकूटमलाबुं च विषं यत्नेन वर्जयेत् ॥

पितामहः

चारितान्यतिजीर्णानि कृत्रिमाणि तथैव च ।
भूमिजानि च सर्वाणि विषाणि परिवर्जयेत् ॥

ओषधीर्मन्त्रयोगांश्च मणीनन्यविषापहान् ।
कर्तुः शरीरसंस्थांश्च गूढानन्यान् परीक्षयेत् ॥

1. अभिशस्तपुरुषस्य सत्यासत्यपरीक्षार्थं यवप्रमाणं विषं देयम् । तत्र शरत्काले अश्वयुक्कार्तिकमासयोः । तथा हि माघमार्गशीर्षयोरिति । (असहायः)

2. यादृशं परिकीर्तितम्—ना. स्मृ.

3. कृते काले—द ; त्वेच्छतः काले—वि.

4. अत्र चारितभग्नधूपितमिश्रितानि कृतकारणाद्वर्जितानि कालकूटालाबुविषे च अतिरौद्रजातिवशाद्वर्जिते—(असहायः)

5. चारितश्चैव—द.

कात्यायनः [४४६-४४९]

अजशृङ्गनिभं श्यामं सुपीतं शृङ्गसम्भवम् ।
भङ्गे च शृङ्गवेराभं ख्यातं तच्छृङ्गिणां विषम् ॥

[1]रक्तं तदसितं कुर्यात्कठिनं चैव तत्क्षणात् ।
अनेन विधिना ज्ञेयं विषं दिव्यविशारदैः ॥

[2]वत्सनाभिनिभं पीतं वर्णज्ञानेन निश्चयः ।
शुक्तिशृङ्गाकृतिर्भङ्गे विद्यात्तद्वत्सनाभकम् ॥

मधुक्षीरसमायुक्तं स्वच्छं कुर्वीत तत्क्षणात् ।
बाह्यमेवं समाख्यातं लक्षणं धर्मसाधकैः ॥

नारदः [३, ३२२]

शार्ङ्गं हैमवतं शस्तं वर्णगन्धरसान्वितम् ।
अकृत्रिममसंगूढममन्त्रोपहतं च यत्[3] ॥

पितामहः

यवाः सप्त प्रदातव्याः शुद्धिहेतोरसंशयम्[4] ।
शृङ्गिणो वत्सनाभस्य हिमजस्य विषस्य वा ॥

नारदः [४, ३२४]

वर्षासु षड्यवा मात्रा ग्रीष्मे पञ्च यवाः स्मृताः ।
[5]हेमन्ते वा सप्त यवाः [6]शरद्यल्पास्ततोऽपि हि ॥

1. A. S. B. and S. B. (a)-रक्तं श्यामं सितं कुर्यात्; रक्तस्थमसिते कुर्यात्-ग; रक्तस्थमसितं कुर्यात्-द.

2. वत्सनालनिभं पीतं-द.

3. 'अभिन्नं तत्प्रदातव्यं क्षत्रविट्शूद्रयोनिषु' इति मु. ना. स्मृ.

4. अत्र यवमात्रप्रमाणबलापेक्षया वर्षग्रीष्महेमन्तास्त्रयोऽप्येते ऋतवो गृहीता इति—असहायः

5. 'हेमन्ते सप्त वाष्टौ वा शरद्यस्यापि नेष्यते'-इति मु. ना. स्मृ.

6. शरद्यस्यां ततोऽपि हि-उ., वि.

कात्यायनः [४५०]

पूर्वाह्ने शीतले देशे विषं दद्यात्[1] देहिनाम् ।
घृतेन योजितं श्लक्ष्णं पिष्टं [2]त्रिंशद्गुणेन तु ॥

शङ्खनारदौ[3]

[4]दद्याद्विषं सोपवासः देवब्राह्मणसन्निधौ ।
धूपोपहारमन्त्रैश्च पूजयित्वा महेश्वरम् ॥

द्विजानां सन्निधावेव दक्षिणाभिमुखे स्थिते ।
उदङ्मुखः प्राङ्मुखो वा दद्याद्विप्रः समाहितः ॥

पितामहः

दीयमानं[5] करे कृत्वा विषं तु परिशोधयेत्[6] ।
विष त्वं ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम् ॥

पापेषु दर्शयात्मानं शुद्धानाममृती[7]भव ।

[8]विष्णुः [१३, ६-७]

विषत्वाद्विषमत्वाच्च क्रूरत्वात्सर्वदेहिनाम् ।
त्वमेव विष जानीषे न विदुर्यानि मानवाः[9] ॥

1. देयं तु-द.
2. त्रिंशगुणेन तु-वि.
3. A. S. B., द, ज and S. B. (a) have मनुनारदौ—*Vīramitrodaya*, (p. 275) ascribes the verses to Manu: but they are not to be found in Manu or Nārada.
4. दद्याद्वि सोपवासाय-द, वि.
5. ने-द.
6. शापयेत्-द.
7. तं भव-द.
8. A. S. B., ज, द and S. B. (a)-'विष्णुः' इति
9. मानुषाः-द.

व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि[1] ॥

नारदः [४, ३२५]

विष त्वं ब्रह्मणः पुत्रः सत्यधर्मव्यवस्थितः ।
शोधयैनं नरं पापात्सत्येनास्यामृतो भव[2] ॥

याज्ञवल्क्यः [२, ११०-१११]

[3]विष त्वं ब्रह्मणः पुत्रः [4]सत्यधर्मव्यवस्थितः ।
त्रायस्वास्मादभीशापात्सत्येन भव मेऽमृतम् ॥
[5]एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम् ।

नारदः [४, ३२६]

छायानिवेशितो रक्ष्यो दिनशेषमभोजनः ।
विषवेगक्रमातीतः शुद्धोऽसौ मनुरब्रवीत् ॥

पितामहः

भक्षिते तु यदा स्वस्थो मूर्च्छाच्छर्दिविवर्जितः ।
निर्विकारो दिनस्यान्ते तं शुद्धमिति निर्दिशेत् ॥

1. र्हसि–द. र्हति–उ.

2. सत्य नास्यानृतं भव–बि.

3. त्वं विष ब्रह्मणः–मु. या. स्मृ.

4. सत्यधर्मे–मिताक्षरा ; सत्ये धर्मे (अपरार्कः)

5. एवमिति प्रकारार्थम् मन्त्रानधिकृतस्यानभिज्ञस्य वायमेवार्थः पर्यायवचनैर्वाच्यो यथा स्यात् । शार्ङ्गवचनं मन्दवीर्यविषनिवृत्त्यर्थम् । हैमवचनं कालकूटादिव्युदासार्थम्—(विश्वरूपः)

विष्णुः [१२, ५]

[1]विषं वेगक्रमापेतं सुखेन यदि जीर्यते ।
विशुद्धं तमिति ज्ञात्वा दिवसान्ते विसर्जयेत्[2] ॥

बृहस्पतिः[3] [८, ६४]

विधिदत्तं विषं येन जीर्णं मन्त्रौषधैर्विना[4] ।
स शुद्धः स्यादन्यथा तु दण्ड्यो दाप्यश्च तद्धनम् ॥

पितामहः

त्रिरात्रं पञ्चरात्रं वा पुरुषैः स्वैरधिष्ठितम् ।
कुहकाशङ्कया राजा धारयेद्दिव्यकारिणम् ॥

---

1. विषवेगक्लमा–द.
2. विवर्जयेत्–द.
3. A. S. B., ज, द and S. B. (a)-
4. षधिं विना–ज, द.

# अथ कोशविधिः

तत्र नारदः [४, ३२७-३२८]

अतःपरं प्रवक्ष्यामि कोशस्य विधिमुत्तमम् ।
शास्त्रविद्भिर्यथा प्रोक्तं सर्वकालाविरोधिनम् ॥

[1]पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च ।
[2]सशूकस्याऽव्यसनिनः कोशपानं विधीयते ॥

[3]इच्छतः श्रद्दधानस्य देवब्राह्मणसन्निधौ ।

'सशूको'ऽत्र सत्येन दिव्यकरणे निःशङ्कवान् ।

पितामहः

भक्तो यो यस्य देवस्य पाययेत्तस्य [4]तज्जलम् ।
समभावे तु देवानामादित्यस्य च पाययेत् ॥

दुर्गायाः पाययेच्चोरान् ये च शस्त्रोपजीविनः ।
भास्करस्य च यत्तोयं ब्राह्मणं तत्र पाययेत्[5] ॥

1. अत्र यावेतौ पुरुषौ वर्जितौ तौ द्वावपि सर्वावस्थत्वाद्देवताभिः पूर्वपरिहृतौ। तेन निर्दैवत्यौ तौ कोशदिव्ये वर्जिताविति—शेषं सुबोधम् । (असहायः)

2. A. S. B., ज, द and S. B. (a)-शूद्रकस्य; सशूक, उ, वी. मि. २७८.

3. Missing in Jolly's edn.

4. तं नरम्-द.

5. 'भास्करस्य ततोम्यांस्तु ब्राह्मणांश्च न पातयेत्'-द, बि.

दुर्गायाः स्नापयेच्छूलमादित्यस्य च मण्डलम्[1] ।
इतरेषां तु देवानां स्नापयेदायुधानि तु ॥

प्राङ्मुखं कारिणं कृत्वा पाययेत्प्रसृतित्रयम् ।
पूर्वोक्तेन विधानेन स्नातमार्द्रपटं[2] शुचिम् ॥

'समभावे' देवताविषयकभक्तिसाम्य इत्यर्थः ।

बृहस्पतिः [८, ६६]

यद्भक्तः सोऽभियुक्तः स्यात्तद्देवायुधमण्डलम् ।
प्रक्षाल्य पाययेत्तस्माज्जलात्तु[3] प्रसृतित्रयम् ॥

विष्णुः [१४, २-३]

उग्रान् देवान् समभ्यर्च्य तत्स्नानोदकात् प्रसृतित्रयं पिबेत् । इदं मया न कृतमिति व्याहरन् देवताभिमुखः ।

[4]नारदः

अर्चयित्वा तु तं देवं प्रक्षाल्य सलिलेन च ।
[5]एनश्च श्रावयित्वा तु पायेत्प्रसृतित्रयम् ॥

कात्यायनः [४५२]

स्वल्पेऽपराधे देवानां स्नापयित्वायुधोदकम् ।
पाय्यो विकारे चाशुद्धो नियम्यः शुचिरन्यथा ॥

'पाय्यः' पाययितव्यः । 'नियम्यो' [6]दण्डयितव्यः ।

1. मण्डले–द.

2. मार्द्राम्बरम्–द.

3. A. S. B., ज, द and S. B. (a)–जलं तु ; *Vīramitrodaya*, (p. 278) has जलात्तु and cites half of the verse from Yājñavalkya [२, ११२]

4. 'अभ्यर्च्य देवतां स्नाप्य जलस्य प्रसृतित्रयम्'–नारदस्मृति [४, ३२९]

5. स्मृ. चं., p. 272 ; पुनश्च for एनश्च–उ.

6. दण्ड्यः–द.

[1]विष्णुः [१४, ४]

यस्य पश्येद्द्विसप्ताहात्त्रिसप्ताहादथापि वा ।
रोगोऽग्निर्ज्ञातिमरणं राजातङ्कमथापि वा ॥

तमशुद्धं विजानीयात्तथा शुद्धं विपर्यये[2] ।

पितामहः

त्रिरात्रात्सप्तरात्राद्वा [3]त्रिसप्ताहादथापि वा ।
वैकृतं यस्य [4]दृश्येत पापकृत्स तु मानवः ॥

तस्यैकस्य न[5] सर्वस्य जनस्य यदि तद्भवेत् ।
रोगोऽग्निर्ज्ञातिमरणं सैव तस्य विभावना[6] ॥

कात्यायनः [४५६-४५८]

अथ दैवविसंवादात्त्रिसप्ताहात्तु दापयेत् ।
अभियुक्तं प्रयत्नेन तमर्थं दण्डमेव च ॥

तस्यैकस्य[7] न सर्वस्य जनस्य यदि तद्भवेत् ।
रोगोऽग्निर्ज्ञातिमरणं ऋणं दद्याद्दमं च सः ॥

1. Lacuna in A. S. B., ज, द and S B. (a) from Viṣṇu to Kātyāyana. 'राजदण्डमथापि' (अपरार्क, ७१५)

2. *Vīramitrodaya*, (p. 280) completes the quotation :

दिव्ये च शुद्धं पुरुषं सत्कुर्याद्धार्मिको नृपः ।

3. द्विसप्ताहादथापि वा–वि, स्मृ. चं., p. 274.

4. पश्येत–वि.

5. तु–उ.

6. न केवलं शोध्यस्य विकृतत्वापत्तौ पापकृत्वं, अपि तु स्वकीयजनस्य विकृतत्वापत्तावपीत्याह—'तस्यैकस्य न सर्वस्य' [इति] । (स्मृ. चं., p. 274)

7. 'तस्यैकस्य न सर्वस्य'-व्यवहारतत्त्वपाठः (४५७); 'तस्यैकस्य तु सर्वस्य' इति उदयपुरमातृकयोः न द्रष्टः ।

ज्वरातिसारविस्फोटाः शूलादिपरिपीडनम् ।
नेत्ररुग्गलरोगश्च तथोन्मादः प्रजायते ॥

शिरोरुग्भुजभङ्गश्च दैविकव्याधयो नृणाम् ।

'दैवविसंवादः' दैवकृतो रोगज्ञातिमरणादिरूपो विरोधः ।

नारदः [४, ३३१]

ऊर्ध्वं यस्य द्विसप्ताहाद्वैकृतं सुमहद्भवेत्[1] ।
नाभियोज्यः स विदुषा[2] कृतकालव्यतिक्रमात् ॥

याज्ञवल्क्यः [२, ११३]

अर्वाक् चतुर्दशादह्नो[3] यस्य नो राजदैविकम् ।
व्यसनं जायते घोरं [4]स विशुद्धो न संशयः ॥

* अत्र सरस्वतीभवनप्रथममातृकाधृत अधिकपाठः । उदयपुरबिकानीरयोः न दृष्टः
शोध्यस्य जननी तातः पुत्रो वा तत्सहोदरः ।
भार्या पुत्रवती धर्म्या ज्ञातयः परिकीर्तिताः ॥
इति वादिभयङ्करे बृहस्पतिवचनम् ॥ इति

*Vādibhayaṁkara* is described as by a follower and critic of Vijñaneśvara [वी. मि., २५०]. The passage has been relied upon by Mahāmahopādhyāya P. V. Kane (*History of Dharma-śāstra*, I, p. 290) to establish the priority of Vijñaneśvara to Lakṣmīdhara. Its authenticity is examined in my Introduction to the *Dānakāṇḍa* (pp. 25-29) and it is disproved. The alleged verse of Bṛhaspati has been rejected in my *Bṛhaspatismṛti*, as unauthentic. See also my article on "Vijñaneśvara and Lakṣmīdhara" in the Golden Jubilee Number of the *Madras Law Journal* (1941). The śloka is not found in the *Dharmakośa* (1937-1941), which has followed the Bikanir Manuscript of the *Vyavahārakāṇḍa* of the *Kalpataru*.

1. महदप्यशुभं भवेत्-मु. ना. स्मृ.
2. केनापि for विदुषा-मु. ना. स्मृ.
3. आचतुर्दशमादह्नो-इति विश्वरूपाचार्याभ्युपगतपाठः ।
4. स शुद्धस्स्यान्न संशयः-द ; मिताक्षरा-वीरमित्रोदयपाठश्च

'व्यसनम्' आपत् । 'घोरम्' अतिपीडाकरम् ।

बृहस्पतिः [८, ६५]

सप्ताहाद्वा द्विसप्ताहाद्यस्यार्तिर्न प्रजायते[1] ।
पुत्रदारधनानां च [2]विशुद्धः स्यान्न संशयः ॥

अत्र च द्व्यहसप्ताहत्रिसप्ताहप्रतीक्षणे व्यवस्था देशकालविषयतारतम्यापेक्षयेत्यवगन्तव्या[3] ।

कात्यायनः [४५४]

अवष्टम्भाभियुक्तस्य विशुद्धस्यापि कोशतः ।
सदण्डमभियोगं तु दापयेदभियोजकम् ॥

विष्णुः [१४, ५]

दिव्येन शुद्धं पुरुषं [4]सत्कुर्याद्धार्मिको नृपः ।

नारदः [४, ३३३]

[5]यथोक्तेन विधानेन पञ्च दिव्यानि [6]कारयेत् ।
[7]तत्र राजाभिशस्तानां प्रेत्य चेह च नन्दति ॥

---

1. 'यस्य हानिर्न जायते' इति पराशरमाधवीये
2. स शुद्धः स्यान्न संशयः–द ; पराशरमाधवीये च
3. यता च तस्यापेक्षयावगन्तव्या–द, वि.
4. A. S. B., ज, द and S. B. (a)–सान्त्वयेद्धार्मिको
5. ये पुनः प्रच्छन्नपापकारिणः पुरुषा अथवा शुद्धमाचारा एव शङ्कामात्रदोषाभिशापदुःखिताः तेषां सत्यासत्यपरीक्षार्थमेतानि दिव्यानि मुनिभिरवतारितानि (असहायः)
6. धर्मवित्–द ; मु. ना. स्मृ.
7. दण्ड्यानाभियुक्तानां–द ; दत्त्वा राजा–मु. ना. स्मृ ; तत्र राजाभियुक्तानां–वि.

# ४४

## अथ तण्डुलविधिः

तत्र पितामहः

तण्डुलानां प्रवक्ष्यामि विधिं भक्षणवर्जने ।
[1]शूद्रे तु तण्डुला देया [2]नान्यत्रेति विनिश्चयः ॥

[3]तण्डुलान्कारयेच्छुक्लान् शालेर्नान्यस्य कस्यचित् ।
मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ॥

स्नानोदकेन संमिश्रान् रात्रौ तत्रैव वासयेत्[4] ।
प्रभाते कारिणो[5] देया आदित्याभिमुखस्य तु[6] ॥

तण्डुलान् भक्षयित्वा तु पत्रे निष्ठीवयेद्दिवा[7] ।
भूर्जस्यैव तु नान्यस्य अभावे पिप्पलस्य च[8] ॥

1. चौर्ये तु तण्डुला–द.
2. अस्मिन् स्त्रीसंग्रहणाद्यधनविवादे इत्यर्थः–स्मृ. चं. p. 275.
3. क्षालयेच्छुक्लान् इति स्मृ. चं. p. 276; 'कारयेत्' इति वी. मि. पाठः (p. 281)
4. 'आवाहनादिपूर्वं तु कृत्वा रात्रौ विधानतः ॥' इति श्लोकस्योत्तरार्धः (स्मृ. चं. p. 276; वी. मि., २८२)
5. 'कार्यिणे' इति स्मृ. चं.
6. 'प्राङ्मुखोपोषितं स्नातं शिरारोपितपत्रकम्' इत्युत्तरार्धः स्मृ. चं. p. 278, वी. मि. २८२.
7. त्रिधा–द; ततः–वी. मि.
8. तु–द, स्मृ. चं. p. 277, वी. मि. २८२.

<u>कात्यायनः</u> [४५३]

देवतास्नानपानीय[1]दिग्धतण्डुलभक्षणे ।
शुद्धनिष्ठीवनाच्छुद्धो नियम्योऽशुचिरन्यथा ॥

<u>बृहस्पतिः</u> [८, ७०]

सोपवासः सूर्यग्रहे तण्डुलान् भक्षयेच्छुचिः ।
शुद्धः स्याच्छुक्लनिष्ठीवे रक्तमिश्रे च दोषभाक् ॥

<u>बृहस्पतिपितामहौ</u>[2]

शोणितं दृश्यते यस्य हनुजालं च सीदति[3] ।
गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत् ॥

'हनुजालम्' उत्तराधरवामदक्षिणहनुसमूहः[4] ॥

---

1. वं दिग्ध-द. 'स्निग्ध' इति दिव्यतत्त्वे, ६०६.
2. The names are given by A. S. B., ज, द and S. B. (a)
3. 'शोणितं दृश्यते यत्र हनुस्तालु च शीर्यतः' इति माधवीये (p. 195)
4. दक्षिणजलसमूहः हनुः-ज.

## अथ तप्तमाषकविधिः

तत्र पितामहः

तप्तमाषस्य वक्ष्यामि विधिमुद्धरणे शुभम् ।
कारयेदायसं पात्रं ताम्रं वा षोडशाङ्गुलम् ॥

चतुरङ्गुलखातं तु मृन्मयं वाऽपि मण्डलम् ।
पूरयेद्घृततैलाभ्यां विंशत्या वा [1]पलैस्ततः ॥

सुतप्ते निक्षिपेत्तत्र सुवर्णस्य तु माषकम् ।
अङ्गुष्ठाङ्गुलियोगेन तप्तमाषं[2] समुद्धरेत् ॥

'मण्डलम्' वर्तुलम् ।

बृहस्पतिः [८, ७२]

समुद्धरेत्तैलघृतात्सुतप्तात्तप्तमाषकम् ।
अङ्गुष्ठाङ्गुलियोगेन सत्यमामन्त्र्य वीतभीः ॥

'सत्यमामन्त्र्य' 'एह्येहि भगवन्धर्म' इत्यादिमन्त्रेण धर्मं संशोध्य ।

पितामहबृहस्पती[3]

कराग्रं [4]न धुनेद्यस्तु विस्फोटो वा न जायते ।
शुद्धो भवति धर्मेण पितामहवचो यथा ॥

कालिकापुराणे

न धुनेद्यः कराग्रं तु यस्य रक्तं न जायते ।
विस्फोटाद्यैस्तथा दोषैः स शुद्धो [5]यस्य चोज्झितम् ॥

---

1. पलैस्तु ततः–द.
2. तप्तमाषकमुद्धरेत्–द.
3. बृह., ८, ७८.
4. यो न धुनुयात् (वी. मि., २८४)
5. यस्य चोज्झितम्–द; यस्य चोज्झितम्–उ.

## ४६

# अथ फालविधिः

तत्र बृहस्पतिः [८, ७९-८०]

आयसं द्वादशपलं घटितं फालमुच्यते ।
अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तरम् ॥

अग्निवर्णं तु तच्चोरो जिह्वया लेहयेत्सकृत् ।
न दग्धश्चेच्छुद्धिमियादन्यथा तु स हीयते ॥

---

## ४७

# अथ धर्मजाविधिः

तत्र बृहस्पतिः [८, ८२-८५]

पत्रद्वये लेखनीयौ धर्माधर्मौ सितासितौ ।
जीवदानादिकैर्मन्त्रैर्गायत्र्याद्यैश्च सामभिः ॥

आमन्त्र्य पूजयेद्गन्धैः कुसुमैश्च सितासितैः ।
अभ्युक्ष्य पञ्चगव्येन मृत्पिण्डान्तरितौ ततः ॥

समौ कृत्वा नवे कुम्भे स्थाप्यौ चानुपलक्षितौ ।
ततः कुम्भात्पिण्डमेकं प्रगृह्णीताविलम्बितः ॥

धर्मे गृहीते शुद्धः स्यात्संपूज्यश्च परीक्षकैः ।

'जीवदानादिकैः' '[1]मा प्रगामपथो वयम्' इत्यादिमन्त्रैः ।

---

1. यः प्रजामपथो नयत्यादिभिः—ज.

# अथ शपथविधिः

तत्र मनुः [८, ११०]

> महर्षिभिश्च देवैश्च कार्यार्थे[1] शपथाः कृताः ।
> [2]वसिष्ठश्चापि शपथं शेपे पैजवने[3] नृपे ॥

नारदः [४, २४३-२४४]

> शपथा ह्यपि देवनामृषीणां च महात्मनाम् ।
> वसिष्ठः शपथं शेपे यातुधाने तु शङ्कितः ॥
>
> [4]महर्षयस्तथेन्द्राद्याः [5]प्रस्तरार्थे निबोधिताः[6] ।
> शेपुः शपथमव्यग्राः परस्परविशुद्धये ॥

विष्णुः [९, ४-१४]

सर्वेष्वप्यर्थजातेषु मूल्यं कनकं[7] प्रकल्पयेत् । तच्च कृष्णलोने शूद्रं दूर्वाकरं शापयेत् । द्विकृष्णलोने तिलकरम् । त्रिकृष्णलोने [8]रजतकरम् । चतुःकृष्णलोने सुवर्णकरम् । पञ्चकृष्णलोने सीतोद्धृतमहीकरम् । सुवर्णार्धोने कोशो देयः शूद्रस्य । ततः परं यथार्हं धटाग्न्युदकविषाणामन्यतमम् । द्वि-

1. 'कार्यार्थे'–संदिग्धकार्यनिर्णयार्थम्—मेधातिथिः ।
2. 'वसिष्ठश्चेति' पृथङ्निर्देशः प्राधान्यख्यापनार्थः—(मेधातिथिः ।)
3. 'पैजवनो' राजा बभूव--(मेधातिथिः)
4. यातुधानेन रक्षसा अभिशङ्कितो महर्षिर्वसिष्ठः शपथं कृत्वा विशुद्ध इति—असहायः 'सप्तर्षयः' इति नारदसंहिता, २, २१९.
5. सप्तर्षयस्तथेन्द्रेण पुष्करार्थे न शङ्किताः । इति मु. ना. (ed. Jolly)
6. *Viramitrodaya*, p. 287.
7. स्वर्ण–द.
8. मल्करं–द.

गुणार्थे यथाभिहिता समयक्रिया वैश्यस्य । त्रिगुणार्थे राजन्यस्य । चतुर्गुणार्थे ब्राह्मणस्य[1] ॥

'कृष्णलोने' कृष्णलावरे । एवं द्विकृष्णलोन इत्याद्यपि बोद्धव्यम् ।

मनुः [८, ११३-११४]

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥

पुत्रदारस्य चाप्येनं शिरांसि स्पर्शयेत्पृथक् ।

बृहस्पतिः [८, ३३-३४]

सत्यं वाहनशस्त्राणि गोबीजकनकानि[2] च ।
देवब्राह्मणपादांस्तु पुत्रदारशिरांसि च ॥

एते तु शपथाः प्रोक्ताः [3]स्वल्पेऽर्थे सुकराः सदा ।
[4]साहसेष्वभिशापेषु दिव्यान्याहुर्विशोधनम् ॥

[5]नारदः [४, २४८-२५०]

सत्यं वाहनशस्त्राणि गोबीजकनकानि च ।
देवतापितृपादांश्च दत्तानि सुकृतानि च ॥

इत्येते शपथाः प्रोक्ता मनुना स्वल्पकारणे ।
पातकेष्वभिशापे च विधिर्दिव्येषु कीर्तितः ॥

शङ्खलिखितौ—

इष्टापूर्तप्रदानं अन्यांश्च शपथान् कारयेत् ।

1. कोशवर्जे चतुर्गुणे ब्राह्मणस्य—वि. स्मृ.
2. A. S. B., ज, द, बि and S. B. (a)-रजतानि च
3. A. S. B., ज, द and S. B. (a)–मनुना स्वल्पकारणे
4. *Ibid.*, पातकेष्वभिशापे च विधिर्दिव्यः प्रकीर्तितः ।
5. The verses from Nārada are omitted in A. S. B., ज, द and S. B. (a)

<u>मनुः</u> [८, ११५]

यमिद्धो न दहत्यग्निरापो नोन्मज्जयन्ति च ।
[1]न चार्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचिः ॥

<u>कात्यायनः</u> [४६३]

आचतुर्दशकादह्नो यस्य नो राजदैवकम् ।
व्यसनं जायते घोरं स ज्ञेयः शपथे शुचिः ॥

<u>मनुः</u> [८, १११-११२]

न वृथा[2] शपथं कुर्यात्स्वल्पेऽप्यर्थे नरो बुधः ।
वृथा हि शपथं कुर्वन् प्रेत्य चेह च नश्यति ॥

[3]कामिनीषु विवाहेषु गवां भुक्ते तथेन्धने ।
ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम् ॥

<u>यमः</u>

कृत्वा मृषा तु शपथं कीटस्य वधसंयुतम् ।
अनृतेन तु युज्येत वधेन च तथा नरः ॥

तस्मान्न मिथ्याशपथं नरः कुर्याद्यथेप्सितम् ।

इति भट्टहृदयधरात्मज महासान्धिविग्रहिक
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
व्यवहारकाण्डे क्रियापादः[4] ॥

---

1. केशादौ 'न चार्तिमृच्छति' पीडां न प्राप्नोति । स शुद्धः 'शुचिः' निर्दोषः । क्षिप्रं चतुर्दश वाहान्यवधिः स्मृत्यन्तरात्—(मेधातिथिः)

2. मिथ्याशपथे फलाख्यानमेतत् । वृथाऽन्यथाऽसत्यमिति यावत् । (मेधातिथिः)

3. कामः प्रीतिविशेषो विशिष्टेन्द्रियस्पर्शजन्यः, स यासु भवति पुरुषस्य ताः कामिन्यो भार्यावेश्यादयः । तत्र यः शपथः । कामसिद्ध्यर्थो यथा 'नाहमन्यां कामये प्राणेश्वरी मे त्वं' इत्याद्यः । यस्तु 'संप्रयुज्यस्व मया' 'इदं त्वया देयं' 'दास्ये' इति—तत्र भवत्येव दोषः ॥ (मेधातिथिः)

4. So, A. S. B., ज, द and S. B. (a); उ–'इति कल्पतरौ क्रियापादः'

# अथ निर्णयप्रकारः

तत्र व्यासः

प्रमाणैर्हेतुचरितैः शपथेन नृपाज्ञया ।
वादिसंप्रतिपत्त्या वा निर्णयोऽष्टविधः स्मृतः ॥
लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम् ।
अनुमानं विदुर्हेतुस्तर्कश्चेति मनीषिणः[1] ॥
देशस्थितिः पूर्वकृता चरितं समुदाहृतम् ।
अर्थानुरूपाः शपथाः स्मृताः सत्यघटादयः ॥
तेषामभावे राजाज्ञा निर्णयं [2]तद्विदुर्बुधाः ।

अनुमानमिति । [3]तर्कोऽनुमानं निर्णयहेतुरिति मन्यन्त इत्यर्थः ।

बृहस्पतिः [९, १]

धर्मेण व्यवहारेण चारित्रेण नृपाज्ञया ।
चतुष्प्रकारोऽभिहितः सन्दिग्धे [4]वस्तुनिर्णयः ॥
[5]एकैको द्विविधः प्रोक्तः क्रियाभेदान्महर्षिभिः ।
सम्यग्विचार्य कार्यं तु युक्त्या संपरिकल्पितम् ॥
परीक्षितं तु शपथैः स ज्ञेयो धर्मनिर्णयः ।
प्रतिवादी प्रपद्येत यत्र धर्मः स निर्णयः ॥
दिव्यैर्विशोधितः सम्यक् द्वितीयः समुदाहृतः ।

1. मनीषिभिः–उ. 2. यं तु विदुर्बुधाः–द.

3. तर्कानुमाने हेतुरिति–द.

4. A. S. B., ज, द and S. B. (a)–अर्थे विनिर्णयः

5. A. S. B. omits this line, and S. B. (a) omits the next three also.

कात्यायनः [३६]

स्मृतिशास्त्रं तु यत्किञ्चित्कथितं धर्मसाधकैः ।
कार्याणां निर्णयार्थेषु व्यवहारः स्मृतो हि सः ॥

'स्मृतिशास्त्र'शब्देनात्र [1]स्मृतिशास्त्रोक्तसाक्ष्यादीनि प्रमाणान्युच्यन्ते ।

बृहस्पतिः [९, ५]

प्रमाणनिश्चितो यस्तु व्यवहारः स उच्यते ।
वाक्छलानुत्तरत्वेन द्वितीयः परिकीर्तितः ॥

'वाक्छलानुत्तरत्वेन' वाक्छलत्वेन निश्चितो अनुत्तरत्वेन च निश्चितो द्वितीयो व्यवहार इत्यर्थः[2] ॥

कात्यायनः [३७]

यद्यदाचर्यते येन धर्म्यं वाऽधर्म्यमेव वा ।
देशस्याचरणान्नित्यं चरित्रं तत्प्रकीर्तितम् ॥

बृहस्पतिः [९, ६]

अनुमानेन निर्णीतं चरित्रमिति कथ्यते ।
देशस्थित्या द्वितीयस्तु शास्त्रविद्भिरुदाहृतः ॥

कात्यायनः [३८, द्वितीये]

[3]सन्दिग्धा येन साध्यन्ते निश्चितं शास्त्रतो भृगुः ।
तेषां नृपः प्रमाणं स्यात्सर्वस्य हि नृपः प्रभुः ॥
[4]न्यायशास्त्राविरोधेन देशदृष्टैस्तथैव च ।
[5]यं धर्म्यं स्थापयेद्राजा न्याय्यं तद्राजशासनम् ॥

1. A. S. B., ज, द and S. B. (a)–स्मृत्युक्तानि लिखितसाक्ष्यादीनि उच्यन्ते ।
2. A. S. B., ज, द, बि and S. B. (a); lacuna in उ.
3. A. S. B., and S. B. (a)–सन्धिग्धन्यायेन शक्यन्ते; सन्दिग्धा येन शक्यन्ते निश्चेतुं–ज; सन्दिग्धा ये न शक्यन्ते–द.
4. A. S. B., S. B. (a), ज and द–न्यायशास्त्रविरोधेन; यथा शास्त्राविरोधेन–उ.
5. स्वधर्मम्–उ; यं धर्मम् इति A. S. B., S. B. (a), ज and द.

[1]धर्मं च व्यवहारं च चरितं वाऽविलोपयन् ।
स्थित्यैतत् स्थापयेद्राजा धर्म्यं तद्राजशासनम् ॥

'अविलोपयन्' अपरित्यजन्नपि ।

बृहस्पतिः [९, ७]

प्रमाणसहिताऽऽद्यस्तु राजाज्ञा निर्णयः स्मृतः ।
शास्त्रसभ्यविरोधेन [2]तथान्यः संप्रकीर्तितः[3] ॥

'प्रमाणसहिता राजाज्ञा आद्यो निर्णय'इति योजना । [4]'सभ्यशास्त्रविरोधे' सभ्यानां [5]शास्त्राणां च परस्परविप्रतिपत्तौ ॥

नारदः [१, ११]

तत्र सत्ये स्थितो धर्मो व्यवहारश्च[6] साक्षिषु ।
[7]चरितं पुस्तकरणे राजाज्ञायां तु शासनम् ॥

[8]बृहस्पतिः

यस्त्वेवं वेत्ति नृपतिः निर्णयन्तु चतुर्विधम् ।
सोऽस्मिंल्लोके यशः प्राप्य याति शक्रसलोकताम् ॥

---

1. Not in Kane's collection.
2. 'चतुर्थः' इति परा. मा. p. 199.
3. परिकीर्तितः–द.
4. सत्यविरोधे च–द.
5. सत्यानां–द.
6. स्तु–द.
7. चरितं दुस्थकरणे–द.
8. This is supplied by A. S. B., ज and S. B. (a), but A. S. B. reads निर्णयन्तु तद्विधम् and ज 'तथाविधम्'; द reads the śloka thus:

य एवं वेत्ति नृपतिः निर्णयन्तु चतुर्विधम् ।
सोऽस्मिंल्लोके यशः प्राप्य याति शक्रसलोकताम् ॥

# अथ निर्णयबलाबलम्

नारदः [१, १०]

धर्मश्च व्यवहारश्च चरित्रं राजशासनम् ।
चतुष्पाद्व्यवहारोऽयमुत्तरः पूर्वबाधकः ॥

[1]'उत्तरः पूर्वबाधक' इति । धर्मव्यवहारचरित्रराजशासनेषु उत्तरोत्तरः पूर्वस्य बाधक इत्यर्थः ।

बृहस्पतिः [१, १९]

शास्त्रं केवलमाश्रित्य क्रियते यत्र निर्णयः ।
व्यवहारः स विज्ञेयो धर्मस्तेनावहीयते ॥

कात्यायनः [३९]

युक्तियुक्तं तु कार्यं स्याद्दिव्यं यत्र विवर्जितम् ।
धर्मस्तु व्यवहारेण बाध्यते तत्र नान्यथा ॥

बृहस्पतिः [१, २०]

देशस्थित्याऽनुमानेन [2]नैगमानुमतेन च ।
क्रियते निर्णयस्तत्र व्यवहारस्तु बाध्यते ॥

'नैगमाः' पौरा वणिजः । 'अनुमानेन नैगमाऽनुमतेन' इति संबन्धः ।

कात्यायनः [४०-४१]

प्रतिलोमप्रसूतेषु तथा दुर्गनिवासिषु ।
विरुद्धं नियतं प्राहुस्तं धर्मं न विचालयेत् ॥

1. एतदारभ्य 'क्रियते यत्र निर्णयः' इत्येतत्पर्यन्तो भागः बि. कोशे भ्रष्टः ।
2. नियमानुनयेन च–द.

निर्णयं तु यदा कुर्यात्तेन धर्मेण पार्थिवः ।
व्यवहारश्चरित्रेण तदा तेनैव बाध्यते ॥

'तेन धर्मेण' देशाचाररूपेण ।

बृहस्पतिः [१, २१]

विहाय चरिताचारं यत्तु[1] कुर्यात्पुनर्नृपः ।
निर्णयं सा तु राजाज्ञा चरित्रं बाध्यते तथा[2] ॥

'चरिताचारम्' पूर्वपूर्वाचरितमाचारम् ।

कात्यायनः [४२, ४३]

विरुद्धं न्यायतो यत्तु[3] चरित्रं कल्प्यते नृपैः ।
एवं तत्र निरस्येत चरित्रं तु नृपाज्ञया ॥

अनेन विधिना प्रोक्तं बाधकं यद्यदुत्तरम् ।
अन्यथा बाधनं यत्र तत्र धर्मो विहन्यते ॥

इति निर्णयप्रकारः ॥

---

1. यत्र-बि.
2. तया-द.
3. यस्तु-द.

# अथ निर्णीतकृत्यम्

तत्र नारदः [२, ४१]

स्वयमभ्युपपन्नोऽपि [1]सुचर्यावसितोऽपि सन्[2] ।
[3]क्रियावसन्नोऽप्यर्हेत्तु[4] परं सभ्यावधारणम् ॥

सभ्यैरेव [5]कृता पश्चाद्राज्ञा शास्यः [6]स्वशास्त्रवत् ।

'स्वयमभ्युपपन्नः' स्वयमङ्गीकृतपराजयः । 'सुचर्यावसितः' सुचेष्टया वैवर्ण्यस्वेदकम्पादिकया पराजितत्वेन ज्ञातः । 'क्रियावसन्नः' क्रियया साक्षिदिव्यादिकया प्राप्तावसादः । 'परं सभ्यावधारणम्' अनन्तरं सभ्यानामेकस्थानामनेनावसादनेन पराजित इति कीर्तनम् ।

याज्ञवल्क्यः [२, ११]

निर्णयं भावितो दद्याद्धनं राज्ञे च तत्समम् ।
मिथ्याभियोगे द्विगुणमभियोगाद्धनं वहेत् ॥

1. स्वचर्या–ज, द.

2. 'सि' for 'स्थि'–द.

3. अत्रावसन्नास्त्रयोऽभिहिताः । एकः स्वयमभ्युपपन्नः । स्वमुखेन प्राप्तावसायः । द्वितीयः स्वचर्यावसन्नः । कूटलिखितसाक्षिप्रपञ्चेन प्रपञ्चकरणेन स्वकीयदुष्टचर्यया दुश्चरित्रेणावसन्नः । तृतीय उद्दिष्टसाक्षिभिरेवावसायं प्रापितः । अयं त्रिविधोऽप्यवसन्नो राज्ञा स्वेच्छया विधूत्य दण्डनीयः । किं तर्हि परं सभ्यावधारणं सोऽप्यर्हेत । किमुक्तं भवति । यावत्सभ्यैर्दण्डावधारणं निगदितम् । तावन्न धारणीयोऽसौ इति ॥ (असहायः)

4. 'प्यर्हेत', इति मु. ना., पृ. ३८.

5. 'जितः' इति मु. नारदीये; हृतः–द.

6. 'स्वशास्त्रतः' इति A. S. B. and S. B. (a); 'सशास्त्रतः' इति ज, द.

मनुः [८-५१; ५९]

अर्थेऽपव्ययमानं तु करणेन विभावितम् ।
दापयेद्धनिकस्यार्थं दण्डलेशं च शक्तितः ॥

यो यावन्निह्नुवीतार्थं [1]मिथ्यां यावति वादयेत् ।
तौ नृपेण ह्यधर्मज्ञौ दाप्यौ तद्द्विगुणं दमम् ॥

'अपव्ययमानम्' अपनिह्नुवानम् । 'करणेन' लिखितादिना । 'यो यावत् तौ'इति । यो यावन्तमपजानीते अधमर्णः, मिथ्यां वा यावति धने अभियुञ्जीत तावुभावप्युत्तमर्णावाशयदोषेण विवादवृत्तौ द्विगुणं दण्डं दाप्याविल्यर्थः । आशयदोषव्यतिरेकेण[2] तु दारिद्र्यविस्मरणादिनापह्नवविषये दण्डलेशं च शक्तित इत्यवगन्तव्यम् ।

व्यासः

[3]निह्नवे तु यदा वादी स्वयं तत्प्रतिपद्यते ।
ज्ञेया सा प्रतिपत्तिस्तु [4]तस्यार्धविनयः स्मृतः ॥

नारदः [२, ३७]

मिथ्याभियोगिनो ये स्युः द्विजानां शूद्रयोनयः ।
तेषां जिह्वां[5] समुत्कृत्य राजा शूले निवेशयेत्[6] ॥

1. 'मिथ्यां यावति' विपरीतं धनं वदेदुत्तमर्णः-(मेधातिथिः)
2. 'व्यतिरिक्ते न तु दारिद्र्यविस्मरणादिनापह्नवविषये' इति ज, द.
3. A. S. B., ज, द and S. B. (a)-निह्नुते
4. S. B. (a)-तस्यार्धे; तस्यार्ध-द. तस्याधिः-उ.
5. A. S. B., ज, द and S. B. (a)-जिह्वा
6. विवासयेत्-मु. नारदीये

याज्ञवल्क्यः [२, २०]

[1]निह्नुते लिखितं नैकं एकदेशविभावितः ।
दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः ॥

यदा नैकं सुवर्णरजत[2][ताम्रादिलिखितमभियुक्तस्सन् 'निह्नुते' पुनरपि तदैकदेशे सुवर्णादौ शाक्ष्यादिभिः वादी 'विभावितः' अङ्गीकारितः उद्धरेत् राज्ञा सर्वाश्रजताद्यर्थान् दाप्यः । तत्रापि] 'न ग्राह्यस्त्वनिवेदितः' पूर्वोद्देशेन दत्तमिति यद्यभियोक्त्रा पूर्वभाषाकालेऽनुपन्यस्तोऽर्थः एकदेशविभावितत्वेऽप्य-भियोक्त्रा न ग्राहयितव्य इत्यर्थः ॥

[3]नारदः

अनेकार्थाभियुक्तेन सर्वार्थव्यपलापिना ।
विभावितैकदेशेन देयं यदभियुज्यते ॥

याज्ञवल्क्यः [२, १८]

सपणश्चेद्विवादः स्यात्तद्गृहीतं[4] तु दापयेत् ।
स दण्डं[5] द्विगुणं चैव धनिने धनमेव च ॥

बृहस्पतिः [९, २५]

अपराधानुरूपश्च दण्डोऽयं परिकल्पितः ।

---

1. 'निह्नुते लिखितोऽनेकमेकदेशविभावितः' इति विश्वरूपाचार्यः पठति । 'नैकमेक-देशे' इति विज्ञानेश्वरपाठः । 'निह्नुते लिखितं यत्र नैकदेशविभावितः' इति A. S. B., ज, द S. B. (a) मातृकाः पठन्ति.

2. [ ] Lacuna in उ and त्रि. rectified from A. S. B., ज, द and S. B. (a)

3. अपरार्के, २, २० (पृ. ६२५) Missing in Jolly's edn.

4. A. S. B., ज, द and S. B. (a) and *Nirnayasagar* edn. read तत्र हीने

5. दण्डं च सपणं–A. S. B. and S. B. (a); दण्डं च सपणं–ज, द.

# अथ [1]जयीप्रतिपत्तिः

तत्र बृहस्पतिः [९, २१]

> प्रतिज्ञाभावनाद्वादी प्राड्विवाकादिपूजनात् ।
> जयपत्रस्य चादानाज्जयी लोके निगद्यते ॥

कात्यायनः [२६२]

> [2]सिद्धेनार्थेन संयोज्यो वादी सत्कारपूर्वकम् ।
> [3]लेख्यं स्वहस्तसंयुक्तं तस्मै दद्यात्तु[4] पार्थिवः ॥

व्यासः

> व्यवहारान् स्वयं दृष्ट्वा श्रुत्वा वा प्राड्विवाकतः ।
> जयपत्रं ततो दद्यात्परिज्ञानाय पार्थिवः ॥

कात्यायनः [२६४]

> निरस्तं लिखितं यत्तु तत्तु सद्यो विनाशयेत्[5] ।
> पश्चात्कारक्रिया चाथ[6] निरस्येत्तन्न[7] संशयः ॥
>
> निरस्ता तु क्रिया यत्र प्रमाणेनैव वादिना ।
> पश्चात्कारो भवेत्तत्र न सर्वासु विधीयते ॥
>
> दासस्त्रीभूगृहारामलेखकानां पराजये ।
> [8]एतेष्वेव यदा देयः पश्चात्कारस्तु पार्थिवैः ॥

'पश्चात्कारो' निर्णयानन्तरजयपत्रादिका क्रिया । 'प्रमाणम्' साक्ष्यादि । 'एतेष्वेव' इत्युपलक्षणम् ॥

---

1. A. S. B. and S. B. (a)-जयी; अथपिप्रितिपत्तिः-ज; अर्थजयिप्रतिपत्तिः-द.
2. Aparārka (p. 684) reads सिद्धे चार्थेन
3. A. S. B. and S. B. (a)-लभ्यं तदर्थसंयुक्तं; लेख्यं तदर्थे संयुक्तं-ज, द.
4. च-ज, द, बि.
5. A. S. B., ज, द and S. B. (a)-विनाशयेत्; विनाशितः-उ.
6. *Ibid.*, कार्या for चाथ
7. A. S. B.-निरस्यन्तं न संशयः; निरस्येत्तं न संशयः
8. S. B. (a)-तत्तथैव सदा देयः

## ५३

# अथ पुनर्न्यायः

तत्र मनुः [९, २३३]

> तीरितं चानुशिष्टं च यत्र क्वचन यद्भवेत् ।
> कृतं तद्धर्मतो विद्यान्न तद्भूयो निवर्तयेत् ॥

'तीरित'मिति 'पार तीर कर्मसमाप्तौ' इत्यस्य निष्ठाप्रत्यये रूपम् । तेन निर्णीय समापितमित्यर्थः । 'अनुशिष्टं' साक्षिभिरुक्तम् । 'यत्र क्वचन' ग्रामादि-सभायाम् ।

नारदः [१, ६५]

> तीरितं चानुशिष्टं च यो मन्येत विधर्मतः[1] ।
> द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत् ॥

तथा [२, ४०]

> साक्षिसभ्यावसन्नानां दूषणे दर्शनं[2] पुनः ।
> स्वचर्यावसितानां तु नोक्तः पौनर्भवो विधिः ॥

'साक्षिसभ्यावसन्नानाम्' साक्षिसभ्यद्वारेण प्राप्तावसादानाम् । 'दूषणे' साक्षिषु सभ्येषु चेत्यन्वयः । 'दर्शनम्' पुनः पुनर्व्यवहारदर्शनं कर्तव्यमित्यर्थः । 'स्वचर्यावसितः' स्वव्यापारेण परस्परविरुद्धभाषणादिना पराजितः[3] ।

1. *Manusmṛti*, Gujarathi Press edn. prints this Śloka (p. 385) and Chowkhamba ed. ३१९ as ascribed to Manu by some writers, with the variant विकर्मणा for विधर्मतः

2. A. S. B., द, ज and S. B. (a)–दूषणे दर्शनं, which is also the reading in Jolly's edn. (p. 371).

3. A. S. B. and S. B. (a)–स्वव्यापारेण परस्परविरुद्धभाषणादिना पराजितः–ज.

[1]बृहस्पतिः [९, २२]

पलायनानुत्तरत्वादन्यपक्षाश्रयेण च ।
हीनस्य गृह्यते वादो न [2]स्ववाक्यैर्जितस्य तु ॥

[3]बृहस्पतिकात्यायनौ

कुलादिभिर्निश्चितेऽपि न सन्तोषं गतश्च यः ।
विचार्य तत्कृतं [4]राजा कुकृतं पुनरुद्धरेत् ॥

बृहस्पतिः [९, २४]

निश्चित्य बहुभिः सार्धं ब्राह्मणैः शास्त्रपारगैः ।
दण्डयेज्जयिना सार्कं पूर्वसभ्यांस्तु दोषिणः[5] ॥

याज्ञवल्क्यः [२, ३०५]

दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु ।
सभ्याः[6] सजयिनो दण्ड्या विवादाद्द्विगुणं [7]दमम् ॥

[यो मन्येताऽजितोऽस्मीति न्यायेनाऽपि पराजितः ।
सभायां तत्पुनर्जित्वा दापयेद्द्विगुणं दमम्[8] ॥]

1. द, A. S. B. ज, द S. B. (a) and *Vīramitrodaya* (पृ. १२३) ascribe the Śloka which follows to बृहस्पति, whose name is missing in the other manuscripts.

2. A. S. B. न स्वरेषु for न वाक्यैर्जितस्य तु । *Vīramitrodaya*, and ज read न स्ववाक्यजितस्य तु ।

3. बृ., ९, २३; का., ४९६.

4. राजा न कृतं–द.

5. A. S. B. and ज–दूषिणः

6. भ्याश्च जयिनो–द.

7. दमम्

8. याज्ञवल्क्य, २, ३०६–Supplied by द. Viśvarūpa and the *Mitākṣarā* read तमागतं and तमायान्तं for सभायां तत्

[1]नारदः [२, ६६]

दुर्दृष्टे व्यवहारे तु सभ्यास्तं दण्डमाप्नुयुः ।
न हि जातु विना दण्डं कश्चिन्मार्गेऽवतिष्ठते[2] ॥

मनुः [९, २३४]

अमात्याः प्राड्विवाको वा ये कुर्युः कार्यमन्यथा ।
तत्स्वयं नृपतिः कुर्यात्तान् सहस्रं [3]च दण्डयेत् ॥

---

1. A. S. B., ज and S. B. (a)–as also *Viramitrodaya*, १२३.

2. अयुक्तनिर्णयदोषः सभ्यानामुपरि चरति । ततः सभ्या अपि तं दण्डं प्राप्नुयुः । (असहायः)

3. तु दापयेत्–द; तु दण्डयेत्–वि.

# अथ कृतनिवृत्तिः

तत्र म. विष्णू[1]

यस्मिन्यस्मिन् विवादे तु कौटसाक्ष्यं कृतं[2] भवेत्[3] ।
तत्तत्कार्यं निवर्तेत कृतं वाप्यकृतं भवेत् ॥

नारदः [१, ४३]

[4]स्त्रीषु रात्रौ बहिर्ग्रामादन्तर्वेश्मन्यरातिषु[5] ।
व्यवहारः कृतोऽप्येषु पुनः कर्तव्यतामियात् ॥

मनुनारदौ [मनु. ८, १६४; ना. २, १५]

सत्या[6] न भाषा भवति यद्यपि स्यात्प्रतिष्ठिता ।
बहिश्चेद्भाष्यते धर्मान्नियताद्व्यावहारिकात्[7] ॥

1. A. S. B., ब and S. B. (a) and *Vīramitrodaya*, १२५; तत्र मनुः–उ, बि; मनु. ८, ११७; विष्णु. ८, ३९.

2. कूटसाक्ष्यानृतमिति मुद्रितविष्णुस्मृतिः (पृ. ३५)

3. यस्मिन् व्यवहारे कूटसाक्षिभिर्व्यवहारः कृतः स निवर्तयितव्यः—**मेधातिथिः**

4. 'स्त्रीषु' स्त्रीमध्ये । 'कृत' इति प्रत्येकमभिसंबध्यते । तासामव्यवस्थितचित्तत्वात् । रात्रावप्रकाशत्वात् वञ्चना भवति । बहिर्ग्रामात् । येषां ग्रामे बहिश्च संभवः । शून्यत्वात् बहिः । अन्तर्वेश्मनि, स्वगृहे श्रोतॄणामभावात् असाक्षित्वप्रसङ्गात् । अरातिषु वैरिमध्ये, ते हि द्वेषादन्यथा ब्रूयुः । एषु कृतोऽपि पुनस्सम्यक्कर्तव्यो भवतीति नैषु कर्तव्य इति प्रतिषेध एवोच्यते ॥ (**नारदीयमनुसंहिताभाष्ये**, १–३७).

5. रात्रिषु (?)–बि.

6. सभ्या (?)–उ.

7. कस्यचिदनुष्ठेयार्थस्य प्रतिपादकः शब्दो 'भाषा' । सामान्येन भवति योऽर्थस्तथा प्रतिपाद्यते सोऽनुष्ठेयः । किं सर्वाऽपि भाषा न सत्या ? नेत्याह—'बहिश्चेत्' धर्माद् धर्मबाह्यं यदुच्यते शास्त्राचारविरुद्धं पश्चादधिका वृद्धिः, भार्यापत्यविक्रयादिरन्वयिनः सर्वस्वदानमित्येवमादि । 'यद्यपि स्यात् प्रतिष्ठिता' पत्रलिखिता प्रतिभुवो वा दत्ता तथापि न सिध्यति ॥ (**मेधातिथिः**)

नियता व्यावहारिकधर्मविषया भाषोच्यते । सा प्रतिष्ठितापि लेख्यादि-प्रमाणवत्यपि न सत्या । तया योऽर्थः प्रतिपाद्यते स नानुष्ठेयो यथा………[1] कश्चिदनेन मम सर्वस्वं दत्तमित्यादि ।

मनुः [८, १६५, १३८]

[2]योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यत्र वाप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेत् ॥

बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चापि लेखितम् ।
सर्वान् बलकृतानर्थानकृतान्मनुरब्रवीत् ॥

'योगः' छद्म । तेन यद्बन्धकार्पणादि[3] कृतं तद्राजा निवर्तयेदित्यर्थः । 'उपधिः' छलम् ।

तथा [८, १६३]

[4]मत्तोन्मत्तार्ताध्यधीनैर्बालेन स्थविरेण वा ।
असम्बद्धकृतश्चैव व्यवहारो न सिध्यति ॥

1. Lacuna signified by dots denotes unintelligible words in all manuscripts. The extract from Medhātithi may give a clue to their original form.

2. 'योगः' छद्म । तेन यत् 'आधमनं' बन्धकार्पणं कृतमिति । 'उपधिः' छद्म । (मेधातिथिः ।)

3. A. S. B., ज, द and S. B. (a)–यद्वचनं कापट्यादिकृतं

4. 'आर्तो' धनबन्धुनाशादिपीडितः प्रत्युपस्थितभयश्च । 'अध्यधीनो' गर्भदासः पुत्रशिष्यौ भार्या च । यदपि रूढया गर्भदास एवाध्यधीनः तथाऽपि अस्वतन्त्रोपलक्षणार्थत्वात् सर्व एव ते गृह्यन्ते । 'बालो' अप्राप्तव्यवहारः षोडशवर्षात्प्राक् । 'स्थविरो' लुप्तस्मृतिः जराभिभूतोऽतीतव्यवहारः । 'असंबद्धकृतः' परार्थनियुक्तो यो व्यवहारयति—न भ्राता न पिता—'देवदत्ताय शतं धारयति' इत्येवमादि वक्तुं न लभ्यते । 'व्यवहार'शब्दः सर्वव्यवहारग्रहणार्थः ॥ (मेधातिथिः)

'मध्यधीनो' दासः ।

नारदः [४, ३९-४२; ४, २९-३०]

यद्बालः कुरुते कार्यमस्वतन्त्रस्तथैव च ।
अकृतं तदपि प्राहुः [1]शास्त्रे शास्त्रविदो जनाः ॥

स्वतन्त्रोऽपि हि यत्कार्यं कुर्यादप्रकृतिं गतः ।
[2]तदप्यकृतमेवाहुरस्वतन्त्रः स्वहेतुतः ॥

कामक्रोधाभिभूतार्तभयव्यसनपीडिताः ।
रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिं गताः ॥

तथा दासकृतं कार्यमकृतं [3]परिचक्षते ।
अन्यत्र स्वामिसन्देशान्न दासः प्रभुरात्मनः ॥

[4]पुत्रेण च कृतं कार्यं यत्र स्याच्छन्दतः पितुः[5] ।
तदप्यकृतमेवाहुर्दासः पुत्रश्च तौ समौ ॥

कात्यायनः [४६७]

न क्षेत्रगृहदासानां दानाधमनविक्रयः ।
अस्वतन्त्रकृताः सिद्धिं प्राप्नुयुर्नानुवर्णिताः[6] ॥

'नानुवर्णिताः' अननुमताः, स्वतन्त्रेणेति शेषः ।

1. 'धर्मशास्त्रविदो' इति मु. नारदीये
2. 'अकृतं तदपि प्राहुरस्वातन्त्र्यस्य हेतुतः' इति मुद्रितनारदीये
3. परिरक्षते–द.
4. पुत्रेणापि कृतं–द.
5. A. S. B., ज and *Vīramitrodaya*, (p. 126) read यत्स्यादच्छन्दतः पितुः, which suits the context better.
6. *Vīramitrodaya*, (p. 126) A. S. B., द and S. B. (a)–वर्तिताः

नारदः [२, २६-२७; २, ४२]

स्त्रीकृतान्यप्रमाणानि कार्याण्याहुरनापदि ।
विशेषतो गृहक्षेत्रदानाधमनविक्रये[1] ॥

एतान्येव प्रमाणानि भर्ता यद्यनुमन्यते ।
पुत्रः पत्युरभावे[2] वा राजा वा पतिपुत्रयोः ॥

कुले ज्येष्ठस्तथा श्रेष्ठः प्रकृतिस्थश्च यो भवेत् ।
[3]तत्कृतं स्यात्कृतं कार्यं नास्वतन्त्रकृतं कृतम् ॥

---

1. विक्रयाः–द, बि, मु. ना.
2. पुत्रः पत्युरभावे वा–द ; पुत्रस्तत्पुत्रभावे वा–उ; भावे च–मु. ना.
3. 'तत्कृतं तु कृतं प्राहुः' इति मु. ना.

# अथ [1]स्वतन्त्रास्वतन्त्रलक्षणम्

तत्र नारदः [४, ३१, ३३-३७]

स्वातन्त्र्यं तु स्मृतं ज्यैष्ठ्यं ज्यैष्ठ्यं गुणवयःकृतम् ।

तथा[2]

अस्वतन्त्राः प्रजाः सर्वाः स्वतन्त्रः पृथिवीपतिः ।
अस्वतन्त्रः स्मृतः शिष्य आचार्ये तु स्वतन्त्रता ॥

अस्वतन्त्राः स्त्रियः सर्वाः [3]पुत्रा दासाः परिग्रहाः ।
[4]स्वतन्त्रस्तत्र तु गृही यस्य तत्स्यात्क्रमागतम् ॥

गर्भस्थैः सदृशो ज्ञेयः आष्टमाद्वत्सराच्छिशुः ।
बाल आषोडशाद्वर्षात्पोगण्डश्चेति कीर्त्यते[5] ॥

1. स्वतन्त्रलक्षणम्-ज.

2. A. S. B., द, ज and S. B. (a) as well as *Vīramitrodaya*, (p. 127) properly have तथा intervening. The omitted Śloka (२, ३२) is paraphrased in the verses cited. It reads—

त्रयः स्वतन्त्रा लोकेऽस्मिन् राजाऽऽचार्यस्तथैव च ।
प्रतिवर्णं च सर्वेषां वर्णानां स्वे गृहे गृही ॥ (२, ३२)

3. A. S. B., द, S. B. (a) and *Vīramitrodaya*, (p. 127)—पुत्राः दासाद्याश्च परिग्रहाः ; स्त्रियः पुत्रा दायाद्याश्च परिग्रहाः-ज.

4. A. S. B., and S. B. (a) give the second half thus :

स्वतन्त्रता गृहे यस्य पुत्रस्य स्यात्क्रमागता ।

'द' reads स्वतन्त्रता गृहेशस्य पुत्रस्य स्यात् क्रमागता ।

*Vīramitrodaya*, (p. 127) and ज, which cite the entire passage, omit this line.

5. A. S. B., द, ज and S. B. (a) read गद्यते for कीर्त्यते; *Vīramitrodaya*, (p. 127) gives the reading शब्द्यते.

परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते ।
जीवतोर्न स्वतन्त्रः स्याज्जरयापि समन्वितः ॥

तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात् ।
अभावे बीजिनो माता तदभावे तु पूर्वजः ॥

काात्यायनः [४६६]

पिताऽस्वतन्त्रः पितृमान् भ्राता भ्रातृव्य एव वा ।
कनिष्ठो वाऽविभक्तस्वो दासः [1]परिकरस्तथा ॥

'पिताऽस्वतन्त्रः' पितृमानस्वतन्त्र इत्यर्थः । 'अविभक्तस्वः' अविभक्तधनः ।

हारीतः

दानार्थे वा धनार्थे वा धर्मार्थे वा विशेषतः ।
आदाने वा विसर्गे वा न स्त्री स्वातन्त्र्यमर्हति ॥

नारदः [२, ३८]

स्वतन्त्राः सर्व एवैते परतन्त्रेषु नित्यशः ।
अनुशिष्टौ विसर्गे च विक्रये चेश्वरा मताः ॥

'एते' [2]पूर्वोक्तराजादयः ।

कात्यायनः [४६८-४६९]

प्रमाणं सर्व एवैते पण्यानां क्रयविक्रये ।
यदि संव्यवहारं प्राक् कुर्वन्तो ह्यनुमोदिताः ॥

क्षेत्रादीनां तथैव स्याद्भ्राता भ्रातृसुतः सुतः ।
निसृष्टाः कृत्यकरणे गुरुणा यदि गच्छता ॥

1. A. S. B. ज, द S. B. (a) and *Viramitrodaya*, (p. 128) read कर्मकरः for परिकरः

2. पूर्वोक्ता-ज, द, बि.

[1]निसृष्टार्थस्तु यो यस्मिन् तस्मिन्नर्थे प्रभुस्तु सः ।
[2]तद्भर्ता तत्कृतं कार्यं नान्यथा कर्तुमर्हति ॥

बृहस्पतिः [९, २९, २८]

यः स्वामिना नियुक्तस्तु धनायव्ययपालने ।
कुसीदकृषिवाणिज्ये निसृष्टार्थस्तु स स्मृतः ॥

प्रमाणं तत्कृतं सर्वं[3] लाभालाभव्ययोदयम् ।
स्वदेशे वा विदेशे वा [4]स्वामी तन्न विसंवदेत् ॥

कात्यायनः [४७१]

[5]सुतस्य सुतदाराणां वशित्वं त्वनुशासने ।
विक्रये चैव दाने च वशित्वं न सुते प्रभुः ॥

इति महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेव-
महासन्धिविग्रहिकेण भट्टहृदयधरात्मजेन
भट्टश्रीलक्ष्मीधरेण विरचिते कृत्यकल्पतरौ
व्यवहारकाण्डे व्यवहारमातृका
समाप्ता

---

1. Missing half verse in उ, वि, restored from A. S. B., ज, द and S. B. (a)

2. सद्भर्ता–ज.

3. तत्प्रमाणं कृतं सर्व–द.

4. 'न स्वातन्त्र्यं विसंवदेत्' (पराशरमाधवीय, २१८)

5. 'अतः सुतविक्रयादिकार्यं स्वतन्त्रप्रकृतिस्थकृतमपि निवर्तनीयमित्यभिप्रायः । एकपुत्र-विषयमेतदिति दत्ताप्रदानिकाख्यपदे वक्ष्यामः ।' (स्मृतिचन्द्रिका, p. 310) 'विक्रयं चैव दानञ्च न नेयाः स्युरनिच्छवः, दाराः पुत्राश्च' इत्येतदनापद्विषयमिति स्मृतिचन्द्रिकाकारः मन्यते (p. 446). मित्रमिश्रस्तु 'एतदप्यनापदीति वक्ष्यते' इति निर्णयति व्यवहारप्रकाशे, (१२८).

# अथर्णादानादिव्यवहारपदानि[1]

## ५६

## अथ ऋणादानविधिः

तत्र बृहस्पतिः [१०, १-२]

[2]पदाङ्कसहितस्त्वेष व्यवहारः प्रकीर्तितः ।
विवादकारणान्यस्य[3] पदानि शृणुताधुना ॥

ऋणादानप्रदानानि द्यूताह्वानान्तिकानि च ।
क्रमशः [4]संप्रवक्ष्यामि क्रियाभेदांश्च तत्वतः ॥

नारदः [४, १; ९८]

ऋणं देयमदेयं च येन यत्र यथा च यत् ।
दानग्रहणधर्माश्च ऋणादानमिति स्मृतम् ॥

[5]स्थानलाभनिमित्तं [6]यद्दानग्रहणमिष्यते ।
तत्कुसीदमिति ज्ञेयं तेन वृत्तिः कुसीदिनाम् ॥

'स्थान'मत्र मूलधनस्थितिः । 'लाभः' कलादिप्राप्तिः ।

बृहस्पतिः [१०, ६; ५]

कुत्सितात्सीदतश्चैव निर्विशङ्कैः प्रगृह्यते ।
चतुर्गुणं [7]वाष्टगुणं [8]कुसीदाख्यमतः स्मृतम् ॥

1. B. J., and *Vīramitrodaya*, व्यवहारपदानि B. J. begins here.
2. 'पदांशसहित' इति व्यवहारमाधवीये.
3. कारणान्यत्र–B. J.
4. क्रमशश्च प्रवक्ष्यामि–B. J.
5. स्थानं–द.
6. दानं–द.
7. चाष्टगुणं–द, वि.
8. B. J., तत् कुसीदमिति स्मृतम्

परिपूर्णं गृहीत्वाधिं बन्धं वा साधु लग्नकम् ।
लेख्यारूढं साक्षिमद्वा ऋणं दद्याद्धनी सदा ॥

'कुत्सितात्सीदतश्च' इत्यधमर्णविशेषणे[1] ।

नारदः [४, ११७]

विश्रम्भहेतू द्वावत्र प्रतिभूराधिरेव च ।
लिखितं साक्षिणश्च[2] द्वे [3]प्रमाणव्यक्तिकारके ॥

कात्यायनः [४९७]

न स्त्रीभ्यो [4]बालदासेभ्यः प्रयच्छेत्किञ्चिदुद्धृतम् ।
दाता न लभते [5]तत्तु तेभ्यो दत्तं च यद्वसु ॥

'उद्धृतम्' उद्धारम्[6] ।

(क) अथ वृद्धिः

तत्र बृहस्पतिः[7] [१०, २८]

[8]वसिष्ठवचनप्रोक्तं वृद्धिं वार्धुषिके शृणु ।
पञ्च माषास्तु विंशत्यामेवं धर्मो न हीयते ॥

'विंशति'रत्र माषाणाम्[9] ।

गौतमः [१२, २६]

कुसीदवृद्धिर्धर्म्या[10] विंशतिः पञ्चमाषिकी प्रतिमासम्[11] ।

1. B. J., विशेषणम् ।
2. B. J.. श्चैव for श्च द्वे
3. B. J., ज, and द–प्रमाणे
4. दासबालेभ्यः–B. J., ज, द.
5. तन्तु–द.
6. B. J., उद्धारः ।
7. B. J., ज, and द–तत्र वसिष्ठः
8. श्लोकोऽयं वसिष्ठस्मृतौ (२–५५) दृश्यते
9. A. S. B. द, ज and S. B. (a)–पणानाम्; B. J., पलानाम्
10. धर्म्या विंशतिः–द; धर्म्या स्यात् । विंशतिः–वि.
11. B. J. omits प्रतिमासम्; मासम्–गौ. ध. सू.

स्मृतिः

माषो विंशतिभागस्तु [1]पणस्य परिकीर्तितः ।

मनुः [८, १४०]

[2]वसिष्ठविहितां वृद्धिं सृजेद्वित्तविवर्धिनीम् ।

अशीतिभागं गृह्णीयान्मासाद्वार्धुषिकः शते ॥

याज्ञवल्क्यः [२, ३७]

अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके ।

बृहस्पतिः [१०, २२]

[3]अशीतिभागो वर्धेत [4]लाभो द्विगुणतामियात् ।

प्रयुक्तं सप्तभिर्वर्षैस्त्रिभागोनैर्न संशयः[5] ॥

व्यासः

सबन्धे भाग आशीतः साष्टो भागः[6] सलग्नके ।

निराधाने द्विकशतं मासलाभ उदाहृतः ॥

'आशीतः' [7]अशीतितमः । अयमेव सलग्नके स्वकीयाष्टम[8]भागसहितः साष्टभागः । 'निराधाने' बन्धकरहिते ।

1. B. J. पलस्य

2. अशीतीति विधेयनिर्देशः । वसिष्ठविहितामित्यादिरर्थवादः–(मेधातिथिः)

3. यद्यप्यविशेषेणाशीतिभागोऽभिहितः तथापि ब्राह्मणस्यैवायम् । अन्येषां तु पादवृद्ध्या वृद्धिकल्पनम् । (विश्वरूपः)

4. लाभे–द.

5. B. J., भागोऽत्र न संशयः ।

6. B. J., साष्टभागः–ज, द.

7. Supplied by A. S. B. and S. B. (a) *Vīramitrodaya*, (p. 296) citing the verse with the variant reading षष्ठो भागः सलग्नके, remarks: "कल्पतरौ साष्टभाग इति पठित्वा सलग्नके अशीतितमो भागः स्वकीयाष्टमभागसहितो मासवृद्धिरित्युक्तम्" ॥ "एतच्च ब्राह्मणविषयम्, क्षत्रियादौ पुराणत्वादिविधानात्" (विवादरत्नाकर, ८)

8. B. J., अष्टभागेन नवत्यर्थकस्त्वमी

मनुः[1] [८, १४१]

[2]द्विकं शतं वा गृह्णीयात्सतां धर्ममनुस्मरन् ।
द्विकं शतं हि गृह्णानो न भवत्यर्थकिल्बिषी[3] ॥

हारीतः

'पुराणपञ्चविंशत्यां[5] मासेऽष्टपणा वृद्धिः । एवं सद्विमासैश्चतुर्भिर्वर्षैः द्विःपर्यागतं संतिष्ठते, एषा धर्मवृद्धिः । नानया धर्माच्च्यवते ॥

'पुराणः' षोडश पणाः । 'द्विःपर्यागतम्' द्विगुणीभूतम् । 'संतिष्ठते' व्यवतिष्ठते, न पुनर्विवर्धत इत्यर्थः ।

मनुः [८, १४२]

द्विकं त्रिकं चतुष्कं च पञ्चकं च शतं समम् ।
मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्वशः ॥

[6]'द्विकं' द्वौ[पुराणौ मासि] वृद्धिर्दीयते यस्मिन् मूलधने तथा । एवं त्रिकाद्यपि । 'समं' मात्रयाप्यनधिकम् ।

1. B. J. omits मनुः and the the Śloka following.

2. द्वौ वृद्धिरस्मिन् शते दीयते तद् द्विकं शतम्-(मेधातिथिः)

3. 'न भवत्यर्थकिल्बिषी' अन्यायेन परस्वग्रहणात् पापमर्थकिल्बिषं तदस्यास्तीत्यर्थकिल्बिषी ।-(मेधातिथिः)

4. B. J., पुराणपञ्चविंशत्याम्; पुराणं पञ्च-उ, ज.

5. त्या मासे

6. Lacuna in Mss. other than A. S. B., S. B. (a) and ज, whose readings are also faulty. ब्राह्मणादिवर्णक्रमेण चतुर्णां वर्णानां सकाशाद् द्विकादयश्चत्वारः कल्पा यथासंख्येन ग्राह्यतयाऽनुज्ञायन्ते । 'समं', न पादेन वाऽर्धेन वाऽधिकम् । तदाधिक्येपि सपादद्विकं सार्धद्विकमिति द्विकादिव्यपदेशस्यानिवृत्तेराशङ्कानिवारणार्थं 'सम' ग्रहणम् । ......'समाम्' इति पाठान्तरम् । संवत्सरं यावदेषा वृद्धिर्न परतोऽपि । महत्त्वाद् द्वैगुण्यं स्यात् ॥ (मेधातिथिः); [ ] Supplied by वि. र., ९.

याज्ञवल्क्यः [२, ३७]

वर्णक्रमाच्छतं द्वित्रिचतुष्पञ्चकमन्यथा ॥

'अन्यथा' बन्धकं विना[1] ।

विष्णुः [६, १-२]

अथोत्तमर्णोऽधमर्णकाद्यथादत्तमर्थं गृह्णीयात् । द्विकं त्रिकं चतुष्कं पञ्चकं शतं[2] वर्णानुक्रमेण प्रतिमासम् ॥

गौतमः [१२, २७]

[3]नातिसांवत्सरीमेके ॥

मनुः [८, १५३]

नातिसांवत्सरीं वृद्धिं न चादृष्टां पुनर्हरेत्[4] ।
चक्रवृद्धिः कालवृद्धिः कारिता कायिका च या[5] ॥

1. 'अशीतिभागो वृद्धिस्स्यान्मासि मासि सबन्धके' इति श्लोकस्य पूर्वार्धः ॥ 'अन्यथा' तु बन्धकरहिते द्विकत्रिकत्वं वृद्धेरित्यभिप्रायः । यच्चैतद्वृद्धिपरिमाणमुक्तं अत ऊर्ध्वं न गृह्णीयात् । न स्ववार्ग् ग्रहणे विरोधः—विश्वरूपः ॥

2. 'सर्वम्' इति उ.

3. 'तां (वृद्धिं) संवत्सरेऽतिक्रान्ते भवां न गृह्णीयात्' (हरदत्तः) ; 'मासमतिक्रम्य संवत्सरवृद्धिर्न ग्राह्येत्येके मन्यन्ते । .........यावद्धनसंव्यवहारः तावद्ग्राह्यैवेति गौतमः' इति मस्करी ॥

4. 'विनिर्हरेत्' इति मेधातिथिपाठः । "विनिर्हरेत्—विनिष्कृत्य स्वधनादारभ्योपनयेदित्यर्थः ॥" (मेधा)

5. 'न चादृष्टां विनिर्हरेत्'—शास्त्रे या न दृष्टा दशैकादशिकाद्या पञ्चकादधिका न तां गृह्णीयात् । अदृष्टामनुपचितामित्यर्थः । यावद्बहुभिर्मासैर्न संहतीभूता तावन्न ग्राह्या दिवसवृद्धिर्मासवृद्धिः । ननु तु 'मासस्य वृद्धिं गृह्णीयात्' (८. १४२) इत्युक्तम् । परिमाणं मासिकम् । तद्वृद्धेर्न ग्रहणम् ॥ ......'कारिता' इत्थं कृतां यावतीं वा परस्परोपकारापेक्षयोत्तमर्णाधमर्णौ कुरुतः । 'कायिका' कायकर्मणा संशोध्या ॥ (मेधातिथिः) ॥ "हलायुधस्तु यदाऽशान्तलाभे (अव्यवस्थितवृद्धौ ऋणे लाभग्रहणवासनावानुत्तमर्णः स्यात्, तदा संवत्सरादर्वागेव लाभं गृह्णीयात्, न तु संवत्सरादूर्ध्वमित्याह ॥" (विवादरत्नाकरः, १०)

'नातिसांवत्सरीम्' इति—मासादारभ्य संवत्सरं यावद्वृद्धिर्नियमनीया। न तु संवत्सरादूर्ध्वमिति यदि वृद्ध्या धारयसि तदेव प्रयच्छामीति नियमः कर्तव्यः ॥

नारदः [४, १०२]

[1]कायिका कालिका चैव कारिता च तथाऽपरा।
चक्रवृद्धिस्तु शास्त्रेषु तस्य वृद्धिश्चतुर्विधा ॥

बृहस्पतिः [१०, ८-९]

वृद्धिश्चतुर्विधा प्रोक्ता पञ्चधान्यैः प्रकीर्तिता।
[2]षड्विधान्यैः समाख्याता तत्त्वतस्तां निबोधत ॥

[3]कायिका कालिका चैव चक्रवृद्धिरथापरा।
कारिता च शिखावृद्धिर्भोगलाभस्तथैव च ॥

व्यासः

दोह्यवाह्यकर्मयुता कायिका समुदाहृता।
[4]कायाविरोधिनी शश्वत् पणपादादि कायिका ॥

1. कालिका कारिता चैवं कायिका च तथापरा।

'चक्रवृद्धिश्च शास्त्रेऽस्मिन् वृद्धिर्दृष्टा चतुर्विधा ॥' इति मुद्रितनारदीये (पृ. ७५) इत्यत्र श्लोके—"चतुर्विधवृद्धिनामचतुष्टयमिदमुक्तम्। लक्षणं तु (परत्र) उच्यते" इति (असहायः)

2. षड्विधास्मिन् समाख्याता—द.

3. नारदश्लोके इति विवादरत्नाकरे (१०), व्यवहारनिर्णये च (पृ. २२५)

4. Second half-verse is omitted in some manuscripts obviously because it occurs immediately below in the citation from Nārada. The last quarter is given by some of them in different and incorrect forms—*e. g.*, पलार्धाद्या तु कायिका in A. S. B., B. J., S. B. (a) and द; पणार्धाय तु कायिका, in ज; and पणार्धा तु कायिका in द ॥ " 'दोह्यं गवादि; 'वाह्यं' बलीवर्दादि; 'कायः' मूलधनशरीरम्; शश्वत् पणार्धाद्या पणतदर्धव्यतिक्रमेण नित्यमुभाभ्यां व्यवस्थापिता, सा नारदमते कायिकी ॥" (विवादरत्नाकरः, १०)

नारदः [४, १०४ (अ); १०३ (अ), १०४ (आ), १०३ (आ)]

कायाविरोधिनी शश्वत्पणाधार्द्या तु कायिका ।
प्रतिमासं स्रवति या वृद्धिः सा कालिका मता ॥

वृद्धेरपि पुनर्वृद्धिः चक्रवृद्धिरुदाहृता ।
वृद्धिः सा कारिता नाम यर्णिकेन[1] स्वयं कृता ॥

'कायाविरोधिनी' मूलधनाविरोधिनी । 'शश्वत्पणाधार्द्या तु' [2]प्रतिदिनं देयत्वेन पणतदर्धादिका । प्रथममुभाभ्यां या कृता वृद्धिः सा तु 'कारिता'[3] ।

कात्यायनः [४९८]

ऋणिकेन तु या वृद्धिरधिका संप्रकल्पिता ।
आपत्कालकृता नित्यं दातव्या कारिता तु सा ॥

अन्यथा कारिता वृद्धिर्न दातव्या कथञ्चन ।

याज्ञवल्क्यः [२, ३८]

[4]कान्तारगास्तु दशकं सामुद्रा विंशकं शतम् ।
दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु ॥

मनुः [८, १५७]

समुद्रयानकुशला देशकालार्थदर्शिनः ।
स्थापयन्ति तु यां वृद्धिं सा तत्राधिगमं पति ॥

1. ऋणिकेन for यर्णिकेन–ज.

2. B. J.–पणार्धात् प्रतिदिनं नेया तद्वत् तदर्धादिका

3. 'कारिता, सा नारदमते कायिका', B. J., and विवादरत्नाकर, (१०)

4. 'कान्तारगा' अरण्यवासिनः तद्गामिनो वा । 'सामुद्रा' समुद्रव्यवहारिणः । ते प्रतिमासं दशकं विंशकं शतं दद्युः । यद्वा कान्तारं वर्णापथदर्त्वं ये गच्छन्ति ते कान्तारगाः वर्णापथदा इत्यर्थः । सह मुद्रया नियमेन वर्तत इति समुद्रो वर्णाश्रमविषयः, तमतिलङ्घयन्ति ये, ते विपरीतलक्षणा वा सामुद्रा विकर्मस्था इत्यर्थः–(विश्वरूपः)

'समुद्रयानकुशला' इति वणिङ्मात्रोपलक्षणम् । 'देशकालार्थदर्शिनः'[1] अस्मिन् काल इयान् लाभोऽस्मिन्नियानिति ये पश्यन्ति । 'अधिगमो' निश्चयः ॥

[2]हारीतः

पुराणे पणिकं मासमित्येके[3] । तूले द्विगुणं धान्यं त्रिगुणमेवं च वर्धते[4], तथोर्णाकार्पासः संवत्सरेण तृणशलाकं घृतगुडलवणमष्टगुणम् ॥

'पणिकं मासम्' गृह्णीयादिति शेषः । 'तूले द्विगुणं धान्यं' इति, द्वित्र्यादिभिरपि मासैर्धान्यं द्विगुणं ग्राह्यम् । 'तूले' नवधान्यागमे । यदा तु तूलागमे न दत्तं तदा त्रिगुणमेव[6] । 'नाधिकं वर्धते' चतुर्गुणतां[7] नो भजतीत्यर्थः । 'तथा', धान्यवदूर्णाकार्पासः त्रिगुणमेव[8] संवत्सरेण वर्धते । यदा तु संवत्सरेण न दीयते[9] तदा [10]त्रिगुणमेवाष्टगुणं संवत्सरेणेत्यर्थः[11] ।

1. देशकालार्थदर्शिन.'–अस्मिन् प्रदेश इयानर्थलाभोऽस्मिन्नियानिति ये पश्यन्ति जानते–न तु समुद्रयान एव च ये कुशलाः कर्णधारादयः–(मेधातिथिः)

2. S. B. (a) has a gap here extendiug to the quotation from *Bṛhaspati* below.

3. 'एतत्सङ्करजात्यधमर्णविषयं, चातुर्वर्ण्ये द्विकशतादीनां धर्म्यत्वाभिधानात्' ॥ (विवादरत्नाकरः, १२)

4. प्रवर्धते–ज.

5. B. J. and ज–धृत, which accords with *Bṛhaspati* संवत्सरेण त्रिशतकं सत–ज.

6. तदा त्रिगुणमेव–द. तदा द्वित्रिगुणमेव–उ.

7. B. J. चतुर्गुणता धान्ये न भवतीति अर्थः ; चतुर्गुणतां नोपयातीत्यर्थः–ज, द.

8. B. J. ज, द–द्विगुणमेव

9. ण दीयते–द.

10. B. J. त्रिगुणमेव दीयते । अष्टगुणं॰

11. णेत्यन्वयः–द. मु.

नारदः [४, १०५-१०६]

[1]ऋणानां सार्वभौमोऽयं विधिर्वृद्धिकरः स्मृतः ।
देशाचारस्थितिस्त्वन्या[2] यत्रर्णमवतिष्ठते ॥

द्विगुणं त्रिगुणं चैव तथान्यस्मिंश्चतुर्गुणम् ।
[3]तथाष्टगुणमन्यस्मिन् देयं देशेऽवतिष्ठते ॥

बृहस्पतिः [१०, ११, १२ (आ)]

प्रत्यहं गृह्यते या तु शिखावृद्धिस्तु सा स्मृता ।
शिखेव वर्धते नित्यं शिरश्छेदान्निवर्तते ॥

मूले दत्ते तथैवैषा शिखावृद्धिस्ततः स्मृता ।

कात्यायनः [५०१]

आधिभोगस्त्वशेषो यो वृद्धिस्तु परिकल्पितः ।
प्रयोगो यत्र चैवं स्यादाधिभोगः स उच्यते ॥

बृहस्पतिः [१०, १४, १६]

गृहात्स्तोमः सदः क्षेत्राद्भोगलाभः प्रकीर्तितः ।
शिखावृद्धिं कायिका च भोगलाभं तथैव च ॥

धनी तावत्समादद्याद्यावन्मूलं न शोधितम् ।

'स्तोमो' भाटकम् । 'सदः'[4] सस्यादिफलम् ।

याज्ञवल्क्यः [२, ९०]

*आधिस्तु भुज्यते तावद्यावत्तन्न प्रदीयते ।

1. अर्थानाम्—ना. स्मृ.
2. S. B. (a)–स्तुल्य
3. B. J,–तथाष्टगुणं
4. 'सदः' सस्यादिफलम्–B. J. ज, and द

* See below p. 311 where the whole verse is cited. आधिधनं यावन्न प्रदीयते तावत्तदुत्तमर्णेनाऽऽधिश्चिरमपि भुज्यते इत्यर्थः । तेन द्वैगुण्यादिप्रत्याकलनेऽपि वृद्धिर्भोगरूपा भवत्येवेति तात्पर्यम् । [पूर्ण]वाक्यं ऋणादानप्रकरणे यदर्थकं लिखितं तदर्थोऽस्य यद्यपि स्वरसतः प्रतिभाति, तथाप्यनेकनिबन्धृभिः तदर्थतयैवोत्तरार्थस्य संमतत्वात् तथैवात्रापि लिखितम् ॥ (विवादरत्नाकर, १४)

आधिमुत्तमर्णो दद्यादित्यनुवृत्तौ

विष्णुः [६, ६-८]

अन्त्यवृद्धौ[1] प्रविष्टायामपि । न स्थावरमाधिमृते वचनात् ॥

[2]'ऋते वचनात्' द्विगुणे धने प्रविष्टे तत्र [3]आधिं दास्यामीति यदि पूर्वमेव नोक्तं भवेदित्यर्थः ।

मनुः [८, १५२]

कृतानुसारादधिका व्यतिरिक्ता न सिध्यति ।
कुसीदपथमाहुस्तं पञ्चकं शतमर्हति[4] ॥

बृहस्पतिः [१०, २१]

भोगो यद्द्विगुणादूर्ध्वं चक्रवृद्धिश्च गृह्यते ।
मूलं च सोदयं पश्चाद्वार्धुष्यं तद्विगर्हितम् ॥

(अ) अथाकृतवृद्धिः

तत्र कात्यायनः[5] [५०]

[6]कृत्वोद्धारमदत्वा यो याचितस्तु दिशं व्रजेत् ।
ऊर्ध्वं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयात् ॥

1. अन्तवृद्धौ इति मुद्रितविष्णुस्मृतिः

2. B. J.–ज्ञाते वचनाद्वि०

3. B. J. and ज–इत्युक्ता आधिं दास्यामीति ; त्यक्ताधिं दास्यामीति–वि.

4. अनुसरन्त्यनुधावन्त्यनुवर्तन्ते सर्वं एवार्था एतमिति 'अनुसारः' शास्त्रोदितः समाचारः । स च विविधोऽशीतिभागादिः पञ्चकशतपर्यन्तः । तस्मात् 'अधिका' वृद्धिः 'कृता' यावत्तथा-धमर्णेनोत्तमर्णस्य 'न सिद्ध्यति' । कुतः 'व्यतिरिक्ता' यतः शास्त्रबाह्येत्यर्थः । अर्थवादान्तर-माह–'कुसीदपथमाहुस्तमि'ति । कुपुरुषा यत्र सीदन्ति तत् कुसीदम् । धर्मेण तद्धर्माणो गृह्यन्ते ।' कुसीदानामयं 'पन्था' मार्गो व्यवहारो न साधूनामिति निन्दा ॥ (मेधातिथिः ॥)

5. का. स्मृ. सारो, ५०३, ५०७, ५०६, ५०५, ५०२, ५०४.

6. 'उद्धारो'ऽत्र कलामव्यवस्थाप्य गृहीतं धनम् । 'दिशं व्रजेत्' अर्थिवादेश्यं त्यजेत् ।

पण्यं गृहीत्वा यो मूल्यमदत्त्वैव दिशं व्रजेत् ।
ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयात् ॥

निक्षेपं वृद्धिशेषं च [1]क्रयं विक्रयमेव च ।
याच्यमानो न दद्याच्चेद्वर्धते पञ्चकं शतम् ॥

प्रीतिदत्तं न वर्धेत यावन्न प्रतियाचितम् ।
याच्यमानं [2]न दत्तं चेद्वर्धते पञ्चकं शतम् ॥

यो याचितकमादाय तददत्वा दिशं व्रजेत् ।
ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयात् ॥

स्वदेशस्थोऽपि वा यस्तु न दद्याद्याचितोऽसकृत् ।
[3]स तत्र कारितां वृद्धिमनिच्छन्नपि चावहेत् ॥

विष्णुः [६, ३]

वृद्धिं दद्युः [4]सर्वे वर्णा वा स्वप्रतिपन्नाम् । अकृतामपि वत्सरातिक्रमेण यथाभिहिताम्[5] ॥

'यथाभिहितां' वर्णक्रमेण द्विकत्रिकादिना यथोक्ताम् ।

नारदः [४, २०८, २२०]

न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित् ।
अनाकारितमप्यूर्ध्वं वत्सरार्धाद्विवर्धते[6] ॥

एष वृद्धिविधिः प्रोक्तः प्रीतिदत्तस्य धर्मतः ।
वृद्धिस्तु योक्ता धान्यानां वार्धुष्यं तदुदाहृतम् ॥

'अनाकारितम्' [7]अनुदीरितम् ।

1. B. J. विक्रयं क्रयमेव वा ; क्रयविक्र- ज, द.
2. B. J. and वि. र.–अदत्तं ; न चेद्दत्तं वर्धते–वि.
3. B. J. ज. द–स तत्राकारिताम्
4. B. J. ज. द. वि. omit सर्वे वर्णा...स्वप्रतिपन्नां
5. B. J. and द–यथार्थाभिहितां वर्णक्रमेण द्वित्रिकां यथोक्ताम्
6. वत्सरार्धात्प्रवर्धते–मु, ना. स्मृ. 7. S. J. and वि–अनुदाहृतम्

## (आ) अथ परमवृद्धिः

तत्र गौतमः [१२, २८]

चिरस्थाने द्वैगुण्यं प्रयोगस्य।

कात्यायनः [५१०]

मणिमुक्ताप्रवालानां सुवर्णरजतस्य च।
तिष्ठति द्विगुणा वृद्धिः फालकैटाविकस्य च॥

'तिष्ठति' चिरतरावस्थाने न [1]वर्धत इत्यर्थः। 'कैटम्' कीटभवं त्रसरादि। 'अविकम्' कम्बलादि[2]।

मनुः [८, १५१]

कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता।
धान्ये सदे लवे वाह्ये नातिक्रामति पञ्चताम्[3]॥

'धान्यम्' व्रीहियवादि[4]। 'लवः' ऊर्णाचामरादिः, लूयते 'लवः' इति व्युत्पत्त्या। 'वाह्यो' बलीवर्दादिः।

1. B. J.–चिरावस्थानेऽपि

2. 'फालं' फलोद्भवं कार्पासादि। 'कैटं' कीटभवं वस्त्रादि। 'आविकं' मेषभवं कम्बलादि॥ (वि. र. १९)

3. 'सदं' फलं वार्क्षम्, धान्यस्य पृथगुपादानात्। 'लवः' उदीच्येषूर्णाविषयः प्रसिद्धः। 'वाह्यो' गर्दभोष्ट्रबलीवर्दादिः। मेधातिथिः॥)

'अस्यार्थः–'धान्ये व्रीहियवादौ 'सदे' वृक्षसमुत्थफलादौ। 'लवे' मेषादिसमुत्थोर्णादिचामरादौ, लूयते इति व्युत्पत्त्या। 'वाह्ये' तुरगादौ वाहनीयतया हिरण्यवद् द्विकशतादिमर्यादया वृद्ध्या प्रयुक्ते सति न पञ्चगुणत्वं वृद्धिरतिक्रामति। संभवति कश्चिदेतादृशो यो धान्यशतमश्वशतमेव दातुमर्हति नाधिकमिति॥ (विवादरत्नाकर, १९)

अत्र च धान्ये पञ्चगुणमुक्तम्; बृहस्पतिना चतुर्गुणमुक्तम्; विष्णु-मरीचि-वसिष्ठ-हारीतैश्च त्रिगुणमुक्तम्; तदत्राधमर्णापकृष्टगुणत्वमध्यगुणत्वोत्कृष्टगुणत्वैः व्यवस्था, महार्घसमार्घधान्यके कालदेशभेदेन वा व्यवस्था। एवमन्यत्रापि॥ (विवादरत्नाकरः, १८)

4. ज, द and B. J. read 'धान्यं' व्रीहियवादिः। 'सदः' शस्यं! 'लवः' वासरादिः। 'लूयते' इति लवः'॥

गौतमः [१२, ३३]

कुसीदं पशूपजलोमक्षेत्रसदवाह्येषु नातिपञ्चगुणम् ।

'पशूपजम्'[1] क्षीरघृतादि ।

बृहस्पतिः [१०, १७]

हिरण्ये द्विगुणा वृद्धिस्त्रिगुणा वस्त्रकुप्यके ।
धान्ये चतुर्गुणा प्रोक्ता सदवाह्यलवेषु च ॥

विष्णुः [६,११-१५]

[2]हिरण्यस्य परा वृद्धिर्द्विगुणा । धान्यस्य त्रिगुणा । वस्त्रस्य चतुर्गुणा । रसस्याष्टगुणा । [3]सन्ततिः स्त्रीपशूनाम् ॥

वसिष्ठः [२, ४४-४७]

द्विगुणं हिरण्यं त्रिगुणं च[4] धान्यम् । धान्येनैव रसा व्याख्याताः । पुष्पमूलफलानि च । तुलाधृतमष्टगुणम् ॥

बृहस्पतिः [१०, १८]

उक्ता पञ्चगुणा शाके बीजेक्षौ षड्गुणा स्मृता ।
लवणस्नेहमद्येषु वृद्धिरष्टगुणा स्मृता ।
गुडे मधुनि चैवोक्ता प्रयुक्ते चिरकालिके ॥

1. पलं क्षीरघृतादिः–ज.

2. हिरण्यस्य द्विगुणा वृद्धिः । त्रिगुणा वस्त्रस्य च । धान्ये चतुर्गुणा । रसस्याष्टगुणा । संततिः स्त्रीपशूनाम्–वि; वस्त्रस्य धान्यस्य चतुर्गुणा–द; धान्यस्य चतुर्गुणा रसस्याष्टगुणा–ज.

3. cf. याज्ञवल्क्य, २, ३९—

संततिस्तु पशुस्त्रीणां रसस्याष्टगुणा परा ।
वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा ॥

"पशुस्त्रीणां सन्ततिरेव वृद्धिः । पशूनां स्त्रीणां पोषणासमर्थस्य तत्पुष्टिसंततिकामस्य प्रयोगः संभवति । ग्रहणं च क्षीरपरिचर्यार्थिनः" ॥ इति मिताक्षरा

4. 'च' omitted by ज, द.

कात्यायनः [५११]

तैलानां चैव सर्वेषां मद्यानामथ सर्पिषाम् ।
वृद्धिरष्टगुणा [1]ज्ञेया गुडस्य[2] लवणस्य च ॥

बृहस्पतिः [१०, २३]

तृणकाष्ठेष्टकासूत्रकिण्वपाषाणचर्मणाम्[3] ।
हेतिपुष्पफलानां च वृद्धिस्तु न निवर्तते[4] ॥

'किण्वम्' सुराप्रकृतिद्रव्यविशेषः । 'हेतिः' शस्त्रम् ।

विष्णुः [६, १६-१७]

किण्वकार्पाससूत्रवर्मचर्मायुधेष्टकाङ्गाराणामक्षया[5] । अनुक्तानां द्विगुणा ॥

(ख) अथ वृद्धिनिषेधः

तत्र नारदः [२, ३६]

पण्यमूल्यं भृतिर्न्यासो दण्डो यश्चाभिहारिकम्[6] ।
[7]वृथादानाक्षिकपणा वर्धन्ते [8]नाविवक्षिताः ॥

1. B. J. प्रोक्ता for ज्ञेया

2. A. S. B. ज, उ, and S. B. (a)–घृतस्य for गुडस्य

3. A. S. B. ज, द and S. B. (a)–पर्णास्थिचर्मणाम् । *Viramitrodaya*, p. 300 gives another reading किण्वचर्मास्थिवर्मणाम् and adds this comment वर्म = कवचम् ।

4. " 'किण्वं' सुराद्रव्योपादानकारणभूतो मलविशेषः । 'चर्म' शरादिनिवारकफलकः । 'हेति' सुरायुधम् । " [वीरमित्रोदय, ३००]

5. B. J. अक्षयसूक्तानां

6. B. J. यश्चाभिहारिकः ; 'यश्चावहारकम्' ना. स्मृ.

7. B. J.–तथा दानाक्षिकपणा

8. न विवक्षिताः–ज, द.

'आभिहारिकम्' छलादिना[1] गृह्यमाणम् । 'आक्षिकपणः' द्यूतनिमित्तं धनम्[2] ।

कात्यायनः [५०८]

चर्मसस्यासवद्यूत[3]पण्यमूल्ये च सर्वदा[4] ।
[5]स्त्रीशुल्केषु न वृद्धिः स्यात्प्रातिभाव्यागतेषु च ॥

[6]'सस्यम्' क्षेत्राज्जातं धान्यस्तम्बादि । 'आसवम्' मधु ।

संवर्तः [वी. मि., पृ, ३०४]

न वृद्धिः स्त्रीधने लाभे निक्षेपे च तथा स्थिते ।
संदिग्धे प्रातिभाव्ये च यदि न स्यात्स्वयंकृता ॥

व्यासः

प्रातिभाव्यं भुक्तबन्धमगृहीतं च दित्सतम् ।
न वर्धते प्रपन्नस्य[7] दमः शुल्कं प्रतिश्रुतम् ॥

याज्ञवल्क्यः [२, ४४]

[8]दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम् ।
मध्यस्थस्थापितं तत्स्याद्वर्धते न ततः परम् ॥

1. A. S. B. ज, द. and S. B. (a)–कूटादिना

2. 'वृथादानं' धर्ममनुद्दिश्य दत्तमर्पितम् (वि. र., २२)

3. द्यूतं–द; द्यूते–उ.

4. B. J.–पण्यमूल्येन सर्वदा; पण्यमूलेषु सर्वदा–ज, द.

5. शुल्के न च वृद्धिस्यात्–ज, द; 'स्त्रीशुल्कम्' आसुरादिविवाहे देयद्रव्यं वेश्यादिदेयञ्च (वि. र. २२)

6. B. J.–द, ज–क्षेत्रजात

7. प्रपन्नस्य–द ; प्रयतस्य–उ.

8. स्वकं धनमिति वचनादात्मनेपदयोगाच्च सन्निहितधनिकविषयमेतत्। अन्यथा तु वर्धत एवेत्यभिप्रायः । –(विश्वरूपः ॥)

## (ग) अथाधिविधिः

तत्र बृहस्पतिः [१०, ३८-३९]

आधिर्बन्धः समाख्यातः स च प्रोक्तश्चतुर्विधः ।
जङ्गमः स्थावरश्चैव गोप्यो भोग्यस्तथैव च ॥

यादृच्छिकः सावधिको[1] लेख्यारूढोऽथ साक्षिमान् ।

'चतुर्विधः' स्वरूपप्रकारकालप्रमाणैः[2] । तत्र स्वरूपमेव द्विविधं स्थावरजङ्गमभेदन । प्रकारश्च द्विविधो गोप्यभोग्यभेदेन । कालो द्विविधः अवधिनियमानियमाभ्याम् । प्रमाणं द्विविधं लेख्यसाक्षिभेदेन ॥

नारदः [४, १२५]

उपचारस्तथैवास्य लाभहानिर्विपर्यये ।
प्रमादाद्धनिनस्तद्वदाधौ विकृतिमागते ॥

'उपचारो' रक्षणम् । कर्तव्यमिति शेषः । [3]'अस्य' आधेः 'लाभहानिः' वृद्धिहानिः । 'विपर्यये' विनाशे[4] ।

बृहस्पतिः [१०, ३९-४०]

[5]अशान्तलाभे च ऋणे तथा पूर्णेऽवधौ धनी[6] ।
यो भुङ्क्ते बन्धकं लोभान्न स लाभो भवेत्पुनः[7] ॥

1. सावधिश्च–द, ज and B. J.

2. स्वरूपप्रकारकालप्रमाणैश्चतुर्ष्ट्वं तद्भेदेनाष्टत्वमिति कल्पतरुकारः (विवादरत्नाकर, २४)

3. स्वस्य–उ.

4. 'उपचारो' लक्षणं, तथैव प्रकारभेदानुसारेणास्य कर्तव्यत्वम् । ततो धनिकप्रमादाद्विपर्यये आधिनाशे विकृतिं वा गते आधौ धनिकस्य लाभहानिर्भवति । (विवादरत्नाकरः, २४)

5. B. J. अशान्तलाभे च ऋणे तथा पूर्णविधौ धनी; प्रशान्तलाभे च ऋणे–ज; अशान्तलाभे करणे–उ.

6. धनं–ज, द.

7. पारिजाते तु पूर्णे इत्यत्र अकारप्रश्लेष आदृतः । अवधिमपेक्ष्य व्यवस्थापितभागे आधौ अवधौ अपूर्णे आधिर्न मोक्तव्य इत्युक्तम् । (विवादरत्नाकर, २५)

न्यासवत्परिपाल्योऽसौ वृद्धिर्नश्यति हापिते ।

<u>याज्ञवल्क्यः</u> [२, ५९]

[1]गोप्याधिभोगे नो वृद्धिः सोपकारे च हापिते ।

'सोपकारे' बलीवर्दादौ ताम्रकटाहादौ । 'हापिते' व्यवहाराक्षमत्वमनुप्रापिते[2] ।

<u>मनुः</u> [८, १४३]

न त्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात्[3] ।

<u>तथा</u> [८, १५०]

यः स्वामिनाऽननुज्ञातमाधिं भुङ्क्तेऽविचक्षणः ।
तेनार्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः ॥

<u>तथा</u> [८, १४४]

न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत् ।
[4]मूल्येन तोषयेच्चैनमाधिस्तेनोऽन्यथा भवेत् ॥

'अर्धवृद्धिः मोक्तव्या' इति, आधेरुपभुक्तस्य विकारे[5]ऽसतीति बोद्धव्यम् । विकारे[6] तु सति सकलवृद्धित्याग एवेत्यर्थः ॥

1. 'गोप्याधिभोगिनो वृद्धिः सोपकारे च भाविते'–इति विश्वरूपाचार्याभ्युपगतपाठः । 'भाविते' भोक्ताभ्युपगते, साक्षिभिर्वा भुक्तोऽनेनायमित्येवं भाविते । (विश्वरूपः)

2. मत्वं प्रापिते–द. बि.

3. तत्र भोग्यमाधिमधिकृत्येदमुच्यते–'न त्वेवाधौ सोपकार' इति । विविधः सोपकारः–क्षीरिणी गौः क्षेत्रारामादि च । तस्मिन् भुज्यमाने । कुसीदे भवा कौसीदी अनन्तरोक्ता वृद्धिः, तां नाप्नुयात् ।–(मेधातिथिः ॥)

4. Gap from here to Kātyāyana below in the Udaipur manuscript.

5. B. J.–अधिकारे for विकारे

6. B. J.–विचारे for विकारे

कात्यायनः [५२५]

अकाममननुज्ञातमाधिं यः कर्म कारयेत् ।
भोक्ता कर्मफलं दाप्यो वृद्धिं वा[1] लभते न सः ॥

'अकामम्' आधीकृतं काम्यादिकर्मकरणेच्छारहितम् ।

विष्णुः [६, ५-६]

आध्युपभोगे[2] वृद्ध्यभावः । दैवराजोपघाताद‍ृते विनष्टमाधिमुत्तमर्णो दद्यात् ॥

नारदः [४, १२६]

विनष्टे मूलहानिः स्याद्दैवराजकृताद‍ृते[3] ।

बृहस्पतिः [१०, ४६]

भुक्ते चासारतां प्राप्ते मूलहानिः प्रजायते ।
बहुमूल्यं[4] यत्र [5]नष्टमृणिकं तत्र तोषयेत् ॥

व्यासः

गृहीतृदोषान्नष्टश्चेद्बन्धो [6]देयाधिको भवेत् ।
ऋणं सलाभं संशोध्य तन्मूल्यं[7] दाप्यते धनी ॥

याज्ञवल्क्यः [२, ५९]

नष्टो देयो विनष्टश्च[8] दैवराजकृताद‍ृते[9] ॥

1. B. J. च for वा
2. गेन वृद्ध्यभावः–द
3. अत्रापि स्वापराधं विना कृतत्वं विवक्षितम् (वि. र, २६)
4. ल्यो–द, वि.
5. नष्टो–द, वि.
6. B. J.–वि, ज, द, and व्यवहारनिर्णय (पृ. २३५)–हेमादिको भवेत् ।
7. 'दापयेद्धनी' इति व्यवहारनिर्णयपाठः
8. श्चेद्दैवराज–द
9. नष्ट आधिर्विनष्टो वा दैविकात्–अग्न्याद्युपद्रवात् राजकीयाद्वा विना अधमर्णिकाय देयः । स्वरूपहानं विनाशः । अपहारस्तु नाशः ॥–विश्वरूपः)

'विनष्टो' अत्र विकृतिं गतः[1] ।

कात्यायनः [५२६]

[2]यस्त्वाधिं कर्म कुर्वाणं वाचा दण्डेन कर्मभिः ।
पीडयेद्भर्त्सयेच्चैव प्राप्नुयात्पूर्वसाहसम् ॥

बृहस्पतिः [१०, ४१]

[3]दैवराजोपघातेन यत्राधिर्नाशमाप्नुयात् ।
तत्रान्यं दापयेद्बन्धं सोदयं च ऋणं धनी ॥

नारदः [४, १३०]

रक्ष्यमाणोऽपि [4]यद्याधिः कालेनेयादसारताम् ।
[5]आधिरन्योऽथवा कार्यो देयं वा धनिने धनम् ॥

कात्यायनः [५२४]

न चेद्धनिकदोषेण निष्पतेद्वा म्रियेत वा ।
आधिमन्यं स कार्यः स्याद्दणान्मुच्येत नर्णिकः ॥

बृहस्पतिः १०, ४२; १०, ६६]

बन्धहस्तस्य यद्देयं चित्रेण चरितेन वा ।
अदत्तेऽर्थेऽखिले बन्धं नाकामो दाप्यते क्वचित् ॥

धनं मूलीकृतं दत्वा यदाधिं प्रार्थयेद्दणी ।
तदैव तस्य मोक्तव्यस्त्वन्यथा दोषभाग्धनी ॥

1. 'विनष्टो' नामाऽत्यन्तनाशं प्राप्तः (वि. र., २७)

2. B. J. यश्चाधिं; यस्त्वाधिकर्म कुर्वाणो-ज

3. 'राजदैवोपघातेन' इति विवादरत्नाकरः, २८; 'तत्राधिं दापयेद्दद्यात् सोदयं धनमन्यथा' इति व्यवहारमाधवीये (p. 232, Bombay edn.)

4. यस्त्वाधिः-द, ज, B. J.; यत्राधिः-मु. ना. स्मृ.

5. तत्राधिरन्यः कर्तव्यो-मु. ना. स्मृ.

'चित्रम्' लेख्यम् । 'चरितम्' साक्ष्यादि ।

<u>याज्ञवल्क्यः</u> [२, ६२-६३]

उपस्थितस्य मोक्तव्य आधिः स्तेनोऽन्यथा भवेत् ।

प्रयोजकेऽसति धनं कुले न्यस्याधिमाप्नुयात्[1] ॥

तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः ।

'असति' अविद्यमाने ॥

आधिमुत्तमर्णो दद्यादित्यनुवृत्तौ <u>विष्णुः</u> [६, ७]

अन्त्यवृद्धौ प्रविष्टायामपि ।

<u>याज्ञवल्क्यः</u> [२, ६४]

यदा तु द्विगुणीभूतमृणमाधौ तदा खलु ।

मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने ॥

'[2]एतदुत्पन्ने द्विगुणे धने प्रविष्टे त्वयाधिर्मोक्तव्या' इत्युक्त्वायं चाधिर्दीयते तद्विषयमिदम् । [3]एवंविध एव '[4]लोके क्षयाधिरित्युच्यते[5] ।

1. सोदयं द्रव्यमादाय उपस्थितस्याऽऽधिमनुत्सृजन् प्रयोक्ता दण्ड्यः स्यात् । यदा त्वसन्निहितो धनप्रयोक्ता, तदा तस्मिन् प्रयोजकेऽसति तत्कुटुम्बे समर्प्य द्रव्यमाधिमाप्नुयात् निस्संशयं गृह्णीयादित्यर्थः । एवं धनिककुले द्रव्यं समर्पयित्वाधिर्ग्राह्यः । तत्काले कृतं मूल्यं यस्य सः तत्कालकृतमूल्यः । यदि मूल्याध्द्रासः स्यात् तदा तत्कालकृतं यन्मूल्यं तद्धनिकेन देयम् । इत्येतया परिभाषया वृद्धिशून्यो धनिकहस्ते तिष्ठेत् । यदा तु धनं द्विगुणीभूतं ऋणिकश्चासन्निहितः तदा तत्काले श्रावयित्वाधिं निर्विकल्पं गृह्णीयात् ॥--(विश्वरूपः)

2. एतदुत्पन्नद्विगुणे--व

3. पूर्वविध एव लोकेच्छया आधिरित्युच्यते (?)-B. J.

4. लोके क्षयाधिरित्युच्यते-द, बि; अनाधिरिति इतरमातृकासु ।

5. तदुत्पन्नसस्यादिद्वारा प्रविष्टे द्विगुणे धने त्वया आधिर्मोक्तव्य इत्युक्त्वा च आधिः कृतः, तद्विषयमिदम् । एतच्च वृद्धौ भवन्त्यां, अन्यथा तु मूलमात्रम् । अयमेव च लोके क्षयाधिरित्युच्यते ॥ (विवादरत्नाकर, १२)

विष्णुः [६, ९]

गृहीतधनप्रवेशार्थमेव यत्स्थावरं दत्तं तद्गृहीतधनप्रवेशे दद्यात् ।

बृहस्पतिः [१०, ६७-६९]

क्षेत्रादिकं यदा भुक्तमुत्पन्नमधिकं ततः ।
मूलोदयं प्रविष्टं चेत्तदाधिं प्राप्नुयादृणी ॥
परिभाव्य यदा क्षेत्रं[1] प्रदद्याद्धनिके ऋणी ।
[2]तदा तच्छान्तलाभेऽर्थे मोक्तव्यमिति निश्चयः ॥
प्रविष्टे सोदये [3]द्रव्ये प्रदातव्यं पुनर्मम ।
कुसीदादिविधिस्त्वेष [4]धर्म्यः संपरिकीर्तितः ॥

'शान्तलाभेऽर्थे' परिसमाप्तलाभेऽर्थे [5]निमित्तभूते, सवृद्धिकधनप्रवेशो यावदित्यर्थः ।

याज्ञवल्क्यः [२, ५८]

आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते ।
काले कालकृतो नश्येत्फलभोग्यो[6] न नश्यति ॥

[7]'आधिः प्रणश्येत्' इति, द्विगुणीभूते धने यद्याधिरधमर्णेन न मोक्ष्यते तदा नश्यति, धनप्रयोक्तुः स्वं भवति । 'कालकृतः' कृतकालः[8] । तेन यः कालाऽवधिः कृतस्तस्मिन् प्राप्ते यदि न मोक्ष्यते तदा नश्यतीत्यर्थः ।

1. क्षेत्रे–द. 2. B. J.–ज, बि–स्वयैतत् शान्तलाभे ; स्वयि–द.

3. द्रव्ये–द ; द्रव्यं–उ. 4. धर्मस्य परिकीर्तितः–बि, द.

5. निमित्तीभूते–ज, द ; 'निमित्तीभूते सति सवृद्धिधनलाभं यावन्मोक्तव्यमित्यर्थः' । (वि. र., ३१)

6. B. J., ज, द–फलभोगी

7. "अत्र कल्पतरुः–आधिः प्रणश्येदिति द्विगुणीभूते धने यद्याधिरधमर्णेन न मोक्ष्यते, तदा नश्यति, धनप्रयोक्तुः स्वो भवति । 'कालकृतः' कृतकालः, तेन यः कालोऽवधिः, तस्मिन् प्राप्ते यदि न मोक्ष्यते, तदा नश्यतीत्यर्थः ॥" (विवादरत्नाकर, ३२)

8. कृतसमयः–द ; 'कालकृतः' कृतकालः तेन यः कालो विधिः कृतः–बि.

बृहस्पतिः [१०, ४९]

[1]पूर्णेऽवधौ शान्तलाभे बन्धस्वामी [2]धनी भवेत् ।
[3]अनिर्गते दशाहे तु ऋणी मोक्षितुमर्हति ॥

व्यासः

हिरण्ये द्विगुणीभूते पूर्णे काले कृतावधेः[4] ।
बन्धकस्य धनी स्वामी द्विसप्ताहं [5]प्रतीक्ष्य तु ॥
अतोऽन्तरा धनं दत्वा [6]ऋणी बन्धकमाप्नुयात् ।
फलभोग्यं पूर्णकालं दत्वा द्रव्यं तु सामकम् ॥

सममेव 'सामकम्' [7]फलशून्यमित्यर्थः ।

मनुः [८, १४३]

न त्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात् ।
न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः[8] ॥

'कालसंरोधः' चिरकालावस्थानम् । 'निसर्गः' [9]अन्यथाधिकरणम् । तच्च भोग्याधिविषयम् । 'न त्वेवाधौ सोपकारे' इति तस्यैव प्रकृतत्वात् । 'आधिः प्रणश्येद्द्विगुणे धने' इति याज्ञवल्क्यवचनं [२, ५८] गोप्याधिविषयम् । अतो नानयोर्विरोधः । 'न निसर्गो न विक्रयः' इत्यत्र उत्तमर्णेन न कर्तव्य इति शेषः[10] ॥

1. पूर्णेऽवधौ इति स्मृ. च., (p. 331); पूर्णावधौ इति विवादरत्नाकरः (p. 31.) पूर्णे विधौ–उ.
2. धनी मतः–द.
3. अनिर्णुते–द.
4. कृतेऽवधौ–ज, द, B. J.
5. परीक्षते–द.
6. ऋणी धनमवाप्नुयात्–द.
7. कलाशून्यम्–उ.
8. विसर्गोस्ति न विक्रयः–ज, द, बि; विशुद्धोऽस्ति न विक्रयः–A.S.B., and S.B.(a)
9. अन्यत्राधिकरणम्–द, ज, B. J.
10. विशेषः–B. J.; उत्तमर्णेन न कर्तव्य इति शेषः–ज.

बृहस्पतिः [१०, ७०, ७१; ५०; ८५]

[1]यत्राहितं गृहक्षेत्रं भोगे न प्रकर्षान्वितम् ।
तत्रर्णी[2] नाप्नुयाद्बन्धं[3] धनी चैव ऋणं तथा ॥

पूर्णे प्रकर्षे तत्स्वाम्यमुभयोः परिकीर्तितम्[4] ।
अपूर्णे तु प्रकुर्यातां परस्परमतेन तौ ॥

गोप्याधिर्द्विगुणादूर्ध्वं कृतकालस्तथावधिः[5] ।
[6]शोधयित्वा ऋणिकुले[7] मोक्तव्यः समनन्तरम् ॥

नष्टे मृते वा ऋणिके धनी पत्रं प्रदर्शयेत् ।
तत्कालावधिसंयुक्तं स्थानलेख्यं च कारयेत् ॥

'प्रकर्षो' वृद्धिः ।

याज्ञवल्क्यः [२, ६१]

चरित्रं बन्धककृतं सवृद्धि[8] दापयेद्धनम् ।

'चरित्रम्' अग्निहोत्रगङ्गास्नानादि । तदेव बन्धकीकृत्य यद्गृहीतं तद्वृद्धिसहितं दातव्यमित्यर्थः[9] ।

1. 'यत्राधिकम्' इति पराशरमाधवीये (p. 245)
2. 'तत्रर्णम्'–ज, B. J.
3. 'चाप्नुयात् बन्धम्' इति माधवीये; नाप्नुयात् बन्धमिति स्मृ. च. (p. 344) पाठः
4. उभयोरपि कीर्तितम्–ज, द, B. J.
5. तथावधिः–ज, द, B. J. तथा विधिः–उ.
6. श्रावयित्वा–द, ज, B. J.
7. ऋणं काले–द, ज.
8. सवृध्या–द.
9. अस्यायमर्थः । चरित्रमेव बन्धकं चरित्रबन्धकम् । चरित्रशब्देन गङ्गास्नानाग्निहोत्रादिजनितमपूर्वमुच्यते । यत्र तदेवाधीकृत्य यद्द्रव्यमात्मसात्कृतं तत्र तदेव द्विगुणीभूतं दातव्यं नाधिनाश इति । (मिताक्षरा)

कात्यायनः [५२९]

आधाता[1] यत्र [2]न स्यात्तु धनी बन्धं निवेदयेत् ।
राज्ञस्ततः स विख्यातो विक्रेय इति धारणा ॥
सवृद्धिकं गृहीत्वा तु शेषं राजन्यथार्पयेत् ।

याज्ञवल्क्यः [२, ६३]

विना धारणकाद्वापि विक्रीणीत ससाक्षिकम् ।

(घ) अथाधिसिद्धिः

तत्र व्यासः

[3]आधिस्तु द्विविधः प्रोक्तो जङ्गमः स्थावरस्तथा ।
सिद्धिरस्योभयस्यापि भोगो यद्यस्ति नान्यथा ॥

बृहस्पतिः [१०, ५३]

[4]न भुङ्क्ते यः स्वमाधानं [5]न दद्याच्च निवेदयेत् ।
प्रमीतसाक्षिकऋणिकं तस्य लेख्यमपार्थकम् ॥
गृहं वार्यापणं धान्यं पशुस्त्रीवाहनानि च ।
उपेक्षया विनश्यन्ति यान्ति चासारतां तथा ॥

'स्वमाधानम्' आधिम् ।

याज्ञवल्क्यः [२, ६०]

आधेः स्वीकरणात्सिद्धिः रक्ष्यमाणोऽप्यसारताम्[6] ॥

1. अधाता-द, B. J.; विज्ञातो-वि.

2. नष्टस्यात्-B. J.

3. आधयो द्विविधाः प्रोक्ताः स्थावरा जङ्गमास्तथा-ज, द, वि, B. J.; 'आधिस्तु द्विविधः प्रोक्तः स्थावरो जङ्गमस्तथा' इति दीपकलिका पठति ।

4. अभुक्ते यः समाधानम्-ज, द.

5. नादद्यात्-ज, B. J.

6. समर्पितस्यापि स्वीकरणेनोपभोग्यत्वसिद्धिः स्यात् । यत्नेनापि तु रक्ष्यमाणोऽप्यसारतां यातश्चेत् यदि पाल्यमानोऽप्यसारीभूतः ततोऽन्य आधेयः स्यात् ॥ (विश्वरूपः)

कात्यायनः [५१७]

आधिमेकं द्वयोर्यत्र कुर्यात्का प्रतिपद्भवेत् ।
तयोः पूर्वतरं ग्राह्यमाधाता चौरदण्डभाक् ॥

'प्रतिपत्' व्यवस्था । 'पूर्वतरम्' करणमिति शेषः ।

विष्णुः [५, १८१-१८४]

गोचर्ममात्राधिकां भुवमन्यस्याधीकृतां तस्मादनिर्मोच्यान्यस्य यः प्रयच्छेत्स वध्यः । ऊनां चेत्षोडशसुवर्णं दण्ड्यः ॥

एकोऽश्नीयाद्यदुत्पन्नं नरः सांवत्सरं फलम् ।
गोचर्ममात्रा सा क्षोणी स्तोका वा यदि वा बहु ॥

ययोर्निक्षिप्त आधिस्तौ विवदेतां यदा नरौ ।
[1]यस्य भुक्तिः फलं तस्य बलात्कारं विना कृता ॥

यस्य भुक्तिर्बलात्कारं विनेत्यर्थः । तस्य सा भूमिरिति शेषः ।

बृहस्पतिः [१०, ४४-४५]

क्षेत्रमेकं द्वयोर्बन्धे दत्तं यत्समकालिकम् ।
येन भुक्तं भवेत्पूर्वं[2] तस्य तत्सिद्धिमाप्नुयात् ॥

तुल्यकालोपस्थितयोर्द्वयोरपि समं भवेत् ।
प्रदाने विक्रये चैव विधिः संपरिकीर्तितः ॥

[3]कात्यायनः [५१८, ५२१, ५२२, ५१९, ५२०]

आधानं विक्रयो दानं साक्षिलेख्यकृतं तथा[4] ।
एकक्रियानिबन्धेन[5] लेख्यं तत्रापहारकम् ॥

1. 'यस्य भुक्तिः भुवस्तस्य' इति विवादरत्नाकरपाठः । हलायुधेन तु 'यस्य भुक्तिर्जयस्तस्य' इति पठितं, तत्र सुगमतैव ॥ (वि. र., ३८)

2. तयोः पूर्वं–द.

3. Ascribed to बृहस्पति by विवादरत्नाकर, pp. 39–40. The ślokas beginning with 'आधानं' and अनिर्दिष्टं are included in *Bṛhaspatismṛti* as १०, ४६ and १०, ४७.

4. यदा–ज, द, B. J. 5. एकक्रियातिबन्धेन–ज; एकक्रियाविरुद्धं तु–उ.

यस्तु सर्वस्वमादिश्य[1] प्राक्पश्चान्नामचिह्नितम् ।
आदध्यात्तत्कथं न स्याच्चिह्नितं बलवत्तरम् ॥

मर्यादाचिह्नितं क्षेत्रं गृहं वापि[2] यदा भवेत् ।
[3]ग्रामादयश्च लिख्यन्ते तदा सिद्धिमवाप्नुयात् ॥

अनिर्दिष्टं च निर्दिष्टमेकत्र च विशेषितम्[4] ।
विशेषलिखितं ज्याय इति कात्यायनोऽब्रवीत् ॥

यो विद्यमानं [5]प्रधनमनिर्दिष्टस्वरूपकम् ।
[6]आकाशबन्धमादध्यादादिष्टं[7] नैव तद्भवेत् ॥

यद्यत्तदास्य[8] विद्येत तदादिष्टं विनिर्दिशेत् ।

'एकक्रियानिबन्धेन' एकजातीयदानादिक्रियानिमित्तेन । यस्तु सर्वस्वमित्यादि । यः प्रथमं सर्वस्वं बन्धकत्वेनोद्दिश्य पश्चाल्लेखनसमये नामविशेषेण लेखयति, तत्रोत्तरकालं विवादे सति, यद्यावन्नामतो लिखितं तत्तावत्प्रमाणम् । नोद्दिष्टमात्रमित्यर्थः । 'प्रधनं' अत्र प्रकृष्टं धनम्[9] ॥

1. A. S. B., B. J. and S. B. (a)-यस्तु सर्वं समुद्दिश्य

2. B. J.-गृहं चापि

3. मर्यादया यल्लिख्येत तदा तत्समवाप्नुयात्-ज, द.

4. विलेखितम्—(व्यवहारप्रकाश, पृ. ३१३)

5. स्वधनम्-B. J.; प्राधान्यम्-ज; प्रथमं-उ.

6. आकाशभूतमादध्यात्-ज, द, A. S. B., B. J., S. B. (a) and व्यव. प्रकाश, ३१३.

7. अनिर्दिष्टम्-स्मृ. च., p. ३३४; आविष्टम्-ज, B. J.

8. विद्यन्त तदाविष्टं-ज; तदाविष्टम्-द.

9. यत्रैका क्रिया साक्षिमती, अन्या च साक्षिलेख्यवती, तत्र लेख्यं साक्षिमदपहारकं बलवत्, आधित्वसाधकमिति यावत् । एकक्रियानिबन्धेन एकस्य पुंसः क्रियया निबन्धेन लेख्ये निवेशेन हेतुनेत्यर्थः । हलायुधस्तु यत्राधानक्रिया विक्रयक्रिया वा साक्ष्यादिगुणवल्लेख्यवती, तत्र एकक्रियानिबन्धेन एकेन श्रेष्ठेन क्रियाया निबन्धेन लेख्ये निवेशेन लेख्यमपहारकं भोगाभावमात्रेणाधातुर्विमतेर्बाधकमित्याह । अत्र च 'न भुङ्क्ते यः स्वमाधानं' इत्यादिना विरोधः ॥ (विवादरत्नाकर, ३९)

## (ङ) अथ प्रतिभूविधिः

तत्र कात्यायनः [११४-११६]

न स्वामी न च वै शत्रुः स्वामिनाधिकृतस्तथा ।
निरुद्धो दण्डितश्चैव संशयस्थश्च[1] न क्वचित् ॥

नैव रिक्थी न रिक्तश्च[2] न चैवात्यन्तवासिनः ।
राजकार्यनियुक्ताश्च ये च प्रव्रजिता नराः ॥

नाशक्तो धनिने दातुं[3] दण्डं राज्ञे च तत्समम् ।
नाविज्ञातो गृहीतव्यः प्रतिभूः स्वक्रियां प्रति ॥

याज्ञवल्क्यः [२, ५२]

भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ।
प्रातिभाव्यमृणं [4]साक्ष्यमविभक्ते न तु स्मृतम्[5] ॥

नारदः [१६, ३९]

साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च ।
विभक्ताः भ्रातरः कुर्युर्नाविभक्ताः[6] परस्परम् ॥

1. स्थस्तु न क्वचित्–द, बि.
2. A. S. B., B. J. ज, द, बि. and S. B. (a)–न मित्रं च
3. यातुं–द.
4. सारं (?)–उ.
5. भ्रात्रादीनामविभक्तानां परस्परमृणसाक्ष्यप्रातिभाव्यानि न विद्यन्ते । तेनैव च विभक्ताविभक्तसंशये साक्ष्यादिभिर्निर्णयः । दम्पतिवचनं चात्र विभागासंभवादन्येषामपि रिक्थभाजामविभक्तानां साक्ष्याद्यभावदर्शनार्थम् ॥–(विश्वरूपः) विज्ञानेश्वरस्तु दम्पत्योरपि विभागमङ्गीकरोति–"भर्तुरिच्छया भार्याया अपि द्रव्यविभागो भवत्येव; न स्वेच्छया । यथा वक्ष्यति–यदि कुर्यात् समानांशान्पत्न्यः कार्याः समांशिकाः [याज्ञ, २, ११५] इति ॥ (मिता, २, ५२) अविभक्तग्रहणं भ्रातृविषयम् । पितापुत्रविषयं वा । न जायापतिविषयम् । न हि तयोर्धनविभागोऽस्ति, पतिधने हि जाया स्वामिनी जायात्वादेव । ततो दम्पत्योः साधारणं धनमशक्यं विभक्तुम् ॥ (अपरार्कः)
6. नऽविभक्ताः–द.

<u>बृहस्पतिः</u> [१०, ७३, ७४, ७८]

दर्शने प्रत्यये दाने ऋणिद्रव्यार्पणे तथा ।
चतुष्प्रकारः प्रतिभूः शास्त्रे दृष्टो मनीषिभिः ॥

[1]आहैकोऽहं दर्शयामि साधुरेषोऽपरोऽब्रवीत् ।
दाताऽहमेतद्द्रविणमर्पयाम्यपरो वदेत् ॥

आद्यौ तु वितथे दाप्यौ तत्कालावेदितं धनम् ।
उत्तरौ च[2] विसंवादे तौ विना तत्सुतौ तथा ॥

<u>याज्ञवल्क्यः</u> [२, ५४]

दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा ।
न तत्पुत्रा ऋणं दद्युः दद्युर्दानाय यः स्थितः ॥

'दद्युर्दानाय यः स्थित' इति । यो दानप्रतिभूत्वेन स्थितस्तस्य पुत्रा ऋणं दद्युरित्यर्थः ।

<u>कात्यायनः</u> [५३०, ५३१, ५३३]

दानोपस्थानविश्वासविवादशपथाय च ।
लग्नकं दापयेदत्र[3] यथायोगं विपर्यये ॥

दर्शनप्रतिभूर्यस्तु[4] देशे काले न दर्शयेत् ।
निबन्धमावहेत्तत्र[5] दैवराजकृतादृते ॥

काले व्यतीते प्रतिभूर्यदि तं नैव दर्शयेत् ।
[6]निबन्धं दापयेत्तत्र प्रेते चैवं विधिः स्मृतः ॥

1. आहैको दर्शयामीति–B. J.
2. उत्तरौ तु–ज, द, B. J.
3. दापयेद्देयम्–ज, B. J.
4. यस्तम्–द.
5. आहरेत्तत्र–B. J.
6. निबन्धं–B. J.; निबद्धं–उ.

[1]देशकालौ क्रियाकारे [2]यद्यल्पमपि लङ्घयेत् ।
साधितं प्रतिभूर्दाप्यस्तमर्थं साधिते[3] विधिः ॥

[4]पराश्रयमभव्यं वाप्यसत्संसर्गमेव च[5] ।
अपकारक्षमो यश्च द्वेषात्कर्तुमनाः[6] क्वचित् ॥

कारयेत्प्रत्ययायैव [7]तद्भयाल्लग्नकं तु तम् ।
विसंवादेऽथ शीलस्य दाप्यते प्रतिभूस्तथा ॥

'पराश्रयं' इत्यादिषु 'कर्तुमना' इति सम्बन्धः । 'अभव्यम्' विरूपकम् ।

मनुः [८, १६०]

दानप्रतिभुवि प्रेते दायादानपि दापयेत् ॥

कात्यायनः [५३४]

गृहीत्वा बन्धकं यत्र [8]दर्शनेऽस्य स्थितो भवेत् ।
त्रिभागं वादिना तत्र दाप्यः स्यात्तद्दणं सुतः ॥

1. The three verses beginning with 'देशकालौ क्रियाकारे' and ending with 'दाप्यते प्रतिभूस्तथा' are missing in Kane's collections.

2. यद्यल्पमपि–B. J.; यद्येकमपि–ज, यद्येकेनापि–A. S. B., S. B. (a)

3. साधिते–B. J.; साधितो–ड.

4. पराश्रयमसभ्यं वाप्यसत्संसर्गमेव वा–द; असभ्यं तत्–द; वा–A. S. B. ज and S. B. (a).

5. वा–ज, वि.

6. अवाक् क्वचित्–B. J.

7. तद्भयात् लग्नकं तथा–B. J; तदुदयाल्लग्नकं तु तत्–ज; तद्योगाल्लग्नकं तु तम्–ड.

8. दर्शनस्य–द.

**अस्यार्थः**—बन्धकं गृहीत्वा दर्शनप्रतिभूरभूदिति विभाव्य यदि वादिना तस्मिन्नसति तत्सुतस्तदृणं दाप्य इति[1] ।

**मनुः** [८, १६१-१६२]

अदातरि पुनर्दाता विज्ञातप्रकृतावृणम् ।
पश्चात्प्रतिभुवि प्रेते [2]परीप्सेत्केन हेतुना ॥

निरादिष्टधनश्चेत्तु प्रतिभूः स्यादलंधनः ।
स्वधनादेव तद्दद्यान्निरादिष्ट इति स्थितिः ॥

'अदातरि' दानप्रतिभुवोऽन्यस्मिन् प्रतिभुवि । 'दाता' उत्तमर्णः । 'विज्ञातप्रकृतिः' विज्ञातं प्रातिभाव्ये कारणं बन्धकादिग्रहणं यस्य स तथा । 'निरादिष्टधनः' निरादिष्टं धनमधमर्णेन ऋणनिस्ताराय यस्मै स तथा । 'अलंधनः' पर्याप्तधनः । 'निरादिष्टो'ऽत्र निरादिष्टधनस्य पुत्रो लक्षणया, पितरि प्रेते तदृणमसौ दद्यादित्यर्थः[3] ॥

**व्यासः**

ऋणं पैतामहं पौत्रः प्रातिभाव्यागतं सुतः ।
समं दद्यात्तत्सुतौ तु न दाप्याविति निश्चयः ॥

1. बन्धकं गृहीत्वा दर्शनप्रतिभूरयमभूदिति विभाव्य तस्मिन् मृते धनिकाय दर्शनप्रतिभूपुत्रः तदृणं दाप्य इत्यर्थः ॥ (विवादरत्नाकरः, पृ. ४६)

Compare *Manusmṛti*, VIII, 158—

यो यस्य प्रतिभूस्तिष्ठेद्दर्शनायेह मानवः ।
अदर्शयन् स तं तस्य यतेत स्वधनादृणम् ॥

2. परीप्सा, प्राप्तीच्छा-(मेधातिथिः)

3. After reproducing the above comment, with small verbal changes, Caṇḍeśvara adds—

हलायुधनिबन्धे बन्धकमगृहीत्वा लग्नको वृत्त इति विज्ञाता प्रकृतिर्यस्येति विज्ञातप्रकृतिपदं व्याख्याय तादृशे प्रतिभुवि प्रेते ऋणदाता केन हेतुना ऋणं परीप्सेत् अपि तु न केनापि हेतुना गृह्णीयादिति निषेधार्थतयैव प्रथमः श्लोकोऽवतारितः ॥ (विवादरत्नाकरः, ४६)

[1]'समं' कलारहितम् । 'तत्सुतौ' प्रपौत्रपौत्रौ ।

कात्यायनः [५६१]

प्रातिभाव्यागतं पौत्रैर्दातव्यं न तु तत्क्वचित् ।
पुत्रेणापि समं देयमृणं सर्वत्र पैतृकम्[2] ॥

'ऋणं' प्रातिभाव्यागतमिति सम्बन्धः ।

याज्ञवल्क्यः [२, ५५]

बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम् ।
[3]एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि ॥

'एकच्छायाश्रिताः' 'एकस्य' प्रतिभुवः 'छायां' सादृश्यं 'आश्रिताः' ये प्रतिभुवस्ते तथा । यथा एकप्रतिभूः कृत्स्नं द्रव्यं दद्यात्, एवमनेकेऽपि ।

बृहस्पतिः [१०, ७६, ८४]

[4]नष्टस्यान्वेषणे कालं दद्यात्प्रतिभुवे धनी ।
[5]देशानुरूपतः पक्षं मासं सार्धमथापि वा ॥

नात्यन्तं पीडनीयाः स्युर्ऋणं दाप्याः शनैः शनैः ।
स्वसाक्ष्ये न नियोज्याः स्युर्विधिः प्रतिभुवामयम् ॥

'स्वसाक्ष्ये' स्वयं समक्षदर्शने वा ।

तथा [१०, ८२]

प्रातिभाव्यं तु यो दद्यात्पीडितः प्रतिभावितः[6] ।
त्रिपक्षात्परतः सोऽर्थं द्विगुणं लब्धुमर्हति ॥

1. 'समं' निष्कलं, पितामहस्य सकलमृणं पौत्रेण निष्कलं देयम् । पितुः प्रातिभाव्यागतमृणं पुत्रेण निष्कलं देयम् । 'तत्सुतौ' प्रपौत्रपौत्रौ न दद्यातामेवेत्यर्थः ॥ (**विवादरत्नाकरः, ४७**)

2. पैतृकं प्रातिभाव्यागतमृणं पुत्रेण निष्कलं दातव्यं, तत्पुत्रादिभिस्तु देयमेव नेत्यर्थः ॥ (**वि. र., ४७**)

3. एकच्छायाकाः समानग्राहकत्वेन प्रतिभुवः न द्रव्योपभोक्तारः । (**विश्वरूपः**)

4. 'नष्टस्य' पलायिताधमर्णस्य । (**वि. र., ४८**)

5. '**देशाध्वरूपतः**' इति **माधवीयपाठः**

6. 'प्रतिभावितः' प्रतिभूत्वं **कारितः (वि. र., ४८**)

याज्ञवल्क्यः [२, ५६]

प्रतिभूर्दापितो यत्तु [1]प्रकाशं धनिनां[2] धनम् ।
द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्भवेत्[3] ॥

कात्यायनः [५४०]

यस्यार्थे येन [4]यद्दत्तं विधिनाभ्यर्थितेन तु ।
साक्षिभिर्भावितेनैव प्रतिभूस्तत्समाप्नुयात्[5] ॥

## (च) अथर्णादानविधिः

तत्र बृहस्पतिः [१०, १०२, १०३; ११३]

[6]परहस्ताद्गृहीतं यत्कुसीदविधिना ऋणम् ।
येन यत्र यथा देयमदेयं [7]वोच्यतेऽधुना ॥

याचमानाय दातव्यमप्रकालकृतं[8] ऋणम् ।
पूर्णावधौ शान्तलाभमभावे[9] च पितुः सुतैः ॥

1. प्रकाशात्–B. J.

2. 'धनिने' इति विश्वरूपपाठः। 'धनिनो' इति मिताक्षरापाठः। धनिनामिति चण्डेश्वरपाठः।

3. प्रकाशवचनाद्यत् प्रतिभुवो हस्तनिर्गतं तदेव द्विगुणं देयम्। न तु धनिकाय यावद्देयमित्यभिप्रायः। हिरण्यविषयश्चायं श्लोकः॥ (विश्वरूपः).

4. A. S. B. द, ज, and S. B. (a)–यद्वृत्तं विधिना कल्पितेन तु and साक्षिभिस्साधितेनैव। B. J. and *Vīramitrodaya*, (p. 328) confirm our text. Caṇḍeśvara's readings are—विधिनाऽभ्यर्दितेन and धनिना पीडितेन।

5. ग्रहेश्वरमिश्रैस्तु–यस्यार्थे येन यद्दत्तमित्यादि प्रतिभुवा धनिकसमाधानाय यदन्यदपि दत्तं स्यात् तदपि तेन ऋणिकपार्श्वे गृहीतव्यमित्यत्रार्थेऽवतारितमिदम्॥ (विवादरत्नाकरः, ४९).

6. परस्थानात्–B. J.

7. B. J., द, वि–चोच्यते; न देयं नोच्यतेऽधुना–ज.

8. काले–द; कालकृतं धनम्–उ.

9. अलाभे–B. J.

पित्र्यमेवाग्रतो देयं पश्चादात्मीयमेव च ।
तयोः पैतामहं पूर्वं देयमेवमृणं सदा ॥

'प्रकालः' प्रतिनियतः कालोऽवधिरित्यर्थः ।

नारदः [४, २]

पितर्युपरते पुत्रा ऋणं दद्युर्यथांशतः[1] ।
विभक्ता ह्यविभक्ता वा यो वा तामुद्वहेद्धुरम्[2] ॥

याज्ञवल्क्यः [२, ५०]

पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा ।
पुत्रपौत्रैर्ऋणं देयं [3]निह्नवे साक्षिभावितम् ॥

[4]कात्यायनः

यद्दृष्टं दत्तशेषं वा देयं पैतामहं तु तत् ।
सदोषं व्याहृतं[5] पित्रा नैव देयमृणं क्वचित् ॥

[6]पित्रा दृष्टमृणं यत्तु क्रमायातं पितामहात् ।
निर्दोषं [7]नोद्धृतं पुत्रैर्देयं पौत्रैस्तु तद्भृगुः ॥

पैतामहं तु यत्पुत्रैर्न दत्तं रोगिभिः स्थितैः ।
[8]तस्मादेवंविधं पौत्रैर्देयं पैतामहं समम् ॥

1. A. S. B., द, ज and S. B. (a)–यथार्थतः ।

2. तामुद्धरेद्धुरम् for तामुद्वहेद्धुरम्–मु. ना. स्मृ.

3. 'निह्नवे' ऋणिकेन गोपने कृते । 'साक्षिभावितं' 'देयं' देयतया प्रमाणितमित्यर्थः ॥ (विवादरत्नाकरः, ५१).

4. 'Kane', *vv.* 554–556; 473; 560.

5. व्याहृतं–B. J.

6. पित्रादिष्टं–B. J.

7. नैःसृतं–द.

8. तस्यादेवं–वि, B. J., (वि. र., ५१)

अनेकार्थाभियोगेऽपि यावत्संसाधयेद्धनम्[1] ।
साक्षिभिस्तावदेवासौ लभते [2]साधितं धनम् ॥

[3]पुत्राभावे तु दातव्यमृणं पौत्रेण यत्नतः ।
चतुर्थेन यदादत्तं [4]तत्तस्माद्विनिवर्तयेत्[5] ॥

'सदोषम्' द्यूतमद्यादिविनियुक्तम् । 'व्याहतम्' नैतद्देयमिति पित्रा विसंवादितम् । 'चतुर्थेन' पुरुषेण [6]'यदादत्तं' यद्गृहीतं 'तद्विनिवर्तयेत्' न दद्यादित्यर्थः ।

बृहस्पतिः [१०, ११४]

ऋणमात्मीयवत्पित्र्यं पुत्रैर्देयं विभावितम् ।
पैतामहं समं देयं न देयं तत्सुतस्य तु[7] ॥

'आत्मीयवत्' सवृद्धिकं देयमित्यर्थः[8] ।

नारदः [४, ४]

[9]क्रमादव्याहतं प्राप्तं पुत्रैर्यन्नर्णमुद्धृतम् ।
देयं पैतामहं पौत्रैस्तच्चतुर्थान्निवर्तयेत्[10] ॥

1. B. J., संसाधयेद्धनी, which is the reading of the मिताक्षरा, (२, २०) and अपरार्क, as well as स्मृ. चं., (p. 283), परा. मा. (p. 203) वि. र. (p. 51), and वी. मि. व्य. (p. 132).

2. नाधिकं धनम् इति माधवीये ।

3. पित्रभावे तु–ज, द, वि; पित्र्यभावे, इति वि. र., ५२.

4. तस्मात्तद्धि निवर्तते–ज, द, B. J.

5. यदवधिकचतुर्थपुरुषेण यथा दत्तं गृहीतमृणं तच्चदवभिभूतप्रपौत्रान्निवर्तते । तेन प्रपितामहस्य प्रपौत्रो न दद्यादिति तात्पर्यम् ॥ (विवादरत्नाकरः, ५२).

6. यदा न दत्तम्–द.

7. तत्–द.

8. देयं सवृद्धिकमित्यर्थः–उ, वि.

9. विभावितमृणं पित्र्यमात्मीयवत् सवृद्धिकं पुत्रैर्दातव्यम् । पौत्रैः सममवृद्धिकं दातव्यम् । प्रपौत्रैः न देयम् ॥ (विवादरत्नाकरः, ५२)

10. निवर्तते–द, B. J.

याज्ञवल्क्यः [२, ९०]

ऋणं लेख्यकृतं देयं पुरुषैस्त्रिभिरेव तु ।
आधिस्तु भुज्यते तावद्यावत्तन्न [1]प्रदापयेत्[2] ॥

'आधिस्तु भुज्यते' इति—आधिं गृहीत्वा यदृणं दत्तं तद्यावन्न दीयते तावदसावाधिर्भुज्यते । न चतुर्थादिपुरुषे तदृणं निवर्तेत इत्यर्थः ॥

विष्णुः [६, २७-२८]

धनग्राहिणि प्रेते प्रव्रजिते द्विदश समाः प्रवसिते वा तत्पुत्रपौत्रैर्धनं देयम् । नातः परमनिच्छुभिः[3] ॥

नारदः [४, २४]

नार्वाक् संवत्सराद्विंशात्पितरि प्रोषिते सुतः ।
ऋणं दद्यात्पितृव्ये वा [4]प्रेते भ्रातर्यथापि वा ॥

कात्यायनः [५४८-५४९]

विद्यमानेऽपि रोगार्ते स्वदेशात्प्रोषितेऽपि[5] वा ।
विंशात्संवत्सराद्देयमृणं पितृकृतं सुतैः ॥

व्याधितोन्मत्तवृद्धानां तथा दीर्घप्रवासिनाम् ।
ऋणमेवंविधं पुत्रान् जीवतामपि दापयेत् ॥

1. 'प्रदीयते' इति मिताक्षराविवादरत्नाकरपाठः; B. J.

2. See *supra* p. 285.

3. 'परमनीप्सुभिः' इति B. J., स्मृ. चं., विवादरत्नाकरः, व्यवहारप्रकाशश्च । "नातः परमभीप्सुभिरित्यपि पाठः । तस्यायमर्थः—विंशतिवर्षादूर्ध्वे न विलम्बः कार्यः ऋणप्रतिदानमभीप्सुभिरिति" ॥ (व्यवहारप्रकाशः).

4. मु. ना., A. S. B., ज, द, S. B. (a) and वि. र., ५२,–ज्येष्ठे भ्रातर्यथाऽपि वा; प्रेते भ्राता पिताऽपि वा–उ.

5. प्रोषिते तथा–B. J., and वि. र., ५३; प्रोषिते सुतः–ज.

बृहस्पतिः [१०, ११०-११२]

सान्निध्येऽपि पितुः पुत्रैर्ऋणं देयं विभावितम् ।
जात्यन्धपतितोन्मत्तक्षयश्वित्रादिरोगिणः[1] ॥

एकच्छायाकृतं सर्वं दद्यात्तु प्रोषिते सुतः ।
मृते पितरि पित्रंशं परर्णं न कदाचन ॥

नारदः [४, २५]

दाप्यः परर्णमेकोऽपि जीवन्नवियुतैः कृतम्[2] ।
मृतेषु तु न तत्पुत्रः परर्णं दातुमर्हति ॥

विष्णुः [६, ३४-३६]

अविभक्तैः कृतमृणं यस्तिष्ठेत्स दद्यात् । पैतृकमविभक्तानां भ्रातॄणां च । विभक्ताश्च दायानुरूपमंशम् ॥

याज्ञवल्क्यः [२, ४५]

[3]अविभक्तैः कुटुम्बार्थे यदृणं तु कृतं भवेत् ।
दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि ॥

नारदः [४, ३]

पितृव्येणाविभक्तेन भ्रात्रा वा यदृणं कृतम् ।
मात्रा वाथ कुटुम्बार्थे दद्युस्तत्सर्वमृक्थिनः[4] ॥

1. अत्र यदि पिता सर्वथा दानासमर्थः तदा पुत्रेण ऋणं दातव्यमिति समुदयार्थ इति पारिजातस्वरसः ॥ (विवादरत्नाकरः, ५४)

2. जीवत्स्ववियुतैः कृतम्—मु. ना. स्मृ; वि. र., ५४

3. विभक्तानामपि रिक्थभाजां संभवादविभक्तैरित्युक्तम्—(विश्वरूपः ॥) अविभक्तानां मध्य एकेनापि कुडम्बार्थे यदृणं कृतं तत्कर्तरि मृते प्रोषिते वा अन्येऽप्यविभक्ता दद्युः ॥ (वि. र., ५६)

4. मात्रा वा यत्कुटुम्बार्थे दद्युस्तद्रिक्थिनोऽखिलम्—मु. ना. स्मृ.

मनुः [८, १६६]

ग्रहीता यदि नष्टः स्यात्कुटुम्बे च[1] कृतो व्ययः ।
दातव्यं बान्धवैस्तत्स्यात्प्रविभक्तैरपि स्वतः[2] ॥

नारदः [४, ३१]

अप्राप्तव्यवहारश्च स्वतन्त्रोऽपि हि नर्णभाक् ।

कात्यायनः [५५२, ५५१]

नाप्राप्तव्यवहारैस्तु पितर्युपरते क्वचित् ।
[3]कालेन विधिना देयं वसेयुर्नरकेऽन्यथा[4] ॥

[5]पितॄणां सूनुभिर्जातैर्दानेनैवाधमादृणात् ।
विमोक्षस्तु यतस्तस्मादिच्छन्ति पितरः सुतम् ॥

नारदः [४, ५; Vulgate, ५, ९]

इच्छन्ति पितरः पुत्रान् स्वार्थहेतोर्यतस्ततः ।
उत्तमर्णाधमर्णाभ्यां मामयं मोक्षयिष्यति ॥

अतः पुत्रेण जातेन स्वार्थमुत्सृज्य यत्नतः ।
ऋणात्पिता मोचनीयो यथा न नरकं व्रजेत् ॥

तपस्वी चाग्निहोत्री च ऋणवान् म्रियते यदि ।
तपश्चैवाग्निहोत्रं च तत्सर्वं धनिनां भवेत् ॥

1. कुटुम्बार्थे A. S. B., B. J., S. B. (a), ज and कुल्लूक; कृतव्ययः इति वि र. पाठः

2. 'स्वतः' स्वधनादित्यर्थः—(मेधातिथिः)

3. काले तु-ज, द, B. J., वि र., ५७.

4. पितरि प्रेतेऽप्यप्राप्तव्यवहारैः पुत्रैः ऋणं न देयं, व्यवहारप्राप्तिकाले तु देयम् । 'विधिना' यथांशं यथाप्राप्ति वा ॥ (वि. र. ८७).

5. Śloka dropped by विवादरत्नाकर

'उत्तमर्णानि' उत्तमानां देवऋषिपितॄणामृणानि। 'अधमर्णानि' अधमानां मनुष्याणामृणानि सुवर्णधान्यादीनि।

बृहस्पतिः [१०, १२३]

उज्जामादिकमादाय स्वामिने न ददाति यः।
स तस्य दासो भृत्यः[1] स्त्री पशुर्वा जायते गृहे॥

उज्जामशब्देन ऋणमुच्यते। आदिशब्देन निक्षेपादिकमुच्यते।

मनुः [८, १६७]

[2]कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं यमाचरेत्[3]।
स्वदेशे वा विदेशे वा तं [4]विद्वान्न विचालयेत्॥

'अध्यधीनो' दासादिः।

बृहस्पतिः [१०, १२१]

पितृव्यभ्रातृपुत्रस्त्रीदासशिष्यानुजीविभिः।
यद्गृहीतं कुटुम्बार्थे तद्गृही दातुमर्हति॥

विष्णुः [६, ३८ ३९]

वाक्प्रतिपन्नं कुटुम्बिना देयम्। कस्यचित् कुटुम्बार्थे कृतं वा[5]।

कात्यायनः [५४२, ५४३, ५४५]

कुटुम्बार्थमशक्तेन गृहीतं व्याधितेन वा।
उपप्लवनिमित्तं च विद्यादापत्कृतं तु तत्॥

1. पुत्रः for भृत्यः–B. J., विवादरत्नाकरश्च

2. 'कुटुम्बार्थेऽध्यधीनोपि' गृहभृत्योऽपि 'व्यवहारं' गोपश्वादिविक्रयं क्षेत्रस्थण्डिलादिप्रयोगं कर्षणाय ऋणं व्यवहारं वा 'यमाचरेत्' 'स्वदेशे वा विदेशे वा' सन्निहितस्य प्रोषितस्य वा तं 'ज्यायान्' गृहस्वामी 'न विचालयेत्' अविचार्यैव साधु कृतमनुमन्येत॥ (मेधातिथिः)

3. Udaipur Ms. reads समाचरेत्।

4. द, ज, A. S. B., B. J and S. B. (a)–न्यायान्न। Commentators read ज्यायान्न। Govindarāja reads विचारयेत् for विचालयेत्।

5. Manuscripts corrupt; restored from printed *Viṣṇusmṛti*; "प्राक् प्रतिपन्नं देयं कस्यचित् कुडम्बार्थकृतं वा" इति विवादरत्नाकरः (५८)

कन्याविवाहिकं चैव प्रेतकार्ये तु यत्कृतम् ।
एतत्सर्वं प्रदातव्यं कुटुम्बेन कृतं प्रभोः[1] ॥

प्रोषितस्यामतेनापि कुटुम्बार्थमृणं कृतम् ।
दासस्त्रीमातृशिष्यैर्वा दद्यात्पुत्रेण वा भृगुः ॥

नारदः [४, ११]

पितुरेव नियोगाद्वा[2] कुटुम्बभरणाय वा ।
[3]कृतं वा यदृणं कृच्छ्रे दद्यात्पुत्रस्य तत्पिता ॥

बृहस्पतिः [१०, १२४]

ऋणं पुत्रकृतं पित्रा शोध्यं यदनुमोदितम् ।
सुतस्नेहेन वा दद्यान्नान्यथा दातुमर्हति ॥

कात्यायनः [५४४]

ऋणं पुत्रकृतं पित्रा न देयमिति धर्मतः ।
देयं प्रतिश्रुतं यत्स्याद्यच्च स्यादनुवर्णितम् ॥

मनुः [८, १५९ १६०]

प्रातिभाव्यं वृथादानमाक्षिकं सौरिकं च यत्[4] ।
दण्डशुल्कावशिष्टं च न पुत्रो दातुमर्हति ॥

[5]दर्शनप्रातिभाव्ये तु [6]विधिः पूर्वप्रचोदितः ।
दानप्रतिभुवि प्रेते दायादानपि दापयेत् ॥

1. 'प्रभोः' इति कर्तरि षष्ठी, तेन प्रभुणा दातव्यमित्यर्थः । (वि. र., ५९)

2. नियोगाद्यः–मु, ना. स्मृ.

3. ऋणं वा यत्कृतम्–मु. ना. स्मृ.

4. प्रतिभुवः कर्म 'प्रातिभाव्यम्' । प्रतिभुवा यत्कर्तव्यं परर्णसंशोधनादि तत्प्रातिभाव्यम् । 'वृथादानं'–परिहासादिनिमित्तं प्रतिश्रवणम् । अक्षनिमित्तमाक्षिकम् । सुरापाननिमित्तं सौरिकम् ॥ इति मेधातिथिः.

5. दर्शनप्रातिभाव्ये–ज, द.

6. 'विधिस्स्यात् पूर्वचोदितः' इति मु. मनुः; ज, द, A S. B, and S. B. (a)

बृहस्पतिः [१०, ११८]

सौराक्षिकं वृथादानं कामक्रोधप्रतिश्रुतम् ।
प्रातिभाव्यं दण्डशुल्कशेषं पुत्रं न दापयेत् ॥

'सौरम्' मद्यनिमित्तम् । 'आक्षिकम्' द्यूतनिमित्तम् ।

व्यासः

दण्डो वा [1]दण्डशेषो वा शुल्कं तच्छेष एव वा ।
न दातव्यं तु पुत्रेण यच्च न व्यावहारिकम् ॥

'व्यावहारिकम्' व्यवहारार्हपुरुषकृतम् ।

कात्यायनः [५६४-५६५]

[2]लिखितं मुक्तकं वापि देयं यत्तु प्रतिश्रुतम् ।
परपूर्वस्त्रियै तत्तु विद्यात्कामकृतमृणम् ॥

यत्र हिंसां समुत्पाद्य क्रोधाद् द्रव्यं विनाश्य वा ।
उक्तं तुष्टिकरं यत्तु विद्यात्क्रोधकृतं तु [3]तत् ॥

'उक्तम्' प्रतिज्ञातम् ।

याज्ञवल्क्यः [२, ४६]

न योषित्पतिपुत्राभ्यां न पुत्रेण कृतं पिता ।
दद्यादृते कुटुम्बार्थान्न[4] पतिः स्त्रीकृतं तथा ॥

विष्णुः [६, ३२]

न स्त्रीकृतं पतिपुत्रौ ।

1. दण्डशेषं वा–उ.

2. The reading लिखितं is adopted by स्मृ. चं III. (p. 396), वि. र. (p. 61) and वी. मि. व्य. (p. 343); लिखित्वा–उ.

3. B. J–यत्.

4. B. J–कुटुम्बार्थात्; कुटुम्बार्थे–उ.

कात्यायनः [५७८]

[1]देयं भार्याकृतमृणं भर्त्रा पुत्रेण मातृकम् ।
भक्तस्यार्थे कृतं यत्स्यादभिधाय गते दिशम् ॥

नारदः [४, १८-१९]

[2]न च भार्याकृतमृणं कथंचित् [3]पत्युराभवेत् ।
आपत्कृतादृते [4]पुंसः कुटुम्बार्थो हि दुस्तरः ॥

अन्यत्र रजकव्याधगोपशौण्डिकयोषिताम् ।
तेषां तु [5]तत्परा वृत्तिः कुटुम्बं च तदाश्रयम् ॥

'आभवेत्' इति देयं भवेदित्यर्थः ।

याज्ञवल्क्यः [२, ४८]

[6]गोपशौण्डिकशैलूषरजकव्याधयोषिताम् ।
ऋणं दद्यात्पतिस्तासां यस्माद्वृत्तिस्तदाश्रया ॥

[7]बृहस्पतिकात्यायनौ

शौण्डिकव्याधरजक[8]गोपनाविकयोषिताम् ।
अधिष्ठाता ऋणं दाप्यस्तासां भर्तृक्रियासु तत् ॥

1. पत्यौ पुत्रे वा भार्याया मातुश्च वृत्तिमकल्पयित्वा स्थिते गते वा भार्यया मात्रा वा भक्ताच्छादनाय यदृणं कृतं तत्पतिपुत्राभ्यां देयम् ॥ (**विवादरत्नाकरः**, ६२).

2. The two ślokas are ascribed to Kātyāyana by *Vivāda-ratnākara* (p. 62) and *Vīramitrodaya* (p. 354)

3. पत्युर्वापि कथं भवेत्–मु. ना. स्मृ.

4. पुंसां– मु. ना. स्मृ.

5. तत्प्रत्यया– मु. ना. स्मृ.

6. 'गोपो' गोपालः । 'शौण्डिकः' कल्पालः । 'शैलूषो' नटः । 'रजको' वस्त्रनिर्णेजकः रञ्जकश्च । 'व्याधो' लुब्धकः । एते स्त्रीकृतमप्यृणं दद्युः स्त्रीप्रधानत्वादेतेषाम् ॥ (**विश्वरूपः**)

7. बृहस्पति, १०, ११९ ; कात्यायन स्मृ. सारो., ५३८.

8. गोपालाविकयोषिताम्–उ; बि.

'अधिष्ठाता'ऽत्र पतिरेव । 'भर्तृक्रियासु तत्' यतो भर्तुः कर्तव्येषु प्रयोजनेषु तदृणं जातं तासामित्यर्थः[1] ।

याज्ञवल्क्यः [२, ४९]

[2]प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम् ।
स्वयं कृतं वा यदृणं नान्यत्स्त्री दातुमर्हति ॥

कात्यायनः [५४६-५४७]

भर्त्रा पुत्रेण वा सार्धं केवलं [3]वात्मना कृतम् ।
ऋणमेवंविधं देयं नान्यथा तत्कृतं स्त्रिया ॥

मर्तुकामेन या भर्त्रा उक्ता देयमृणं त्वया ।
अप्रपन्नापि सा दाप्या धनं यद्याश्रितं स्त्रिया ॥

'तत्कृतम्' पतिपुत्रकृतम् । 'धनम्' भर्तृधनम् ।

नारदः [४, १६-१७]

न स्त्री पतिकृतं दद्यादृणं पुत्रकृतं तथा ।
अभ्युपेतादृते[4] यद्वा सह पत्या कृतं भवेत् ॥

दद्यादपुत्रा विधवा[5] नियुक्ता या मुमूर्षुणा ।
यो[6] वा तद्रिक्थमादद्याद्यतो रिक्थमृणं ततः ॥

1. अत्र च तदाश्रयवृत्तित्वमेव प्रयोजकं, न तु जात्यादरः ॥ (विवादरत्नाकरः, ६३)

2. दम्पत्योरविभक्तधनत्वेऽप्यभ्युपेतादिव्यतिरेकेण स्त्रिया न देयमित्यभिप्रायः । कुतः पुनः स्त्रीणां स्वातन्त्र्येणर्णप्रसङ्गः, कुतो वा दानमिति । स्त्रीणामपि स्वातन्त्र्येण धनं वक्ष्यति– 'भर्त्रा प्रीतेन यद्दत्तं' इत्यत्र । स्वशरीरोपभोगार्थं स्त्रीणां ऋणप्रसङ्गोऽविरुद्धः ॥ (विश्वरूपः)

3. चात्मना–द, बि.

4. B. J.–अभ्युपेताकृते ; अभ्युपेत्य कृतं यद्वा–ज, द.

5. दद्यादपुत्रविधवा–मु. ना. स्मृ.

6. 'यो वा तदन्यामादद्यात् यतो रिक्थमृणं ततः' इति–बि ; 'दद्यात्तस्य ऋणस्य च' इति विवादरत्नाकरपाठः

विष्णुः [६, २९-३०]

सपुत्रस्य [1]चाप्यपुत्रस्य रिक्थग्राही ऋणं दद्यात् । विधनस्य स्त्रीग्राही[2]।

नारदः [४, २४, २२]

[3]अन्तिमा स्वैरिणीनां या पुनर्भूः प्रथमा च या ।
ऋणं तयोः पतिकृतं दद्याद्यस्ते समश्नुते ॥

अधनस्य ह्यपुत्रस्य मृतस्योपैति यः स्त्रियम् ।
ऋणं वोढुः स भजते तदेवास्य धनं स्मृतम् ॥

'स्वैरिणीनामन्तिमा' नारदेनोक्ता यथा[4]—

देशधर्मानपेक्ष्य स्त्री गुरुभिर्या प्रदीयते ।
उत्पन्नसाहसाऽन्यस्मै साऽन्तिमा स्वैरिणी [5]मता ॥

इति ।

'पुनर्भूः प्रथमा' नारदेनोक्ता [१२, ४६] यथा—

कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता ।
पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्मणा ॥

इति । अत्र चैतयोरन्यस्वैरिण्यापेक्षया श्रेष्ठ्यात् तद्ग्राही तत्पतिकृतमृणं दद्यादित्यर्थः[6] ।

1. वाप्यपुत्रस्य-द.

2. यदि धनाभावे रिक्थग्राही नास्ति तदा यो यदीयां स्त्रियं भार्यात्वेन स्वीकरोति स तदीयमृणं दद्यात् । (वैजयन्ती)

3. अयं ग्रन्थकारः चतस्रः स्वैरिण्यो वक्ष्यति । तिस्रः पुनर्भुवः (१२, ४६, ४९). एतयोरन्तिमोत्तमयोः स्वैरिणीपुनर्भ्वोः स्त्रियोर्यः संगृहीता स एव तत्पूर्वपतिकृतमृणं दद्यादिति समुदायार्थः । विशेषार्थश्चायम् । अत्र उत्तमशब्दः सर्वसाधारणः । एतासां सप्तानामपि मध्ये यैव काचिद्भाग्यसौभाग्यगुणैरुत्तमा । तस्या एव ग्रहीता तत्पतिकृतमृणं दद्यान्न पुत्र इति विशेषनियमात् । (असहायः)

4. १२, ५२.

5. स्मृता–B. J.

6. Manuscripts confused.

कात्यायनः [५६७]

निर्धनैरनपत्यैस्तु यत्कृतं शौण्डिकादिभिः ।
तत्स्त्रीणामुपभोक्ता तु दद्यात्तदृणमेव हि ॥

नारदः [४, २३]

[1]धनस्त्रीहारिपुत्राणामृणभाग्यो धनं हरेत् ।
पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः ॥

'स्त्रीधनिनोः' स्त्री च धनं च स्त्रीधने तद्वतोः । स्त्रीहारिधनहारिणो रित्यर्थः । 'स्त्रीहारी धनिपुत्रयो' रित्यत्रासतोरित्यनुषङ्गः । स्त्रीहारिपुत्रयोस्तु विद्यमानयोर्बाले व्यसनाभिभूते द्रविणानर्हे ऋणदानासमर्थे पुत्रे सति, स्त्रीहारी ऋणं दद्यात् । यदा तु निरुपद्रवो द्रविणार्हो धुर्यश्च पुत्रो भवति तदा स एव ऋणभाक् । न स्त्रीहारीत्यर्थः[2] ।

1. अत्र यस्य पुरुषस्य ऋणयुक्तस्य मृतस्य धनं दायादैराक्रम्य गृहीतम् । पत्नी च निर्धना, पुत्रमप्युत्सृज्यान्यस्य गृहे प्रविष्टा । पुत्रोऽपि धनमातृविहीनः केवलस्तिष्ठति । तदा व्यवहारकत्रयाणां मध्ये विधृत्य कस्य धनं गृह्णातु । केन च तद्दातव्यमिति । अस्यार्थस्य निगमार्थमेतदुक्तम् । एषां मध्येऽपि ऋणभाक् यो धनं हरेत् । धनस्य प्राधान्यात् । धनग्राही ऋणं दद्यात् । तस्मिन् विद्यमाने नाऽन्यः कश्चिदिति । यस्य तु सऋणस्य मृतस्य पुरुषस्य धनस्याभावान्न धनहारी कश्चिज्जातः । स्त्रिया अप्यभावान्न स्त्रीहारी कश्चिदस्ति । पितृमातृधनवर्जितः पुत्र एव केवलस्तिष्ठति । तदा असतोः स्त्रीहारिधनहारिणोः पुत्र एव बीजसंभवसंबन्धात् पितृकृतमृणं प्रयच्छतीति । यस्य तु धनस्य हारी न कश्चिदस्ति । न पुत्रो विद्यते । पत्न्येव धनपुत्रविहीनान्यस्य गृहे प्रविष्टा । तदा धनहारिपुत्रयोरसतोरविद्यमानयोः स्त्रीहारी ऋणं दद्यात् इति । त्रयाणामपि धनस्त्रीहारिपुत्राणां समुदितानामपि मध्ये येन ऋणं देयं तद्दर्शितम् तथा । द्वयोरभावे एकैकेन येन ऋणं देयं तदपि सग्रन्थपाठं दर्शितम् । यस्य पुनः निर्धनत्वाद्धनं नास्ति । पुत्रः स्त्रीहारी च विद्यते । तदा तयोः स्त्रीहारिपुत्रयोः द्वयोर्मध्ये केन ऋणं देयमित्यत्रापि अर्थापत्तितारतम्यापेक्षया । यदि रूपयौवनसंपन्ना काममदोद्धता प्रधानाभिमता च स्त्री, तदा तस्य स्त्रीहारी ऋणं दद्यात् । यतः तदेव तस्य धनमित्युक्तमेव । अथवा साऽपि स्त्री निर्भोग्या कर्मकारित्वग्रासमात्रभोजना । ततः पुत्रोऽसतोः स्त्रीधनिनोरिति न्यायात् । पुत्र एव ऋणं दद्यात् । इति विस्फुटीकृतमिदम् ॥ (असहायभाष्यम्)

2. स्त्रीहारी नेत्यर्थः-वि.

तथा च कात्यायनः [५५७; ५७६]

> ऋणं तु दापयेत्पुत्रं यदि स्यान्निरुपद्रवः ।
> द्रविणार्हश्च धुर्यश्च नान्यथा दापयेत्सुतम् ॥
>
> व्यसनाभिप्लुते पुत्रे बालो वा यत्र दृश्यते ।
> द्रव्यहृद्दाप्यते तत्र तस्याभावे पुरन्धिहृत् ॥

याज्ञवल्क्यः [२, ५१]

> [1]रिक्थग्राह [2]ऋणं दाप्यो योषिद्ग्राहस्तथैव च ।
> पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः ॥

'रिक्थग्राह ऋणं दाप्य' इति । अन्यादिसम्बन्धविशेषेण[3] यो यदीयं द्रव्यं गृह्णाति स तत्कृतमृणं राज्ञा दाप्यत इत्यर्थः । 'पुत्रोऽनन्याश्रितद्रव्यः' इति । न अन्यस्मिन् संश्रितं मातापित्रोः सम्बन्धि द्रव्यं यस्य स तथा ।

1. ऋणिके सत्ययं दानक्रमः । तदभावे तु—'रिक्थग्राही ऋणं' इत्यादि । रिक्थानुसारित्वादृणानां रिक्थग्राहिण एव निर्विचिकित्सं दद्युः । निर्धनस्य नियोगाद्विना योऽस्य भार्यां संगृह्णीयात्, स दद्यात् । एतच्चाब्राह्मणविषयम् । तद्योषितामेवान्यगामित्वसंभवात् । 'तथैव च' इति धनग्राहिवदविकल्पयन् योषिद्ग्राह्यपि दद्यादित्यर्थः । तदेव हि द्रव्यं द्रव्यहीनस्येत्यभिप्रायः । एतस्मादेव चातिदेशात् रिक्थाभाव एव योषिद्ग्राह्यादयः प्रत्येतव्याः । 'पुत्रोऽनन्याश्रितद्रव्य' इति । न अन्यस्मिन्नाश्रितं द्रव्यं यस्य असौ 'अनन्याश्रितद्रव्यः' पुत्रो दद्यात् । न चेद्द्रव्यमन्येन गृहीतमित्यर्थः । न त्वद्रव्यस्यैव पुत्रो दद्यात् । ऋणस्य द्रव्यानुसारित्वादित्येतत् प्रागेव ज्ञापितम् । बहुपुत्रस्य यद्येकः पितृधनमितरानुमतो गृह्णीयात्, तदा धनग्राहिण इतरेषां च तुल्यं ऋणभाक्त्वं, यतोऽन्यैरपि स्वेच्छया स्वांशोत्संकलनं कृतमितीमामाशङ्कां निरस्यति 'पुत्रोऽनन्याश्रितद्रव्य' इति । येनैव पुत्रेण द्रव्यमाश्रितं, स एव दद्यात् । नाऽन्योऽनुमन्तापि । अत एव च ज्ञायते भागशः पुत्रा ऋणं दद्युरिति । यद्वा, 'अनन्याश्रितद्रव्य' इत्यस्यान्योऽर्थः— पितरि मृते, यस्य पैतृकं रिक्थं केनापि परिनिक्षिप्तादिहेतुनान्यस्मिन्नाश्रितं सोऽन्याश्रितद्रव्यः, न तदप्राप्यैव पैतृकं ऋणं दद्यात् ॥ 'पुत्रहीनस्य रिक्थिनः'—अन्येऽपि तु भवन्तीति शेषः ॥ (विश्वरूपः)

2. ऋणग्राहीति स्मृ. चं. पाठः (p. 400).

3. योऽनादिसंबन्धवशेन यो–वि.

अत्रापि ऋणं दाप्यत इत्यर्थः। अत्र च पितृधनग्रहणयोग्यः पुत्रो विवक्षितो, न तु लब्धपितृधनः। तस्य रिक्थग्राह इत्यनेनैव गतार्थत्वात्। एतच्चान्धपङ्ग्वादेः पितृधनग्रहणानधिकारिणः पुत्रस्य ऋणापकरणेऽधिकारो मा भूदित्येवमर्थम्। 'रिक्थिनो'ऽत्र रिक्थग्रहणयोग्याः पौत्राः।[1]

कात्यायनः [५७१, ५७२, ५७३]

अमतेनैव[2] पुत्रस्य प्रधना यान्यमाश्रयेत्।
पुत्रेणैवापहार्यं तद्धनं दुहितृभिर्विना॥

ऋणार्थमाहरेत्तत्तु न सुखार्थं कथंचन।
अयुक्ते कारणे यस्मात्पितरौ तु न दापयेत्॥

या स्वपुत्रं तु जह्यात्स्त्री समर्थमपि पुत्रिणी।
आहृत्य स्त्रीधनं तत्र [3]पितृर्यर्णं शोधयेन्मनुः॥

1. 'यो यदीयां योषितं गृह्णाति स तत्कृतमृणं दाप्यः। योषितोऽविभाज्यद्रव्यत्वेन रिक्थव्यपदेशानर्हत्वाद्भेदेन निर्देशः। ......पुत्रे सत्यप्यन्यो रिक्थग्राही संभवति। क्लीबान्धबधिरादीनां पुत्रत्वेऽपि रिक्थहरत्वाभावात्। ... अतश्च क्लीबादिषु पुत्रेषु सत्सु, अन्यायवृत्ते च सवर्णापुत्रे सति रिक्थग्राही पितृव्यतत्पुत्रादिः। ......'पुत्रहीनस्य रिक्थिनः' इत्येतदपि पुत्रपौत्रहीनस्य प्रपौत्रादयो यदि रिक्थं गृह्णन्ति तदा ऋणं दाप्याः, नान्यथा इत्येवमर्थम्। पुत्रपौत्रौ च रिक्थग्रहणाभावेऽपि दाप्यौ इत्युक्तम्। यथाह नारदः—"क्रमादव्याहतं प्राप्तं पुत्रैर्यन्नर्णमुद्धृतम्। दद्युः पैतामहं पौत्रास्तच्चतुर्थान्निवर्तते॥" इति॥ रिक्थशब्देन योषिदेवोच्यते, "सैव चास्य धनं स्मृतम्" इति स्मरणात्। 'यो यस्य हरते दारान् स तस्य हरते धनम्' इति च [नारदीये, ४, २१]। ......पुत्राद्यन्वयहीनस्योत्तमर्णस्य यो रिक्थी रिक्थग्रहणयोग्यः सपिण्डादिस्तस्य रिक्थिनो दाप्यः॥ (मिताक्षरा)

2. 'अमतेन' असंमत्या। 'प्रधना' प्रकृष्टस्त्रीधना। 'दुहितृभिर्विना' दुहितॄणामभावे। या स्त्री समर्थमपि पुत्रं परित्यज्य स्त्रीधनमादाय पुत्रस्यासंमत्या पुरुषान्तरं श्रितवती, तस्याः स्त्रीधनमप्याच्छिद्य पुत्रेण ऋणं शोधनीयमिति तृतीयवाक्यार्थः। 'समर्थमपि' इत्यनेन असमर्थमपि। पुत्रपरित्यागे तु तस्याः स्त्रीधनं पुत्रेणाच्छेत्तव्यमिति दर्शितम्॥ (विवादरत्नाकरः, ६७)

3. A. S. B., ज, द and S. B. (a)–तदृणं

'प्रधना' प्रभूतधना ।

नारदः [४, २०, २१]

[1]पुत्रिणी तु समुत्सृज्य पुत्रं स्त्री यान्यमाश्रयेत् ।
तस्या [2]ऋणं हरेत्सर्वं निःस्वायाः पुत्र एव तु ॥

[3]या तु सप्रधनैव स्त्री सापत्या वान्यमाश्रयेत् ।
सोऽस्या दद्यादृणं भर्तुरुत्सृजेद्वा तथैव ताम्[4] ॥

कात्यायनः [५७४-५७५]

बालपुत्राधिकार्था च भर्तारं यान्यमाश्रिता ।
आश्रितस्तदृणं दद्याद्बालपुत्राविधिः स्मृतः ॥

[5]दीर्घप्रवासिनिर्बन्धुजडोन्मत्तार्तलिङ्गिनाम्[6] ।
जीवतामपि दातव्यं तत्स्त्रीद्रव्यं समाश्रितैः ॥

1. अत्र या स्त्री विधवा पुत्रवती च, क्रमागतस्त्रीधनवती च, कामान्धा पुत्रमुत्सृज्य त्यक्त्वा अन्यं भर्तारमाश्रयेत् । स्त्रीधनस्वकीयरहितापि तस्या यत्स्त्रीधनं तत्सोऽन्य एव भर्ता गृह्णीयात्, न पुत्राः । या पुनर्निःस्वा स्त्रीधनरहिता भर्तृधनसहिताम्यं याति, तद्धनमन्यो भर्ता न लभते । तस्य पितृधनस्य पुत्रः स्वामीति ॥ (असहायः)

2. धनम्—A. S. B., ज, द and S. B. (a); ऋणं–उ; 'द्रव्यम्' इति मु. ना.; ऋणं इति व्य. प्रकाश.

3. So the printed *Nāradasmṛti*, A. S. B. and S. B. (a), उ and B. J. read; यं तु सा प्रधना स्त्री सानपत्या वाम्यमाश्रयेत्–ज.

4. तम्–द.

5. दीर्घप्रवासिभिः–द.

6. जडोन्मत्तादिलिङ्गिनाम्–ज, B. J.

## (छ) अथोद्ग्राहणविधिः[1]

तत्र मनुः [८, ४८-४९]

यैर्यैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णिकः ।
तैस्तैरुपायैः संगृह्य[2] साधयेदधमर्णिकम् ॥

[3]धर्मेण व्यवहारेण छलेनाचरितेन च ।
प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥

बृहस्पतिः [१०, ८७]

प्रतिपन्नमृणी दाप्यः सामादिभिरुपक्रमैः ।
धर्मोपधिबलात्कारैर्गृहसंरोधनेन च ॥

कात्यायनः [५८५, ५८६, ५८७, ५८८]

पीडनेनोपरोधेन साधयेद्धणिकं धनी ।
कर्मणा व्यवहारेण [4]सान्त्वेनादौ विभावितम् ॥

आददीतार्थमेवं तु व्याजेनाचरितेन[5] च ।
राजानं स्वामिनं विप्रं[6] सान्त्वेनैव प्रदापयेत् ॥

रिक्थिनं [7]सुहृदं चापि छलेनैव प्रदापयेत्[8] ।

1. उद्ग्राहणविधिः–द, ज, B. J.

2. 'सङ्गृह्य'–स्थिरीकृत्य, अनेनैवोपायेन एतस्मादेतल्लभ्यत इत्येतन्निश्चित्येत्यर्थः । अथवानुकूलमुपसान्त्वनं सङ्ग्रहः—(मेधातिथिः ॥) 'सङ्गृह्य' वशीकृत्य इति वि. र., ६९.

3. 'छलेन' केनचिदपदेशेन । 'आचरितम्' अभोजनगृहद्वारोपवेशनादि । 'बलम्' राजाधिकरणोपस्थानम् । (मेधातिथिः ॥)

4. सान्त्वनादौ–ज; साक्ष्येनादौ–उ.

5. व्याजेन चरितेन च–ज, द.

6. मित्रं–ज.

7. सहृदं चापि–ज, द.

8. प्रसाधयेत्–B. J., ज, द, वि. र., ७०.

तथा

वणिजः कर्षकाश्चैव शिल्पिनश्चाब्रवीद्भृगुः ।
देशाचारेण दाप्याः स्युर्दुष्टान् संपीड्य दापयेत् ॥

बृहस्पतिः [१०-८८; ९०]

सुहृत्सम्बन्धिसंदिष्टैः सामोक्त्यानुगमेन च ।
प्रायेण वा ऋणी दाप्यो धर्म एष उदाहृतः ॥

छद्मना याचितं चार्थमानीय ऋणिकाद्धनी ।
[1]अन्वाहितादि वाहृत्य दाप्यते यत्र सोपधिः ॥

बध्द्वा स्वगृहमानीय ताडनाद्यैरुपक्रमैः ।
ऋणिको दाप्यते यत्र बलात्कारः [2]स कीर्तितः ॥

दारपुत्रपशून् रुध्द्वा कृत्वा द्वारोपवेशनम् ।
यत्रर्णी दाप्यतेऽर्थं स्वं तदाचरितमुच्यते ॥

'सुहृत्संबन्धिसंदिष्टैः' तत्सुहृदां संबन्धिनां संदेशैः ।

कात्यायनः [५८०-५८४]

धार्योऽवरुद्धस्त्वृणिकः प्रकाशं जनसंसदि ।
यावन्न दद्याद्देयं च[3] देशाचारस्थितिर्यथा ॥

विण्मूत्रशङ्का यस्य स्याद्धार्यमाणस्य देहिनः ।
पृष्ठतो वानुगन्तव्यं निबद्धं वा समुत्सृजेत् ॥

स कृतप्रतिभूश्चैव मोक्तव्यः स्याद्दिने दिने ।
आहारकाले रात्रौ च निबन्धे प्रतिभूः स्थितः ॥

1. द, A. S. B. and S. B. (a)–अयाचितादि; अपादितादि–ज.
2. प्रकीर्तितः–ज; स उच्यते इति वि. र. पाठः (७०)
3. तु–द.

यो दर्शनप्रतिभुवं नाधिगच्छेन्न चाश्रयेत् ।
स चारके[1] निरोद्धव्यः स्थाप्यो वाऽऽवेद्य रक्षिणः ॥

न चारके निरोद्धव्य[2] आर्यः प्रात्ययिकः शुचिः ।
[3]सोऽनिबद्धः प्रमोक्तव्यो[4] निबद्धः शपथेन वा ॥

'विण्मूत्रशङ्का' विण्मूत्रवेगसूचनम् । 'निबद्धो' नियमितः । 'चारके' कारागृहे ।

मनुः [८, १७७]

कर्मणापि समं कुर्याद्धनिकस्याधमर्णिकः ।
समोऽवकृष्टजातिश्च दद्याच्छ्रेयांस्तु[5] तच्छनैः[6] ॥

'कर्मणापि समं कुर्यात्' अधमर्णिकत्वेनोत्तमर्णादधरीभूतमात्मानं तावद्धनकार्यकर्मकरणेनापि समं कुर्यादधमर्णत्वमपनयेदित्यर्थः । 'श्रेयान्' उत्तमजातीयो गुणाधिकश्च ।

बृहस्पतिः [८, १०५]

निर्धनं ऋणिकं[7] कर्म गृहमानीय कारयेत् ।
शौण्डिकाद्यं ब्राह्मणस्तु दापनीयः शनैः शनैः ॥

1. A. S. B., ज, द S. B. (a) and *Vīramitrodaya*, (p. 335)-वारकैः
2. ऽवरोद्धव्यः-B. J.
3. सोनिबद्ध-B. J., वि. र., ७१.
4. प्रयोक्तव्यो-B. J.
5. A. S. B., द, ज and S. B. (a)-श्रेष्ठस्तु
6. निर्धनोऽधमर्णो निर्धनत्वान्न मुच्यते; किन्तर्हि, कर्म कारयितव्यः, प्रेष्यं व्रजेत् । यावता धनेन तत्कर्म कर्मकरः करोति, तत्तस्य प्रविष्टं संसद्यपि कर्तव्यम् । कर्म कुर्वतश्च सलाभधने प्रविष्टे दास्यान्मोक्षः । 'समं कुर्यात्' उत्तमर्णेन । अथ शुद्धे धने नोत्तमाधमव्यवहारः—एकोऽधमर्णोऽपर उत्तमर्ण इति । एतच्च कार्यते । 'समं' समानजातीयः । 'अवकृष्टजातिः' हीनजातीयः । 'श्रेयांस्तु' उत्तमजातीयो गुणाधिको वा । 'शनैः' क्रमेण यथोत्पादं दद्यात् । ...अतो राज्ञा धनिकधनसंशुद्ध्यर्थे परिक्षीणो ब्राह्मणो न पीडयितव्यः, उत्तमर्णश्च रक्षणीयः ॥ (मेधातिथिः)
7. ऋणिनं-A. S. B., द, and S. B. (a)

याज्ञवल्क्यः [२, ४३]

हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत् ।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम्[1] ॥

'यथोदयम्' यथाद्रव्योत्पत्ति ।

कात्यायनः [५८९]

कर्मणा[2] क्षत्रविट्शूद्रान् समहीनांस्तु दापयेत् ।

तथा [५९०]

यदि ब्राह्मणादिष्टमशुभं कर्म कारयेत् ।
प्राप्नुयात्साहसं पूर्वमृणान्मुच्येत चर्णिकः ।

नारदः [४, १२३]

अथ शक्तिविहीनः स्यादृणी कालविपर्ययात् ।
शक्त्यपेक्षमृणं[3] दाप्यः काले काले यथोदयम् ॥

'शक्तिविहीनः' ऋणं दातुम् । 'कालविपर्ययात्' दुर्भिक्षादेः ।

बृहस्पतिः [१०, ९९-१००]

[4]पूर्णावधौ शान्तलाभमृणमुद्ग्राहयेद्धनी ।
कारयेद्वा ऋणी लेख्यं चक्रवृद्धिव्यवस्थया ॥

1. 'परिक्षीणं' निर्धनं, 'ऋणार्थे' ऋणनिवृत्त्यर्थं, 'कर्म' स्वकर्म स्वजात्यनुरूपं, 'कारयेत्' तत् कुटुम्बाविरोधेन । 'ब्राह्मणस्तु परिक्षीणः' निर्धनः, 'शनैः', 'यथोदयं' यथासंभवमृणं दाप्यः । अत्र च हीनजातिग्रहणं समानजातेरप्युपलक्षणम् । अतश्च समानजातिमपि परिक्षीणं यथोचितं कर्म कारयेत् । ब्राह्मणग्रहणं च श्रेष्ठजातेरुपलक्षणम् । अतश्च क्षत्रियादिरपि परिक्षीणो वैश्यादेः शनैः शनैर्दाप्यो यथोदयम् ॥ (मिताक्षरा)

2. 'कर्षकान्' इति व्यवहारप्रकाशपाठः; "कल्पतरौ तु 'कर्मणा...दापयेत्' इति पठितम् । तत्र कर्मणा दापयेदित्यन्वयान्न कोऽपि विरोधः ॥" (व्य. प्र., १६२, चौखाम्बाकोशः) । 'कर्मणा' कर्मकरणद्वारेण । (वि. र., ७३)

3. शक्त्यपेक्ष्यमृणं दाप्यः–ज, द., वि. र., ७३. शक्त्यपेक्षमृणी–उ.

4. A. S. B., ज, and S. B. (a)–पूर्वावधौ

'शान्तलाभम्' परमवृद्धिप्राप्तम् ।

द्विगुणस्योपरि यदा चक्रवृद्धिः प्रगृह्यते ।
भोगलाभस्तथा तद्वन्मूलं स्यात्सोदयमृणम् ॥

कात्यायनः [५०९]

प्राप्तं स्याद्द्विगुणं द्रव्यं प्रयुक्तं [1]धनिना सदा ।
[2]लभेत चेन्न द्विगुणं पुनर्वृद्धिं प्रकल्पयेत् ॥

मनुः [८, १५४-१५६]

ऋणं दातुमशक्तो यः कर्तुमिच्छेत्पुनः क्रियाम् ।
स दत्वा निर्जितां वृद्धिं करणं परिवर्तयेत् ॥

अदर्शयित्वा तत्रैव हिरण्यं [3]परिवर्तयेत् ।
यावती संभवेद्वृद्धिस्तावतीं दातुमर्हति ॥

चक्रवृद्धिं समारूढो देशकालव्यवस्थितः ।
अतिक्रामन् देशकालौ न तत्फलमवाप्नुयात् ॥

'निर्जितां' लभ्यत्वेनात्माधीनासंपन्नाम् । 'करणं परिवर्तयेत्' अन्यलेख्यसाक्ष्यादि कुर्यात् । 'अदर्शयित्वा' हिरण्यं दीयमानमिति शेषः । तेन धनिने सर्वं सवृद्धिकं हिरण्यमदत्त्वेत्यर्थः । तत्रैव पुनः करणं परिवर्तयेत् साक्षिसमक्षमेतद्ब्रूयात् । एतावन्मूलमस्मै धारयामि, एतावती वृद्धिरिति पत्रे चारोपयेदित्यर्थः । एतच्च यावद्वृद्धि धनं दातुं शक्नोति तावद्दत्वा करणपरिवर्तनं कार्यम् । 'समारूढः' प्रतिपन्नोऽङ्गीकृतवानिति यावत् । तत्फलं चक्रवृद्धिः लक्षणम् ॥[4]

1. B. J.-धनिनः सदा; धनिना सदा-ज, द.

2. B. J.-लभेत चान्न

3. B. J.-परिवर्जयेत्

4. Commentary reproduced by *Vyavahāraprakāśa* (p. 337), and paraphrased by विवादरत्नाकर, ७५.

बृहस्पतिः [१०, ५१, ५२, ५५]

हिरण्ये द्विगुणीभूते मृते नष्टेऽधमर्णिके ।
द्रव्यं तदीयं संगृह्य विक्रीणीत [1]ससाक्षिकम् ॥

रक्षेद्वा कृतमूल्यं तु दशाहं जनसंसदि ।
ऋणानुरूपं परतो गृहीतान्यत्तु वर्जयेत् ॥

स्वधनं च स्थिरीकृत्य गणनाकुशलैर्नरैः ।
तद्धनं भुञ्जातिविदितं प्रगृह्यापराध्नुयात् ॥

मनुः [८, ५०]

यः स्वयं साधयेदर्थमुत्तमर्णोऽधमर्णिकात् ।
[2]स राज्ञा नाभियोक्तव्यः स्वकं संसाधयन् धनम् ॥

विष्णुः [६, १८]

प्रयुक्तमर्थं यथाकथञ्चित् संसाधयन् न राज्ञो वाच्यः स्यात् ।
'यथाकथञ्चित्' अवरोधवञ्चनादिना[3] ।

याज्ञवल्क्यः [२, ४०]

[4]प्रयुक्तं साधयानोऽर्थं न वाच्यो नृपतेर्भवेत् ।
साध्यमानो नृपं गच्छन् [5]दण्ड्यो दाप्यश्च तद्धनम् ॥

1. B. J.–समाक्षिकम्

2. न स राज्ञाभियोक्तव्यः स्वकं संसाधयन् धनम्–ज, द.

3. अवरोधबन्धनादिना–ज, द, बि, वि. र., ७६; A. S. B., स्मृत्याचाराविरुद्धेन मार्गेण

4. प्रपन्नं साधयन्नर्थं–मिता. वि. र. पाठः and B. J.; प्रयुक्तं साध्यमानोऽर्थं–उ.

प्रपन्नं न्यायेन स्पष्टीकृतं यदृच्छया साधयानोऽर्थं न राज्ञा किञ्चित् वक्तव्यः । यदि तु साध्यमानो राजन्यावेदयेत् ततो दण्ड्यो दाप्यश्च राज्ञैव तद्धनम् । धनिकायेति शेषः–(विश्वरूपः)

5. नृपं गच्छेदिति मिताक्षरापाठः

विष्णुः [६, १९]

साध्यमानश्चेद्राजानमभिगच्छेत्तत्समं दण्ड्यः ।

'तत्समम्' साध्यमानर्णसमम् ।

मनुः [८, १७६]

यः साधयन्तं [1]छन्देन वेदयेद्धनिकं नृपे ।
[2]स राज्ञा तच्चतुर्भागं दाप्यस्तस्य च तद्धनम् ॥

बृहस्पतिः [१०, ९५]

प्रतिपन्नस्य धर्मोऽयं व्यवसायी[3] तु संसदि ।
लेख्येन साक्षिभिर्वाऽपि भावयित्वा प्रदापयेत् ॥

[4]बृहस्पतिः [१०, १०१]

अनावेद्य तु राज्ञे यः संदिग्धेऽर्थे प्रवर्तते[5] ।
प्रसह्य स विनेयः स्यात्स चाप्यर्थो[6] न सिध्यति ॥

कात्यायनः [५८०]

[7]पीडयेत्तु धनी यत्र ऋणिकं न्यायवादिनम्[8] ।
तस्मादर्थात्स हीयेत तत्समं चाप्नुयाद्दमम्[9] ॥

1. 'छन्द' इच्छा-(मेधातिथिः)
2. स लाभस्य चतुर्भागम्-ज, द; स राज्ञस्तु चतुर्भागम्, B. J.
3. व्यपलापी-ज, द, विवादरत्नाकर, ७७. व्यवहारमयूख (ed. Kane), १८१.
4. Wrongly given as *Nārada's* in one manuscript.
5. A. S. B., B. J., द, and S. B. (a)-प्रवर्तयेत्
6. A. S. B., and S. B. (a)-सर्वार्थोऽस्य न सिध्यति; स चार्थोऽस्य-द, वि.
7. B. J.-संपीडयेत्
8. वादिनाम्-ज.
9. आप्नुयाद्धनम्-ज, द, A. S. B., S. B. (a)

बृहस्पतिः १०, ९७, ९६, ९८]

[1]नासेद्धव्यः क्रियावादी सन्दिग्धेऽर्थे कथञ्चन ।
[2]आसेधयंस्त्वनासेध्यं दण्ड्यो भवति धर्मतः ॥

प्रदातव्यं यद्भवति न्यायतस्तद्ददाम्यहम् ।
एवं यत्तर्णिको ब्रूते क्रियावादी स उच्यते ॥

रूपसंख्यादिलाभेषु यत्र भ्रान्तिर्द्वयोर्भवेत् ।
देयानादेययोर्वाऽपि सन्दिग्धोऽर्थः [3]प्रकीर्तितः ॥

मनुः [८, ४७]

अधमर्णार्थसिध्यर्थमुत्तमर्णेन चोदितः[4] ।
दापयेद्धनिकस्यार्थमधमर्णाद्विभावितम्[5] ॥

तथा [८, ५५]

अर्थेऽपव्ययमानं तु करणेन विभावितम् ।
दापयेद्धनिकस्यार्थं दण्डलेशं च शक्तितः ॥

तथा [८, ५९]

यो यावन्निह्नुवीतार्थं [6]मिथ्या यावति वा वदेत् ।
तौ नृपेण ह्यधर्मज्ञौ दाप्यौ तद्द्विगुणं दमम् ॥

1. 'न रोद्धव्यः' इति व्यव. मयू. (१८१)
2. 'आसेधो' राजाज्ञयावरोधः (व्य. मयू. १८१)
3. स उच्यते-B. J.
4. द, A. S. B. ज and S. B. (a)-देशितः
5. अधमर्णेन भावितम्-ज; उत्तमर्णेन भावितम्-द; अधमर्णविभावितम्-बि.
6. मिथ्या यो वाऽभियोगकृत्-A. S. B., S. B. (a), ज, द.

'अधमणार्थसिध्यर्थम्' अधमर्णतो यो लभ्योऽर्थः तत्प्राप्त्यर्थम् । उत्त-मर्णेन 'चोदितः' प्रेरितः, अत्र राजा प्रकृतत्वात् । 'विभावितम्' निश्चितम् । 'निह्नुवीत' अपलपेत्, अधमर्ण इति सम्बन्धः । 'मिथ्या यावति वा वदेत्' उत्तमर्ण इति संबन्धः ।

*याज्ञवल्क्यः [२, ११]

निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम् ।
मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत् ॥

*व्यासः

मिथ्याभियोगी द्विगुणमभियोगाद्धनं [1]वहेत् ।
[2]कारणे विधिरेष स्याज्जितस्यैकतरस्य तु ॥
प्राङ्न्यायवादे तु तथा यश्चासत्येन युज्यते ।

'अभियोगात्' अभियुक्तधनात् । 'कारणे' प्रत्यवस्कन्दने । 'असत्येन' मिथ्योत्तरेण ॥

नारदः [१, ५५]

न च मिथ्याभियुञ्जीत दोषो[3] मिथ्याभियोगिनः ।
यस्तत्र विनयः प्रोक्तः सोऽभियोक्तारमाव्रजेत् ॥

* इमे याज्ञवल्क्यव्यासवाक्ये कामधेनाविह प्रकरणेऽदृष्टे अपि, कल्पतरौ दर्शना-लिखिते' इति विवादरत्नाकरः (७६)

1. B. J.-हरेत्; भवेत्-ज.

2. B. J. has an unacknowledged gap here, extending to लिखितेऽर्थे प्रविष्टे लिखितं पाटयेत् towards the end of the *Prakaraṇam* but it is reproduced out of its place on p. 341 *infra* after the first sloka in मनु later on. Some folia of B. J. seem to have been misplaced.

3. ज, द, A. S. B. and S. B. (a)-यो यो

मनुः [८, १३९]

[1]ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति ।

अपह्नवे तद्द्विगुणं तन्मनोरनुशासनम् ॥

[2]यद्यर्थं विप्रतिपद्य राजसभायामानीतोऽधमर्णः ऋणं देयतया प्रतिजानीते—'सत्यमस्मै धारयामि' इति स पञ्चकं शतमर्हति, दण्डमिति शेषः । यस्तु सभायामप्यपह्नुते—'नाहमस्मै धारयामि'—इति सः पञ्चशताद्द्विगुणं, दशकं [शतं] दण्डमर्हति । अनेन संकलनेन विंशतितमो भागो दण्डः संपद्यते । एतच्चाशयदोषव्यतिरेकेण भ्रान्त्यादिना विप्रतिपद्य पश्चात्संप्रतिपद्यते तद्विषयम् । यत्तु 'यो यावन्निह्नुवीतार्थं' इत्यत्र द्विगुणदमदानं तदाशयदोषेण तथाऽकरणेऽवगन्तव्यम् । तत्राधर्मज्ञावित्यभिधानात् ॥

1. यो राजसभायामानीतोऽधमर्णः ऋणं देयतया प्रतिजानीते, 'सत्यमस्मै धारयामि' इति, स 'पञ्चकं शतमर्हति' दण्डमिति शेषः । अनेन संकल्पितेन विंशतितमो भागो दण्ड्यते । ... यस्तु व्यतिक्रमान्तरं करोति, अपह्नुते—'नाहमस्मै धारयामि'इति, स तैः प्रतिपादितः 'तद्द्विगुणं' तस्मात्पञ्चकाद्द्विगुणं दशकं शतमित्यर्थः । 'तन्मनोः' प्रजापतेः 'अनुशासनं' सृष्टिकालप्रभृति व्यवस्थानीतिरिति यावत् । अन्ये तु तच्छब्देन देयमेव प्रत्यवमृशन्ति । यावत्तस्मै देयं तद्द्विगुणम् । तेन 'यो यावन्निह्नुवीतार्थं' इत्यनेनैकवाक्यं भवति । अन्यथा वाक्यभेदः । विषयविशेषानिर्देशादेकविषयत्वे विकल्पः प्राप्नोति । स च न युक्तो, द्विगुणस्यात्यन्तबहुत्वात् । असत्यपि निर्देशे तस्य विषयो दर्शनम्, तस्य प्रत्यासन्नेषु पञ्चकमिति, अर्थात् तस्यैवानुप्रत्यवमर्शो युक्तः ॥ (मेधातिथिः)

2. This commentary is confused in all the manuscripts used, but in its first half its close adherence to Medhātithi is noticeable. *Dharmakośa's* omission of the greater part of the commentary is obviously due to the corrupt text. It reads शपथदोषेण for आशयदोषेण. There is nothing in any of the manuscripts used in this edition to justify this change.

यमः

[1]ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति ।
राज्ञा दापयितव्यः स्याद्गृहीत्वा द्विगुणं[2] ततः ॥

नारदः [४, १३२]

ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति ।
राज्ञा दापयितव्यः स्याद्गृहीत्वांशं तु विंशकम्[3] ॥

'विंशकं' विंशतितममंशकम् ।

विष्णुः [६, २०-२२]

उत्तमर्णश्चेद्राजानमियात् तद्विभावितोऽधमर्णो राज्ञे धनदशभागसमं दण्डं दद्यात् । [4]प्राप्तार्थश्चोत्तमर्णो विंशतितममंशम् ॥

याज्ञवल्क्यः [२, ४१-४२]

राज्ञाऽधमर्णिको दाप्यः साधिताद्दशकं शतम् ।
पञ्चकं तु शतं दाप्यः प्राप्तार्थोऽप्युत्तमर्णिकः[5] ॥

1. The identity of three quarters in the ślokas of यम and नारद has led to a mix up of the two in our manuscripts, sometimes under the heading यमनारदौ.

2. द्विगुणमिति सवृद्धिकमूलप्रदर्शनार्थम् । धनं वा द्विगुणं कार्यं, अन्यथा त्वनुचितत्वात् । (स्मृतिचन्द्रिका, p. 388, ed. Mysore.)

3. 'गृहीत्वा पञ्चकं शतम्' इति मुद्रितनारदीये । The Vulgate confirms the reading in the text, which is followed by the *Vīramitrodaya* and *Vivādaratnākara* (८०)

4. प्राप्तार्थेन दानं भृतित्वेन न दण्डेन निरपराधित्वात् । (स्मृ. चं.)

5. धनिकोऽपि साधितार्थसंख्यया पारितोषिकं राज्ञे पंचकं शतं दद्यात् । उत्तमर्णिको धनिकः (विश्वरूपः)

[1]गृहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः ।
दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम् ॥

[2]कात्यायनः [५१४, ५१३, ५१५]

नानर्णसमवाये तु यद्यत्पूर्वकृतं भवेत् ।
तत्तदेवाग्रतो देयं राज्ञः [3]स्याच्छ्रोत्रियादनु ॥

एकाह लिखितं यच्च[4] तत्र कुर्यादृणं समम् ।
ग्रहणं रक्षणं लाभमन्यथा तु यथाक्रमम् ॥

यस्य द्रव्येण [5]यत्पण्यं साधितं यो विभावयेत् ।
तद्द्रव्यमृणिकेनैव दातव्यं [6]तस्य नान्यथा[7] ॥

'नानर्णसमवाये' नानाऋणसन्निपाते ।

1. अथ यद्येकमृणिनं युगपद्धनिनः प्रार्थयेयुः, तदायं क्रमः—गृहीतानुक्रमादिति । ग्रहणानुक्रमादेवाधमर्णिकेनर्णमेकजातीयेभ्यो देयम् । जातिभेदे ब्राह्मणादिक्रमेणैव । तुशब्दात्तुल्यजातीयत्वेऽपि गुणाद्यपेक्षं क्रमं द्योतयति ॥ विश्वरूपः)

2. These verses are wrongly ascribed to याज्ञवल्क्य by विवादरत्नाकर, ८०-८१.

3. स्याच्छ्रोत्रियतो न च-द; 'स्याच्छ्रोत्रियात् च'-इति व्यवहारप्रकाशः (पृ. ३३९)

4. यत्र-द.

5. यत्पण्यम्-द.

6. तत्र-द.

7. समानजातीये तूत्तमर्णस्य ग्रहणक्रमेण देयम् । विजातीयेषु तु ब्राह्मणादिवर्णक्रमेण । एकदिनकृतनानर्णसमवाये युगपद्देयं, धनाल्पत्वबहुत्वयोस्तु तदनुसारेण भागं परिकल्प्य दापनीयम् । 'ग्रहणं' बन्धकदानम् । 'रक्षणं' बन्धकपरिपालनम् । 'लाभं' बन्धकभोगश्च 'समं' युगपदेव कुर्यात् । अन्यथा अहर्भेदोक्तक्रमेण कुर्यात् । अनेकर्णसमवायेऽपि अधमर्णो यदुत्तमर्णाद् द्रव्यं गृहीत्वा यद्व्यवहारादिकं करोति तस्मात्प्राप्तं धनं तदुत्तमर्णायैव दद्यान्नान्येषाम् ॥ (व्यवहारप्रकाशः, ३३९-३४०)

याज्ञवल्क्यः [२, ९३]

[1]लेख्यस्य पृष्ठेऽभिलिखेद्दत्त्वा [2]दत्त्वा धनं ऋणी ।
[3]धनी चोपगतं दद्यात्स्वहस्तपरिचिह्नितम् ॥

विष्णुः [६, २६]

असमग्रदाने लेख्यासन्निधाने चोत्तमर्णः स्वलिखितं दद्यात् ।

नारदः [४, ११४]

गृहीत्वोपगतं दद्यादृणिकायोदयं धनी ।
अददद्याच्यमानस्तु शेषहानिमवाप्नुयात् ॥

बृहस्पतिः [१०, १३०]

धर्मादिनोद्ग्राह्य ऋणं यस्तूपरि न लेखयेत् ।
न चैवोपगतं दद्यात्[4] तद्वृद्धिवृद्धिमवाप्नुयात् ॥

1. लेख्यपृष्ठे विलिखेद्दत्त्वा दत्त्वा धनं ऋणी–द.

2. 'दत्त्वर्णिको धनम्' इति अपरार्कविज्ञानेश्वरपाठः; 'प्रविष्टमधमर्णिकम्' इति विश्वरूपपाठः

3. अन्यथा दत्तमप्यदत्तं स्यात् । (विश्वरूपः)

4. In accepting the above reading, which is that of the available manuscripts, Caṇḍeśvara (वि. र., ८२) refers to a different reading as that of the *Kalpataru* in the following passage, which discusses different readings :

वृद्धिर्हानिरिति कल्पतरुः । पारिजातस्तु तस्याधमर्णस्य 'तद्दत्तं' वृद्धिमाप्नुयात् सकलं भवेदित्याह । कामधेनुहलायुधयोस्तु 'नासौ वृद्धिमवाप्नुया'दिति पाठः । हलायुधव्याख्याने यस्तु धनी स्तोकमुद्ग्राह्योपरि न लेखयेत्, उपगतं वा न ददाति, तदावबशिष्टधनहान्या न वृद्धिं न धनोपचयं लभते शेषहानेः प्रतिपादितत्वादित्याह । अत्र कल्पतरुहलायुधयोस्तु फलं प्रत्यविशेष एव । अत्र च दत्तस्य उपगतादानं स्वयमलेखनं पुनरुद्ग्राहणाशयेन पर्यवसितं बोद्धव्यम् । अन्यथा व्यवहारविरोधात् ॥ (विवादरत्नाकरः, ८२–८३)

याज्ञवल्क्यः [२, ९४]

दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यै वान्यत्तु कारयेत् ।
साक्षिमच्च भवेद्यद्वा तद्दातव्यं ससाक्षिकम् ॥

विष्णुः [६, २४-२५]

ससाक्षिकमाप्तं ससाक्षिकमेव दद्यात् । लिखितार्थे प्रविष्टे लिखितं पाटयेत् ।

नारदः [४, ११६, ११२, ११३]

[1]लेख्यं दद्याद्विशुद्धर्णे तदभावे प्रतिश्रवम् ।
धनिकर्णिकयोरेवं विशुद्धिः स्यात्परस्परम् ॥

ब्राह्मणस्य तु यद्देयं सान्वयस्य तु नास्ति सः ।
[2]निक्षिपेत्तत्सकुल्येषु तदभावेऽस्य बन्धुषु ॥

यदा तु न सकुल्याः स्युः न च संबन्धिबान्धवाः ।
तदा दद्याद्द्विजातिभ्यस्तेष्वसत्स्वप्सु निक्षिपेत्[3] ॥

इति भट्ट[श्री]हृदयधरात्मजमहासांधिविग्रहिकभट्टश्रीलक्ष्मीधरविरचिते
कृत्यकल्पतरौ व्यवहारकाण्डे
ऋणादानादिपर्व

---

1. 'लेख्यं' ऋणपत्रम् । 'प्रतिश्रवं' प्रतिदानश्रवणाय शुद्धिपत्रम् ।

2. Reading of B. J. and मु. ना. स्मृ; the other Mss. read सकुल्येभ्योऽस्य निनयेत् । 'निर्वपेत् तत्सकुल्येषु' इति नारदीयमनुसंहिता (२, ९६)

3. क्षत्रियस्य यथोक्ताभावे राजा स्वजातीय इति तस्मै दद्यात् । वैश्यस्याप्येवमेव । (असहायः)

# ५७

## अथ निक्षेपः

तत्र नारदः [५, १]

स्वं द्रव्यं यत्र विस्रम्भान्निक्षिपत्यविशङ्कितः ।
निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः ॥

बृहस्पतिः [११, १३, २]

ऋणादानं प्रयोगादिदापनान्तं प्रकीर्तितम् ।
निक्षेपस्याधुना सम्यग्विधानं श्रूयतामिति[1] ॥

[2]राजचौरादिकभयाद्दायादानां च वञ्चनात् ।
स्थाप्यतेऽन्यगृहे द्रव्यं न्यासस्तत्परिकीर्तितम्[3] ॥

अनाख्यातं व्यवहितमसंख्यातमदर्शितम् ।
[4]मुद्राङ्कितं च [5]यद्द्रव्यं तदौपनिधिकं स्मृतम् ॥

याज्ञवल्क्यः [२, ६५]

[6]वासनस्थमनाख्याय हस्तेऽन्यस्य[7] समर्प्यते[8] ।
द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत् ॥

1. S. B. (a) and द give this additional verse after Narada's, without indicating it as Bṛhaspati's.

2. 'राजचौराततिभयाद्दायादानां च बन्धनात्' इति-वि. कोशे, अपरार्कपाठश्च (६६२)

3. B. J.-स प्रकीर्तितः; स परिकीर्तितः-ज, द.

4. शुद्धाङ्कितं-ज, द.

5. यद्द्रव्यं-ज; 'यद्दत्तं' इति अपरार्कः

6. 'भाजनस्थ' इति विश्वरूपाचार्यपाठः ।

7. 'हस्ते न्यस्य' इति विश्वरूपाचार्यपाठः । 'हस्तशब्दः परिग्रहार्थः । न्यस्य क्षिप्त्वेत्यर्थः' इति व्याख्यातं च ।

8. B. J.-समर्पयेत्; समर्प्यते-ज, द, वि.

'वासनम्' निक्षेपद्रव्याधारभूतं संपुटादि ।

कात्यायनः [५९२, ६११]

क्रयः प्रोषितनिक्षिप्तं[1] बन्धान्वाहितयाचितम् ।
वैश्यवृत्त्यर्पितं चैव सोऽर्थस्तूपनिधिः स्मृतः ॥

[2]अनुमार्गेण कार्येषु [3]अमुष्मिन् वचनान्मम ।
दद्यास्त्वमिति यो दत्तः स इहान्वाधिरुच्यते ॥

'क्रयो'ऽत्र क्रीतद्रव्यं कुतश्चिन्निमित्ताद् विक्रेतृपार्श्वे स्थितम् । 'प्रोषितनिक्षिप्तं' प्रवसता समर्पितम् । 'बन्धः' आधिः । 'याचितं' मण्डनार्थमानीताभरणादि । 'वैश्यवृत्त्यर्पितं' वाणिज्यार्थं यन्निक्षिप्तम् । एते सर्वे 'उपनिधयः' [उपनिधिद्रव्यवद्द्रष्टव्याः] ॥ 'अनुमार्गेण' इति, अस्यार्थः—एकस्मिन् यदर्पितं वस्तु, तेन पुरुषान्तरे अमुष्मिन् स्वामिनि त्वं दास्यसीति निक्षिप्तं तदन्वाधिः इति[4] ॥

मनुः [८, १७९]

कुलजे वृत्तसम्पन्ने धर्मज्ञे सत्यवादिनि ।
महापक्षे धनिन्यार्ये निक्षेपं निक्षिपेद्बुधः[5] ॥

1. सो बन्धा–द.

2. अर्थमार्गेण कार्येषु–ज.

3. 'अन्यस्मिन्' इति वि. र., ८६; B. J.

4. Reproduced *verbatim* in विवादरत्नाकर, ८६; used in correcting errors in Mss.; the words within brackets are wanting in the manuscripts. Caṇḍeśvara adds—हलायुधेन तु—'अत्र मार्गेण' इति पठित्वा—'अत्र कार्येषु' एतेषु कार्येषु, 'मार्गेण' याचनेन, अमुष्मिन्पुरुषे त्वं दद्या इति परिभाष्य यत्समर्पितं तदन्वाधिरुच्यते इति ॥ (वि. र., ६)

5. प्रख्याताभिजनः 'कुलजः' । 'वृत्तं' शीलमाचारो जनापवादभीरुता स्वाभाविकम् । 'संपन्नः' तद्युक्तः । 'धर्मज्ञस्तु' स्मृतिपुराणेतिहासाभ्याससञ्जाततदर्थावबोधः । 'सत्यवादी' बहुकृत्वः कार्येषु संभाव्यमानो वृत्ताभिधानः । 'महापक्षः' सुहृत्स्वजनराजामात्याद्यनुगृहीतमहिमत्वेन दुष्टराजाधिकारिणां गम्यो न भवति । 'आर्यो' धर्मानुष्ठायी ऋजुप्रकृतिर्वा ॥ (मेधातिथिः)

'महापक्षे' बहुपरिजने ।

<u>बृहस्पतिः</u> [११, ४]

स्थानं गृहं गृहस्थत्वं तद्बलं विभवं गुणान्[1] ।
सत्यं शौचं बन्धुजनं परीक्ष्य स्थापयेन्निधिम्[2] ॥

<u>नारदः</u> [५, २]

स पुनर्द्विविधः प्रोक्तः साक्षिमानितरस्तथा ।
प्रतिदानं तथैवास्य प्रत्ययः स्याद्विपर्यये[3] ॥

'विपर्यये' विसंवादे । 'प्रत्ययः' शपथः ।

<u>बृहस्पतिः</u> [११, ६-९]

ससाक्षिकं रहोदत्तं द्विविधं समुदाहृतम् ।
पुत्रवत्परिपाल्यं तद्विनश्यत्यनवेक्षया ॥

ददतो यद्भवेत्पुण्यं हेमरूप्याम्बरादिकम् ।
तत्स्यात्पालयतो न्यासं [4]तथा च शरणागतम् ॥

भर्तृद्रोहे यथा नार्याः पुंसः पुत्रसुहृद्वधे ।
दोषो भवेत्तथा न्यासे भक्षितोपेक्षिते नृणाम् ॥

न्यासद्रव्यं न गृह्णीयात्तन्नाशस्त्वयशस्करः ।
गृहीतं पालयेद्यत्नात्सकृद्याचितमर्पयेत् ॥

1. गुणम्–द.

2. 'निधिं' निक्षेपम् । वि. र., ८७)

3. 'प्रत्ययः स्याद्विपर्यये' इति–यदा राजदैवविनष्टं तन्निक्षिप्तमित्युक्त्वा निक्षेपं न ददाति, तदा निक्षेपाश्रयस्वाभिमतपुरुषेण राजदैवोपघातस्यानुरूपविभावनं कार्यमित्यर्थः ॥ (**विवादरत्नाकरः**, ८७)

4. तथैव–B. J., ज, द.

मनुः [८, १८०; १९५; १८८]

> [1]यो यथा निक्षिपेद्धस्तु[2] यमर्थं यस्य मानवः[3] ।
> स तथैव गृहीतव्यो यथा दायस्तथा ग्रहः ॥
>
> मिथो दायः कृतो येन गृहीतो मिथ एव वा ।
> मिथ एव प्रदातव्यो यथा दायस्तथा ग्रहः ॥
>
> समुद्रे नाप्नुयात्किञ्चिद्यदि तस्मान्न संहरेत् ।

'दायो' निक्षेपणम् । 'मिथः' अन्योन्यमेव, असाक्षिकमित्यर्थः । 'समुद्रे' मुद्रासहिते निक्षेपे [4]मूषिकादिनोपद्रुतेऽपि निक्षेपस्य धनस्य धर्ता[5] न किञ्चिद्दूषणमाप्नोति, यदि तस्मान्निक्षेपात्प्रतिमुद्राश्रावणादिना नापहरेत्किञ्चिदित्यर्थः[6] ॥

बृहस्पतिः [११, १०]

> स्थापितं येन विधिना येन येन यथाविधि ।
> तथैव तस्य दातव्यं न देयं प्रत्यनन्तरे ॥

1. यथेति–यादृशेन प्रकारेण समुद्रममुद्रं ससाक्षिकमसाक्षिकमित्येवमादि स तथैवेति, सोऽर्थो निक्षिप्तः तथैव गृहीतव्यः । 'यथा दायो' दीयते निक्षिप्यते तथा गृह्यते । (मेधातिथिः)

2. निक्षिपेद्धस्ते इति मुद्रितमानवीये, विवादरत्नाकरे च (८८). After this verse B. J. interpolates by carelessness a big slice of the ऋणादान chapter here.

3. वा नरः–द.

4. मूषिकादिनोपहृते न किञ्चिद्दूषणमाप्नुयात्–ज, द.

5. B. J. substitutes धर्ता (preserver) for धनस्य. Bikanir Ms. reads निक्षेपस्य धनस्य, धर्ता.

6. 'समुद्रे' निक्षेपेऽन्यदप्यस्मिन् भाण्डे द्रव्यमभूत्, नाशितं कृमिभिरित्यादिकं पर्यनुयोगं नाप्नुयान्निक्षेपधारी तत्र धारणकस्य । एवं मूषिकादिनाशे द्रष्टव्यम् । यदि दारुमयभाण्डे वस्त्रादिकं स्थापितं तीक्ष्णदशनैर्मूषिकैर्दारु भित्त्वा भक्ष्येत न निक्षेपधारिणो दोषः ॥ (मेधातिथिः)

'प्रत्यनन्तरे' पुत्रादौ ।

मनुः [८, १८५-१८६]

[1]निक्षेपोपनिधी नित्यं न देयौ[2] प्रत्यनन्तरे ।
नश्यतो विनिपाते तावनिपाते [3]त्वनाशितौ ॥

स्वयमेव तु यो दद्यान्मृतस्य प्रत्यनन्तरे ।
न स राज्ञा नियोक्तव्यो न निक्षेप्तुश्च बन्धुभिः ॥

'विनिपाते' देशान्तरगमनादौ ।

अथ नारदः [५, ९]

गृहीतुः सह योऽर्थेन नष्टो नष्टः स दायिनः ।
दैवराजकृते तद्वन्न चेत्तज्जिह्मकारितम् ॥

'दायिनः' निक्षेप्तुः । 'तज्जिह्मकारितम्' [4]निक्षेपग्राहिकौटिल्यकारितम् ।

मनुः [८, १८९]

चोरैर्हृतं जलेनोढमग्निना दग्धमेव च ।
न दद्याद्यदि तस्मात्स न संहरति किञ्चन ॥

'तस्मात्' निक्षिप्तधनात् । 'न संहरति' नापहरतीत्यर्थः ।

नाभ्याभवेयुरित्यनुवृत्तौ गौतमः [१२, ३९]

निध्यन्वाधियाचिताऽवक्रीताधयो नष्टाः सर्वाननिन्दितान् पुरुषापराधेन ॥

1. 'प्रत्यनन्तर' उत्पत्त्यनन्तर उच्यते निक्षेप्तुः पुत्रो भ्राता भार्या वा । 'विनिपातो' अन्यथात्वम् प्रत्यनन्तरस्य देशान्तरगमनादि, तस्मिन् सति तौ हीयेते ॥ (मेधातिथिः) 'प्रत्यनन्तरे' पुत्रादौ । (वि. र., ८६)

2. यं–ज.

3. शिनौ ॥ अत्र नारदः ॥ गृहीतुः–ज, द.

4. B. J. निक्षेपकारि.

'निधिः' निक्षेपः। 'अवक्रीतं' भाटकगृहीतं शकटादिः। 'सर्वान्' पुत्र-पौत्रादीन् रिक्थिनः। 'अनिन्दितान् पुरुषापराधेन' [तेन तं पुरुषापराध-मन्तरेण निध्यादयः प्रनष्टाः, 'सर्वान्' पुत्रादीन्] 'नाभ्याभवेयुः' न ते देया इत्यर्थः[1] ॥

कात्यायनः [५९९, ६००]

ज्ञात्वा द्रव्यवियोगं तु दाता यत्र[2] विनिक्षिपेत् ।
सर्वापायविनाशेऽपि ग्रहीता नैव दाप्यते ॥

ग्राहकस्य च[3] यद्दोषान्नष्टं तद्ग्राहकस्य तु ।

'द्रव्यवियोगं तु' द्रव्यस्य राष्ट्रे राज्ञः उपप्लवादिना नाशम्। 'सर्वापाय-विनाशेऽपि' शङ्कितापायादपायान्तरेणापि। 'ग्राहकस्य च' इति, ग्राहकदोषा-[4]द्यदि नष्टं तद्ग्राहकस्यैव नष्टं [5]न तु निक्षेप्तुः। तेन निक्षेपग्राहिणा न तद्देय-मित्यर्थः।

1. The commentary is almost unintelligible in the Mss. from Udaipur and the Asiatic Society of Bengal; and it has been restored from ज, द and B. J. as well as विवादरत्नाकर, ९१, which seem to reproduce the *Kalpataru's* comments *verbatim*. 'याचितं' उत्सवादिषु याच्ञयाऽऽनीतमाभरणादि। 'अवक्रीतं' अदत्तमूल्यमर्धदत्तमूल्यं वा। 'आधिः' गोप्याधिः कांस्यादिरित्यर्थः। एते चोरहरणाग्निदाहादिना नष्टाः सन्तो न केवलं पुत्रानेव अभ्याभवेयुः। 'अनिन्दितान्' अप्रमादकारिण इत्यर्थः। 'पुरुषापराधः' पुरुषप्रमादः आलस्यादिः। एवं निन्दितैः प्रमादकारिभिः ते दातव्या एव ॥ (मस्करी p. 209).

2. यदि–द.

3. च–ज, द; हि–उ.

4. यन्नष्टं–ज, द.

5. न निक्षेप्तुः–ज, द.

तथा [५९४]

यस्य दोषेण यत्किञ्चिद्विनश्येत ह्रियेत वा ।
[1]तद्द्रव्यं सोदयं दाप्यो[2] दैवराजकृताद्विना ॥

बृहस्पतिः [११, १२]

भेदेनोपेक्षया न्यासं ग्रहीता यदि नाशयेत् ।
याच्यमानो न दद्याद्वा दाप्यस्तत्सोदयं भवेत् ॥

'भेदेनोपेक्षया' स्वद्रव्यपृथक्त्वेनोपेक्षया ।

नारदः [५, ७-८]

याच्यमानस्तु यो दातुर्निक्षेपं न प्रयच्छति ।
दण्ड्यः स राज्ञो भवति नष्टे दाप्यस्तु तत्समम् ॥

यत्रार्थं साधयेत्तेन निक्षेप्तुरननुज्ञया ।
तत्रापि दण्ड्यः स भवेत्तं च सोदयमावहेत्[3] ॥

बृहस्पतिः [११, १३]

न्यासद्रव्येण यः कश्चित्साधयेत्कार्यमात्मनः ।
दण्ड्यः स राज्ञो भवति दाप्यस्तच्चापि सोदयम् ॥

[4]व्यासः [कात्यायन, ५९७]

भक्षितं सोदयं दाप्यः समं दाप्य उपेक्षितम् ।
किञ्चिदूनं प्रदाप्यः स्याद्द्रव्यमज्ञाननाशितम् ॥

1. A. S. B., ज, द and S. B. (a) read—

तद्द्रव्यं तेन दातव्यं सोदयं धनिने स्वयम् ।

2. दाप्यं–बि.

3. माहरेत्–द.

4. *Mitākṣarā* (२, ६७) and व्यवहारनिर्णय (पृ. २७०) ascribe this verse to कात्यायन; व्यवहारप्रकाश (पृ. ३६४) ascribes it to both; पराशरमाधव attributes it to व्यास only.

मनुः [८, १९१-१९३]

योनिक्षेपं नार्पयति यस्त्वनिक्षिप्य याचते ।
तावुभौ चोरवच्छास्यौ दाप्यौ तौ तत्समं दमम् ॥

निक्षेपस्यापहर्तारं तत्समं दापयेद्दमम् ।
[1]तथोपनिधिहर्तारमविशेषेण पार्थिवः ॥

उपधाभिस्तु यः कश्चित्परद्रव्यं हरेन्नरः ।
ससहायः स हन्तव्यः प्रकाशं विविधैर्वधैः ॥

मत्स्यपुराणे

यो निक्षिप्तं नार्पयति यस्त्वनिक्षिप्य याचते ।
तावुभौ चोरवच्छास्यौ दाप्यौ वा द्विगुणं दमम्[2] ॥

कात्यायनः [६०१]

ग्राह्यस्तूपनिधिः काले कालहीनं तु वर्जयेत् ।
कालहीने ददद्दण्डं द्विगुणश्च प्रदाप्यते ॥

'ग्राह्यः' निक्षेपकारिणा इति शेषः । 'काले' निरत्ययसमये । 'उपनिधिः' इत्यत्र 'बन्धान्वाहितयाचितादिः' कात्यायनेनोक्तः । 'कालहीनं' निरत्ययकालहीनं उपनिधिम् । 'वर्जयेत्' न गृह्णीयात् । एवंविधेऽपि काले निक्षेपहर्ता प्रत्यर्पयन् दण्ड्य इत्यर्थः ॥

1. 'उपनिधिः' प्रीत्या यद्भुज्यते । 'अविशेषेण' द्रव्यं जातिश्च नापेक्षेत । 'उपधा' व्याजः छद्मेत्यनर्थान्तरम् । ...तेषामयं राजमार्गे 'प्रकाशं' 'विविधः' कुठार-शूलारोपण-हस्तिपदमर्दनाद्यनेकोपायसाधनो 'वध' उच्यते ॥ (मेधातिथिः)

2. अयं च द्विगुणात्मको दण्डो धनवति निकृष्टाचारादौ च द्रष्टव्यः । अतो मनुना सह न विरोधः । (विवादरत्नाकरः, ९२)

[1]<u>बृहस्पतिः</u> [११, १४]

गृहीत्वा निह्नुते यत्र साक्षिभिः शपथेन वा ।
विभाव्य दापयेन्न्यासं तत्समं विनयं तथा ॥

<u>मनुः</u> [८, १९४; १८७; १८१-१८४; १९६]

[2]निक्षेपो यः कृतो येन यावांश्च कुलसन्निधौ ।
तावानेव स विज्ञेयो विब्रुवन् दण्डमर्हति[3] ॥

[4]अच्छलेनैव चान्विच्छेत्तमर्थं प्रीतिपूर्वकम् ।
विचार्य तस्य वा वृत्तं साम्नैव परिशोधयेत्[5] ॥

यो निक्षेपं याच्यमानो निक्षेप्तुर्न प्रयच्छति ।
स याच्यः प्राड्विवाकेन तन्निक्षेप्तुरसन्निधौ ॥

साक्ष्यभावे प्रणिधिभिर्वयोरूपसमन्वितैः ।
[6]अपदेशैश्च संन्यस्य हिरण्यं तत्र सारतः[7] ॥

1. Before the quotation from Bṛhaspati manuscripts of the A. S. B. group bring in the quotations from कात्यायन beginning with his half verse on p. 348 *infra.* The Udaipur, B. J. and Darbhanga manuscripts, as well as the *Vivādaratnākara* uphold the order adopted in the text.

2. 'य' इति निक्षिप्यमाणद्रव्यजातिनिर्देशः । 'यावान्' इति परिमाणस्य । 'कुलसन्निधौ' 'कुलं' साक्षिणः । तत्र ते पृष्टा यदाहुस्तदेव सत्यम् ॥ (मेधातिथिः)

3. 'विब्रुवन्' विरुद्धं ब्रुवाणो दण्ड्यते—(मेधातिथिः)

4. सच्छलेनैव–द.

5. साधयेत्–ज, द.

6. 'अपदेशैः' सव्याजैर्निक्षेपकारणैः राजोपद्रवग्रामगमनादिभिः । 'अनेन हेतुना त्वयि संप्रति निक्षिपामी'त्यनृतसंभवात् कारणकथनमपदेशः—(मेधातिथिः)

7. 'तत्त्वतः'–A. S. B., द, ज and B. J.

स यदि प्रतिपद्येत यथान्यस्तं यथाकृतम् ।
न तत्र विद्यते किञ्चिद्यत्परैरभियुज्यते[1] ॥

तेषां न दद्याद्यदि तु तद्धिरण्यं यथाविधि ।
[2]द्वयं निगृह्य दाप्यः स्यादिति धर्मस्य धारणा ॥

निक्षिप्तस्य धनस्यैवं प्रीत्योपनिहितस्य च ।
राजा विनिर्णयं कुर्यादक्षिण्वन्न्यासधारिणम्[3] ॥

'प्रणिधयः' चाराः । 'अपदेशैः संन्यस्य हिरण्यम्' इत्यादि, अनृतसंभवाभिक्षेपकारिणं ग्रामगमनराजभयादिकमुक्त्वातिकुशलचारद्वारेण स्वं सुवर्णादिकं निक्षिप्य कियत्यपि काले गते चारैरेव याचनीय इत्यर्थः ।

बृहस्पतिः [११, १५; १८]

रहोदत्ते निधौ[4] यत्र विसंवादः प्रजायते ।
विभावकं तत्र दिव्यमुभयोरपि च स्मृतम् ॥

अन्वाहिते याचितके [5]शिल्पिन्यासे सबन्धके ।
एष एवोदितो धर्मस्तथा च [6]शरणागते ॥

नारदः [५, १४-१५]

एष एव विधिर्दृष्टो याचितान्वाहितादिषु ।
शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव च ॥

1. यः परेणाभियुज्यते–द, वि. र., ९६.

2. 'स्वयं निगृह्य', B. J., वि. र., ९६; सन्निगृह्योभयं इति Jolly's ed.

3. हारिणम्–द.

4. 'निधिः' निक्षेपः (वि. र., ९७)

5. 'शिल्पिन्यासे'—अलङ्काराद्यर्थं शिल्पिन्यस्ते सुवर्णादौ । (वि. र , ९७)

6. 'शरणागते' भयादिना स्त्रीदासादौ शरणप्रविष्टे स्वामित्वाभिमतेन सह विवादे एष विधिरिति—(विवादरत्नाकरः, ९७)

प्रतिगृह्णाति यो दण्डं[1] यश्च सप्रधनं नरः ।
तस्याप्येष विधिर्दृष्टः [2]षडेते निधयः समाः ॥

'प्रतिन्यासः' परस्परन्यासः ॥

कात्यायनः [६०२]

सर्वेषूपनिधिष्वेते विधयः [3]परिकीर्तिताः ।

तथा

यो याचितकमादाय न दद्यात्प्रतियाचितः ।
स निगृह्य बलाद्दाप्यो दण्ड्यश्च न ददाति यः ॥

मत्स्यपुराणे [२४१, ४]

यो हि याचितमादाय न तद्द्यात्तथा ध्रुवम्[4] ।
स निगृह्य बलाद्दाप्यो दण्ड्यो वा पूर्वसाहसम् ॥

कात्यायनः [६०६, ६०९, ६०७]

यदि तत्कार्यमुद्दिश्य कालं परिनियम्य वा ।
याचितोऽर्धकृते तस्मिन्नप्राप्ते न तु दापयेत्[5] ॥

अथ कार्यविपत्तिस्तु तस्यैव स्वामिनो भवेत् ।
अप्राप्ते वा[6] स काले तु दाप्यस्त्वर्धकृतेऽपि तत् ॥

प्राप्तकाले कृते कार्ये न दद्याद्याचितोऽपि सन् ।
तस्मिन्नष्टे हृते वापि ग्रहीता मूल्यमावहेत् ॥

'तत्कार्यं' विवाहादिकं । 'अर्धकृते' कार्ये । 'अप्राप्ते' काले ।

1. 'पोगण्डम्'–मु. ना. स्मृ, हलायुधपाठश्च । हलायुधेन तु 'प्रतिगृह्णाति पोगण्ड'मिति पठित्वा व्याख्यातं—पोगण्डे बाले सप्रधने प्रकृष्टधनसहिते निक्षेप्तुः सकाशान्निक्षेपनयेन गृहीते एष एव विधिर्दृष्ट इति ॥ (वि. र., ९८)

2. षडेते निधयः स्मृताः–ज, बि; B. J., वि. र., ९८. निधयः निधितुल्याः । षट्त्वं च याचितान्वाहितत्वं, शिल्पित्वं, उपनिधित्वं, न्यासत्वं, प्रतिन्यासत्वम् ॥ (वि. र., ९८)

3. सम्प्रकीर्तिताः–द.

4. तथाविधम् इति वि. र., ९९.

5. न तु दाप्यते (वि. र., ९४)

6. वै स्वकाले तु (वि. र., ९९)

बृहस्पतिः [११, २०]

याचितं स्वाम्यनुज्ञातं प्रददन्नापराध्नुयात् ।

'प्रददत्' अन्यस्मा इति शेषः ।

कात्यायनः [६०३, ६०५, ६०४, ५९६]

[1]यैस्तु संस्क्रियते न्यासो दिवसैः परिनिष्ठितैः ।
तदूर्ध्वं [2]स्थापयेच्छिल्पी दाप्यो दैवहतेऽपि तम् ॥

[3]स्वल्पेनापि च यत्कर्म नष्टं चेद्भृतकस्य [4]तत् ।
पर्याप्तं दित्सतस्तस्य विनश्येत्तदगृह्णतः ॥

न्यासदोषेण नाशः स्याच्छिल्पिनं तन्न दापयेत् ।
दापयेच्छिल्पिदोषात्तत्संस्कारार्थं[5] यदर्पितम् ॥

न्यासादिकं परद्रव्यं प्रभक्षितमुपेक्षितम् ।
अज्ञाननाशितं चैव येन दाप्यः स एव [6]तत् ॥

'तम्' न्यासम् । 'स्वल्पेन' कालेन । 'यत्कर्म' कुण्डलादिनिर्माणम् । 'भृतकस्य तत्' शिल्पिन एव तन्नष्टं, न स्वामिनः । नैतत्पुनः कर्तव्यम् । 'पर्याप्तम्' निष्पन्नम् । 'दित्सतः' शिल्पिनः । 'अगृह्णतः' स्वामिनः । 'न्यासदोषेण' [7]कुङ्कुमादेः कालवशादिदूषणेन ।

इति भट्टहृदयधरात्मजमहासान्धिविग्रहिक
भट्टश्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ
व्यवहारकाण्डे निक्षेपविवादपर्व ॥

---

1. यैश्च–बि; वि. र., ९९.
2. स्थापयन् शिल्पी–बि; वि. र., ९९.
3. अल्पेनापि–वि. र., ९९.
4. चेत्–द.
5. च संस्कारार्थे–द, बि, वि. र., १००.
6. तु–वि. र., १००.
7. कुण्डलादेः कालपरिवासादिदूषणेन–A. S. B., and S. B. (a)

# अथास्वामिविक्रयः

<u>तत्र नारदः</u> [१०, १]

निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वापहृत्य वा ।
विक्रीयतेऽसमक्षं यत् स ज्ञेयोऽस्वामिविक्रयः ॥

<u>बृहस्पतिः</u> [१२, २]

निक्षेपान्वाहितन्यासहृतयाचितबन्धकम् ।
उपांशु [1]येन विक्रीतमस्वामी सोऽभिधीयते ॥

<u>याज्ञवल्क्यः</u> [२, १६९]

नष्टापहृतमासाद्य हर्तारं ग्राहयेन्नरम् ।
देशकालातिपत्तौ वा[2] गृहीत्वा[3] स्वयमर्पयेत्[4] ॥

<u>बृहस्पतिः</u> [१२, ६]

पूर्वस्वामी तु तद्द्रव्यं यदागत्य विचारयेत् ।
तत्र मूलं[5] दर्शनीयं क्रेतुः शुद्धिस्ततो भवेत् ॥

1. तेन–द; उपांशुजन–माधवीये

2. च–द.

3. B. J.–ग्रहीता

4. नष्टं वापहृतं द्रव्यं अन्येन गृहीतं आसाद्य उपलभ्य द्रव्यग्राहिणं हर्तायमिति व्यपदिश्य राजपुरुषैः व्यवहारनिर्णयाय ग्राहयेत् । यदि तु राजकीयासन्निधानं देशकालातिपत्तिं चाशङ्केत तदा स्वयमपि गृहीत्वा राज्ञे हर्तारमर्पयेत ॥ अन्या च व्याख्या । नष्टापहृतमासाद्य क्रीत्वा स्वामिना प्रार्थ्यमाने हर्तारं ग्राहयेत् । मूल्यमर्पयेदित्यर्थः । देशकालातिपत्तौ सा अप्रकाशक्रयेणापि गृहीत्वा स्वयमर्पयेत् तदाप्यदोष इत्यभिप्रायः ॥ (विश्वरूपः) ॥ विज्ञानेश्वरस्तु द्वितीयव्याख्यां नाभ्युपगच्छति 'विक्रेतुर्दर्शनाच्छुद्धिः' इत्यनेन पौनरुक्त्यप्रसङ्गभिया ॥

5. 'मूल्यम्'–माधवपाठः

[1]'मूलं' अत्र यस्मात्क्रीतमसावुच्यते ।

कात्यायनः [६१५, ६१७]

प्रकाशं वा क्रयं कुर्यान्मूलं वापि समर्पयेत् ।
मूलानयनकालश्च देयो योजनसंख्यया ॥

यदा मूलमुपन्यस्य पुनर्वादी क्रयं वदेत् ।
आहरेन्मूलमेवासौ न क्रयेण प्रयोजनम् ॥

'प्रकाशं क्रयं[2] कुर्यात्' क्रयं प्रकाशयेदित्यर्थः ।

व्यासः

मूले [3]समाहृते क्रेता नाभियोज्यः कथञ्चन[4] ।
मूलेन सह वादस्तु नाष्टिकस्य तदा भवेत् ॥

'नाष्टिकस्य' नष्टधनस्वामिनः ।

बृहस्पतिः [१२, ७]

विक्रेता दर्शितो यत्र हीयते व्यवहारतः ।
क्रेतृराज्ञोर्मूलदमौ प्रदद्यात्स्वामिने[5] धनम् ॥

मनुः [८, १९७, १९८, १९९, २०१, २०२]

विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसंमतः ।
न तं नयेत साक्ष्यं तु स्तेनमस्तेनमानिनम्[6] ॥

1. मूलमत्र विक्रेता (वि. र., १०२)

2. 'प्रकाशक्रयं'–द.

3. समाहिते–वि. र., १०३; 'समाहिते' = समर्पिते; समाहिते क्रेता–द; समाहिते क्रेता नाभियोज्योऽथ किञ्चन–बि.

4. ज्योऽथ किञ्चन–वि. र., १०३.

5. नो धनम्–द, बि.

6. 'परस्य' यद्द्रव्यादि 'स्वं' तच्चेत् 'अस्वामी' तत्पुत्रादिरन्यो वा 'विक्रीणीते' स्वामिनाननुज्ञातस्तं 'स्तेनं' चौरं विद्यात् । यद्यपि यस्तस्मात् क्रीणाति स तमस्तेनं मन्यते । 'न तं नयेत साक्ष्यं तु' तं पुरुषं न नयेत न प्रापयेत् साक्ष्यं न कारयेत् साक्षिकरणे न नियोक्तव्य इत्यर्थः । यथा चौरस्तादृश एवासौ । स्तेनत्वाच्च न साक्षित्वम् ॥ (मेधातिथिः)

अवहार्यो भवेच्चैष[1] सान्वयः षट्शतं दमम् ।
निरन्वयोऽनपसरः [2]प्राप्तः स्याच्चौरकिल्बिषम् ॥

[3]अनेन विधिना शास्यः[4] कुर्वन्नस्वामिविक्रयम् ।
अज्ञानाज्ज्ञानपूर्वं तु चौरवद्दण्डमर्हति ॥

विक्रयाद्यो धनं किञ्चिद्गृह्णीयात्कुलसन्निधौ ।
क्रयेण स विशुद्धस्तु[5] न्यायतो लभते धनम् ॥

अथ मूलमनाहार्यं प्रकाशक्रयशोधितम्[6] ।
अदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनम् ॥

'न तं नयेत साक्ष्यं' इति, न तं क्वापि प्रमाणीकुर्यादित्यर्थः । 'अवहार्यः' दण्ड्यः । 'सान्वयः' संबन्धी भ्रातृजादिः[7] । 'षट्च्छतम्' पणानामिति शेषः । 'अनपसरः' अपसरत्यनेन स्वामिनः सकाशाद्धनमिति प्रतिग्रहादिर्धनागमोपायोऽपसरः स न विद्यते यस्य स तथा । एतच्च भागुरि-मेधातिथि-वृत्तिकाराणां मतम् । 'विक्रयात्' आपणदेशात् । एतच्च विक्रीयतेऽस्मिन्निति व्युत्पत्त्या । 'कुलसन्निधौ' व्यवहर्तृसमूहसमक्षम् । 'न्यायतः क्रयेण' इति सम्बन्धः । तेन उचितमूल्यक्रयेणेत्यर्थः[8] ।

1. B. J. वि, printed text–चैव
2. B. J–प्राप्नुयात् चोरकिल्बिषम् ।
3. Not found in standard editions of मनुस्मृति, but given as an extra verse in Chowkhamba edn., p. 257.
4. B. J., ज, शास्यः; सभ्यः–उ.
5. विशुद्धं हि in printed text.
6. Kullūka reads शोधितः
7. व्यादिः–द.
8. अज्ञानादिति मनुवचनात् मत्स्यपुराणीयम्—

अज्ञानाद्यः पुमान् कुर्यात्परद्रव्यस्य विक्रयम् ।
स निर्दोषो ज्ञानपूर्वं चोरवद्दण्डमर्हति ॥

इति वाक्यमज्ञाने निर्दोषत्वमवध्यत्वमाह न त्वदण्ड्यत्वबोधकम् ॥ (विवादरत्नाकरः, १०५)

<u>कात्यायनः</u> [६१४]

नाष्टिकस्तु प्रकुर्वीत तद्धनं ज्ञातृभिः स्वकम् ।
अद[illegible]क्रीतं कृत्वा स्वं लभते धनम् ॥

<u>याज्ञवल्क्यः</u> [२, १७१]

आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा ।

म[illegible]यमौ [८, १९७]

अस्वामिना कृतो यस्तु दायो विक्रय एव वा ।
अकृतः स तु विज्ञेयो व्यवहारे यथास्थितिः ॥

<u>कात्यायनः</u> [६१२]

अस्वामिविक्रयं दानमाधिं च विनिवर्तयेत् ।

'अस्वामिविक्रयम्' अविद्यमानस्वामिविक्रयम् ।

<u>याज्ञवल्क्यः</u> [२, १६८]

[1]स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते ।

<u>नारदः</u> [१०, २]

द्रव्यमस्वामिविक्रीतं प्राप्य स्वामी समाप्नुयात् ।

'प्राप्य' उपलभ्य ।

<u>कात्यायनः</u> [६२०]

यदि स्वं नैव कुरुते [2]ज्ञातृभिर्नाष्टिको धनम् ।
प्रसङ्गविनिवृत्त्यर्थं चौरवद्दण्डमर्हति ॥

1. The entire śloka is cited later.

2. ज्ञातिभिरिति क्वचित्पाठः (वि. र., १०६)

याज्ञवल्क्यः [२, १७१]

आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा ।
पञ्चबन्धो दमस्तत्र[1] राज्ञे[2] तेनाविभाविते[3] ॥

'अतोऽन्यथा' '[4]नाष्टिकेनाविभाविते । 'पञ्चबन्धः' पञ्चमोऽशः । 'तत्र' नष्टद्रव्ये ।

कात्यायनः [६१३, ६१८, ६१६]

अभियोक्ता धनं कुर्यात्प्रथमं ज्ञातृभिः स्वकम् ।
पश्चादात्मविशुद्ध्यर्थं क्रयं क्रेता स्वबन्धुभिः ॥

असमाहार्यमूलस्तु क्रयमेव विशोधयेत् ।
विशोधिते क्रये राज्ञा वक्तव्यः स न किञ्चन ॥

प्रकाशं च क्रयं कुर्यात्साधुभिर्ज्ञातिभिः स्वकैः ।
न तत्रान्या क्रिया प्रोक्ता दैविकी न च मानुषी ॥

विष्णुः [५, १६४]

[5]अज्ञानतः प्रकाशं यः परद्रव्यं क्रीणीयात् तस्य न दोषः । क्रेता मूल्यमवाप्नोति । स्वामी द्रव्यमवाप्नुयात् ।

1. मिता. reading is तस्य for तत्र

2. शस्ते–ज.

3. आगमेन लेख्यादिना अस्खलितचिरभोगेन वा नष्टं द्रव्यं अन्यहस्तगतं मदीयमित्येव भाव्यम् । अतः प्रकारद्वयादन्यथा मदीयमिति वदतो विवादीभूतद्रव्यात् पञ्चबन्धः पञ्चमो भागो दमः स्यात् । तच्च द्रव्यमितरेणापि पूर्वोक्तप्रकारद्वयेनात्मीयमिति भाव्यं राजगाम्यवसेयम्—(विश्वरूपः)

4. नाष्टिकेनाविभाविते–द, वि; नाष्टिको भाविते–उ.

5. अजानन्–ज; अजानानः प्रकाशं यः परद्रव्यं क्रीणीयात् तस्यादोषः–मु. वि. स्मृ.
अज्ञानतः यः परद्रव्यं क्रीणीयात् तस्य दोषतः । अजानानः प्रकाशं यः परद्रव्यं क्रीणीयात् तत्रास्यादोषः–वि.

नारदः[1] [१०, २]

[2]प्रकाशक्रयतः शुद्धिः क्रेतुः स्तेयं रहःक्रयात्[3] ।

बृहस्पतिः [१२, ३, ४]

येन क्रीतं तु मूल्येन प्रागध्यक्षनिवेदितम् ।
न तत्र विद्यते दोषः स्तेनः स्यादुपधिक्रयात् ॥

अन्तर्गृहे बहिर्ग्रामान्निश्युपांश्वसतो जनात् ।
हीनमूल्यं च यत्क्रीतं ज्ञेयोऽसावुपधिक्रयः ॥

नारदः [७, ३]

[4]अस्वाम्यनुमताद्दासादसतश्च जनाद्रहः ।
हीनमूल्यमवेलायां क्रीणंस्तद्दोषभाग्भवेत् ॥

याज्ञवल्क्यः [२, १६८]

स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते ।
हीनाद्रहो हीनमूल्ये वेलाहीने च तस्करः[5] ॥

विष्णुः [५, १६६]

यद्यप्रकाशं हीनमूल्यं च क्रीणीयात्तदा क्रेता विक्रेता च चौरवच्छास्यौ ।

1. ज, द and B. J. attribute this to मनु and वि. र., १०८ to Nārada, but it is not found in printed editions of Manu.

2. प्रकाशविक्रये शुद्धिः–मु. ना. स्मृ.

3. क्रमात् for क्रयात्–मु. ना. स्मृ.

4. 'अस्वाम्यनुमतात्' स्वाम्यनुमतिहीनात् । दासग्रहणं समानन्यायत्वादस्वतन्त्राणां बालादीनामुपलक्षणार्थम् ॥ (व्यवहारप्रकाशः, पृ. ३७६)

5. अन्येनास्वामिना विक्रीतं द्रव्यं दृष्ट्वा स्वामी गृह्णीयात् । क्रेतुश्च दोषः स्यादप्रकाशिते क्रये । प्रकाशक्रये तु मूल्यमात्रप्रणाशः न तु स्तेयदोषः । क्व तर्हि दोषः । हीनाद्दासादिहस्ताद्-गृह्णतः । तथा रहःप्रच्छन्नम् । हीनमूल्ये च स्तेयसंभावनया गृहीते । वेलाहीने च तस्करः । क्रेता-स्त्वादित्यर्थः ॥ (विश्वरूपः)

<u>कात्यायनः</u> [६१९]

अनुपस्थापयन्मूलं क्रयं वाप्यविशोधयन्[1] ।
यथाभियोगं धनिने धनं दाप्यो दमं च सः ॥

<u>नारदः</u> [१०, ४]

न गूहेतागमं क्रेता [2]शुद्धिस्तस्य तदागमात् ।
विपर्यये तुल्यदोषः [3]सर्वं तद्दण्डमर्हति ॥

<u>बृहस्पतिः</u> [१२, ९]

प्रमाणहीनवादे तु पुरुषापेक्षया नृपः ।
समन्यूनाधिकत्वेन स्वयं कुर्याद्विनिर्णयम् ॥

निक्षेपोक्तप्रकारेण गूढचारप्रयोगं कृत्वा पुरुषाणां धर्माधर्मयोः समन्यूनाधिकभावं निश्चित्य स्वयमेव राजा निर्णयेदित्यर्थः ॥

<u>तथा</u> [१२, १०-१२]

वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः ।
अविज्ञाताश्रयात्क्रीतं विक्रेता यत्र वा मृतः ॥

स्वामी दत्वार्धमूल्यं तु प्रगृह्णीत स्वकं धनम् ।
अर्धं द्वयोरपि हृतं तत्र स्याद्व्यवहारतः ॥

अविज्ञातक्रयो दोषस्तथा चापरिपालनम् ।
एतद्द्वयं समाख्यातं द्रव्यहानिकरं बुधैः ॥

1. शोधयेत्–दं.

2. शुद्धिरस्य–बि.

3. स्तेयदण्डं च सोऽर्हति–मु. ना. स्मृ; सर्वस्वं दण्डमर्हति–ज. and बि.

[1]मरीचिः

वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः ।
दिवा गृहीतं यत्क्रेता स शुद्धो लभते धनम् ॥

अविज्ञातनिवेशत्वाद्यत्र मूल्यं न लभ्यते ।
हानिस्तत्र समा कल्प्या क्रेतृनाष्टिकयोर्द्वयोः ॥

याज्ञवल्क्यः [२, १७२]

हृतं प्रणष्टं [2]यद्द्रव्यं परहस्तादवाप्नुयात् ।
अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं पणान् ॥

'हृतं प्रणष्टं' वा चौरादिहस्तस्थं 'द्रव्यं' मदीयमनेनापहृतमिति नृपस्यानिवेद्यैव यो गृह्णाति 'स दण्ड्यः' तस्करप्रच्छादकत्वेन दुष्टत्वात्[3] ।

व्यवहारकाण्डे कृत्यकल्पतरावस्वामिविक्रयः[4] ॥

---

1. वि. र., ११०.
2. B. J. and the printed text have यो द्रव्यं
3. cf. मिताक्षरा, in almost identical words : "हृतं प्रनष्टं वा चौरादिहस्तस्थं द्रव्यं अनेन मदीयं द्रव्यं अपहृतमिति नृपस्यानिवेद्यैव दर्पादिना यो गृह्णाति, असौ षड्णवतिं पणान् दण्डनीयः । तस्करप्रच्छादकत्वेन दुष्टत्वात्" ॥
4. व्यवहारकाण्डे अस्वामिविक्रयः–ज, द.

## ५९

# अथ संभूयसमुत्थानम्

तत्र नारदः [६, १]

वणिक्प्रभृतयो यत्र कर्म [1]संभूय कुर्वते ।
तत्संभूयसमुत्थानं व्यवहारपदं स्मृतम् ॥

बृहस्पतिः [१३, ३, १]

[2]अशक्तालसरोगार्तमन्दभाग्यनिराश्रयैः ।
वाणिज्याद्याः सहैतैस्तु न कर्तव्या बुधैः क्रियाः[3] ॥

कुलीनदक्षानलसैः प्राज्ञैर्नानृतवादिभिः[4] ।
आयव्ययज्ञैः शुचिभिः शूरैः कुर्यात्सह क्रियाम् ॥

नारदः [६, २]

फलहेतोरुपायेन कर्म संभूय कुर्वताम् ।
आधारभूतः [5]प्रक्षेपस्तेनोत्तिष्ठेयुरंशतः[6] ॥

1. 'सम्भूय' धनमेलकं कृत्वा (वि. र., ११२)। 'संभूय' एकत्र मिलित्वा संव्यवहारं प्रति यत्समुत्थानं नाम व्यवहारपदमुच्यते। (असहायः)

2. अशक्त्यालस–उ.

3. क्रिया बुधैः–ज, द.

4. B. J., वि. र., ११२–नाणकवेदिभिः; नानकवेदिभिः–ज, द, बि.

5. प्रक्षेप उत्तिष्ठेरंस्ततोऽशतः, वि. र., ११२; द, बि–तथांशतः।

6. 'प्रक्षेपो'ऽत्र धनप्रक्षेपः । 'आधारभूतः' निदानभूतः । (वि. र., ११२)॥ बहुवणिग्भिः मिलित्वा द्रम्मसहस्रपिण्डेन वाणिज्यं प्रारब्धम्। तत्रैकेनार्धे पञ्चशतानि निक्षिप्तानि। अन्येन पञ्चमांशे शतद्वयम् । अन्येनापि शतद्वयमेव । अपरेण दशमांशे शतमेकम् । एतेषां स्वांशप्रक्षेपो लाभव्ययोराधारभूतः ॥ (असहायः)

बृहस्पतिः [१३, ५]

समो न्यूनोऽधिको वांशो येन क्षिप्तस्तथैव च[1] ।
व्ययं दद्यात्कर्म कुर्याल्लाभं गृह्णीत चैव हि ॥

याज्ञवल्क्यः [२, २५९]

समवायेन वणिजां लाभार्थं कर्म कुर्वताम् ।
लाभालाभौ यथाद्रव्यं यथा वा संविदा कृतौ[2] ॥

कात्यायनः [६२४]

समवेतास्तु ये केचिच्छिल्पिनो वणिजोऽपि वा ।
अविभज्य पृथग्भूतैः प्राप्तं तत्र समं फलम् ॥

नारदः [६, ४]

[3]भाण्डपिण्डव्ययोद्धारभारसारान्ववेक्षणे[4] ।
कुर्युस्तेऽव्यभिचारेण समये स्वे व्यवस्थिताः ॥

'भाण्डम्' विक्रेयद्रव्यम् । 'पिण्डम्' पाथेयम् ।

व्यासः

समक्षमसमक्षं वाऽवञ्चयन्तः परस्परम् ।
नानापण्यानुसारेण प्रकुर्युः क्रयविक्रयौ ॥

बृहस्पतिः [१३, ६-९]

परीक्षकाः साक्षिणश्च त एवोक्ताः परस्परम् ।
संदिग्धेऽर्थे वञ्चनार्था[5] न चेद्द्विद्वेषसंयुताः ॥

1. सः–ज, द, वि, B. J., स्मृ. चं., p. 430.

2. सर्वं लाभमेकीकृत्य यथाद्रव्यं विभागः कार्यः । लाभस्य मूल्यानुसारित्वात् । कर्मापेक्षया वा यथा संवित् परिभाषा अन्योन्यमाकृता मर्यादा कृतेत्यर्थः—(विश्वरूपः)

3. भाण्डपिण्डद्वयोरेव–उ; भाण्डपिण्डव्ययोद्धार–मु. ना. स्मृ: वि. र., (११३), B. J. and ज.

4. भारसारान्ववेक्षणम्–वि. र., मु. ना. स्मृ., B. J. and ज; भारसारानुवेक्षणम्–द.

5. वञ्चनार्थं–ज, द, B. J., वि. र., ११४.

यः कश्चित्कारकस्तेषां विज्ञातः क्रयविक्रये ।
शपथैः स विशोध्यः स्यात्सर्ववादेष्वयं विधिः ॥

[1]क्षयो हानिर्यदा तत्र दैवराजकृतो भवेत्[2] ।
सर्वेषामेव सा प्रोक्ता कल्पनीया यथांशतः ॥

अनिर्दिष्टो वार्यमाणः प्रमादाद्यस्तु नाशयेत् ।
तेनैव तद्भवेद्देयं सर्वेषां समवायिनाम् ॥

नारदः [६, ५]

प्रमादान्नाशितं दाप्यः [3]प्रतिषिद्धं च यद्भवेत् ।
[4]असंदिष्टं च यत्कुर्यात्सर्वैः [5]संभूयकारिभिः ॥

याज्ञवल्क्यः [२, २६०]

प्रतिषिद्धमनादिष्टं प्रमादाद्यच्च नाशितम् ।
स [6]तद्दद्याद्विप्लवाच्च रक्षिता दशमांशभाक्[7] ॥

बृहस्पतिः [१३, ११]

राजदैवभयाद्यस्तु स्वशक्त्या परिपालयेत् ।
तस्यांशं दशमं दत्त्वा गृह्णीयुः स्वांशतोऽपरे[8] ॥

1. 'क्षयो' मूलहानिः । 'हानिः' लाभहानिः । (वि. र., ११४)
2. कृताद्भवेत्–वि. र., ११४.
3. प्रतिषिद्धकृतञ्च यत्–द; वि. र., मु. ना. स्मृ.
4. असन्दिष्टं तु–B. J., वि. र., ११४; असंदिग्धं–उ.
5. सर्वसंभूय–मु. ना. स्मृ.
6. तं दद्याद्विप्लवाच्च–द.
7. प्रतिषिद्धमनादिष्टमन्यैर्वणिग्भिरननुष्ठितमिति शेषः । किञ्च प्रमादाद् यच्च नाशितं स तद्दद्यात् । अस्यानपेक्षयैव । विप्लवात्तु रक्षिता दशमांशभाक् । रक्षितद्रव्याद् रक्षिता लाभाद् दशमांशं प्राप्नुयादित्यर्थः— (विश्वरूपः)
8. गृह्णीयुस्तेंऽशतो परम्–वि ; स्वांशतो परम्–ज, द, B. J.; गृह्णीयुस्तेंऽशतोऽपरम्–वि. र., ११५.

नारदः [६, ६]

[1]दैवतस्कर राजाग्निव्यसने समुपस्थिते ।
यस्तु स्वशक्त्या[2] रक्षेत्तु तस्यांशो दशमः स्मृतः ॥

कात्यायनः [६३१]

चौरतः सलिलादग्नेर्द्रव्यं यस्तु [3]समाहरेत् ।
तस्यांशो दशमो दाप्यः[4] सर्वद्रव्येष्वयं विधिः ॥

याज्ञवल्क्यः [२, २६५]

जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत् ।

'जिह्मम्' वञ्चकम् । 'निर्लाभम्' लाभमाच्छिद्य । 'त्यजेयुः' संभूयकारिणः । 'अशक्तः' [असमर्थः] भाण्डपिण्डव्ययाद्यवेक्षणे ।

[5]नारदः [६, ४]

भाण्डपिण्डव्ययोद्धारभारसारान्ववेक्षणम् ।
कुर्युस्तेऽव्यभिचारेण समये स्वे व्यवस्थिताः ॥

नारदः [६, ७]

एकस्य चेत्स्याद्व्यसनं दायादोऽस्य तदाप्नुयात् ।
[6]अन्यो वाऽसति दायादे शक्तश्चेत्सर्वं एव वा ॥

1. दैवतस्करराजभ्यो-मु. ना. स्मृ.

2. यस्तस्स्वशक्त्या-वि. र., ११५, द, बि., मु. ना. स्मृ.

3. 'समाहरेत्' रक्ष्येत्

4. देयः-द.

5. Included here by ज and द only, and omitted in विवादरत्नाकर which closely follows the *Kalpataru*.

6. अन्ये वासति दायादे-ज

तथा [६, १६]

कश्चिच्चेत्संचरन् देशान् प्रेयादभ्यागतो वणिक् ।
[1]राजास्य भाण्डं [2]तद्रक्षेद्यावद्दायाददर्शनम् ॥

'व्यसनम्' [3]मरणरूपम् । 'अन्यो वा' इत्यादि । 'असति दायादे' संभूयकारिणां मध्ये यः 'शक्तः' प्रधानीभूतोऽसौ तद्द्रव्यं गृह्णीयात् । अथ[4] 'सर्वे एव' तुल्यास्तदा सर्व एव तद्द्रव्यं गृह्णीयुरित्यर्थः ।

बृहस्पतिः [१३-१४-१५]

यदा [5]तत्र वणिक्कश्चित्प्रमीयेत प्रमादतः ।
तस्य भाण्डं दर्शनीयं नियुक्तै राजपूरुषैः ॥

यदा कश्चित्समागच्छेत्तत्र रिक्थहरो नरः ।
स्वाम्यं विभावयेदन्यैः स तदा लब्धुमर्हति ॥

नारदः [६, १७]

दायादेऽसति बन्धुभ्यो ज्ञातिभ्यो वा तदर्पयेत् ।
तदभावे सुगुप्तं तद्धारयेद्दशवत्सरान्[6] ॥

बृहस्पतिः [१३, १६, १७]

राजाऽऽददीत षड्भागं नवमं दशमं[7] तथा ।
शूद्रविट्क्षत्रजातीनां विप्राद्गृह्णीत विंशकम् ॥

त्र्यब्दादूर्ध्वं तु नागच्छेद्यत्र स्वामी कथञ्चन ।
तदा गृह्णीत तद्राजा ब्रह्मस्वं ब्राह्मणान् श्रयेत् ॥

1. राजा भाण्डं तु तद्रक्षेत्–ज, द.
2. Jolly reads रक्षेत for तद्रक्षेत्
3. यदनुरूपं । अन्यो वेत्यादि–ज.
4. B. J. supplies अन्यथा for अथ; तुल्यांशाः for तुल्याः
5. यत्र–ज.
6. दशतीः समाः for दशवत्सरान्–मु ना. स्मृ.
7. द्वादशं–द, ज, B. J., वि. र., ११७

<u>बौधायनः</u> [१, १८, १६]

अब्राह्मणस्य प्रणष्टस्वामिकं रिक्थं संवत्सरं परिपाल्य राजा हरेत् ॥

अत्र च प्रणष्टस्वामिकद्रव्ये [1]एकवर्षत्रिवर्षदशवर्षधारणविकल्पानां व्यवस्था [2]तत्परदेशवर्तिदूरतरदूरतमदेशवर्तितदीयपुत्रादिदायादवार्तायां सत्यां नानाविधानेकगमनप्रतिबन्धसंभवे चावगन्तव्यम् ।

<u>नारदः</u> [६, १८; ६, ८]

अस्वामिकमदायादं दशवर्षस्थितं ततः ।
राजा तदात्मसात्कुर्यादेवं धर्मो न हीयते ॥

ऋत्विजां व्यसनेऽप्येवमन्यस्तत्कर्म निस्तरेत् ।
लभते दक्षिणाभागं [3]स च तस्मात्प्रकल्पितम् ॥

<u>बृहस्पतिः</u> [१३, १८]

एवं क्रियाप्रपन्नानां यदा कश्चिद्विपद्यते ।
तद्बन्धुना क्रिया कार्या सर्वैर्वा सहकारिभिः ॥

'क्रिया' अत्र तस्य कर्तव्याऽऽर्त्विज्यादिका ।

<u>शङ्खलिखितौ</u>

[4]तत्र चेदनुप्राप्ते सवने ऋत्विङ्म्रियेत तत्र किं कार्यमिति जिज्ञासा तस्य सगोत्रोऽथ शिष्यो वा तत्कार्यमनुपूरयेत् । [5]अथ चेदबान्धवस्ततोऽन्यमृत्विजं वृणुयात् ।

1. एकवर्षदशवर्ष–द
2. द. omits परदेशवर्ति
3. स तस्मात्सम्प्रकल्पितम–द, मु. ना.
4. अत्र–B. J ; अथ–उ, वि, व्य. प्र., ३८९.
5. This sentence is given as a comment by वि र., ११८, and as part of the sūtra by व्य. प्र., ३८९, which omits 'किं कार्यमिति जिज्ञासा.' It is perhaps as a commentary.

याज्ञवल्क्यः [२, २६५]

जिह्मं त्यजेयुर्निर्लोभमशक्तोऽन्येन कारयेत् ।
[1]अनेन विधिनाख्यात ऋत्विक्कर्षककर्मिणाम्[2] ॥

मनुः [८, २०६-२०७]

[3]ऋत्विग्यदि वृतो यज्ञे स्वकर्म परिहापयेत् ।
तस्य कर्मानुरूपेण देयोऽशः सहकर्तृभिः ॥

दक्षिणासु च दत्तासु स्वकर्म [4]परिहापयेत् ।
कृत्स्नमेव लभेतांशमन्येनैव च कारयेत् ॥

मनुबृहस्पती [मनुः, ८, २१०; बृह, १३, २०]

सर्वेषामर्धिनो मुख्यास्तदर्धेनार्धिनोऽपरे[5] ।
तृतीयिनस्तृतीयांशाश्चतुर्थांशास्तु[6] पादिनः[7] ॥

'सर्वेषां' षोडशानामृत्विजाम्, [8]या समुदिता दक्षिणा तस्यामर्धं गृह्णन्ति 'मुख्याः' होतृब्रह्माध्वर्यूद्गातारः । ईषन्न्यूनार्धग्रहणेऽपि सामीप्येन 'अर्धिन' उच्यन्ते । 'अपरे' मैत्रावरुणब्राह्मणाच्छंसिप्रतिप्रस्थातृप्रस्तोतारः, ते मुख्य-

1. अनेन विधिराख्यातः–द, ज, B. J., and the printed text of मिताक्षरा; the reading adopted above is also that of Viśvarūpa.

2. योऽयं संभूयोत्थाने विधिरुक्तः अनेनैव विधिना निरूपितमृत्विगाद्यनुष्ठानमपि द्रष्टव्यम् । (विश्वरूपः)

3. कथञ्चिदपाटवादिना सामिकृतं यत् 'परिहापयेत्' त्यजेत् तदानीं तस्य देयो दक्षिणांशः कर्मानुरूपेण यावती तस्मिन् क्रतौ दक्षिणा तां निरूप्य चतुर्थे भागे कर्मणः कृते चतुर्थतृतीय इत्येतदानुरूप्यम् । सहकर्तृभिः कर्तारः पुरुषा प्रधानर्त्विजो होत्रुद्गात्रादीनां प्रस्तोतृमैत्रावरुण प्रभृतयः—(मेधातिथिः)

4. B. J.–परिहापयन्, as in Jolly's text; परिहारयन्–द.

5. अर्धिनः पर–उ, वि.

6. B. J.–चतुर्थांश्चैकपादिनः

7. वादिनः–द.

8. या गोशतमुदिता दक्षिणा–B. J., वि.

ऋत्विग्गृहीतदक्षिणार्धग्रहणेनार्धिन उच्यन्ते । ये 'तृतीयिनः' अच्छावाक-नेष्टृग्नीध्रप्रतिहर्तारस्ते मुख्यार्थगृहीतस्य तृतीयमंशं लभन्ते । 'पादिनः' ग्रावस्तोतृपोतृनेतृसुब्रह्मण्याः । एते मुख्यर्त्विग्गृहीतस्य चतुर्थमंशं लभन्ते[1] ॥

मनुः [८, २११, २०८]

संभूय स्वानि कर्माणि कुर्वद्भिरिह मानवैः ।
अनेन [2]क्रमयोगेन कर्तव्यांशप्रकल्पना[3] ॥

[4]यस्य कर्मणि यास्तु स्युरुक्ताः प्रत्यंशदक्षिणाः[5] ।
स एव ता आददीत भजेरन् सर्व एव वा ॥

1. सर्वेषामृत्विजां ये मुख्यास्तेऽर्धिनः । यावती तस्मिन् क्रतौ सामस्त्येन दक्षिणाम्नाता तस्यास्तेऽर्धिनोऽर्धहराः । सोमयागेषु हि षोडशर्त्विजः । तत्र चत्वारो 'मुख्याः'—होताऽध्वर्यु-र्ब्रह्मोद्गातेति । तेषां अर्धम् । तस्य द्वादशशतं दक्षिणेति ततोऽर्धं षट्पञ्चाशत् । तदर्धेन अष्ट-विंशत्याऽर्धिनस्तद्धर्मतः । 'अपरे' येषां ततोऽनन्तरं वरणमाम्नातं मैत्रावरुणप्रतिप्रस्थातृब्राह्मणा-च्छंसिप्रस्तोतारः । 'तृतीयिनः' तृतीयांशाः । अंशशब्दोऽर्धशब्देन समानार्थोऽर्धशब्दश्च नावश्यं समप्रविभाग एव । किंचिन्न्यूनेऽधिकेऽपि सामीप्येन वर्तते । तेन तृतीयो भागः षट्पञ्चा-शतः षोडश गृह्यन्ते । एकैकस्य चतस्रो भवन्ति । समस्ततृतीयं भागं प्रयच्छन्ति षट्पञ्चाशत-स्तृतीयं च । होतुरच्छावकोऽध्वर्योर्नेष्टा ब्रह्मणोऽग्निरुद्गातुः प्रतिहर्ता । ये च पादिनस्ते चतुर्थं भागं कर्मणः कुर्वन्तीति 'पादिनः' । चतुर्थे च स्थाने मैत्रावरुणस्थानास्ते । 'चतुर्थांशाः' द्वादशसमुदाये पूर्ववत् । एवं 'तं शतेन दीक्षयन्ति' इत्यत्रापि कृतिः कर्तव्या ॥ [मेधातिथिः] Medhātithi takes the total as 112, which Govindarāja, following a rule of Kātyāyana, gives it as 100, and he is followed by Kullūka and others, including Caṇḍeśvara. Lakṣmīdhara does not specify the aggregate *dakṣiṇā*, though two manuscripts interpolate a specification of it as one-hundred.

2. B. J.–विधियोगेन as in Jolly's text.

3. 'संभूय' संहत्य वर्धकिस्थपतिसूत्रधारादिषु स्वसमयसिद्धो यावानंशः सूत्रधारस्य यावान् स्थपतेस्तत्र 'अनेन विधियोगेन' 'विधि'र्वैदिकोऽर्थः, तत्प्रसिद्धा व्यवस्था 'विधियोगेन' वैदिक्या यज्ञगतया व्यवस्थयेत्यर्थः—(मेधातिथिः)

4. 'यस्मिन् कर्मणि' इति मेधातिथिपाठः

5. B. J. reads प्रत्यङ्गदक्षिणाः; so does Jolly.

'प्रत्यंशदक्षिणाः' अंशमंशं प्रति ऋत्विग्विशेषसंबन्धेन समाम्नाता दक्षिणाः। ताः किं यस्य कर्मणि यत्संबन्धेन समाम्नाताः—यथा [1]अभिषेचनीये 'हिरण्मयौ प्राकाशावध्वर्यवे ददाति' इति तेनैवाध्वर्युणा गृहीतव्या, उताध्वर्युद्वारमात्रं, सर्वे विभज्य गृह्णीरन्निति संशयः।

मनुबृहस्पती [मनु, ८, २०९; बृह, १३, १९]

रथं हरेदथाध्वर्युर्ब्रह्माधाने च वाजिनम्।
होता चापि हरेदश्वमुद्गाता चाप्यनः क्रये॥

पूर्वोक्तसंशयेऽयं निर्णयः। केषांचिच्छाखिनामाधाने अध्वर्यवे रथः आम्नायते, ब्रह्मणे च वेगवानश्वः, होत्रे चाश्वः, उद्गात्रे सोमक्रये सोमवाहकं 'अनः' शकटम्। एवं व्यवस्थायां ददातिर्मुख्यार्थो भवेत्। पुरुषसंयोगश्च नादृष्टार्थः[2]।

बृहस्पतिः [१३, २१]

आगन्तुकाः क्रमायातास्तथा चैव स्वयंकृताः।
त्रिविधास्ते समाख्याता वर्तितव्यं तथैव तैः॥

शङ्खलिखितौ

अथर्त्विजि वृत्ते[3] पश्चादन्यं वृणुयात्। पूर्वाहूतस्यैव दक्षिणा[4]। पश्चादाहूतः किञ्चिल्लभेत। प्रसवेच्चेत्तत्कालं निमित्तं [5]चापेक्ष्य यक्ष्यमाणस्तत्कालमुदीक्षेत।

1. 'अभिषेचनीये' अभिषेचनप्रकरणे। 'हिरण्मयौ' काञ्चनमयौ, 'प्रकाशौ' दीपस्तंभौ इत्येके, स्वर्णमयदर्पणौ इत्यपरे इति शतपथब्राह्मणभाष्यम्॥ (कृ. र., १२०, foot-note.)

2. This commentary, which is not based on Medhātithi's, as usual, is reproduced by Caṇḍeśvara (वि. र., १२०) and Kullūka.

3. मृते–उ, A. S. B., S. B. (a), ज. द; 'वृत्ते'–बि, वि. र., १२१

4. दक्षिणा–वि. र., १२१; दक्षिणां–उ.

5. वा अपेक्ष्य–वि. र., १२१

नान्तरा यजेत । स्यादात्ययिको वा । तं क्रतुं सम्पादयेत्[1] । प्रोष्य प्रत्यागतश्च किञ्चिल्लभेत[2] । अथ चेत्[3] प्रतिषिद्धः प्रवसेत्कामादनुप्राप्ते सवने ऋत्विक्छतं दण्ड्यः । स एव '[4]वादुष्टस्तस्य ऋत्विक्कुलोपाध्यायः । एवं व्याधितपतितोन्मत्तप्रहीणप्रध्वस्तेषु संप्रसादकरणमृत्विक्षु । कामाच्चेदपतितं याज्यं त्यजेदृत्विक् प्राप्नुयाद्द्विशतं दमम्[5] । याज्यश्चैव तदेवाप्नुयात्त्यागे ऋत्विजोऽपतितस्य । कामं पतितमश्रोत्रियं त्यजेद्याज्यं चाभिशस्तमदातारम् ॥

'पूर्वाहूतस्यैव दक्षिणा' इति, पूर्वाहूतस्य दायादानां सा दक्षिणा । 'कालं निमित्तं चावेक्ष्य' 'कालं' पक्षमासादिकम्, 'निमित्तं' विवाहादिप्रयोजनं बुद्ध्वा । अत्यय एव 'आत्ययिकः' । तेन यदि तत्प्रतीक्षणे यज्ञात्ययो बाधः संभाव्येत तदा ऋत्विगन्तरेण तं यज्ञं निष्पादयेदित्यर्थः । 'अनुप्राप्ते सवने' सवनकाल उपस्थिते । 'स एव वादुष्टः' तस्य यजमानस्य यः कुलोपाध्यायः स प्रोषितोऽप्यदुष्ट एव । 'प्रहीणः' अभिशापादिना त्यक्तः[6] । 'प्रध्वस्तः' अतिवृद्धः । 'संप्रसादकरणं' ऋत्विगन्तरग्रहणेऽप्यनुज्ञाग्रहणम्[7] ॥

1. समापयेत्–B. J., वि. र., १२१
2. लभते–द
3. अथ वा–उ, वि, वि. र., १२१
4. एव वा दुष्टः–द, वि. र., १२१
5. दण्डम्–द, वि. र., १२१
6. अभियोगादिना युक्तः–B. J.

7. Compare the elaborated version of the commentary in *Vivādaratnākara*, पृ. १२१–१२२ below :—अस्यार्थः । पूर्ववृत्तेषु ऋत्विक्षु मध्ये एकस्य मरणादौ 'वृत्ते' यदाऽन्यं वृणुते, 'पूर्वाहूतस्य दक्षिणा' तन्मरणपक्षे तद्दायादानां कर्मानुरूपा सा । पश्चादाहूतः कश्चित् किञ्चित् कर्मानुरूपं लभते । यदा तु 'कालं' मासपक्षादिकं 'निमित्तं' 'वाप्यदपेक्ष्य' उद्भाव्य गतः, तदा यजमानस्तं प्रतीक्षेत, 'नान्तरा यजेत' । 'आत्ययिको वा' समयातिक्रियप्रतिसन्धानवान् 'क्रतुं' ऋत्विगन्तरेण समापयेत् । पूर्ववृत्तस्तु ऋत्विक् 'प्रोष्य' प्रवासं कृत्वा 'प्रत्यागतः' 'किञ्चत्' पारितोषिकं यजमानाल्लभेत । यजमानप्रतिषिद्ध ऋत्विक् कामाद्व्रजन् पणशतं दण्ड्यः । अथ स्वभावत एव दुष्ट इति विज्ञायते, तदा यजमानस्य ऋत्विक्कुलपरीक्षाधिकृत उपाध्याय एव दण्ड्यः । एवं व्याधिते पतिते उन्मत्ते 'प्रहीणे' अभिशापादिना त्यक्ते 'प्रध्वस्ते' कर्माक्षमताहेतुवार्धके संप्रसादकरणं तं संतोष्य ऋत्विगन्तरवरणेऽप्यनुज्ञाकरणम् ॥

<u>मनुः</u> [८, ३८८]

ऋत्विजं यस्त्यजेद्याज्यो याज्यं चर्त्विक् त्यजेद्यदि ।
शक्तं कर्मण्यदुष्टं च तयोर्दण्डः शतं शतम् ॥

द्विशतैकशतदण्डयोः कामाकामकृता व्यवस्था[1] ।

<u>नारदः</u> [६, १०, ९, ११]

ऋत्विक् च त्रिविधो दृष्टः पूर्वजुष्टः स्वयंकृतः ।
यदृच्छया च[2] यः कुर्यादार्त्विज्यं प्रीतिपूर्वकम् ॥

ऋत्विग्याज्यमदुष्टं यस्त्यजेदनपकारिणम् ।
अदुष्टं चर्त्विजं याज्यो विनेयौ तावुभावपि ॥

क्रमायाते[3] ह्येष धर्मो मृतेष्वृत्विक्षु च स्वयम् ।
यादृच्छके तु संयाज्ये त्यक्ते[4] नास्त्यत्र किल्बिषम् ॥

<u>बृहस्पतिः</u> [१३, ४; १३, २२]

प्रयोगं कुर्वते ये तु हेमधान्यरसादिना ।
समन्यूनाधिकैरंशैर्लाभस्तेषां तथाविधः ॥

बहूनां संमतो यस्तु दद्यादेको[5] धनं[6] नरः ।
करणं कारयेद्वापि सर्वैरेव कृतं भवेत् ॥

1. धनवत्ताऽधनवत्ताभ्यां व्यवस्था इति वि. र., १२२.

2. अपि-B. J.

3. क्रमागते-द.

4. तत्त्यागे नास्ति किल्बिषम्-B. J.

5. दद्यात्तदेको...भवेत्—द omits the intervening words here.

6. The manuscript recently acquired by the *Sarasvati Bhavan*, Benares, begins here. It is indicated by the letter स in the notes below. The Ms. begins with folio १३४ and goes on to folio ३१७. It is the third from this Library, and the other two are being referred to as S. B. (a) and S. B. (b)

[1]['प्रयोगं' लाभार्थम्। 'करणं' लेख्यादि।]

तथा [१३, २३-२७; २९-३१;२७; ३२-३४]

ज्ञातिसम्बन्धिसुहृदामृणं देयं सबन्धकम्।
अन्येषां लग्नकोपेतं लेख्यसाक्षियुतं तथा॥

स्वेच्छादेयं हिरण्यं तु रसधान्यं तु सावधि।
[2]देशस्थित्या[3] प्रदातव्यं गृहीतव्यं तथैव तत्[4]॥

समवेतैस्तु यद्दत्तं प्रार्थनीयं तथैव तत्।
न याचते च यः कश्चिल्लाभात् स परिहीयते॥

प्रयोगः पूर्वमाख्यातः समासेनोदितोऽधुना।
श्रूयतां कर्षकादीनां विधानमिदमुच्यते॥

[5]वाह्यकर्षकबीजाद्यैः क्षेत्रापकरणेन च।
ये समानास्तु तैः सार्धं कृषिः कार्या विजानता॥

[6]विनीतनगराभ्यासे तथा राजपथस्य च।
ऊषरं मूषिकव्याप्तं क्षेत्रं यत्नेन वर्जयेत्॥

1. द adds here the comment placed within rectangular brackets below. They are given in वि. र., १२३, but are omitted in the other manuscripts.

2. The second Ms. of व्यवहारकल्पतरुः from the Sarasvati Bhavan, Benares, which is being referred to hereafter as S. B. (b) begins here.

3. एव स्थित्या–S. B. (b)

4. "हिरण्यदाने अवधौ स्वेच्छा। रसादौ त्ववधेरावश्यकत्वम्"॥–द, and वि. र. १२१ bring this commentary here. As other Mss. do not support the inclusion, they are placed in a footnote.

5. वि. र. १२४; वाह्यवाहकबीजाद्यैः, इति पराशरमाधवीये, पृ. १०९

6. विवीते नगराभ्यासे–वि. र., १२३; पर्वते नगराभ्याशे, इति पराशरमाधवीये, पृ. १०९.

गर्तानूपं सुसेकञ्च समन्तात्क्षेत्रसंयुतम् ।
प्रकृष्टञ्च कृतं काले वापयन् फलमश्नुते ॥

कृशाऽतिवृद्धं [1]क्षुद्रञ्च रोगिणं प्रपलायिनम् ।
काणं खञ्जञ्च [2]नादद्याद्वाह्यं प्राज्ञः कृषीवलः ॥

वाह्यबीजात्ययाद्यस्य क्षेत्रहानिः प्रजायते ।
तेनैव सा प्रदातव्या सर्वेषां कृषिजीविनाम् ॥

एष धर्मः समाख्यातः कीनाशानां [3]सनातनः ।
हिरण्यरूप्यसूत्राणां काष्ठपाषाणचर्मणाम् ॥

संस्कर्ता [4]च कलाभिज्ञः शिल्पी चोक्तो[5] मनीषिभिः ।
हेमकारादयो यत्र शिल्पं सम्भूय कुर्वते ॥

कर्मानुरूपं निर्वेशं लभेरंस्तु[6] यथांशतः ।

'विवीत'शब्देन यवसाद्यर्थं रक्षितो भूप्रदेश उच्यते[7] । 'कीनाशाः' कृषीवलाः[8] । 'निर्वेशो'ऽत्र भृतिः ।

1. शूद्रं च–A. S. B., S. B. (a); स reads क्षुद्रम्

2. विनाऽऽदद्यात्–स्मृ. चं, p. 434.

3. A. S. B., S. B. (a), स, ज, द and वि र., १२४–पुरातनः

4. तु कलाभिज्ञः–पराशरमाधवीये, पृ. ३११; फलाभिज्ञः इति, विवादरत्नाकरे, पृ. १२४

5. प्रोक्तो–माधवीये; चोक्तो–वि. र. १२४ and विवादचिन्तामणि, p. 53

6. लभेरंस्ते–द, ज, B. J., स.

7. A. S. B., S. B. (a) and स add here to the commentary–'प्रकृष्टं' प्रकर्षेण कृष्टम् । 'काले' माघादौ–like वि. र., १२४.

8. Omitted by उ.

कात्यायनः [६३२]

शिक्षकाभिज्ञकुशला आचार्याश्चेति शिल्पिनः ।
एकद्वित्रिचतुर्भागान् [1]वहेयुस्ते यथोत्तरम् ॥

बृहस्पतिः [१३, ३६-३९]

हर्म्यं देवगृहं [2]वाऽपि [3]धार्मिकोपस्कराणि च ।
संभूय कुर्वतां चैषां [4]प्रमुखो द्व्यंशमर्हति ॥

नर्तकानामेष एव धर्मः सद्भिरुदाहृतः ।
तालज्ञो लभतेऽध्यर्धं[5] गायनास्तु समांशिनः ॥

स्वाम्याज्ञया तु यच्चौरैः परदेशात्समाहृतम् ।
राज्ञे दत्वा तु षड्भागं भजेयुस्ते यथांशतः ॥

चतुरोंऽशान् तथा[6] मुख्यः शूरस्त्र्यंशमवाप्नुयात् ।
समर्थस्तु हरेद्द्व्यंशं शेषास्त्वन्ये समांशिनः ॥

कात्यायनः [६३३-६३५; ६३७]

[7]परराष्ट्राद्धनं यत्स्याच्चोरैः स्वाम्याज्ञया हृतम् ।
राज्ञे दशांशमाहृत्य विभजेरन् यथाविधि ॥

1. हरेयुः–A. S. B., S. B. (a), स, ज, द, बि and वि. र., १२४

2. वापी–वि. र., १२५; स्मृ. चं (p. 436)–चापि; वाऽपि–अपरार्क, ८३८.

3. चार्मिकोपस्करणानि–स्मृ. चं., p. 436; वि.र. १२५; क्षार्दिकोपस्करणानि इति स.

4. 'प्रमुखः', प्रधानभूतः । तत्र कात्यायनीयमुपदेश्योपदेष्टृत्वभावापन्नानाश्रित्य ततोऽन्यस्य प्रमुखस्य द्व्यंशहरत्वमित्यविरोधः (विवादरत्नाकरः, १२५)

5. अर्धमधिकं यत्र तदध्यर्धम् (वि. र , १२५)

6. 'मुख्यो' बुद्धिशरीरव्यापारवान् । 'शूरः' साहसिकः । (वि. र., १२५)

7. [राज्ञे षड्भागदानं] प्रबलतरवैरिदेशादाहृतविषयमेतत्—इति स्मृतिचन्द्रिका (p. 440) । विवादरत्नाकरकारस्तु "राज्ञः षड्भागदशमभागौ परदेशसन्निधानाऽसन्निधानादिना बोद्धव्यौ" इति मन्यते ।

चोराणां मुख्यभूतस्तु चतुरोऽशांस्ततो हरेत् ।
शूरोंऽशांस्त्रीन् समर्थो द्वौ शिष्टास्त्वेकैकमेव च ॥

तेषां च प्रसृतानां यो ग्रहणं समवाप्नुयात् ।
तन्मोक्षणार्थं यद्दत्तं तस्य कार्या[1] समक्रिया ॥

वणिजां कर्षकाणाञ्च चोराणां शिल्पिनां तथा ।
[2]अनियम्यांशकर्तॄणां सर्वेषामेष निर्णयः ॥

इति व्यवहारकाण्डे कृत्यकल्पतरौ सम्भूयसमुत्थानम्[3] ॥

---

1. 'तस्य कार्या समा क्रिया' इति विवादरत्नाकरः (१२५); So also ज and द; स्मृ. चं. (p. 441) पराशरमाधवीय, (p. 311), व्यवहारमयूख (ed. Kane, p. 202) and सरस्वतीविलास (p. 276) read as the last quarter–वहेयुस्ते यथांशतः । Varadarāja's व्यवहारनिर्णय (पृ. २८६) confirms the reading of our text.

2. 'अनियम्यांशकर्तॄणां' अंशमनियम्य कृतिमताम् (वि. र., १२६)

3. S. B. (a) श्रीमहाराजाधिराजश्रीगोविन्द[चन्द्र]देवमहासान्धिविग्रहिकेण भट्टहृदयधरात्मजेन भट्टलक्ष्मीधरेण विरचिते कृत्यकल्पतरौ व्यवहारकाण्डे संभूयसमुत्थानम् ॥ ज and द omit all words before भट्टहृदयधरात्मज ।

## ६०

# अथ दत्ताप्रदानिकम्

तत्र नारदः [७, १-३]

दत्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति ।
दत्ताप्रदानिकं नाम [1]व्यवहारपदं[2] हि तत् ॥

अदेयमथ देयं च दत्तं चादत्तमेव च ।
व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः ॥

[3]तत्रेहाष्टावदेयानि देयमेकविधं स्मृतम् ।
दत्तं सप्तविधं विद्याददत्तं [4]द्वादशात्मकम् ॥

बृहस्पतिः [१४, २]

सामान्यं पुत्रदाराधिसर्वस्वन्यासयाचितम् ।
प्रतिश्रुतं तथाऽन्यस्य न देयमिति संमतम्[5] ॥

नारदः [७, ४-५]

अन्वाहितं याचितकमाधिः [6]सामान्यकं च यत् ।
निक्षेपः पुत्रदारं च सर्वस्वं चान्वये सति ॥

1. तद्विवादपदं स्मृतम्–द, स, वि. र., १२७, and मु. ना. स्मृ.

2. पदं स्मृतम्–B. J., ज.

3. तत्र ह्यष्टावदेयानि–द, वि. र., and B. J; तत्र त्वष्टावदेयानि–ज.

4. षोडशात्मकम्–A. S. B., S. B. (a), B. J., ज, द, स, मु. ना. स्मृ. and वि. र., १२७

5. This reading is also that of स्मृ. चं., p. 442. A. S. B., S. B. (a), स, द, and B. J. read तु अष्टधा स्मृतम्

6. साधारणकं च यत्–A. S. B., S. B. (a), स, ज, द, मु. ना. स्मृ, and वि. र., १२७

आपत्स्वपि हि कष्टासु वर्तमानेन देहिना ।
अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम् ॥

दक्षः

सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम् ।
अन्वाहितं च निक्षेपः सर्वस्वं चान्वये[1] सति ॥

आपत्स्वपि न देयानि नव वस्तूनि पण्डितैः ।
यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः ॥

याज्ञवल्क्यः [२, १७५]

स्वकुटुम्बावरोधेन देयं दारसुतादृते ।
नान्वये सति सर्वस्वं [2]यच्चान्यस्मै प्रतिश्रुतम् ॥

कात्यायनः [६३८, ६३९]

[3]विक्रयं चैव दानं च[4] न देयाः स्युरनिच्छवः ।
दाराः पुत्राश्च[5] सर्वस्वमात्मनैव तु[6] योजयेत् ॥

1. बान्धवे–स.

2. 'देयं यच्चान्यसंश्रितम्' इति विश्वरूपपाठः ॥ देयं यच्चेत्यत्र देयं प्रत्यर्पणीयनिक्षेपादि । अन्यसंश्रितं साधारणं पराधीनं वा स्वमेव । अस्य पाठान्तरं–'यच्च प्रतिश्रुतम्' इति । देयत्वेनान्यस्मै प्रतिश्रुतमित्यर्थः ॥ (विश्वरूपः) ॥

3. See p. 276 *supra*–कात्यायनः (४७१)

सुतस्य सुतदाराणां वशित्वं त्वनुशासने ।
विक्रये चैव दाने च वशित्वं न सुते पितुः ॥

and the notes thereon.

'न नेयास्स्युरनिच्छवः' इत्येतदनापद्विषयम् (स्मृ. चं., p. 446). In a long discussion on the subject of a man's *Svatva* in his wife and sons, the *Vyavahāramayūkha*, p. 92 (ed. Kane) denies its existence.

4. न नेयाः स्युः–इति अपरार्कः (पृ. ७७९) स्मृतिचन्द्रिका (पृ. 446) पाठः.

5. सु–बि, स; 'आत्मन्येव तु' इति वि. र., १२८.

6. च–स.

आपत्काले तु कर्तव्यं दानं विक्रय एव वा ।
अन्यथा न प्रवर्तेत इति [1]शास्त्रविनिश्चयः ॥

वसिष्ठः [१५, १-५]

[2]शुक्रशोणितसंभवः पुरुषो [3]मातृपितृनिमित्तकः । तस्य प्रदानविक्रयपरित्यागेषु[4] मातापितरौ प्रभवतः । न त्वेकं[5] पुत्रं दद्यात्प्रतिगृह्णीयाद्वा । स हि सन्तानाय पूर्वेषाम् । न [6]तु स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वा, अन्यत्राऽनुज्ञानाद्भर्तुः ।

बृहस्पतिः [१४, ३]

कुटुम्बभक्तवसनाद्देयं यदतिरिच्यते ।
मध्वास्वादो विषं पश्चाद्दातुर्धर्मोऽन्यथा भवेत् ॥

कात्यायनः [६४०]

[7]सर्वस्वं गृहवर्जं तु कुटुम्बभरणाधिकम्[8] ।
यद्द्रव्यं तत्स्वकं देयमदेयं स्यादतोऽन्यथा ॥

बृहस्पतिः [१४, ४-६; ८]

सप्तागमाद्गृहक्षेत्राद्यद्यत्क्षेत्रं प्रदीयते ।
पित्र्यं वाथ स्वयं प्राप्तं तद्दातव्यं निरक्षितम् ॥
स्वेच्छादेयं [9]स्वयं प्राप्तं बन्धाचारेण बन्धकम् ।
वैवाहिके क्रमायाते सर्वदानं न विद्यते[10] ॥

1. शास्त्रविनिर्णयः–व्रि र. १२८
2. 'शोणितशुक्र' इति मुद्रितवासिष्ठे
3. मातापितृ–मु. वासि.
4. त्यागेषु for परित्यागेषु–मु. वासि.
5. त्वेकं–बि., मु. वासि; त्वेकं प्रतिदद्यात्प्रतिग्र–स.
6. तु omitted in the printed edition, p. 44.
7. सर्वस्वगृहवर्जमिति, स्मृ. चं. पाठः (p. 445)
8. भरणादिकम्–उ, स.
9. स्वकं–द.
10. बन्धकमाधिस्तद्याचारेणाधिरूपेण देयम् । तद्विवाहालब्धं चेत्तस्यां भार्यायां सत्यां सर्वमदेयम् । तथा पितामहादिक्रमायातं पुत्रसद्भावे ॥ अपरार्कः, ७८०. 'वैवाहिकपदेन शौर्यार्जितमपि विवक्षितम्' । (वि. र., ११०)

सौदायिकं क्रमायातं शौर्यप्राप्तं च यद्भवेत् ।
ज्ञातिस्वाम्यनुज्ञातं[1] दत्तं सिद्धिमवाप्नुयात् ॥

[2]विभक्ता वाऽविभक्ता वा[3] दायादाः स्थावरे समाः ।
एको ह्यनीशः सर्वत्र दानाधमनविक्रये ॥

"[4]सप्तागमात्'—

'सप्तवित्तागमाः धर्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च' ॥

इति मनूक्तेः [१०, ११५] सप्तविधशौर्याद्यागमलब्धधनादुद्धृत्य तद्धन-माश्रित्य गृहक्षेत्रादि दातव्यम् । न त्वनागममित्यर्थः[5] ॥

याज्ञवल्क्यः [२, १७६]

प्रतिग्रहः [6]प्रकाशः स्यात् स्थावरस्य विशेषतः ।
देयं प्रतिश्रुतं चैव दत्वा नापहरेत्पुनः ॥

1. 'अनुमतम्' इति वि. र. पाठः

2. 'अविभक्ता विभक्ता वा' इति वि. र. १३०.

3. 'दायादः' पुत्रादिः । तथाच वृत्त्यधिकारे [कल्पतरुगृहस्थकाण्ड, पृ. १९७] 'दायाद्यं शिलोञ्छौ अन्यच्चापरिगृहीत'मित्यापस्तम्बवाक्यस्य [२, १०, ४] व्याख्याने 'दायादः' पुत्रादिरिति कल्पतरुः ॥ (विवादरत्नाकरः, १३१)

4. Mss. corrupt; passage restored conjecturally from the Mss. and the following comment and citation in विवादरत्नाकर, पृ. १३०-अत्र च सप्तविधशौर्याद्यागमलब्धाद्धनादुद्धृत्य तद्धनं दातव्यमित्यक्षरार्थः । वस्तुतस्तु कुटुम्बभक्तवसनोचितधनाधिकं स्वत्वहेतुना लब्धं गृहक्षेत्रादिकं देयं न तु स्वत्वहेतुमन्तरेणाप्याप्तं देयमित्यर्थः । अत एव तद्धनागममाश्रित्येत्यर्थ इत्याह कल्पतरुः ॥

5. "इति मनूक्तेः-अत्र दायोऽन्वयागतं धनम्, लाभो निध्यादेः, जयोऽत्र सङ्ग्रामे शत्रो-रभिभवः, प्रयोगः कुसीदं, कर्मयोगः कृषिवाणिज्यादि इति गृहस्थकाण्डे [पृ. २५९] कल्प-तरुः ॥ [This explanation is verbally identical with that in *Gṛhasthakāṇḍa*, p. 259] compare अपरार्कभाष्य, पृ. ७८०

"सप्तागमाद्गृहक्षेत्राद्यद्यस्यैतं प्रदीयते" इति च पाठे सप्तविधशौर्याद्यागमप्रकारलब्ध-गृहक्षेत्रादुद्धृत्य दातव्यम् । न त्वनागममित्यर्थः ॥"

6. 'प्रकाशः' प्रकटः ससाक्षिकः (अपरार्कः, ७८३)

कात्यायनः [६४२]

स्वेच्छया यः प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम् ।
न दद्यादृणवद्दाप्यः प्राप्नुयात् पूर्वसाहसम् ॥

मत्स्यपुराणे [२२७, ४]

प्रतिश्रुत्याप्रदातारं सुवर्णं दण्डयेन्नृपः ॥

हारीतः

प्रतिश्रुतार्थादाने तु[1] दत्तस्योच्छेदनेन च ।
[2]विविधान्नरकान्याति तिर्यग्योनौ च जायते ॥

[3]वाचा च यत्प्रतिज्ञातं कर्मणा नोपपादितम् ।
ऋणं तद्धर्मसंयुक्तमिह लोके परत्र च ॥

गौतमः [५, २४]

प्रतिश्रुत्याप्यधर्मसंयुक्ताय[4] न दद्यात् ।

बृहस्पतिः [१४, ९]

भृतिस्तुष्ट्या पण्यमूल्यं स्त्रीशुल्कमुपकारिणे ।
श्रद्धानुग्रहसंप्रीत्या दत्तमष्टविधं विदुः ॥

दत्तस्य सप्तविधत्वमभिधाय विभागे—

1. 'प्रतिश्रुत्याप्रदानेन' इति विवादरत्नाकरपाठः (१३२)

2. From this line to the second-half of the verse of Nārada–'यद्दत्तं स्यादविज्ञानाददत्तं तदपि स्मृतम्'–(which is there given as the second half of the first verse of *Hārīta*) there is a gap in the Udaipur and Bikanir manuscripts.

3. 'वाचा यच्च प्रतिज्ञातं' इति वि. र. पाठः (१३२)

4. 'अधर्मसंयुक्ते' इति मस्करिपाठः (p. 100)। 'अधर्मसंयुक्तः' गुर्वाद्यर्थमुद्दिश्य यः प्रार्थयते न च करोति तस्मै प्रतिश्रुतमपि न दद्यात्। अपिशब्दात् संकल्पितमपि (मस्करिभाष्ये)। यदि तेन द्रव्येणाधर्मसंयुक्तं वेश्यागमनादयसौ करिष्यतीति विजानीयात् (हरदत्त-मिताक्षरा, १९)

नारदः [४, ७]

पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः ।
[1]स्त्रीशुल्कानुग्रहार्थश्च दत्तं दानविदो विदुः[2] ॥

'पण्यमूल्यं' क्रीतमूल्यम् । 'भृतिः' वेतनं, कृतकर्मणे दत्तम् । 'तुष्ट्या' बन्दिचारणादिभ्यो दत्तम् ।

दक्षः

मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि ।
दीनानाथविशिष्टेभ्यो दत्तं तु सफलं भवेत् ॥

कात्यायनः [६४५, ६४४, ६४६]

भयत्राणाय रक्षार्थं तथा कार्यप्रसाधनात् ।
अनेन विधिना दत्तं विद्यात्प्रत्युपकारिकम्[3] ॥

अविज्ञातोपलब्ध्यर्थं दानं यत्र निरूपितम् ।
उपलब्धिक्रियालब्धं सा भृतिः परिकीर्तिता ॥

प्राणसंशयमापन्नं यो मामुत्तारयेदितः ।
सर्वस्वं तस्य दास्यामीत्युक्तेऽपि न तथा भवेत् ॥

नारदः

अदत्तं तु [4]भयक्रोधशोकवेगरुगन्वितैः ।
तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥

1. 'स्त्रीभक्त्यनुग्रहार्थश्च' इति मुद्रितनारदीये (पृ. १३७)

2. 'स्नेहात्' पुत्रदाराभ्यो दत्तम् । 'प्रत्युपकारतः' उपकृतवते प्रत्युपकारतया दत्तम् । 'स्त्रीशुल्कं' कन्यापरिणयार्थे तत्सम्बन्धिने दत्तम् । 'अनुग्रहार्थं' धर्मार्थम्-(वि. र., १३३). B. J. omits the śloka of Nārada and the commentary on it.

3. प्रत्युपकारिणम्-B. J.; प्रत्युपकारकम्—अपरार्कः (पृ. ७८१)

4. 'भयक्रोधद्वेषशोकरुगान्वितैः'-मु. ना. स्मृ., १३८; 'भयक्रोधकामशोकरुगान्वितैः'-वि. र., १३४.

बालमूढास्वतन्त्रैश्च[1] मत्तोन्मत्तापवर्जितैः ।
कर्ता ममायं कर्मेति प्रतिलाभेच्छया तु यत् ॥

कात्यायनः [६४७, ६४९]

कामक्रोधास्वतन्त्रार्तक्लीबोन्मत्तप्रमोहितैः ।
व्यत्यासपरिहासाच्च[2] यद्दत्तं तत्पुनर्हरेत् ॥

यदि कार्यस्य सिद्ध्यर्थमुत्कोचा[3] स्यात्प्रतिश्रुता ।
तस्मिन्नपि प्रसिद्धेऽर्थे न देया[4] स्यात् कथञ्चन ॥

[5]अथ प्रागेव दत्ता स्यात्प्रतिदाप्यः स तां बलात् ।
दण्डं चैकादशगुणमाहुर्गार्गीयमानवाः ॥

बृहस्पतिः [१४, १५-१७]

क्रुद्ध[6]हृष्टप्रमत्तार्तबालोन्मत्तभयातुरैः ।
मत्तातिवृद्धनिर्धूतैः [7]प्रमूढैः शोकरोगिभिः ॥

[8]नर्मदत्तं तथैतैर्यत् [9]तददत्तं प्रकीर्तितम् ।
प्रतिलाभेच्छया दत्तमपात्रे पात्रशङ्कया ॥

कार्ये चाधर्मसंयुक्ते स्वामी तत्पुनराप्नुयात् ।

1. कामधेनुमिताक्षरयोः 'बालमूढस्वतन्त्रार्तै' रिति लिखितं, व्याख्यातञ्च । मिताक्षरायां [२, १७६] 'आर्तो' रोगाभिभूत इति, रुगन्वितश्चासाध्यरोगान्वित इति विवृतम् । कामधेन्वादौ 'अपवर्जित'मिति पाठः । 'अपवर्जिते दत्त'मिति मिताक्षरा-हलायुधाभ्यां व्याख्यातञ्च ॥ (विवादरत्नाकरः, १३५)

2. 'परीहासाद्यद्दत्तम्' (वि. र., १३५)

3. 'उत्कोचा या प्रतिश्रुता' (वि. र.)

4. 'न देया सा कथञ्चन' (वि. र.)

5. 'तथा प्रागेव' (वि. र.)

6. 'क्रुष्ट' इति वि. र. पाठः (वि. र., १३६)

7. 'संमूढशोकिरोगिभिः' (वि. र.)

8. नम्ददत्तं (मन्दैः दत्तं ?) इति अपरार्कपाठः (७८२)

9. यददत्तं तत्प्रकीर्तितम् (वि. र., १३६)

नारदः [४, ११]

अपात्रे पात्रमित्युक्ते [1]कार्ये चाधर्मसंहिते ।
[2]यद्दत्तं स्यादविज्ञानाददत्तं तदपि स्मृतम् ॥

मनुः [८, २१२-२१३]

धर्मार्थं येन दत्तं स्यात्कस्मैचिद्याचते धनम् ।
पश्चाच्च न तथा तत्स्यान्न देयं तेन[3] तद्भवेत्[4] ॥

[5]यदि संसाधयेत्तत्तु दर्पाल्लोभेन वा पुनः ।
राज्ञा दाप्यः सुवर्णं स्यात्तस्य स्तेयस्य निष्कृतिः ॥

नारदः [४, १२]

गृह्णात्यदत्तं [6]यो मोहाद्यश्चादेयं प्रयच्छति ।
दण्डनीयावुभावेतौ धर्मज्ञेन महीक्षिता ॥

कात्यायनः [६५४, ६५०, ६५१]

[7]स्वस्थेनार्तेन वा देयं श्रावितं धर्मकारणात् ।
अदत्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः ॥

1. 'कार्ये बाधर्मसंहिते' इति मुद्रितनारदीये, (पृ. ११९)

2. The gap in the Udaipur and Bikanir manuscripts end before this half-verse.

3. तस्य तद्भवेदिति मेधातिथिपाठः

4. यदि तस्मै (अर्थिने) दत्तं भवेत्, 'न देयं तस्य' तद्दत्तस्य दानप्रतिषेधो नोपपद्यते । अतः प्रत्याहरणीयमिति वाक्यार्थः । अथवा दत्तान्तो गौणो व्याख्येयः—'दत्तं' प्रतिश्रुतं न देयम् । तथा च गौतमः [५, २१]–प्रतिश्रुत्याप्यधर्मस्य न दद्यात्' । किंपुनरत्र युक्तम्? उभयमित्याह ॥ (मेधातिथिः)

5. 'संसाधनं' राजनिवेदादिना ऋणवत्प्रतिश्रुतस्य मार्गणम् । स्वीकृतस्य प्रतियाच्यमानस्य राजनिवेदनम्—अयं मह्यं दत्वा प्रतिजिहीर्षतीति सिद्धस्य दृढीकरणं संसाधनमेतत् । ... सत्यपि चौरत्वे बाचनिकः । सुवर्णदण्डोऽन्यासु क्रियासु चौरवद्दण्डवद्वर्तव्यः ॥ (मेधातिथिः)

6. यो लोभादिति मुद्रितनारदीयपाठः (१४०)

7. 'सुस्थेनार्तेन वा दत्तं' इति वि. र. पाठः (१३६)

[1]स्तेनसाहसिकोद्वृत्तपारजायिकशंसनात्[2] ।
दर्शनाद्वृत्तनष्टस्य तथासत्यप्रवर्तनात् ॥

प्राप्तमेतैस्तु यत्किञ्चित्तदुत्कोचाख्यमुच्यते ।
न दाता तत्र दण्ड्यः स्यान्मध्यस्थश्चैव [3]दोषभाक् ॥

[4]इति महाराजाधिराजश्रीगोविन्दचन्द्रदेवमहासान्धिविग्रहिकेण
भट्टश्रीहृदयधरात्मजेन श्रीमल्लक्ष्मीधरेण विरचिते
कृत्यकल्पतरौ व्यवहारकाण्डे
दत्ताप्रदानिकम् ॥

---

1. 'स्तेय' इति वि. र. पाठः
2. परदारिकशंसनात्–B. J.; 'परदारिकसंगमात्'—स्मृतिचन्द्रिका, p. 452.
3. 'दण्डयते' for 'दोषभाक्' (वि. र., १३७)
4. इति दत्ताप्रदानिकम्–उ, बि; इति कल्पतरौ दत्ताप्रदानिकम्–ज, द; इति महाराजधिराजश्रीगोविन्दचन्द्रदेवमहासान्धिविग्रहिकेन भट्टश्रीहृदयधरात्मजेन श्रीमल्लक्ष्मीधरेण विरचिते कृत्यकल्पतरौ व्यवहारकाण्डे दत्ताप्रदानिकम् । S. B. (b)

# अथ भृतिविधिः[1]

## तत्राभ्युपेत्याशुश्रूषा

बृहस्पतिः [१५, १-३]

अदेयादिक्रमाख्यातं [2]भृतानामुच्यते विधिः ।
अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यते[3] ॥

वेतनस्यानपाकर्म तदनु स्वामिपालयोः ।
क्रमशः कथ्यते वादो भृतभेदत्रयं त्विदम् ॥

नारदः [८, १-२]

अभ्युपेत्य तु शुश्रूषां यस्तां न प्रतिपद्यते ।
अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यते ॥

शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः ।
चतुर्विधः[4] कर्मकरः शेषा[5] दासास्त्रिपञ्चकाः ॥

भृत्या इत्यनुवृत्तौ बृहस्पतिः [१५, ४-५]

अनेकधा त्वभिहिता[6] जातिकर्मानुरूपतः ।
विद्याविज्ञान[7]कर्मार्थनिमित्तेन चतुर्विधाः ॥

एकैकः पुनरेतेषां क्रियाभेदात्प्रभिद्यते ।

1. S. B. (a), द and A. S. B. read भृतकविधिः
2. द, A. S. B., ज, द and S. B. (a)-भृत्यानाम्
3. पदमादौ निगद्यते-ब्रि, स, द, ज, B. J.
4. विधाः कर्मकराः-द.
5. तेषां-मु. ना. स्मृ.
6. तेऽभिहिता-वि. र., १४०.
7. कामार्थ-द, स, वि. र., १४०.

नारदः [८, ३-४]

शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत् ।
एते कर्मकरा ज्ञेया दासास्तु गृहजादयः ॥

सामान्यमस्वतन्त्रत्वमेषामाहुर्मनीषिणः ।
जातिकर्मकृतस्तूक्तो[1] विशेषो वृत्तितस्तथा ॥

बृहस्पतिः [१५, ६]

विद्या त्रयी समाख्याता ऋग्यजुःसामलक्षणा ।
तदर्थं गुरुशुश्रूषां [2]प्रकुर्याच्छास्त्रचोदिताम् ॥

नारदः [८, ८]

आविद्याग्रहणाच्छिष्यः शुश्रूषेत्प्रयतो[3] गुरुम् ।
तद्वृत्तिर्गुरुदारेषु गुरुपुत्रे तथैव च ॥

तथा [८, १५]

समावृत्तश्च गुरवे प्रदाय गुरुदक्षिणाम् ।
प्रतीयात्स्वगृहानेषा शिष्यवृत्तिरुदाहृता ॥

बृहस्पतिः [१५, ७]

विज्ञानमुच्यते शिल्पं [4]हेमकुप्यादिसंस्कृतिः ।
नृत्यादिकं च [5]तच्छिक्षन् कुर्यात्कर्म गुरोर्गृहे ॥

1. A. S. B. and S. B. (a)-तूक्ताः; S. B. (b) reads जातिकर्मकृतास्तूक्ताः

2. प्रकुर्याच्छास्त्रचोदिताम्-स्मृ. चं., p. 455; शास्त्रदेशिताम्-B. J., वि. र., १४०; शास्त्रबोधिताम्-ज.

3. पुरतो गुरुम्-S. B. (a) and स.

4. 'हेमरूप्यादिसंस्कृतिः'-(पराशरमाधवीयम्, p. 338, व्यवहारनिर्णयः, p. ३०१.)

5. तच्छिष्यः-B. J.

नारदः [८, १६-१७]

[1]स्वं शिल्पमिच्छन्नाहर्तुं बान्धवानामनुज्ञया ।
आचार्यस्य वसेदन्ते कालं कृत्वा सुनिश्चितम् ॥

आचार्यः शिक्षयेदेनं स्वगृहे दत्तभोजनम् ।
न चान्यत्कारयेत्कर्म पुत्रवच्चैनमाचरेत्[2] ॥

कात्यायनः [७१३]

यस्तु न ग्राहयेच्छिल्पं कर्माण्याख्याति कारयेत् ।
प्राप्नुयात्साहसं पूर्वं तस्माच्छिष्यो निवर्तते ॥

नारदः [७, १८-१९]

शिक्षयन्तमदुष्टं च[3] यस्त्वाचार्यं परित्यजेत् ।
बलाद्वासयितव्यः स्याद्वधबन्धौ च सोऽर्हति ॥

[4]शिक्षितोऽपि कृतं कालमन्तेवासी समापयेत् ।
तत्र कर्म च यत्कुर्यादाचार्यस्यैव तत्फलम् ॥

'वधो'ऽत्र वेणुदण्डादिना ताडनमात्रम् । 'बन्धो' बन्धनम्[5] । यन्त्रण-मिति कश्चित् । 'कृतं कालम्' व्यवस्थापितं समयम् । 'तत्फलं' कर्मफलं [6]भृतिरूपम् ।

1. 'स्वशिल्पं'–मु. ना. स्मृ. (पृ. १४४)

2. The A. S. B. group of manuscripts *alone* (ज, द, S. B. (a) and A. S. B.) add below this the following commentary, which is *identical* with विवादरत्नाकर, १४१—

'स्वं' आत्मजात्युचितम् । 'आहर्तुं' आदातुम् । 'अन्ते' पार्श्वे । 'काल'मवधिभूतम् । 'सुनिश्चितं' साक्षिमत् । 'अन्यत्' शिल्पशिक्षातः । आभ्यामन्तेवासी भृत उक्तः । अथात्र कात्यायनः ।

3. 'य आचार्यं संपरित्यजेत्' इति मुद्रितनारदीये (१४४)

4. This śloka is given only in A. S. B., S. B. (a), S. B. (b), ज and B. J.; A. S. B. and S. B. (a) read तद्धनम् (which agrees with Jolly's text) for तत्फलम्

5. संयन्त्रणमिति–ज.

6. भृत्यादिकम्–ज.

तथा [७, २०]

गृहीतशिल्पः समये कृत्वाचार्यं प्रदक्षिणम् ।
शक्तितश्चानुमान्यैनमन्तेवासी निवर्तते[1] ॥

बृहस्पतिः [१५, ८-१२]

यो भुङ्क्ते परदासीं तु स ज्ञेयो [2]वनिताभृतः ।
[3]कर्म तत्स्वामिनः कुर्याद्यथान्योऽर्थभृतो नरः[4] ॥

बहुधाऽर्थभृतः प्रोक्तस्तथा भागभृतोऽपरः ।
हीनमध्योत्तमत्वं च सर्वेषामेव चोदितम् ॥

दिनमासार्धषण्मासत्रिमासाब्दभृतस्तथा ।
कर्म कुर्यात्प्रतिज्ञातं लभते परिभाषितम्[5] ॥

1. A. S. B. and S. B. (a) introduce-like विवादरत्नाकर, १४२, the śloka of बृहस्पति [१५, ८] with the words—अथ प्रकृतानुसारात् कामनिमित्तेनोक्तं भृतकं तृतीयं परिभाषते बृहस्पतिः । This is missing in उ, त्रि, B. J., S. B. (b) and स.

2. वडवाभृतः–द, ज, B. J.

3. कर्म चेत्स्वामिनः–ज, द.

4. The A. S. B. group [ज, द, S. B. (a)] interpolate here before the next śloka like विवादरत्नाकर [१४२]–'स एवान्नभृतमाह'

5. The two ślokas which follow are also found in नारदस्मृति to which the A. S. B. group [A. S. B., S. B (a), ज and द] attribute it with the following comment and introduction, which are identical with विवादरत्नाकर, १४२–१४३ ॥ 'भागभृतो' कर्मफलांशभृतः । अथ स्वमतेन त्रिविधमुक्तं भृतकमाह नारदः ॥ The ślokas are found in नारदस्मृति, ४, २०–२१ [पृ. १४४–१४५]. स merely prefixes as नारदः before these ślokas. The ascription by name of the two ślokas which *follow* these to बृहस्पति makes it probable that the word नारदः or बृहस्पतिनारदौ introduced those two ślokas, while the other words were simply taken by the A. S. B. group from विवादरत्नाकर.

भृतकस्त्रिविधो ज्ञेय उत्तमो मध्यमोऽधमः ।
शक्तिभक्त्यनुरूपा स्यादेषां कर्माश्रया भृतिः ॥

उत्तमस्त्वायुधीयोऽत्र मध्यमस्तु[1] कृषीवलः ।
अधमो भारवाहः स्यादित्येष त्रिविधो भृतः ॥

<u>बृहस्पतिः</u> [१५, १३-१४]

आयुधीयोत्तमस्तेषां मध्यमः सीरवाहकः ।
भारवाहोऽधमः प्रोक्तस्तथा च गृहकर्मकृत् ॥

द्विप्रकारो भागभृतः कृषिगोजीविनां स्मृतः ।
जातसस्यात्तथा क्षीरात्स लभेत न संशयः ॥

<u>नारदः</u> [८, २३, २५; ८, ५, ७]

[2]अर्थेष्वधिकृतो यः स्यात्कुटुम्बस्य तथोपरि ।
[3]सोऽधिकर्मकरो ज्ञेयः स च कौटुम्बिकः स्मृतः ॥

शुभकर्मकरा ह्येते चत्वारः समुदाहृताः ।
जघन्यकर्मभाजस्तु शेषा दासास्त्रिपञ्चकाः ॥

कर्मापि द्विविधं प्रोक्तमशुभं शुभमेव च ।
अशुभं दासकर्मोक्तं शुभं कर्मभृतः[4] स्मृतम् ॥

[5]गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम् ।
गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम् ॥

1. मध्यमश्च-द

2. 'सर्वेष्वधिकृतः' इति व्यवहारप्रकाशे पाठः it adds 'अर्थेष्वधिकृतः' इति केचित्पठन्ति (पृ. ४०५)

3. सोऽपि इति मुद्रितनारदीये (पृ. १४६)

4. कर्मकृतः-द, वि. र., १४३. कर्मकृताम्-स

5. The following commentary is interpolated by A. S. B., S. B (a) and ज, as well as वि. र., १४४, which is probably their source :—'चत्वारः' शिष्यान्तेवासिभृतकादिकर्मकृतः । 'कर्मभृतः' शिष्यादिचतुष्टयस्य ।

[1]इच्छतः स्वामिनश्चाङ्गैरुपस्थानमथान्ततः ।
अशुभं कर्म विज्ञेयं शुभमन्यदतः परम्[2] ॥

कात्यायनः [७२०]

विण्मूत्रोन्मार्जनं चैव नग्नत्वपरिमर्दनम् ।
प्रायो दासीसुताः कुर्युर्गवादिग्रहणं च[3] यत्[4] ॥

नारदः [८, २६-२९; ३१]

[5]गृहजातस्तथा क्रीतो लब्धो दायादुपागतः ।
[6]अनाकालभृतस्तद्वदाहितः[7] स्वामिना च यः ॥

1. इष्टतः-A. S. B., S. B (a), ज, द and वि; इष्टत्वात्-स. इच्छतः-उ, वि. र., १४४

2. A. S. B., S. B (a), ज, द give here the following commentary, like वि. र., १४४:—

शोधनमिति प्रत्येकमभिसम्बध्यते। ग्रहणञ्च उज्झनञ्च 'ग्रहणोज्झनम्' । 'इच्छतः स्वामिनः' स्वामिनः इच्छानुसारेण । 'अङ्गैः' हस्तादिभिः । 'उपस्थानं' संवाहनम् । तच्चाज्ञानामेव । 'अन्ततः' समीपतः ॥ Lakṣmīdhara does not explain such obvious expressions.

3. गवादिहरणं-ज, द, B. J., वि. र., १४४, शवादिग्रहणं-उ.

4. A. S. B., and S. B. (a) here add this comment, which is found in विवादरत्नाकर, p. १४४. It is not found in उ, वि, B. J., S. B. (b) and स, and is clearly unauthentic :—

'नग्नत्वं परिमर्दनम्' नग्नत्वे सति परिमर्दनं संवाहकमिति पारिजातः ।' Lakṣmīdhara does *not* refer to the पारिजात and प्रकाश in his reference to his predecessors in the opening verses of the *Kṛtyakalpataru*, ब्रह्मचारिकाण्ड, पृ. ३.

5. 'गृहे जातः' इति मु. नार., १४७

6. 'अनाकालभृतः' इति वि. र. पाठः (पृ. १४४)

7. 'भृतो लोके आहितः'-मु. नार.

मोक्षितो महतश्चर्णाद्युद्धे प्राप्तः पणे जितः[1] ।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥

भक्तदासश्च विज्ञेयस्तथैव [2]वडवाहृतः ।
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥

तत्र पूर्वश्चतुर्वर्गो दासत्वान्न विमुच्यते ।
[3]प्रसादात् स्वामिनोऽन्यत्र दास्यमेषां क्रमागतम् ॥

[4]विक्रीणीते स्वतन्त्रः सन् यत्रात्मानं नराधमः ।
स जघन्यतमस्तेषां सोऽपि दास्यान्न मुच्यते ॥

'अन्नाकाले भृतः' दुर्भिक्षकाले भृतः[5] ।

1. 'प्राप्तो युद्धात् पणे जितः' मु. नार.

2. 'बडवाहृतः'–उ, स, मु. ना.; बडवाभृतः–A. S. B., बि; 'वनिताहृतः'–S. B. (a), S. B. (b)

The Maithila group of manuscripts (A. S. B., S. B. (a), ज, and द) add between the third and fourth ślokas the following, which is found *only* in these and is identical with the commentary of Caṇḍeśvara (विवादरत्नाकर, १४५). गृहे जातः, स्वदास्यां जातः। क्रीतः, मूल्येन स्वीकृतः। लब्धः, प्रतिग्रहादिना। दायादुपागतः, क्रमागतदासः। अन्नाकालभृतः, दुर्भिक्षे अन्नं दत्वा रक्षितप्राणः। आहितः, आधीकृतः। मोक्षितः, महतः ऋणात् ऋणमोचनादुपागतदास्यः। युद्धे प्राप्तः, समरे विजित्य गृहीतः। पणे जितः, यद्यस्मिन् वादे पराजितो भवामीत्यादि परिभाषनेन दासीभूतः; द्यूतजित इति प्रकाश-पारिजातौ। तवाहमित्युपगतः, तवाहं दास इति कृताभ्युपगमः। प्रव्रज्यावसितः, प्रव्रज्याभ्रष्टः। कृतः, कृतकाल एतावन्तं कालं तवाहं दास इत्यङ्गीकृतदास्य इति यावत्। भक्तदासो भक्तार्थमेव अङ्गीकृतदास्यः। बडवाकृतः, बडवा दासी तयाकृतः तल्लोभादङ्गीकृतदास्यः। विक्रेता, आत्मनः स्वविक्रयेण दासीभूतः॥

3. 'प्रसादाद्धनिनो'–मु. नार.

4. 'विक्रीणीते य आत्मानं स्वतन्त्रः सन्नराधमः' इति मुद्रितनारदीये (पृ. १४९)

5. A. S. B., S. B. (a) and ज add at the end of the quotations from Nārada—प्रसादः, प्रीतिः। स्वतन्त्रः, स्ववशः. B. J. also gives this explanation, but out of its place. *Vivādaratnākara* (p. 145) supplies the explanation.

<u>मार्कण्डेयपुराणे</u> [१८, २१६]

चण्डालदास्यं प्राप्तस्य पुत्रशोकार्तस्य हरिश्चन्द्रस्य वाक्यम्—

चण्डालेनाननुज्ञातः प्रवेक्ष्ये ज्वलनं यदि ।
चण्डालदासतां[1] प्राप्स्ये पुनरन्यत्र जन्मनि ॥

<u>मनुः</u> [८, ४१४]

न स्वामिना [2]निसृष्टोऽपि शूद्रो दास्यात् [3]प्रमुच्यते ।
निसर्गजं हि तत्तस्य [4]कस्तस्मात्तं व्यपोहति[5] ॥

<u>नारदः</u> [८, ३६]

राज्ञ एव तु दासः स्यात्प्रव्रज्यावसितो नरः ।
न तस्य प्रतिमोक्षोऽस्ति न विशुद्धिः कथञ्चन ॥

1. दासताम्-वि. र., १४५; दास्यतां-उ.
2. विसृष्टोऽपि इति गोविन्दराजपाठः
3. विमुच्यते इति मेधातिथिपाठः; वि. र. पाठः 'प्रमुच्यते' इति
4. 'कस्तस्मात्तदपोहति' इति मेधातिथिपाठः । कस्तं तस्माद्व्यपोहति'इति वि. र. पाठः
5. The following commentary, which is *verbatim* identical with that in the *Vivādaratnākara*, p. 146, is given here by the Maithila group of manuscripts *viz.* A. S. B., S. B (a), ज and द. It is wanting in the Udaipur (उ), Bikanir (वि) and the recently acquired manuscript of the Sarasvati Bhavan (स). स्वामिप्रसादादपि शूद्रस्य चतुर्वर्गाभ्यन्तरस्य जघन्यतमभृतकस्य वा न दास्यविमोक्ष इत्यर्थः । एवं च प्रसादमन्तरेण न परदास्याद् विमुच्यते इति शूद्रेतरगृहजातादिविषयमित्यविरोधः ॥

Medhātithi holds that the declaration that servitude is innate in the *Śūdra*, and that he can no more be released from servitude than he can be released from his Śūdra caste is purely declamatory since it is going to be declared later on that under special circumstances, the Śūdra is released from servitude.

['निसर्गजं' सहजं जातिसहभावि । यथा शूद्रजातिर्न तस्यापनेतुं शक्यैवं दास्यमपि । अर्थवादोऽयम् । यतो वक्ष्यति निमित्तविशेषे शूद्रस्य दास्यान्मोक्षम् । ]

कात्यायनः[1] [७२१]

प्रव्रज्यावसिता यत्र त्रयो वर्णा द्विजातयः ।
निर्वासं कारयेद्विप्रं दासत्वं क्षत्रविण्नृपः ॥

दक्षः[2] [७, ३३]

पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति ।
श्वपदेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत्[3] ॥

## (अ) अथ दास्यविमोक्षः

तत्र नारदः [८, ४०; ८; ३०-३४, ३६]

तवाहमिति चात्मानं योऽस्वतन्त्रः प्रयच्छति ।
[4]न स तं प्राप्नुयात् कामं पूर्वस्वामी लभेत तम् ॥

1. Name missing in A. S. B., S. B. (a), ज and द.

2. Ascribed to Nārada by *Vyavahāra-Mādhavīya*, p. 345 but the śloka, in spite of the reference given by the editor V. S. Islampurkar (५, ३४) is not to be traced in Jolly's edition of Nārada. The *Smṛticandrikā* (व्यव., 465, ed. Mysore) also ascribes it to Nārada. *Vyavahāraprakāśa* (p. 318) and *Vyavahāramayūkha* (p. 207., ed. Kane), ascribe the śloka to both Dakṣa and Nārada. Aparārka (p. 789) and *Vivādaratnākara* (p. 146) attribute it to Dakṣa only.

3. A. S. B., S. B. (a) ज and द end अभ्युपेत्याशुश्रूषापर्व here, though the two sub-sections, which follow, *viz.* दास्यविमोक्षः and दास्याधिकारिणः, are reckoned parts of the main section. In वि. र., these sub-sections are treated as separate *taraṅgas* and the above Maithila manuscripts have obviously been influenced by it.

4. न स तस्माप्नुयात्-द.

चौरापहृतविक्रीता ये च दासीकृता बलात् ।
राज्ञा [1]मोचयितव्यास्ते दासत्वं तेषु नेष्यते ॥

यश्चैषां स्वामिनं कश्चिन्मोचये[2]त्प्राणसंशयात् ।
दासत्वात्स विमुच्येत पुत्रभागं लभेत च ॥

[3]अनाकाले भृतो दास्यान्मुच्यते गोयुगं ददत् ।
[4]भक्षितं चापि यद्दुर्गे न तच्छुद्ध्यति कर्मणा ॥

आहितोऽपि धनं दत्वा स्वामी यद्येनमुद्धरेत् ।
अथोपगमयेदेनं सोऽपि क्रीतादनन्तरः ॥

ऋणं तु सोदयं दत्वा ऋणी दास्यात्प्रमुच्यते ।
[5]कृतकालव्युपरमात् कृतकोऽपि विमुच्यते ॥

तवाहमित्युपगतो युद्धे[6] प्राप्तः पणे जितः ।
प्रतिशीर्षप्रदानेन मुच्यते तुल्यकर्मणा ॥

भक्तस्योपेक्षणात्सद्यो भक्तदासः प्रमुच्यते ।
निग्रहाद्बडवायां च[7] मुच्यते बडवाभृतः[8] ॥

'अस्वतन्त्रः' अस्वामिकः । 'दुर्गे' दुर्भिक्षे । 'उपगमयेत्' इत्यादि । यस्मिन्नाहितो दासस्तमेव यदि ग्राहयन्न मोचयेत्तदा तस्यासौ 'क्रीतानन्तरः'

1. मोक्षयितव्यास्ते–मु. ना. स्मृ., p. 149.
2. मोक्षयेत्–मु. ना. स्मृ., p. 147.
3. अनाकालभृतो–मु. ना. स्मृ.; अन्नाकालभृतो–वि. र., १४७.
4. संभक्षितं यद्दुर्भिक्षे–मु. ना. स्मृ., p. 147; भक्षितं चापि यद्वस्तु–वि. र., १४७.
5. कृतकालव्यपगमात्–मु. ना. स्मृ., p. 148.
6. ध्वजप्राप्तः पणार्जितः–मु. ना. स्मृ., p. 148.
7. बडवानां तु–मु. ना. स्मृ., p. 148; बडवायाश्च–वि. र., १४७.
8. बडवाहृतः–मु. ना. स्मृ.; बडवाकृतः–वि. र., १४७.

क्रीतादवशिष्टः संपद्यत इत्यर्थः। 'प्रतिशीर्षप्रदानेन' तुल्यदासदानेनेत्यर्थः। 'निग्रहात्' आच्छादनात्। 'वडवा' दासी[1]॥

<u>याज्ञवल्क्यः</u> [२, १८२]

बलाद्दासीकृतश्चौरैर्विक्रीतश्चापि मुच्यते।
स्वामिप्राणप्रदो भक्तत्यागात्तन्निष्क्रयादपि॥

<u>कात्यायनः</u> [७२३]

स्वदासीं यस्तु संगच्छेत्प्रसूता च भवेत्ततः।
अवेक्ष्य बीजं कार्या स्याददासी सान्वया तु सा[2]॥

1. The commentary given below is brought in here by A. S. B., S. B. (a), S. B. (b) and ज *i. e.* the Maithila group. It is found *verbatim* in *Vivādaratnākara*, p. 148. It has not been included in the text, as it is not found in the Udaipur (उ) Bikanir (बि), the recently acquired Sarasvati Bhavan (स) and the Bacha Jha manuscripts. 'चोरापहृतविक्रीता' चौरापहृताः सन्तो विक्रीताः। एषां दासानां मध्ये यः प्राणसंशयात्स्वामिनो मोचयिता, स सद्य एव दासो दासत्वाद्विमुच्यते, पुत्रभागं लभेत चेति 'यश्चैषामिति' श्लोकार्थः। 'अन्नाकालभृतः' दुर्भिक्षादौ अन्नं दत्वा मरणाद्रक्षितो गोयुगप्रदानेन मुच्यते। न तु यद्रक्षितं तेन, तत्कर्मणा शुद्ध्यति, तेनैतच्छुद्ध्यर्थमवश्यं गोयुगं दातव्यम्। 'अथोपगमयेदिति' यस्मिन्नाहिता दासः तमेव यदि ग्राहयेत् तदासौ 'क्रीतानन्तरः' क्रीतावशिष्टो भवतीत्यर्थः। 'प्रतिशीर्षप्रदानेन' स्वतुल्यदासप्रदानेनेत्यर्थः। निग्रहात् आच्छेदात्। 'वडवा' दासी॥

2. Commentary identical with वि. र., १४८, added here by A. S. B., S. B. (a), ज and द alone. 'अवेक्ष्य बीजं' स्वामिना तस्यां जनितं पुत्रम्। 'सान्वया' तत्पुत्रसहिता, सा 'अदासी' कार्या। अन्यपुत्राभावे, अन्यथा त्वन्य एव पुत्रस्तदर्थक्रियायामिति न सान्वया अदासी कार्या इति। एवमेव प्रकाश-पारिजातौ। प्रसादस्वामिनोऽन्यत्रेति अनेन च प्रसादजदास्यविमोक्षमाह नारदः।

नारदः [८, ४२, ४३, ४१]

स्वं दासमिच्छेद्यः कर्तुमदासं प्रीतमानसः ।
स्कन्धादादाय तस्यासौ भिन्द्यात्कुम्भं सहाम्भसा ॥

साक्षताभिः सपुष्पाभिर्मूर्धन्यद्भिरवाकिरन् ।
अदास इति चोक्त्वा त्रिः प्राङ्मुखं तमथोत्सृजेत् ॥

[1]ततः प्रभृति वक्तव्यः स्वाम्यनुग्रहपालितः ।
भोज्यान्नश्च प्रतिग्राह्यो भवत्यभिमतः सताम्[2] ॥

अधनास्त्रय एवोक्ता[3] भार्या दासस्तथा सुतः ।
यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥

'समधिगच्छन्ति' सम्मार्जयन्ति ।

देवलः

पितर्युपरते पुत्रा विभजेयुर्धनं पितुः ।
अस्वाम्यं हि भवेत्तेषां निर्दोषे पितरि स्थिते ॥

पत्यौ जीवति नारीणां दासानां स्वामिनि स्थिते ।
तद्वन्नियतमस्वाम्यं सर्वार्थेष्वब्रवीन्मनुः ॥

मनुः [८, १४७]

विस्रब्धं ब्राह्मणः शूद्राद्द्रव्योपादानमाचरेत् ।
न हि तस्यास्ति किंचित्स्वं भर्तृहार्यधनो हि सः ॥

1. नारदमनुसंहिता, ६, ४२ ; not traced in Jolly's edition.

2. The same manuscripts bring here the following commentary, which is identical with that in वि. र., p. 149–'प्रीतमानसः' तुष्टः । स्कन्धात् स्वदासस्य कुम्भं भिन्द्यात् । 'अम्भसा' सलिलेन सह । एनं दासं अद्भिः पानीयैः ससृजेत् विसृजेत् । ततः प्रभृति स्वाम्यनुग्रहपालित इति संज्ञया वक्तव्यः । 'अभिमतः' पूज्यः ॥

3. एवैते–द, वि. र., १४९.

**कात्यायनः** [७२४, ७२५]

**दासस्य तु धनं यत्स्यात् स्वामी तस्य प्रभुः स्मृतः ।**
**[1]प्रकाशविक्रयाद्यत्तु तत्स्वामी धनमर्हति ॥**

1. "प्रसादविक्रयाद्यत्तु न स्वामी धनमर्हति"–इति **विवादचिन्तामणिः** (७१); "प्रकाशं विक्रयाद्यत्तु न स्वामी धनमर्हति" इति **विवादरत्नाकरः** (१५०). **स्मृ. चं.**, p. 468, **व्यव. प्रकाश**, p. 413, **व्य. मयूख**, p. 211 and **सरस्वतीविलास**, p. 295 cite only the first half of the śloka and cite this second half

**विवादचिन्तामणिः** (पृ. ७१):—

"स्वामिप्रसादादात्मविक्रयाच्च यल्लब्धं दासेन तद्दासधनं स्वामी नार्हति ।"

**विवादरत्नाकरः** (पृ. १५०):—

'प्रकाशं विक्रयाद्यत्तु न स्वामी धनमर्हति' । यत्तु प्रकाशं स्वामिना दासे विक्रीतं, यद्वा स्वविक्रये दासेन प्राप्तं, यद्वा प्रसादे स्वामिना दासस्य कृते दत्तं [तद्दासीधनम्], तत्र दासधनेऽपि न स्वामी प्रभुरिति **प्रकाश-कामधेनु-पारिजात**-प्रभृतिषु दृष्टपाठादर्थ [पाठार्थ] इति ।

'प्रकाशविक्रयाद्यत्तु तत् स्वामी धनमर्हती'ति **लक्ष्मीधरेण** पठितम् । तदपि 'प्रकाशविक्रयाद्यर्थं धनं तत् स्वामी दास एवार्हति, न दासप्रभोस्तत्र प्रभुत्वम्' इति स्वरसखण्डनेनापि प्रतिप्रसवपरतया । अन्यथानर्थक्याद्व्यवहारविरोधाच्च व्याख्येयम् ॥ Caṇḍeśvara, in pointing to the inconsistency involved in Lakṣmīdhara's position, has in mind such dicta as भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः । यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥ (मनु, ८, ४१६)

The manuscripts from Udaipur (उ), Bikanir (बि), Bacha Jha (B.J.) and Sarasvati Bhavan (स, its latest Ms. of व्यवहारकल्पतरु) furnish no commentary to these verses. But A. S. B., S. B. (a) and S. B (b) add here the following commentary of which (it will be noted) the first sentence is identical with the comment in the *Vivādacintāmaṇi* and the rest with that of the *Vivādaratnākara*, with slight verbal changes. It is noteworthy that the reading expressly ascribed to Lakṣmīdhara is described below as "कैश्चित् पठितम्." The original manuscript from which A. S. B., S. B. (a) and S. B. (b) are derived must be later than Vācaspatimiśra (c. 1475 A. D.), and of course Caṇḍeśvara (c. 1350 A. D.). It is likely that the omission of the second-half of the śloka, *i. e.* प्रकाश (प्रसाद) विक्रया etc. by later *nibandas* with its disputed versions, is deliberate. The importation of this

[1]तथा

दासेनोढा [2]च दासी या सापि[3] दासीत्वमाप्नुयात् ।
यस्माद्भर्ता प्रभुस्तस्याः स्वाम्यधीनः [4]पतिर्यतः[5] ॥

comment into the text of Lakṣmīdhara has now gained importance from its references to प्रकाश, हलायुध and पारिजात, who might therefrom be regarded as earlier than Lakṣmīdhara, as argued by MM. P. V. Kane (*History of Dharmaśāstra*, Vol. I., p. 296, 306, 309). The priority of कामधेनु to कल्पतरु is shown by two allusions to the former in ब्रह्मचारिकाण्ड, p. 3.

स्वामिप्रसादात् विक्रयाच्च यल्लब्धं दासेन तद्दासधनं स्वामी नार्हति ।

यत्तु प्रकाशं स्वामिना दासे विक्रीतं, यद्वा स्वविक्रये दासेन मूल्यतया लब्धं, यद्वा प्रसादस्वामिना दासस्य कृते दत्तं, तत्र दासधनेऽपि स्वामी प्रभुरिति **प्रकाश-हलायुध-कामधेनु-पारिजातप्रभृतयः** ।

'प्रकाशविक्रयाद्यत्तु तत्स्वामी धनमर्हति' इति **केश्चित्** पठितम् । तदपि प्रकाशविक्रयाद्यर्थं धनं तत्स्वामी दास एवार्हति, न दासप्रभोस्तत्र प्रभुत्वमिति, स्वरसखण्डनेनापि प्रतिप्रसवपरतया । अन्यथानर्थक्याद्व्यवहारविरोधाच्चोपेक्ष्यम् ॥

1. मनुः इति **वि. र.**, १५०; **मनुस्मृतौ** नोपलभ्यते

2. त्व for च, बि, **वि. र.**, १५०

3. दासास्त्वत्वमाप्नुयात् (**अपरार्क**, ७८८); साऽपि दासीत्वमाप्नुयात् (**स्मृ. चं.**, 469; **वि. र.**, १५०); सापि दासत्वमाप्नुयात्–उ.

4. प्रभु for पति, **वि. र.**, १५०

5. A. S. B., S. B. (a) and S. B. (b) give below this the comment printed below, which is absent in other manuscripts, and is identical with the commentary in **वि. र.**, पृ. १५०–१५१—

दासेनेति–यो यस्य दासः तेन तद्दास्यपि परिणीता तस्य दासी भवतीत्यर्थः । दासपदेन प्रथमेन सप्रतियोगिकदासत्वस्याभिधानाददासीत्यत्रपि सैव । तत्र अदासी द्विविधा–कस्यापि दासी न, कस्यचिददासी वा । उभयत्रापि सामान्यतो तदपेक्षणीयानुमतेरनुमतिरपेक्षणीया । यदि तु [नञो] व्युत्पत्त्या कस्यापि या न दासी सा अदासीत्यभिमतम् । तत्रापि या कस्यापि दासी तस्यामपि सामान्यतो विशेषतो वा । स्वामिस्वीकारेण दासीत्युक्ताया [दासत्यक्ताया] ऊढाया विवाहयितृ [विवाहयितृ] स्वामिस्वत्वास्पदत्वं भवितुमर्हमेव [मर्हत्येव] । तच्च न्यायाद्वा राज्याद्वेति [न्यायाद्वाक्यगत्या वेति, or न्यायद्वाराद्वा भवत्येव] फलतो न कश्चिद्विशेषः ॥

इति श्रीसान्धिविग्रहिकभट्टहृदयधरात्मजभट्टश्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ दासविमोक्षपर्व ॥ [A. S. B., S. B. (a)]

## अथ दास्याधिकारिणः

तत्र नारदः [८, ३९]

वर्णानां प्रातिलोम्येन दासत्वं न विधीयते ।
स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मता ॥

कात्यायनः [७१५, ७१६, ७१९, ७१७, ७१८]

स्वतन्त्रस्यात्मनो दानाद्दासत्वं दारवद्भृगुः ।
त्रिषु वर्णेषु विज्ञेयं दास्यं [1]विप्रस्य न क्वचित् ॥

वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः ।
राजन्यवैश्यशूद्राणां त्यजतां च[2] स्वतन्त्रताम् ॥

समवर्णोऽपि विप्रं तु दासत्वं नैव कारयेत् ।
शीलाध्ययनसंपन्नस्तदूनं कर्म कामतः ॥

तत्रापि नाशुभं किंचित्प्रकुर्वीत द्विजोत्तमः ।
ब्राह्मणस्य हि दासत्वान्नृपतेजो विहन्यते ॥

क्षत्रविट्शूद्रधर्मस्तु समवर्णं कदाचन ।
कारयेद्दासकर्माणि [3]ब्राह्मणं न बृहस्पतिः ॥

'तदूनं' इत्यत्र शीलाध्ययनन्यूनं ब्राह्मणं शीलाध्ययनसंपन्नो ब्राह्मणः कर्म कारयेदिति योजना । 'कामतः' तदिच्छया । 'अशुभं' विण्मूत्रशोधनादि[4] ।

1. विप्रे न विद्यते-वि. र. पाठः (१५२)
2. हि for च-वि. र.
3. ब्राह्मणं-वि. र.; ब्राह्मणो-उ.
4. विण्मूत्रेण शोधनादि-वि.

'क्षत्रविट्शूद्रधर्म' इत्यादि, क्षत्रादिधर्मः[1] ब्राह्मणं दासकर्माणि न कारयेदिति बृहस्पतिर्मन्यत इत्यर्थः[2] ॥

मनुः [८, ४११-४१३]

क्षत्रियं चैव वैश्यं च ब्राह्मणो वृत्तिकर्षितौ ।
बिभृयादानृशंस्येन स्वानि कर्माणि कारयेत्[3] ॥

1. वि omits धर्मः

2. The above commentary is supplied in identical words by उ. वि. स. B. J., and द.

A. S. B., and S. B. (a) give, in lieu of this, the following commentary, which is virtually a reproduction of that in विवादरत्नाकर, १५३, whose variants are shown in square brackets.

शीलाध्ययनसंपन्नो ब्राह्मणः [शीलाध्ययनसंपन्नं ब्राह्मणं] इच्छन्तं [न] तदूनं शीलाध्ययनन्यूनं [ब्राह्मणं] कर्म कारयेत् । तत्रापि 'नाशुभं' विण्मूत्रशोधनादिकं न कारयेदित्यर्थः । क्षत्रविट्शूद्रधर्मस्त्वपि क्षत्रियवैश्यशूद्राणां तु स [म] गुणानामपि सावर्ण्येऽपि कदाचिद्दास-स्वामिभावो भवेत् । ब्राह्मणस्तु सवर्णं समानगुणं न कारयेदिति बृहस्पतिर्मन्यते इति पारिजात-हलायुधस्वरसः । क्षत्र-विट्-शूद्रधर्मस्तु ब्राह्मणः [णो] ब्राह्मणं दासकर्माणि न कारयेदिति विज्ञानेश्वर [लक्ष्मीधर] स्वरसः । सर्वश्चायमर्थ उपग्राह्य एवेति ॥

The substitution of विज्ञानेश्वर for लक्ष्मीधर is absurd as the former has *no* remarks on the subject (*cf.* मिताक्षरा, २, १८३) MM. P. V. Kane's reliance on this passage to establish the priority of विज्ञानेश्वर to लक्ष्मीधर (*History of Dharmaśāstra*, I, p. 289) is unjustified. See my *Introduction* to दानकाण्ड, pp. 29-33.

On this subject Mitramiśra (व्यवहारप्रकाश ४०७) observes—'दारवद्दासता' इति वचनात् [याज्ञवल्क्य, २] ब्राह्मणस्य सवर्णं प्रति दासत्वं प्राप्तं तन्निषेधार्थमाह कात्यायनः-'सवर्णेऽपि हि विप्रं तु दासत्वं नैव कारयेत्' इति । यदि ब्राह्मणः स्वेच्छया दास्यं भजते तदासौ अशुभं कर्म न कुर्यादित्याह स एव, "शीलाध्ययनसंपन्नो" इत्यादौ । यस्मात्परोपकारः कर्तव्य इति विधिः तस्मादूनं कर्म मध्यमोत्तमव्यतिरिक्तमपि कर्म 'कामतो' वेतनमन्तरेण स्वेच्छया परोपकारार्थं कुर्यादित्यर्थः ॥

3. स्वानि कर्माणि क्षत्रियवैश्ययात्युक्तानि [A. S. B., S. B. (a), S. B. (b), ज, द, वि. र., १५३]

'आनृशंस्येन' अनुकम्पया । 'स्वानि कर्माणि' इति वचनात् दास्यं न कारयितव्यौ गर्हितोच्छिष्टमार्जनादिति-मेधातिथिः

दास्यं तु कारयेन्मोहाद्[1] ब्राह्मणः संस्कृतान् द्विजान् ।
अनिच्छतः प्राभवत्वाद्राज्ञा [2]दाप्यः शतानि षट्[3] ॥

शूद्रं तु कारयेद्दास्यं क्रीतमक्रीतमेव वा ।
दास्यायैव हि सृष्टोऽसौ [4]स्वयमेव स्वयंभुवा[5] ॥

'प्राभवत्वात्' प्रभुत्वात् ।

विष्णुः [५, १५१]

यस्तूत्तमवर्णं[6] दास्ये नियोजयति[7] तस्योत्तमसाहसो[8] दण्डः ।[9]

कात्यायनः [७२६-७२९]

आदद्याद्ब्राह्मणीं यस्तु विक्रीणीयात्तथैव च ।
राज्ञे तदकृतं कार्यं दण्ड्याः स्युः सर्व एव ते ॥

कामात्तु संश्रितां यश्च दासीं कुर्यात्कुलस्त्रियम् ।
[10]संक्रामयेत्तथान्यत्र [11]दण्ड्यस्तच्चाकृतं भवेत्[12] ॥

1. लोभात्-इति मेधातिथिपाठः

2. दण्ड्यः-मेधातिथिः; विवादरत्नाकरः, १५३

3. 'प्राभवत्वात्' प्रभुत्वात् । 'संस्कृतान्' शीलाध्ययनसंपन्नान् द्विजान् अनिच्छतः स्वप्रभुत्वाद्द्विजानुचितकर्माणि कारयेत् स राज्ञा षट्पणशतानि दण्ड्य इत्यर्थः—*Ibid.* 'अनिच्छतः इति वचनात् इच्छतामल्पो दण्डः- मेधातिथिः

4. ब्राह्मणस्य स्वयंभुवा-मेधा; वि. र.

5. शूद्रं तु क्रीतमक्रीतं वा जघन्यमपि कारयेदित्यर्थः-*Ibid.*

6. वर्णान्-मुद्रि. विष्णु, पृ. २५

7. नियोजयेत्-मु. विष्णु.

8. साहसं-वि. र., १५४

9. अस्वतन्त्रस्य स्वामीच्छया दासत्वं प्रातिलोम्येनाऽपि प्रतिपादितं मार्कण्डेयपुराणे हरिश्चन्द्रोपाख्याने । अत एव कात्यायनादिभिः प्रातिलोम्येन दासत्वनिषेधे स्वतन्त्रपदमुपात्तम्—*Ibid.*

10. संक्रामयेदथान्यत्र-ज, द.

11. दण्ड्यास्स्युस्सर्व एव ते-ज

12. कामादिच्छातः । यस्त्विच्छयोपगतामपि कुलस्त्रियं दासीकुर्यात्, अन्यस्मै वा समर्पयेत्, स दण्ड्य इत्यर्थः । A. S. B., S. B. (a), वि. र., १५४

बालधात्रीमदासीं च दासीमिव भुनक्ति यः ।
परिचारकपत्नीं वा प्राप्नुयात्पूर्वसाहसम् ॥

विक्रोशमानां यो भक्तां दासीं विक्रेतुमिच्छति ।
अनापदिस्थः [1]शक्तः सन् प्राप्नुयाद्द्विशतं दमम्[2] ॥

इति महाराजाधिराजश्रीगोविन्दचन्द्रदेवमहासान्धिविग्रहिकेण
भट्टहृदयधरात्मजेन भट्टश्रीलक्ष्मीधरेण विरचिते
कृत्यकल्पतरौ व्यवहारकाण्डे
दास्याधिकारपर्व[3] ॥

---

1. शत्रुः-ज; सन् शक्तः-स.

2. 'बालधात्रीं' बालस्य स्तन्यदानेन पोषणं कुर्वाणाम्। 'अदासीं' निक्षिप्तां शरणागतां वा। 'परिचारकः' सेवकः। 'विक्रोशमानां' नाहं विक्रेतव्येति वदन्तीम्। S. B. (b), द and **वि. र., १५५.**

3. **A. S. B., S. B. (a), ज, द–इति अभ्युपेत्याशुश्रूषा–बि, उ, स.**

## ६२

# अथ वेतनस्यानपाक्रिया

तत्र नारदः [९, १-३]

[1]भृतानां [2]वेतनस्योक्तिर्दानाथमनविक्रमे[3] ।
वेतनस्यानपाकर्म तद्विवादपदं स्मृतम्[4] ॥

भृताय वेतनं दद्यात् कर्मस्वामी यथाकृतम् ।
आदौ मध्येऽवसाने[5] वा कर्मणो[6] यद्विनिश्चितम् ॥

[7]भृतावनिश्चितायां तु [8]दशभागमवाप्नुयुः ।
लाभगोवीर्यसस्यानां[9] वणिग्गोपकृषीवलाः ॥

[10]'गोवीर्यं' गवां सारभूतं क्षीरमित्यर्थः ।

1. भृताय-ज, द.
2. वेतनं दद्यात्-ज, द; वेतनस्योक्तो-मु. ना. स्मृ., १५१
3. दानादानविधिक्रमः-मु. ना. स्मृ ; विक्रये-वि. र., १५६, B. J.
4. Śloka missing in A. S. B. and S. B. (a)
5. विरामे च-वि. र., १५६
6. कर्मणा-द
7. भृतावनिश्चितायान्तु-वि. र., मु. ना. स्मृ. भृताय निश्चतायां-उ.
8. दशभागं समाप्नुयुः-वि. र., मु. ना. स्मृ.
9. गोक्षीजसस्यानां-मु. ना. स्मृ.

10. A. S. B., S. B. (a), ज and द prefix to this explanation the following commentary, which is identical with that in वि. र., १५६-'यथाकृतं' यथाव्यवस्थापितम् । कर्मणस्त्वादौ मध्ये अवसाने वा, चतुर्थपादे पञ्च-सप्ताष्टाविंशतिरिति पठित्वा, व्याख्यातवान् आदौ पञ्च, मध्ये सप्त, अवसानेऽष्टाविंशतिरिति क्रमेण इति पारिजातः ॥ The words from चतुर्थपादे to व्याख्यातवान् are missing in वि. र., १५६.

<u>याज्ञवल्क्यः</u> [२, १९४-१९६]

दाप्यस्तु दशमं भागं वाणिज्यपशुसस्यतः ।
अनिश्चित्य भृतिं यस्तु कारयेत्स [1]महीक्षिता[2] ॥

देशं कालं च योऽतीयात्कर्म कुर्याच्च योऽन्यथा ।
तत्र तु स्वामिनश्छन्दोऽधिकं देयं कृते[3]ऽधिके[4] ॥

यो यावत्कुरुते कर्म तावत्तस्य तु वेतनम् ।
उभयोरप्यसाध्यं[5] चेत्साध्यं कुर्याद्यथाश्रुतम्[6] ॥

'तत्र' भृतिदाने । 'स्वामिनश्छन्दः' इच्छा ।

<u>बृहस्पतिः</u> [१६, १-२]

त्रिभागं पञ्चभागं वा गृह्णीयात्सीरवाहकः ।

1. महीभृता—इति विश्वरूपपाठः; ज, द, च.

2. स्वयं च न दद्यादिति शेषः । अपरिभाष्य वाणिज्यं पाशुपाल्यं कृषिं वा करोति तस्य तदुत्पन्नोपचयदशमभागभाक्त्वमित्यवसेयम्—(विश्वरूपः)

यः कर्मभृतिमवस्थाप्य स्वामी वाणिज्यपशुपालनकृषिकर्माणि कारयेत् । स तस्यैव [तस्मै] वाणिज्यादिफलतो दशमं भागं महीभृता दातव्य इत्यर्थः ।—A. S. B., S. B. (a), ज, द; वि. र., १५७.

3. कृतो—ज.

4. कर्तव्योचितदेशकालावतिक्रामन् न्यूनत्वादिनाऽन्यथा कुर्वन् भृतकः स्वामिनश्छन्देन इच्छया भृतिं लभते । स्वाम्यपेक्षितं चाधिकं कुर्वन् अधिकां भृतिं लभेत इत्यर्थः—A. S. B., S. B. (a), ज, द; वि. र., १५७.

5. 'प्यशाठ्यं चेच्छाठ्ये कुर्यात्' इति विश्वरूपपाठः

6. अनेकपुरुषैः यत्साध्यं कर्म, तत्र चोभयोरप्यसाध्ये कर्मानुरूपेण वेतनं देयम् । यत्र तु स्वामिकर्मकारयोरुभयोरन्यतरस्य वा साध्यं भवति, तत्र यथाश्रुतं यथाविहितं वेतनं कार्यमित्यर्थः । तदभिधानमग्रे । पारिजाते तु 'उभयोरपि' इत्युभयग्रहणमनेकोपलक्षणार्थं, तेन द्वाभ्यामशक्यकर्मणि तदा यो भृत्यो यावत्कर्म करोति, तस्मै कर्मानुरूपेण वेतनं देयं, साध्ये तु यथापरिभाषितं देयमिति व्याख्यातम् । एतेन साध्यमिति पदस्थाने 'साध्ये' इति पदमवगतमिति लक्ष्यते । A. S. B., S. B. (a), ज, द, वि. र., १५७.

तथा

भक्ताच्छादभृतः सीराद्भागं गृह्णीत पञ्चमम् ।
जातसस्यात्त्रिभागं तु प्रगृह्णीतोपधाभृतः ॥

[1]'उपधा' व्यापारफलम् ।[2]

आपस्तम्बः [२, २८, २-४]

[3]उद्गसतः कीनाशस्य कर्मन्यासे दण्डताडनम् । तथा पशुपस्य । अवरोधनं चास्य पशूनाम् ॥

वृद्धमनुः [मनुस्मृति, पूर्वार्धे, ८, १५७]

समुद्रयानकुशला देशकालार्थ[4]दर्शिनः ।
नियच्छेयुर्भृतिं यां तु सा स्यात्प्रागकृता यदि ॥

नारदः [९, ४]

[5]कर्मोपकरणं चैषां क्रियां प्रति यदाहितम् ।
आप्तभावेन तद्रक्ष्यं न जैह्म्येन कदाचन ॥

1. 'उपधा' उपायभेदः–B. J.

2. अत्रैव व्यवस्थां दर्शयति । 'उपधा' व्यापारफलेन सस्यादिना भृतः । तेन भक्ताच्छादनभृतादन्य इत्यर्थः । नारदीयञ्च सीरवाहेतरभृतकविषयम् ।–A. S. B., S. B. (a) ज, द, वि. र., १५८.

3. अवशिन इति मु. आ. (ed. Buehler, p. ९४); "अर्थाभावात् नार्थदण्डः" इति उज्ज्वला (p. 104)

'उद्गसतः' पलायमानस्य 'कीनाशस्य' हलवाहकस्य दण्डेन ताडनम् । तथा पशुपालकस्य दण्डताडनमवरोधनञ्च । अस्य पशूनां पश्चवरोधनं कार्यमित्यर्थः ।–A. S. B., S. B. (a), वि. र., १५८

4. वेदिनः–ज, द, स । समुद्रयानकुशला इति वाणिज्यविज्ञपुरुषोपलक्षणपरम्–*Ibid.*

5. क्रियोपकरणञ्चैषां क्रियां यत्प्रत्युदाहृतम् । तत्स्वभावेन कुर्वीत न जिह्मेन समाचरेत् ॥ इति मु. ना. स्मृ., १५१ ॥ 'उपकरणं' योत्क्रादि । 'एषां' स्वामिनाम् । 'क्रियां' कृषिरूपां प्रति 'यदाहितं' समर्पितम् । तदाप्तप्रभावेन भृत्यैरवेक्षणीयं न तु जैह्म्येन' शाठ्येनेत्यर्थः ॥ *Ibid.*, वि. र., १५९.

बृहस्पतिः [१६, ३, ५]

भृतकस्तु न कुर्वीत स्वामिना शाठ्यमण्वपि ।
भृतिहानिमवाप्नोति ततो वादः प्रवर्तते ॥

गृहीतवेतनः कर्म न करोति यदा भृतः ।
समर्थश्चेद्दमं दाप्यो द्विगुणं तच्च वेतनम्[1] ॥

याज्ञवल्क्यः [२, १९३]

गृहीतवेतनः कर्म त्यजन् द्विगुणमावहेत् ।
अगृहीते समं दाप्यो भृत्यै रक्ष्य उपस्करः ॥

'भृत्यैः' भृतकैः । 'उपस्करः' उपकरणम्, लाङ्गलादीनां योक्त्रादि ।[2]

नारदः [९, ५]

कर्माकुर्वन् प्रतिश्रुत्य कार्यो दत्वा भृतिं बलात् ।
भृतिं गृहीत्वाऽकुर्वाणो द्विगुणां भृतिमावहेत् ॥

कात्यायनः [६५७]

कर्मारम्भं तु यः कृत्वा सिद्धिं नैव तु कारयेत् ।
बलात्कारयितव्योऽसावकुर्वन् दण्डमर्हति ॥

1. समर्थश्चेन्न करोतीति सम्बन्धः–*Ibid.*, वि. र., १५९.

2. 'द्विगुणं' वेतनं 'आवहेत' दद्यात् । 'समं' परिस्थापितादनधिकं, न द्विगुणमित्यर्थः । तेनारभ्य कर्म त्यजन् गृहीतवेतनत्वागृहीतवेतनाभ्यां द्विगुणवेतने समवेतेन दापयितव्यः । 'भृत्यैः' हलवाहकादिभिः । 'रक्ष्यः' रक्षणीयः । 'उपस्करः' कुद्दाललाङ्गलादिः ॥ (A. S. B., S. B. (a), ज, द, and वि. र., १५९ which substitutes कुद्दालपालकादिः for the last word.

बृहस्पतिः[1] [१६, ७]

प्रतिश्रुत्य न कुर्याद्यः स कार्यः स्याद्बलादपि ।
स चेन्न कुर्यात्तत्कर्म प्राप्नुयाद्द्विशतं दमम्[2] ॥

मनुः [८, २१५]

भृतोऽनार्तो न कुर्याद्यो दर्पात्कर्म यथोदितम् ।
स दण्ड्यः कृष्णलान्यष्टौ न देयं चास्य वेतनम्[3] ॥

[तथा, मनुः, ८, २१७, २१६]

यथोक्तमार्तः स्वस्थो वा यस्तत्कर्म न कारयेत् ।
न तस्य वेतनं देयमल्पोनस्यापि कर्मणः ॥

आर्तस्तु कुर्यात्स्वस्थः सन् यथाभाषितमादितः ।
सुदीर्घस्यापि कालस्य तल्लभेतैव वेतनम् ॥

'अनार्तः' अनापन्नः । 'अल्पोनस्य' अल्पावशिष्टस्य[4] ॥

1. उ and B. J. read बृहस्पतिः, but A. S. B. and S. B. (a) read वृद्धमनुः. व्यवहारप्रकाश, ४१६ introduces the quotation thus–कियद्द्रव्यं दण्ड्य इत्यपेक्षायां आह वृद्धमनु–बृहस्पती. It is found in the परिशिष्ट–मनुश्लोकाः appended to the Chowkhamba edition of मनुस्मृति, पृ. २८, where it is cited from वृद्धमनु as quoted in स्मृतिचन्द्रिका [p, 473].

2. A. S. B., S. B. (a)–and वि. र., १६० add here the comment (not found in the उ group)–इदं प्रतिश्रवणं कात्यायनैकवाक्यतया कर्मारम्भं च न, तत्राह मनुः

3. A. S. B., and S. B. (a)–also वि. र., १६०–अनार्तः [अनापन्नः] कर्मकरणहेतुराजदैवोपघातरहितः ।

4. A. S. B. and S. B. (a) [and वि. र., १६०–१६१] add the following comments, which are missing in उ, other manuscripts.

न कारयेत्स्वयमन्यद्वारा वा । 'अल्पोनस्य' किञ्चिदपरिसमाप्तस्य । यस्त्वार्तिवशात् त्यक्तकर्मा सुस्थो भूत्वा व्यवस्थापितं कर्म करोति स [सु] दीर्घेणापि कालेन वेतनमाप्नोतीत्यर्थः ॥

नारदः [नारदीयम् संहिता, ७, ७]

कालेऽपूर्णे त्यजन्कर्म भृतेर्नाशमवाप्नुयात् ।
स्वामिदोषादकरणे यावद्भृतिमवाप्नुयात्[1] ॥

विष्णुः [५, १५३-१५९]

भृतकश्चापूर्णे काले भृतिं त्यजन् सकलमेव मूल्यं जह्यात् । राज्ञे च पणशतं दद्यात् । तद्दोषेण [च] यद्विनश्येत् तत्स्वामिने [देयम्] । अन्यत्र दैवोपघातात् । स्वामी चेद्भृतकमपूर्णे काले जह्यात्तस्य सर्वमेव मूल्यं दद्यात् । पणशतं च राजनि । अन्यत्र भृतकदोषात्[2] ॥

नारदः [९, ९]

भाण्डं व्यसनमागच्छेद्यदि वाहकदोषतः ।
दाप्यो यत्तत्र नष्टं स्याद्दैवराजकृतादृते[3] ॥

वृद्धमनुः[4]

प्रमादान्नाशितं दाप्यः समं द्विर्द्रोहनाशितम् ।
न तु दाप्यो हृतं चौरैर्दग्धमूढं जलेन वा[5] ॥

बृहस्पतिः [१६, ९]

प्रभुणा विनियुक्तः सन् भृतको विदधाति यत् ।
तदर्थमशुभं कर्म स्वामी तत्रापराध्नुयात् ॥

1. भृतेरन्वण्डायाः । तेन तद्दोषत्यागे कियत्यपि भृतिर्न देया । यदा त्वपूर्ण एव काले स्वामिदोषात् त्यागः, तदा यावत्कृतं तावतो भृतिं लभत इत्यर्थः ॥ *Ibid.*

2. भृतिं कर्ममूल्यं वेतनं त्यजन् स्वामिदोषविरहेण । 'दैवात्' दैवोपघातात् । *Ibid.*

3. 'भाण्डं' भृतकव्यापार्यमाणं द्रव्यम् । 'व्यसनं' विघटनम् । 'वाहदोषतो' भृतकजनदोषतः ॥ (*Ibid*; **वि. र.**, १६२.) 'दाप्यो' यत्र तु नष्टं स्यात् । *Ibid.*

4. **व्यव. मयूख**, ed. Kane, २१२; Chowkhamba edn. of *Manusmṛti*, परिशिष्ट, २८; 'द्रोहो' द्वेषः । 'ऊढं' अपहृतम् (**व्य. मयूख**, २१३)

5. A. S. B., S. B. (a), ज, द and **वि. र.**, १६२–'द्रोहनाशितं' आशयापराधनाशितम् । हृतं चौरैर्दग्धमूढं जलेन वा' इत्यनेन भृतकदोषव्यतिक्रमेण विघटितमुपलक्ष्यते ।

'तदर्थम्' स्वाम्यर्थम्। 'अशुभं' चौर्यादि[1]। 'अपराधनुयात्' दण्डादिभाग्भवेत्।

याज्ञवल्क्यः [२, १९७]

[2]अराजदैविकं नष्टं भाण्डं दाप्यस्तु वाहकः।
प्रस्थानविघ्नकृच्चैव दाप्यः स्याद्द्विगुणां भृतिम्[3]॥

[4]वृद्धमनुः

यः कर्मकाले संप्राप्ते न कुर्याद्विघ्नमाचरेत्।
उद्धृत्यान्यस्तु कार्यः स्याद् स दाप्यो द्विगुणां भृतिम्॥

याज्ञवल्क्यः [२, १९८]

प्रक्रान्ते सप्तमं भागं चतुर्थं पथि संत्यजन्[5]।
भृतिमर्धपथे सर्वां प्रदाप्यस्त्याजकोऽपि च[6]॥

मत्स्यपुराणे [२२७, ६]

मूल्यमादाय यो विद्यां शिल्पं वा न प्रयच्छति।
दण्ड्यः स मूल्यं सकलं धर्मज्ञेन [7]महीक्षिता॥

1. *Ibid.*, add–स्वामिन एव तत्र दोषो न तु भृतकस्यैव इत्यर्थः।

2. अराजदैविकान्नष्टम् इति विश्वरूपपाठः। 'प्रस्थानविघ्नकर्ता च' इति च तस्य पाठः.

3. A. S. B., S. B. (a), ज, द, and वि. र. १६२–अराजदैवकादित्यनेन भृतदोष उपलक्ष्यते। 'प्रस्थानविघ्नकृत्' वेतनं गृहीत्वा कर्मकाले अप्रस्थाता वाहक इत्यनुषङ्गः।

4. Not traced in the Chowkhamba ed. परिशिष्ट

5. 'सन्त्यजेत्' इति विश्वरूपपाठः

6. [As in f. n. 3 above] अत्र च प्रक्रान्ते पथि अर्धपथे इति पदैः सुलभान्यभृत्योपादानदुर्लभान्यभृत्योपादानसमया विवक्षिताः। तेषु यथायथं सप्तमचतुर्थभागं सर्वभृतिं वाहकाः दापयितव्याः। [एवं स्वाम्यपि एषु समयेषु त्याजकः सन् दापयितव्यः] यत्तु पूर्वं द्विगुणभृतिदानमुक्तं तत् सर्वथा भृत्योपादानसंभव इत्यविरोधः॥ (वि. र., १६३; ज omits the sentence in brackets.)

7. महीभृता–B. J.; वि. र. १६३ notes the reading महीक्षिता.

नारदः [९, ८, ७-८]

अनयन् भाटयित्वा तु भाण्डवान्यानवाहने ।
दाप्यो भृतिचतुर्भागं समधर्मपथे त्यजन् ॥

अनयन् वाहकोऽप्येवं भृतिहानिं समाप्नुयात्[1] ।

वृद्धमनुः

पथि विक्रीय तद्भाण्डं वणिग्भृत्यं त्यजेद्यदि ।
अगतस्यापि देयं स्याद् भृतेरर्धं लभेत सः[2] ॥

कात्यायनः [६६१]

यथा च पथि तद्भाण्डमासिध्येत ह्रियेत वा ।
यावानध्वा गतस्तेन तावतीं लभते भृतिम्[3] ॥

'आसिध्येत' अवरुध्येत् ।

नारदः [९, ६]

भृतिषड्भागमाभाष्य [4]पथि युग्यभृतं त्यजन् ।
अददत्कारयित्वा तु सोदयां भृतिमावहेत् ॥

'भृतिषड्भागं' इत्यादि—यो भृतकः 'आभाष्य' गच्छामीति संप्रतिपद्य पश्चाद्गमनोपक्रमे पथि स्थितं युग्यभृतं त्यजति, असौ उक्तभृतेः षड्भागं दाप्य इत्यर्थः[5] ॥

1. A. S. B., S. B. (a), ज and वि र. १६४—add the commentary–'भाटयित्वा' भाटकं गृहीत्वा । 'भाण्डवान्' स्वामी । 'यानवाहने' अश्वादि-वृषादिरूपे । 'भाटकः' भाटकगृहीता ।

2. *Ibid*–'अगतस्यापि' यात्रद्गन्तव्यमगतस्यापि ।

3. *Ibid*–'आसिध्येत' अवरोधविषयीक्रियेत ।

4. 'पण्यं युग्यकृतं त्यजन्' इति मु. ना. स्मृ., १५२.

5. A. S. B., B. J., S. B. (a), and ज, as well as वि. र., १६४ substitute this commentary for that furnished above by उ, बि, and स. यो भृतिमाभाष्य 'गच्छामीति' प्रतिज्ञाय, पथि युग्मं भृतिभाण्डादि त्यजेदसौ [असाधुत्वात्] उक्तभृतेः [स भृतेः] षड्भागं दाप्य इति प्रथमखण्डार्थः । स्वाम्यपि अददद्व्रजति भृत्ये पथि भृतिमददत् सोदयां भृतिमावहेदिति द्वितीयखण्डार्थः ॥

बृहस्पतिः [१६, ११]

कृते कर्मणि यः स्वामी न दद्याद्वेतनं भृतेः ।
राज्ञा दापयितव्यः स्याद्विनयं चानुरूपतः ॥

कात्यायनः [६६०]

त्यजेत्पथि सहायं यः श्रान्तं रोगार्तमेव वा ।
*प्राप्नुयात्साहसं पूर्वं ग्रामे त्र्यहमपालयन्[1] ॥

## ६२-(अ) अथ पण्यस्त्रीविधिः

तत्र नारदः [९, १९, पूर्वार्धम्[2]]

शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणं वहेत् ।
अनिच्छन् शुल्कदाताऽपि शुल्कहानिमवाप्नुयात् ॥

स्मृतिः[3] [बृहस्पतिः १६, १३]

व्याधिता सश्रमा[4] व्यग्रा राजकार्यपरायणा[5] ।
[6]आमन्त्रिता च नागच्छेदवाच्या[7] वडवा स्मृता[8] ॥

1. A. S. B., S. B. (a), ज and द, as well as त्रि. र., १६५ furnish this comment, which is absent in the others-यः स्वामी ग्रामे त्र्यहमपालयन्नेव शान्तं रोगार्तं वा भृतं त्यजेत् सति राज्ञा दण्ड्य इत्यर्थः ॥

* *Ibid.*, इति सप्रक्रियसान्धिविग्रहिकभट्टहृदयधरात्मजभट्टलक्ष्मीधरविरचिते कृत्यकल्पतरौ वेतनस्यानपक्रियापर्व ॥ ज ॥ The real end of this *parva* is after the sub-section on पण्यस्त्रीविधिः

2. नारदीयमनुसंहिता, ७, २० । 'शुल्कं' वेतनम् ।

3. Ascribed to Bṛhaspati by व्यवहारनिर्णय, ३१८, सरस्वतीविलास, p. 300; मिताक्षरा, २, २९१, ascribes it to Nārada.

4. सभ्रमा-स्मृ. चं., p. 481

5. कर्म-द, स; धर्म-स्मृ. चं.

6. अमन्त्रिता-द

7. 'अदण्ड्या' इति मिताक्षरा, २, २९१.

8. A. S. B., and S. B. (a) add the commentary : 'शुल्कं' वेतनम् । 'अवाच्या' निर्दोषा । 'वडवा' पण्यस्त्री ।

मत्स्यपुराणे [२२७, १४५]

गृहीत्वा वेतनं वेश्या लोभादन्यत्र गच्छति ।
[1]भाटं न दद्याद्दाप्या स्यादनूढस्यापि भाटकम्[2] ॥

नारदः [९, १८ उत्तरार्धः, १९]

अप्रयच्छंस्तथा शुल्कमनुभूय पुमान् स्त्रियम् ।
[3]अक्रमेण तु संगच्छन् [4]घातदन्तनखादिभिः ॥

अयोनौ यः समाक्रामेद्बहुभिर्वापि वासयेत् ।
शुल्कं सोऽष्टगुणं दाप्यो विनयं तावदेव तु[5] ॥

मत्स्यपुराणे [२२७, १४६-१४८]

अन्यमुद्दिश्य यो वेश्यां नयेदन्यस्य कारणात् ।
तस्य दण्डो भवेद्राज्ञः सुवर्णस्य च माषकम् ॥

1. 'तां धनं दापयेद्द्यादनूढस्यापि भाटकम्'इति अपरार्कः (पृ. ८००, याज्ञ., १,१९४); दण्डस्यापि च भाटकम्-B. J.

2. A. S. B., S. B. (a) and वि. र., १६६ add the comment-'अनूढस्य' भुजङ्गस्य । 'भाटकं' शुल्कम् । तच्च द्विगुणम् ।

3. Line wanting in Jolly's *Nāradasmṛti*, p. 153, but supplied as a continuation of the first half by अपरार्क (p. 800) and वि. र., १६६.

4. 'घातयंस्तु नखादिभिः' इति अपरार्कभाष्ये, विवादरत्नाकरे च.

5. A. S. B., S. B. (a), ज, द and वि. र., १६७ add the commentary-'अक्रमेण' कामशास्त्रोक्तप्रकारविरोधेन । 'अयोनौ' मुखादौ । 'समाक्रामेत्' मैथुनं कुर्यात् । आत्मार्थं भाटयित्वा 'बहुभिः' पुरुषैः 'वासयेत्' योजयेत् ॥

नीत्वा भोगं न यो दद्याद्दाप्यो द्विगुणवेतनम् ।
राज्ञश्च द्विगुणं दण्डं तथा धर्मो न हीयते ॥

बहूनां व्रजतामेकां सर्वे ते द्विगुणं दमम् ।
[1]तस्यै दद्युः पृथग्राज्ञे दण्डं च द्विगुणं परम्[2] ॥

नारदः

वेश्याः प्रधाना यास्तत्र कामुकास्तद्गृहोषिताः ।
तत्समुत्थेषु कार्येषु निर्णयं संशये विदुः[3] ॥

[इति पण्यस्त्रीविधिपर्व[4]]

1. 'संप्रदद्युः पृथग्राज्ञे' इति वि. र., १६७; 'दद्युः पृथक्पृथग्राज्ञे' इति **अपरार्कः** (८०१.)

2. A. S. B., S. B. (a), ज, द B. J., and **वि. र.**, १६७; furnish this commentary : अत्र च द्विगुणो दमो दण्डः, स च स्त्रियै । राज्ञे च द्विगुणो **दण्डोऽत्र स्फुट एव** ।

3. **A.** S. B., S. B. (a), ज, द and **वि. र**, १६७ furnish the following commentary, which is absent in उ, B. J., स and **वि–'प्रधाना' इति स्त्रीलिङ्गनिर्देश** आर्षः । 'तत्समुत्थेषु' वेश्यागृहोषितकामुकसम्बन्धेषु **'संशये' वेश्याकामुकविप्रतिपत्तिजे** ।

4. [ ] Supplied by the Editor. In the manuscripts and **वि. र.** the termination of this sub-section is not indicated, but the śloka ascribed to Nārada marks the logical end. It is not traced in any extant version of *Nāradasmṛti* but the **मिताक्षरा** (२, २९२), **अपरार्क** (p. 800), **स्मृतिचन्द्रिका** (p. 482), **व्यवहारनिर्णय** (३१९), **पराशरमाधवीय**, (३३४) **विवादरत्नाकर**, (१६७) and **व्यवहारप्रकाश** (४२२) agree in referring it to Nārada.

## ६२ (आ) अथ गृहादिभाटकविधिः[1]

[2]नारदः

परभूमौ गृहं कृत्वा स्तोमं दत्वा वसेत्तु यः ।
स तद्गृहीत्वा निर्गच्छेत्तृणकाष्ठेष्टकादिकम् ॥

स्तोमाद्विना ह्युषित्वा तु परभूमावनिश्चितः ।
निर्गच्छंस्तृणकाष्ठानि न गृह्णीयात् कथञ्चन ॥

यान्येव तृणकाष्ठानि त्विष्टका विनिवेशिनाः ।
विनिर्गच्छंस्तु तत्सर्वं भूस्वामिनि निवेशयेत्[3] ॥

व्यासः

स्नेहेन तु चिरं भुक्त्वा मन्दिरं कुरुते तु यः ।
निर्गच्छतस्तस्य दारु दत्तस्तोमस्य नान्यथा[4] ॥

कात्यायनः [६६३, ६६२]

गृहवार्यापणादीनि गृहीत्वा भाटकेन यः ।
स्वामिने नार्पयेद्यावत्तावद्दाप्यः स भाटकम्[5] ॥

1. Heading furnished by A. S. B., S. B. (a) etc. The 'Udaipur' group omits it. स्मृतिचन्द्रिका gathers the material of this sub-section under स्वामिविषयाणि (pp. 476-480), which precedes पण्यस्त्रीतदुपभोक्तृविषयाणि section in that digest.

2. The first two ślokas are ना. स्मृ., ९, २०-२ ; the third is ascribed to Nārada in the digests named in f. n. 4. in page 410.

3. A. S. B., S. B (a), ज, द and वि. र., १९८, add the following commentary--'स्तोमं' वासमूल्यम् । 'निवेदयेत्' लाभयेत्प्रापयेदिति यावत् । लाभार्थविधेः रूपमिदम् ।

4. *Ibid.*, 'दत्तस्तोमस्य' दत्तवासमूल्यस्य ।

5. 'वारि' परखानितं प्रतिष्ठितमिह विवक्षितम् । (वि. र., १९८)

हस्त्यश्वगोखरोष्ट्रादीन् गृहीत्वा भाटकेन यः ।
नार्पयेत्कृतकृत्यः सन् तावद्दाप्यः स भाटकम् ॥

वृद्धमनुः[1]

यो भाटयित्वा शकटं[2] नीत्वा चान्यत्र गच्छति ।
भाटं न दद्याद्दाप्यः स्यादनूढस्यापि भाटकम् ॥

नारदः [९, २२]

स्तोमवाहीनि भाण्डानि [3]पूर्णकालान्युपानयेत् ।
गृहीतुराभवेद्भग्नं नष्टं चान्यत्र संप्लवात् ॥[4]

इति कल्पतरौ वेतनानपक्रिया ॥[5]

1. चौखाम्बामनुकोश–परिशिष्टे–पृ. २९

2. शकटमिति वाह्यमात्रोपलक्षणम् । 'अनूढस्यापि' आवाहितस्यापि । (वि. र., १६९)

3. 'पूर्णकालन्तु पालयेत्' इति विवादरत्नाकरः, १६९.

4. 'स्तोमो' वेतनम् । 'संप्लवो' राजदैविकम् । 'तेन' राजदैविकमन्तरेण विघटितं शकटादि गृहीतुरेव समाधेयं स्यादिति पूर्णकालं तत्स्वामिनि समर्पणीयमित्यर्थः ॥ (वि. र., १६९)

5. A. S. B., S. B. (a), S. B. (b), ब–इति महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेवमहासान्धिविग्रहिकेण भट्टहृदयधरात्मजेन भट्टश्रीलक्ष्मीधरेण विरचिते कृत्यकल्पतरौ व्यवहारकाण्डे वेतनानपक्रिया[पर्व] ॥ ज and द wrongly conclude thus, *instead*–"पण्यस्त्रीविधिपर्व," while the other Mss. above referred to prefix this (also wrongly) to colophon.

## ६३

# अथ स्वामिपालविवादः

तत्र मनुः [८, २२९, २३१]

पशुषु स्वामिनां चैव पालानां च यथाविधि ।
विवादं संप्रवक्ष्यामि यथावद्धर्मतत्त्वतः[1] ॥

[2]गवां क्षीरभृतो यस्तु स दुह्याद्दशतो वराम् ।
गोस्वाम्यनुमते भृत्यः सा स्यात्पालेऽभृते भृतिः[3] ॥

'क्षीरभृतः' [4]क्षीरमेव भृतिर्यस्य स तथा । 'दुह्याद्दशतो वरां' इति । दशसु गोषु मध्ये एकां श्रेष्ठां गां दुह्यादित्यर्थः । 'सा' एकगोदोहनरूपा । 'पाले' गोपाले । 'अभृते' [5]ग्रासाच्छादनेनेति शेषः ।[6]

नारदः [९, १०]

गवां शताद्वत्सतरी धेनुः स्याद्द्विशताद्भृतिः ।
प्रतिसंवत्सरं गोपे संदोहश्चाष्टमेऽहनि[7] ॥

1. गवादि'पशु'विषये 'व्यतिक्रमे' 'स्वामिनां' 'पालानां' च गोपालादीनां यो विवादः, गौस्त्वया मे नाशिता तां मे देहीति-पालोऽपि विप्रतिपद्यते मदीयो दोषो नाभवत्'-इत्यत्र वादपदे 'यद्धर्मतत्वं' यादृशी व्यवस्था तां 'यथावत्' निपुणतो 'वक्ष्यामि' इत्यवधानार्थः पिण्डीकृत-प्रकरणोपन्यासः-मेधातिथिः

2. गोपा क्षीरभृतो यस्तु-ज.

3 and 4. क्षीरमात्रभृतिरिति यावत्-द.

5. ग्रासाच्छादनादिना इति B. J.

6. Repeated by वि. र., १७०.

7. 'गवां शतात्' रक्षितात् । एवं द्विशतादित्यत्रापि । 'वत्सतरी' द्विहायनी गौः । 'सन्दोहः' सर्वधेनूनां दुग्धम् । (विवादरत्नाकरे स्वामिपालतरङ्गे, पृ. १७०)

बृहस्पतिः [१६, १४]

[1]तथा धेनुभृतः क्षीरं लभेत ह्यष्टमेऽखिलम् ।

'धेनुभृतो' गोपः ।

आपस्तम्बः [ध., २, २८, २-४]

[2]उद्वसतः कीनाशस्य कर्मन्यासे दण्डेन ताडनम् । [3]तथा पशुपस्य । अवरोधनं चास्य पशूनाम् ।

नारदः [९, ११]

[4]उपानयेदरण्याय प्रत्यहं रजनीक्षये ।
चीर्णाः पीताश्च ता गोपः सायाह्ने प्रत्युपानयेत् ॥

याज्ञवल्क्यः [२, १६४]

यथार्पितान् पशून्गोपः सायं प्रत्यर्पयेत्तथा ।
[5]प्रमादहृतनष्टांश्च प्रदाप्यः कृतवेतनः[6] ॥

1. 'परधेनुभृतः' इति वि. र., पाठः, १७० ; 'लभेतास्याष्टमेऽखिलम्' इति स्मृतिचन्द्रिका (p. 483) पाठः

2. 'अवशिनः' इति मुद्रितपुस्तकपाठः (ed. Bühler, p. ९४); 'दण्डताडनम्' (*Ibid.*)

3. 'अर्थाभावात् नार्थदण्डः' इति हरदत्तव्याख्यायाम् (*Ibid.* p. 104). 'उद्वसतः' पलायमानस्य । 'कीनाशस्य' हलवाहकस्य । (वि. र. १५८)

4. 'उपानयति या गोपः' इति मु. नार. पाठः; 'उपानयेद्गां गोपाय' इति B. J., ज, द, स ; 'चीर्णा' भक्षिततृणाः-वि. र., १७१.

5. प्रमादकृतनष्टांश्च स दाप्यः कृतवेतनः-इति द; स दाप्यः-ज ; 'प्रमादमृतनष्टांश्च-इति मिताक्षरा-विश्वरूपपाठः । 'प्रमादहृतनष्टाः' पालकदोषेणापहृतनष्टाः, वि. र., १७१.

6. परिच्छिन्नवेतनो दत्तवेतनो वा गोपः प्रातर्यथार्पितान् सायं प्रत्यर्पयेत् । 'अर्पण' वचनाच्च अनर्पितप्रणाशे नापराधः । गोपवचनं च पशूनित्युपक्रमात् सर्वपशुपालोपलक्षणार्थम् । प्रमादेनोपेक्षया मृताः प्रनष्टा वा ये पशवः, ते च पालेनैव देयाः (विश्वरूपः, २, १६८)

मनुः [८, २३०]

दिवा वक्तव्यता[1] पाले रात्रौ स्वामिनि तद्गृहे ।
योगक्षेमावन्यथा चेत्पालो वक्तव्यतामियात् ॥

मनुनारदौ [मनु, ८, २३३; नार. ९, १६]

विघुष्य तु हृतं चौरैर्न पालो दण्डमर्हति ।
यदि देशे च काले च स्वामिनः स्वस्य शंसति[2] ॥

व्यासः

पालग्राहे ग्रामघाते तथा राष्ट्रस्य विभ्रमे[3] ।
यत्प्रनष्टं हृतं वा स्यान्न पालस्तत्र किल्बिषी[4] ॥

बृहस्पतिः [१६, १६]

कृमिचौरव्याघ्रभयाद्दरीश्वभ्राच्च पालयेत् ।
व्यायच्छेच्छक्तितः क्रोशेत् स्वामिने वा निवेदयेत्[5] ॥

नारदः [९, १२-१३]

सा चेद् गौर्व्यसनं गच्छेद् व्यायच्छेत्तत्र शक्तितः ।
अशक्तस्तूर्णमागत्य स्वामिने तन्निवेदयेत् ॥

1. 'वक्तव्यता' कुत्सनीयता (मेधातिथिः)

2. 'विघुष्य' आघुष्य पटहान् चौरहृतं पशुं पालो न दाप्यते। विशेषणं च पालस्याशक्त्युपलक्षणार्थम्। यदि बहवश्चोराः प्रसह्य न मुष्णन्ति तदा पालो मुच्यते। सोऽपि यदि प्राप्तकालं तस्यामेव वेलायां स्वामिनः कथयति। 'देशे' यत्र स्वामी सन्निहितः। अथ मुषित्वा गतेषु शापयेत् दुष्येदेव-मेधातिथिः

3. विप्लवे-ज. द, B. J., वि. र., १७२

4. 'पालग्राहे' पालग्रहणे निरोधे इति यावत्-वि. र., १७२.

5. 'दरी' कन्दरा। 'व्यायच्छेत्' कृम्याद्युपद्रवेभ्यः रक्षां कुर्यात्। 'क्रोशेत्' उच्चैः शब्दं कुर्यात्। [A. S. B., S. B. (a), ज, द, स and B. J.] वि. र., १७२ adds–'श्वभ्रं' गर्तः

अन्यायच्छन्नविक्रोशन् स्वामिने वाऽनिवेदयन् ।
वोढुमर्हति गोपस्तां विनयश्चैव राजनि[1] ॥

<u>मनुनारदौ</u> [मनु, ८, २३२; नारद, ९, १४]

नष्टं [2]विजग्धं कृमिभिः श्वहतं विषमे मृतम्[3] ।
हीनं पुरुषकारेण प्रदद्यात्पाल एव तु[4] ॥

'श्वहतं' इत्यत्र श्वपदं श्वापदाद्युपलक्षणार्थम् ।

<u>याज्ञवल्क्यः</u> [२, १६५]

पालदोषविनाशे तु पाले दण्डो विधीयते ।
अर्धत्रयोदशपणाः स्वामिनो द्रव्यमेव च ॥

<u>विष्णुः</u> [५, १३७-१३९]

दिवा पशूनां वृकाद्युपघाते पाले त्वनापदि[5] पालकदोषः । विनष्टपशुमूल्यं च स्वामिने दद्यात् । अननुज्ञातां[6] दुहन् पञ्चविंशति कार्षापणान् ॥

<u>ब्रह्मपुराणे</u>[7]

गृहीतमूल्यो गोपालस्तास्त्यक्त्वा[8] निर्जने वने ।
ग्रामचारी नृपैर्वध्यः शलाकीव[9] वनेचरः ॥

1. 'वोढुं' दातुम् । 'तां' गाम् । (वि. र. १७३)
2. विनष्टं-बि, स, मु. ना., वि. र., १७३.
3. हृतम्-द.
4. 'नष्टं' दृष्टिपथादपेतं न ज्ञायते क्व गतम् । 'विनष्टं कृमिभिः' आरोहकनामानः कृमयो गवां प्रजनवर्त्मनानुप्रविश्य नाशयन्ति । 'श्वभिर्हतम्' प्रदर्शनार्थमेतत् । तेन गोमायुव्याघ्रादिहतानामेवैष स्थितिः । 'विषमे' श्वभ्रदरीशिलासङ्कटादौ 'मृतम्' । प्रदद्यात् पाल एव । हीनं पुरुषकारेण-'पुरुषकारः' पुरुषव्यापारः । पालस्य तत्र सन्निधानात् वृकनिवारणं च दण्डादिना प्रवृत्तिः तेनापेतम् । यदि व्याप्रियमाणो व्याघ्रादेर्निवारणे नैव समर्थः-न पालदोषः-(मेधातिथिः ।)
5. त्वनायति-मु वि. स्मृ.; त्वनायति पालदोषः-स.
6. अननुज्ञातः-B. J.; अननुज्ञातो दुहिनास्तु-ज; अननुज्ञातो दुहन्-द.
7. ब्राह्मपुराणे-ज.
8. गास्त्यक्त्वा-B. J.
9. B. J.-शलाकी वनगोचरः

गोपालहस्ते संस्था गौस्तद्दोषान्म्रियते यदि ।
तदा स एव दण्ड्यस्तु[1] शुल्कं दाप्यस्तु गोपतेः ॥

यदा रोगादिदोषेण म्रियते गौर्गृहे क्वचित् ।
तदा स गोपतिर्दण्ड्यो दत्त्वा गोपालवेतनम् ॥

'शलाकी' नापितः । 'रोगादिदोषेण' स्वामिनः प्रतीकारकरणव्यतिरेकेणेति शेषः[2] ।

मनुनारदौ[3]

अजाविके तु संरुद्धे वृकैः पाले त्वनापदि[4] ।
यां प्रसह्य वृको हन्यात्पाले तत्किल्बिषं भवेत् ॥

[5]तासां चैवावरुद्धानां चरन्तीनां मिथो वने ।
यामुत्प्लुत्य[6] वृको हन्यात्पालस्तत्र न किल्बिषी ॥

[7]'मिथो' रहसि ।

नारदः [९, १७]

अनेन सर्वपालानां विवादः समुदाहृतः ।
मृतेषु च विशुद्धिः[8] स्याद्वालशृङ्गादिदर्शनात्[9] ॥

1. B. J.-दण्ड्यः स्यात्
2. 'गां' जातरोगाम् । 'शलाकी' शिरावेद्यादिः । (वि. र., १७४)
3. मनुस्मृति, ८, २३५-२३६; नारदस्मृति, ९, १५; नारदीयमनुसंहिता, १२, १०.
4. त्वनायति, मु. ना. स्मृ., व्य. नि. p. 325.
5. तासाञ्चेदनिरुद्धानाम्-द; तासां चेदवरुद्धानां-वि. र., १७५.
6. यामुपेत्य-द.
7. 'मिथः' रहसि । साहित्येन चरन्तीनां तत्र गवि हतायामित्यर्थः । A. S. B., S. B. (a), ज, द, वि. र., १७५.
8. पालस्याङ्कादि-नारदीयमनुसंहिता, p. 104.
9. 'अनेन' एतेन । 'सर्वपालानां' अश्वादिपालानामपि विवादोक्तः-A. S. B., S. B. (a), वि. र., १७५.

मनुः [८, २३४, २४४]

कर्णौ चर्म च वालांश्च बस्तिं स्नायुं च रोचनम् ।
पशुस्वामिनि दद्याच्च मृतेष्वङ्कादि[1] दर्शयेत् ॥

एतद्विधानमातिष्ठेद्धार्मिकः पृथिवीपतिः ।
स्वामिनां च पशूनां च पालानां च व्यतिक्रमे ॥

इति महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेवमहासान्धिविग्रहिकेण
भट्टहृदयधरात्मजेन भट्टश्रीमल्लक्ष्मीधरेण विरचिते
कृत्यकल्पतरौ व्यवहारकाण्डे
स्वामिपालविवादः[2] ॥

---

1. अङ्गानि–द; 'अङ्काश्च' इति मेधातिथिपाठः । "अङ्कदर्शनेन हि प्रत्यभिज्ञा भवत्ययं स पशुरिति ।" (मेधातिथिः); व्य. नि. p. 325 reads अङ्गानि दर्शयन् ।

2. So S. B. (b); B. J., उ, चि, A. S. B. इति कल्पतरौ व्यवहारे स्वामिपालविवादः; ज, द–इति भट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्टश्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ स्वामिपालविवादः ॥

# ६४

## अथ संविद्व्यतिक्रमः

तत्र नारदः [१३, १]

पाखण्डनैगमादीनां स्थितिः समय उच्यते ।
समयस्यानपाकर्म तद्विवादपदं स्मृतम्[1] ॥

याज्ञवल्क्यः [२, १८५]

राजा कृत्वा पुरे स्थानं ब्राह्मणान् न्यस्य तत्र तु ।
त्रैविद्यान् वृत्तिमद्ब्रूयात्स्वधर्मः पाल्यतामिति[2] ॥

बृहस्पतिः [१७, २-१०]

वेदविद्याविदो विप्रान् श्रोत्रियानग्निहोत्रिणः ।
आहृत्य स्थापयेत्तत्र तेषां वृत्तिं प्रकल्पयेत् ॥

अनाच्छेद्यकरास्तेभ्यः[3] प्रदद्याद्गृहभूमिकाः[4] ।
[5]मुक्तभाव्याश्च नृपतिर्लेखयित्वा स्वशासने[6] ॥

1. 'पाष[ख]ण्डाः' त्रयीबाह्याः । 'नैगमाः' पौराः । 'आदि'शब्दो गणसङ्घादिसमूहविवक्षया । 'स्थितिः' पारिभाषिकैर्धर्मैर्व्यवहारः । 'अनपाकर्म' अनुल्लङ्घनम् । (**विवादरत्नाकरः, १७६.**)

2. राजा कृत्वा 'पुरे' दुर्गे 'स्थानं' स्थलीं, भाविकालसंरक्षणार्थं ब्राह्मणान् 'न्यस्य' समुदायत्वेनावस्थाप्य, 'त्रैविद्यं' ऋग्यजुस्सामपारगं सदाचारब्राह्मणात्मकं वृत्तिमत् कृत्वा 'ब्रूयात्' स्वधर्मः पाल्यतामिति । वर्तनहेतु'र्वृत्तिः' तद्युक्तं वृत्तिमत् । ग्रामगृहक्षेत्राक्षयनिध्यादिस्थापितमर्थं दत्त्वेत्यर्थः । 'स्वधर्मः' वर्णाश्रमधर्मास्त्वव्यभिचारः । राज्ञश्चान्यथा प्रवृत्तावुपदेशेन सन्मार्गावतारणम् (**विश्वरूपः**) ॥ 'स्थानं' धवलगृहादि । 'वृत्तिमत्' हिरण्यादियुक्तम्—**वि. र., १७६.**

3. **तेषां-वि. र., १७७.**

4. भूमयः-S. B. (b), B. J., ज, द, वि, स.

5. मुक्त-उ, स, वि. र., १७७, भुक्त-B.J; मुक्ता भाव्यश्च-**अपरार्कः, ७९२.**

6. अनुशासने-A. S. B., S. B. (a), ज, द.

नित्यं नैमित्तिकं काम्यं शान्तिकं पौष्टिकं तथा ।
पौराणां कर्म कुर्युस्ते सन्दिग्धे निर्णयं तथा ॥

ग्रामश्रेणिगणानां च सङ्केतः समयक्रिया ।
बाधाकाले तु सा कार्या धर्मकार्ये तथैव च ॥

[1]चाटचौरभये बाधा[2] सर्वसाधारणी स्मृता ।
तत्रोपशमनं[3] कार्यं सर्वैर्नैकेन केनचित् ॥

कोशेन लेख्यक्रियया मध्यस्थैर्वा परस्परम् ।
विश्वासं प्रथमं कृत्वा कुर्युः कार्याण्यनन्तरम् ॥

विद्वेषिणो व्यसनिनो [4]जनसंत्रासभीरवः ।
लुब्धातिवृद्धा बालाश्च न कार्याः कार्यचिन्तकाः ॥

शुचयो वेदधर्मज्ञा दक्षा दान्ताः कुलोद्भवाः[5] ।
सर्वकार्यप्रवीणाश्च कर्तव्याश्च [6]महत्तराः ॥

[7]सप्त वा पञ्च वा कार्याः समूहहितवादिनः ।
कर्तव्यं वचनं तेषां ग्रामश्रेणिगणादिभिः ॥

1. *Ibid.*,–वधे चौरभये; चाटचौरभये–अपरार्कः वाटचौरभये-वि. र.

2. A. S. B., S. B. (a) and S. B. (b)–वादा; बाधाः–ज, द; अपरार्कः. वाचा–उ.

3. A. S. B., S. B. (a), ज, and द–तत्रापि गमनं

4. शालीनालसभीरवः–अपरार्कः, ७९२; वि र., १७८., A. S. B., S. B. (a), S. B. (b), ज, द.

5. कुलोद्गताः–वि, र.

6. महत्तमाः–द, अपरार्कः.

7. द्वौ त्रयः पञ्च वा–A. S. B., S. B. (a), S. B. (b), स, B. J., ज, द., वि. र., १७८.

'भाव्यम्' राज्ञ आयविशेषः[1] ।

<u>याज्ञवल्क्यः</u> [२, १८८]

कर्तव्यं वचनं तेषां[2] समूहहितवादिनाम् ।
यस्तत्र विपरीतः स्यात्स दाप्यः प्रथमं दमम् ॥

<u>कात्यायनः</u> [६७१]

युक्तियुक्तं तु[3] यो हन्याद्वक्तुर्यो नावकाशदः ।
अयुक्तं चैव यो ब्रूयाद्दाप्य [4]उत्तमसाहसम् ॥

<u>याज्ञवल्क्यः</u> [२, १९२]

श्रेणिनैगमपाखण्डगणानामप्ययं विधिः ।
भेदं चैषां नृपो रक्षेत्पूर्ववृत्तिं च पालयेत्[5] ॥

'श्रेणयः' समानकर्मशिल्पोपजीविनः कारवः। 'नैगमः' नानापौरसमूहः। 'पाखण्डः' प्रव्रज्यावसितः। 'गणो' ब्राह्मणसमूहः ।

1. This line is omitted in ज, द, स.

2. A. S. B., S. B. (a), S. B. (b), ज, स, द-सर्वैः for तेषां.

3. च-द.

4. A. S. B., S. B. (a), S. B. (b), ज, स-प्राप्नुयात् पूर्वसाहसम्.

5. कर्मकरादिशिल्पिसमूहः 'श्रेणिः' । सार्थवाहादिसमूहो 'नैगमः' । गुग्गुलिकादिसमुदायः 'पाखण्डाः' । वणिक्समूहो 'गणः', हस्त्यारोहादिसमूह इत्यन्ये । पूगादिलक्षणार्थो वा गणशब्दः—(**विश्वरूपः**) ॥ एकपण्यशिल्पोपजीविनः 'श्रेणयः' । 'नैगमाः' वेदस्याप्तप्रणीतत्वेन प्रामाण्यमिच्छन्ति पाशुपतादयः । 'पाखण्डिनो' ये वेदस्य प्रामाण्यमेव नेच्छन्ति नग्नाः सौगतादयः । 'गणो' व्रातः, आयुधीयानामेककर्मोपजीविनाम् ॥ (**मिताक्षरा**) "नानायुधधरा व्रातास्समवेतास्तु कीर्तिताः । कुलानां हि समूहस्तु गणस्य परिकीर्तितः" इति [**स्मृतिचन्द्रिका**, pp. 523–524] ॥ 'पाषण्डाः' वैदिकमार्गद्वेषिणः क्षपणकादयः । 'नैगमाः' सार्थिका वणिज इति **मदनरत्ने**, वेदप्रामाण्याभ्युपगन्तारः पाशुपतादयः इति **मिताक्षरायाम्** (**व्यवहारप्रकाशः**, ४२३.)

नारदः [१३, २२]

पाखण्डनैगमश्रेणिपूगव्रातगणादिषु ।
संरक्षेत् समयं राजा दुर्गे जनपदे तथा[1] ॥

यो धर्मः समयश्चैषामुपस्थानविधिश्च यः ।
यश्चैषां वृत्त्युपादानमनुमन्येत तत्तथा ॥

'पूगो' वणिगादिसमूहः । 'व्रातः' नानायुधधरसमूहः । आदिशब्देनात्र सङ्गुल्मवर्गा उच्यन्ते[2] ॥

कात्यायनः [६६८]

समूहानां तु[3] यो धर्मस्तेन धर्मेण ते सदा ।
प्रकुर्युः सर्वकर्माणि स्वधर्मेषु व्यवस्थिताः ॥

याज्ञवल्क्यः [२, १८५]

निजधर्माविरोधेन यस्तु सामयिको भवेत्[4] ।
सोऽपि यत्नेन[5] संरक्ष्यो धर्मो राजकृतश्च यः[6] ॥

1. 'नैगम'श्चात्र ब्राह्मणसमूहः । पूगो' ग्रामेयकादिसमूहः । शस्त्रकर्तृसमूहो 'व्रातः'। किं च भेदश्चैषामन्योन्यं समुदायिनां स राज्ञा रक्षणीयः (विश्वरूपः) । 'पाषण्डाः' वेदोक्तलिङ्गधारिव्यतिरिक्ताः सर्वे लिङ्गिनः । तेषु मठादिहिता चरणाद्याः समयास्सन्ति । 'नैगमाः' सार्थवणिक्प्रभृतयः । तेषु 'सकञ्चुकसंदेशहरपुरुषतिरस्कारिणो दण्ड्या' इत्येवमादयो बहवः समया विद्यन्ते । 'श्रेणयः' एकशिल्पोपजीविनः कुविन्दादयः । तासु 'इदमनयैव श्रेण्या विक्रेय'मित्यादिकाः समयास्सन्ति । 'पूगाः' हस्त्यश्वारोहकादयः । 'व्रातगण' शब्दौ कात्यायनेन [६७५] निर्दिष्टौ ।

2. वर्गादय उच्यन्ते-बि.

3. च-द.

4. लभेत्-ज, द, स, B. J.

5. धर्मेण-A. S. B., S. B. (a), ज, द.

6. श्रुतिस्मृत्युक्तो 'निजधर्मः' । 'सामयिकः' स्वपरिभाषाकृतः (विश्वरूपः) । यश्च राज्ञा कृतो निजधर्माविरोधेनैव यः सामयिको धर्मो 'यावत् पथिकं भोजनं देयम्', 'अस्मादरातिमण्डले तुरगादयो न प्रस्थापनीया इत्येवंरूपः सोऽपि यत्नेन रक्षणीय इत्यर्थः (व्यवहारप्रकाशः ४२४)

कात्यायनः [६६९, ६७०]

अविरोधेन धर्मस्य निर्गतं राजशासनम् ।
तस्यैवाचरणं पूर्वं कर्तव्यं तु नृपाज्ञया ॥

राज्ञा प्रवर्तितान् धर्मान् यो नरो नानुपालयेत् ।
[1]गर्ह्यः स पापी दण्ड्यश्च लोपयन् राजशासनम् ॥

बृहस्पतिः [१७, ११-१४]

[2]सभाप्रपादेवगृहतटाकारामसंस्कृतिः ।
तथानाथदरिद्राणां संस्कारो यजनक्रिया ॥

कुल्यायननिरोधश्च[3] कार्यमस्माभिरंशतः ।
[4]यत्र तल्लिखितं पत्रे धर्म्या सा समयक्रिया ॥

पालनीया समस्तैस्तैर्यः[5] समर्थो विसंवदेत् ।
सर्वस्वहरणं दण्डस्तस्य निर्वासनं पुरात् ॥

[6]तत्र भेदमुपेक्षां वा यः कश्चित्कुरुते नरः ।
चतुस्सुवर्णाः षण्णिष्कास्तस्य दण्डो विधीयते ॥

1. स, cites this half-verse from बृहस्पति; 'ग्राह्यः स पापो' इति वि. र., १८०.

2. सभाप्रजादेवशादितडागारामसंस्थितिः–ज.

3. Mss. corrupt; *Vīramitrodaya* (p. 425) specifically notes "कुल्यायननिरोधश्चेत् इति कल्पतरौ पाठः", and it adds–"कुल्यायननिरोधः कुल्यायाः प्रवर्तनप्रतिबन्धो. The reading followed by Mitramiśra and स is कुलायननिरोधश्च; कुल्यानयनरोधं च–बि.

4. यत्रैतल्लिखितं पत्रे–द, बि, स.

5. स्तु for स्तै–द, स.

6. B. J.–तत्र अधर्ममपेक्षां

मनुः [८, २१९ २२१]

[1]यो ग्रामदेशसङ्घानां कृत्वा सत्येन संविदम् ।
विसंवदेन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत् ॥

[2]निगृह्य दापयेच्चैनं समयव्यभिचारिणम् ।
चतुःसुवर्णान् [3]षण्णिष्कांच्छतमानं च राजतम् ॥

एवं [4]दण्डविधिं कुर्याद्धार्मिकः पृथिवीपतिः ।
ग्रामजातिसमूहेषु समयव्यभिचारिणाम् ॥

'शतमानं च' विंशत्यधिकरक्तिका[5] शतत्रयेण संपद्यते ।

नारदः [१३, ६]

पृथग्गणांश्च ये भिन्द्युस्ते विनेया विशेषतः ।
आवहेयुर्भयं घोरं [6]व्याधिवत्ते ह्युपेक्षिताः ॥

याज्ञवल्क्यः [२, १८७]

गणद्रव्यं[7] हरेद्यस्तु संविदं लङ्घयेच्च[8] यः ।
सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत्[9] ॥

1. 'देशो' ग्रामसमूहः । एकधर्मानुगतानां नानादेशनिवासिनां समूहः 'सङ्घः' । (वि. र., १८१.)

2. प्रगृह्य–स.

3. षष्टिं वा–द.

4. धर्मविधिं–वि. र., १८१.

5. रत्तिका for रक्तिका–बि.

6. A. S. B. and S. B. (a)–बाधन्ते ह्युपेक्षिताः; बाधते ते ह्युपेक्षिताः–ज.; बाधन्ते ते ह्युपेक्षिताः–द.; ते विनेया ह्युपेक्षिताः–स.

7. ग्रामद्रव्यं–ज, द.

8. तु–ज, द.

9. यो गणद्रव्यं हरेत्, धर्माविरोधिनीं संविदं परिभाषां समूहकृतां लङ्घयेत, तमपहृत्य सर्वस्वं राष्ट्राद्राजा विप्रवासयेत् । तच्चापहृत्य समूहायैवार्पयेत् । न तु स्वयं गृह्णीयात् । कृत्वेति वचनात् कर्तैव राजा न गृहीतेति अवगम्यते ॥ (विश्वरूपः)

कात्यायनः [६७२]

साहसी भेदकारी च गणद्रव्यविनाशकः ।
उच्छेद्याः सर्व एवैते विख्याप्यैवं नृपैर्भृगुः ॥

बृहस्पतिः [१७, १५-२०]

यस्तु साधारणं हिंस्यात्क्षिपेत्त्रैविद्यमेव च ।
[1]संवित्क्रियां विहन्याच्च स निर्वास्यस्ततः पुरात् ॥

अरुन्तुदः सूचकश्च भेदकृत्साहसी तथा ।
श्रेणीपूगनृपद्विष्टः[2] क्षिप्रं निर्वास्यते [3]ततः[4] ॥

कुलश्रेणिगणाध्यक्षाः पुरदुर्गनिवासिनः ।
वाग्धिग्दमं[5] परित्यागं प्रकुर्युः [6]पापकर्मणाम् ॥

तैः कृतं यत्स्वधर्मेण निग्रहानुग्रहं नृणाम् ।
तद्राज्ञाप्यनुमन्तव्यं[7] निसृष्टार्था[8] हि ते स्मृताः ॥

बाधां कुर्युर्यदैकस्य संभूता[9] द्वेषसंयुताः ।
राज्ञा तु[10] विनिवार्यास्ते[11] शास्याश्चैवानुबन्धिनः ॥

मुख्यैः सह समूहानां विसंवादो यदा भवेत् ।
तदा विचारयेद्राजा स्वमार्गे स्थापयेच्च तान् ॥

1. यः स्वक्रियां–स.
2. नृपद्वेष्टा–द, B. J.
3. यतः–स.
4. 'अरुन्तुदो' मर्मस्पृक् । 'सूचकः' पिशुनः–वि. र., १८२.
5. A. S. B.–वाग्विक्रमं ; S. B. (b)–वाग्वित्समं ; 'वाक्धिग्दमं' वाचा धिक्कारलक्षणं दण्डम्—(वि. र., १८२)
6. द, B. J.–पापकर्मिणाम् ; प्रकुर्यात् पापकर्मणः–स.
7. गन्तव्यं–द.
8. 'निसृष्टार्थाः' सन्दिष्टकृत्याः (वि. र., १८३)
9. संभूताद्वै प्रसंयुताः–द.
10. ते for तु–द, स, वि. र.
11. स्तु–द, स, वि. र.

नारदः [१३, ५]

मिथः सङ्घातकरणमहेतौ [1]शस्त्रचारणम् ।
परस्परोपघातं च तेषां[2] राजा न मर्षयेत् ॥

कात्यायनः [६७३]

एकपात्रेऽथ पङ्क्त्यां वा संभोक्ता येन यो भवेत् ।
[3]अकुर्वन् स तथा दण्ड्यस्तस्य [4]दोषमदर्शयन् ॥

बृहस्पतिः [१७, २२]

संभूयैकमतिं[5] कृत्वा राजभाव्यं हरन्ति ये ।
ते तदष्टगुणं दाप्या वणिजश्च पलायिनः ॥

नारदः [१३, ४, ७]

[6]प्रतिकूलं च यद्राज्ञः प्रकृत्यवमतं च यत् ।
बाधकं च यदर्थानां तत्तेभ्यो विनिवर्तयेत् ॥

दोषवत्करणं यत्स्यादनाम्नायप्रकल्पितम् ।
प्रवृत्तमपि तद्राजा श्रेयस्कामो निवर्तयेत्[7] ॥

1. शस्त्रधारणम्–द, ज, स, बि, B. J., वि. र., १८३.
2. 'तेषां' नारदपूर्वोक्तपाखण्डादीनाम् । (वि. र., १८३)
3. अकुर्वंस्तं तथा–द. 4. दोषममर्शयेत्–स.
5. मतं–स्मृ. च., p. 531; वि. र., १८४; तमं–अपरार्कः, ७९४.
6. 'नानुकूलं' इति मुद्रितनारदीये (पृ. १६३)
7. 'प्रकृत्यवमतं' स्वभावतो गर्हितम् । 'अर्थानां बाधकं' द्यूतादि । 'दोषवत्करणं' अनिष्टफलाकृतिः । 'अनाम्नायप्रकल्पितं' आगमाप्रसिद्धम् । 'तेभ्यः' पाषण्डादिभ्यः ॥ (विवादरत्नाकरः, १८४)

'अत्रेदं निर्वाच्यम् । पाषण्डादिभिः या या संवित् मिलित्वा कृता सा सा एव चेद्रक्षणीया । तदतिक्रमे तु राज्ञा दण्ड्याः । तदा 'वयं सर्वे राज्ञे प्रजानां करदानं वारयाम', 'अस्माभिः सर्वदा नग्नैर्भाव्यम्', 'द्यूतं चरिष्याम', 'वेश्यां रमयिष्याम' 'राजपथे सवेगं धावाम' 'शारदोटकस्थलं पूजयाम' इत्यादिप्रतिज्ञाऽप्यवश्यं रक्षन्तामिति तन्निरासाय वचनमिदमिति ॥ (विवादभङ्गार्णवः, ३, ३, २८)

'दोषवत्करणं' दुष्टा क्रिया। 'अनाम्नायप्रकल्पितं' पारम्पर्यसिद्धं[1] यत्र भवति।

याज्ञवल्क्यः [२, १८९-१९०]

समूहकार्य आयातान्[2] कृतकार्यान्विसर्जयेत्।
स दानमानसत्कारैः पूजयित्वा महीपतिः॥

समूहकार्यप्रहितो यल्लभेत्तत्तदर्पयेत्[3]।
एकादशगुणं दाप्यो यद्यसौ नार्पयेत्स्वयम्॥

[4]बृहस्पतिः [१७, १३-१५]

ततो [5]लभेत यत्किंचित्सर्वेषामेव तत्समम्।
षाण्मासिकं मासिकं वा विभक्तव्यं यथांशतः॥

देयं वा [6]निःस्ववृद्धान्धस्त्रीबालातुररोगिषु।
सांतानिकादिषु तथा [7]धर्म एष सनातनः[8]॥

[9]यत्तैः प्राप्तं रक्षितं वा गणार्थे वाप्यृणं कृतम्[10]।
राजप्रसादलब्धं च सर्वेषामेव तत्समम्॥

1. यंप्रसिद्धं–द.

2. B. J.–आयातः; आयाताः–ज, द.

3. च तदर्पयेत्–द; त तदर्पयेत्–बि, विश्वरूपः, वि. र., १८४.

4. 'राजाधिकारे बृहस्पतिः' इति, (वि. र., १८५), A. S. B., S. B. (a) and द.

5. लभ्येत–वि. र., १८५.

6. बालिशवृद्धान्ध–B. J., वि. र.; देयं स्वामिस्ववृद्ध्यर्थम्–ज, द.

7. एष धर्मः–बि, वि. र.

8. आतुरादन्यो रोगी। हलायुधेन तु आतुर इत्यत्र 'अकर' इति पठितम्, 'अकरो' हस्तशून्य इति व्याख्यातम्॥ (विवादरत्नाकरः, १८५)

9. 'यत्नैः' इति अपरार्कपाठः (७९४)

10. गणार्थे वा पणं कृतम्–उ, गणार्थे वा प्रकल्पितम्–वि. र., १८५; गणार्थे वा पणं कृतम्–अपरार्कः, ७९४.

कात्यायनः [६७४-६७६]

गणमुद्दिश्य यैः किंचित्कृत्वर्णं[1] भक्षितं भवेत् ।
आत्मार्थं विनियुक्तं वा देयं तैरेव[2] तद्भवेत् ॥

गणानां श्रेणिवर्गाणां[3] गताः स्युर्येऽपि[4] मध्यताम् ।
प्राक्तनस्य धनर्णस्य समांशाः सर्व एव ते ।

तथैव भोज्यवैभाज्यदानधर्मक्रियासु च ॥
समूहस्थोंऽशभागी स्यात्प्रगतस्त्वंशभाग् न तु ।

[5]इति महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेवमहासान्धिविग्रहिकेण
भट्टहृदयधरात्मजेन भट्टश्रीमल्लक्ष्मीधरेण विरचिते
कृत्यकल्पतरौ व्यवहारकाण्डे
संविद्व्यतिक्रमपर्व ॥

---

1. कृत्वार्णं–द.
2. 'तैरेव' तद्देयं न संघेन (वि. र.)
3. वर्णानां–द.
4. तु–द, स.
5. A. S. B., ज, द and S. B. (b); इति महासान्धिविग्रहिक etc.,

६५

# अथ विक्रीयासंप्रदानम्

तत्र नारदः [११, १-५]

विक्रीय पण्यं मूल्येन [1]क्रेतुर्यन्न प्रदीयते ।
विक्रीयासंप्रदानं तद्विवादपदमुच्यते ॥

लोकेऽस्मिन् द्विविधं द्रव्यं [2]स्थावरं जङ्गमं तथा ।
क्रयविक्रयधर्मेषु सर्वं तत्पण्यमुच्यते ॥

षड्विधस्तस्य [3]विबुधैर्दानादानविधिः स्मृतः ।
गणिमं तुलिमं मेयं क्रियया रूपतः श्रिया[4] ॥

विक्रीय पण्यं मूल्येन [5]क्रेतुर्यो न प्रयच्छति ।
स्थावरस्य क्षयं[6] दाप्यो जङ्गमस्य क्रियाफलम्[7] ॥

[8]अर्घश्चेदपचीयेत सोदयं पण्यमावहेत् ।
स्थायिनामेष नियमो दिग्लाभो दिग्विचारिणाम् ॥

1. 'क्रेत्रे' इति मु. ना. स्मृ., १५७.  2. जङ्गमं स्थावरं-मु. ना. स्मृ.

3. तस्य तु बुधैः-मु. ना. स्मृ; तस्य च बुधैः-वि. र., १८७.

4. 'गणिमं' पूगादि । 'तुलिमं' सुवर्णादि । 'मेयं' धान्यादि । 'क्रियया' इति भारवहनादिक्रियया क्रीयमाणं वृषभादि । 'रूपतो' लावण्यतः क्रीयमाणमङ्गनादि । 'श्रिया' दीप्त्या क्रीयमाणं मुक्तादि ॥ (वि. र., १८७)

5. क्रेत्रे-मु. ना. स्मृ.; क्रियया न-वि. र., १८७.

6. स्थावरस्योदयं-मु. ना. स्मृ., १५८.

7. 'क्षयः' सस्याद्युपघातेनोपक्षयः । 'क्रिया' भारवहनादिका । 'फलं' क्षीरादि-वि. र., १८८.

8. A. S. B., द and S. B. (a)-अर्वाक् चेत्, which is the reading of the *Kalpataru*, specifically noticed by व्यवहारप्रकाश, ४१८—"अर्वाक् चेदपचीयेत इति कल्पतरौ पाठः"; S. B. (b) has अर्घश्चेत्, which is the reading adopted by व्यवहारप्रकाश; B. J. reads अर्घाश्चेदवहीयेत; अर्घाश्चेदपचीयेत इति वि. र., १८८.

'गणिमं' क्रमुकफलादि । 'तुलिमं' कुङ्कुमादि । 'मेयं' शाल्यादि[1] । 'क्रियया' वाहनदोहनादिकया । 'रूपतः' स्त्र्यादि । 'श्रिया' पद्मरागादि । 'स्थावरस्य' ग्रामक्षेत्रादेः । 'जङ्गमस्य' गवाश्वादेः । 'क्षयः' शस्याद्युपघातेनोपक्षयः । 'क्रिया' भारवहनादिका[2] । 'फलं' क्षीरादि ।

विष्णुः [५, १२७-१२८]

गृहीतमूल्यं [3]यः क्रेतुर्नैव दद्यात्तस्यासौ सोदयं दाप्यः । राज्ञा च पणशतं दण्ड्यः ।

मनुः [८, २२२, २२३, २२८]

क्रीत्वा विक्रीय वा किंचिद्यस्येहानुशयो भवेत् ।
सोऽन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीत वा[4] ॥

परेण तु दशाहस्य नादद्यान्नैव दापयेत् ।
आददानो ददच्चैव राज्ञा दण्ड्यः शतानि षट्[5] ॥

1. The present custom in Kāśī is to weigh grain, not to measure it!

2. B. J., A. S. B., and S. B. (a)-वाहनदोहनादिका-ज, *Vīramitrodaya,* p. 439, has—"क्रिया दोहवाह्यादिका"

3. यः पण्यं क्रेतु-द, स.

4. The purchaser can return within *ten* days of purchase articles which have not been used in the interval and which cannot deteriorate in quantity, quality or price. This rule is reconciled with Nārada (XII, 2-3) at the beginning of subsection ६६, p. 435, by taking पण्यं in the latter as merchandise, which is bought to be resold. *Mēdhātithi,* who cites this explanation, would leave each case to be settled by recognized local or trade usage. The seller can get back the article sold within this period, under this rule. Nārada limits returnability, *without deduction,* to the same day.

5. दशाहात् परतो न क्रीतानुशयः । जातानुशयश्चापि क्रेता विक्रेता वा यदि राजनि विवदतां तौ षट्शतानि दण्ड्यौ ॥ (मेधातिथिः)

यस्मिन्यस्मिन् कृते कार्ये यस्येहानुशयो भवेत् ।
तमनेन विधानेन धर्म्ये पथि निवेशयेत्[1] ॥

कात्यायनः [६८३, ६८४]

क्रीत्वा प्राप्तं[2] न गृह्णीयाद्यो न दद्याददूषितम् ।
स मूल्याद्दशभागं तु दत्वा स्वं द्रव्यमाप्नुयात् ॥

अप्राप्तेऽर्थे क्रियाकारे[3] कृते नैव प्रदापयेत् ।
एवं धर्मो दशाहात्तु परतोऽनुशयो न तु[4] ॥

'क्रियाकारे' साक्षिलेख्यादिके ।

नारदः [११, ६]

उपहन्येत वा पण्यं दह्येतापह्रियेत वा ।
विक्रेतुरेव [5]सोऽनर्थो विक्रीयासंप्रयच्छतः ॥

याज्ञवल्क्यः [२, २५६]

राजदैवोपघातेन पण्ये दोष उपागते ।
हानिर्विक्रेतुरेवासौ [6]विक्रीयासंप्रयच्छतः ॥

1. न केवलं वणिजां पण्यधर्मोऽयं दशाहिकोऽनुशयः, किं तर्हि, वेतनसंविद्वृद्धिप्रयोगादिषु 'यस्मिन् यस्मिन्निति' वीप्सया शेषकार्यपरिग्रहः । 'अनेन विधानेन' दशाहिकेन विधिना । धर्मादनपेतो 'धर्म्यः' । 'निवेशयेत्' स्थापयेत् राजा । अतिदेशोऽयम्—(मेधातिथिः)

2. 'प्राप्तं' स्ववशतां नीतम् । (वि. र., १८९)

3. क्रियाकाले-स्मृ. चं., p. 511; व्य. प्रकाशः, ४३९.

4. "अर्थक्रियाकालो दोह्यवाह्यादिपण्यस्य दोहनवाहनादिकालः । तस्मिन्नप्राप्ते सति 'अग्रहणे' अदाने वा कृतेऽपि नैव दशमं मूल्यभागं प्रदापयेत्, किन्तु तमदत्त्वैव स्वद्रव्यमाप्नुयात् । एवमुक्तो धर्मः दशाहात्प्रागर्थात्क्रयकालादूर्ध्वं वेदितव्यः । दशाहात्परतस्त्वनुशयो न कर्तव्यः । अनुशयनकालस्यातीतत्वात्" ॥ स्मृतिचन्द्रिका, (p. 511-512), Repeated almost *verbatim* by व्यवहारप्रकाश, ४३९.

5. सोढव्यो-द.

6. B. J., A. S. B., S. B. (a) S. B. (b) ज, द, and स-याचितस्याप्रयच्छतः; याति तस्याप्रयच्छतः-वि. र., १९०.

[1]नारदः [११, ७]

निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति ।
[2]मूल्यं तु द्विगुणं दाप्यो विनयं तावदेव तु ॥

बृहस्पतिः [१८, ३, ४]

ज्ञात्वा सदोषं यः पण्यं विक्रीणीताऽविचक्षणः[3] ।
तदेवं द्विगुणं दाप्यस्तत्समं विनयं तथा ॥

मत्तोन्मत्तेन विक्रीतं हीनमूल्यं तु यद्भवेत्[4] ।
अस्वतन्त्रेण मूढेन त्याज्यं तस्य पुनर्हरेत् ॥

याज्ञवल्क्यः [२, २५७]

अन्यहस्तेन[5] विक्रीतं दुष्टं वाऽदुष्टवद्यदि ।
विक्रीयते दमस्तत्र मूल्यात्तु द्विगुणो भवेत् ॥

नारदः [११, ८]

तथान्यहस्ते विक्रीय[6] योऽन्यस्मै तत्प्रयच्छति ।
सोऽपि तद्द्विगुणं दाप्यो [7]विनयं तावदेव तु[8] ॥

याज्ञवल्क्यः [२, ६१]

सत्यंकारकृतं द्रव्यं द्विगुणं प्रतिदापयेत् ॥

1. Omitted by ज, and supplied by ज, द, S. B. (a) and A. S. B.

2. स मूल्याद्द्विगुणं–(व्यवहारप्रकाशः, ४४०)

3. विक्रीणीते विचक्षणः (व्य. प्र. ४४१) ॥ 'विक्रीणीत' दोषमनुक्त्वा इति शेषः (वि. र, १९०)

4. भयेन वा–A. S. B., S. B. (a), ज, द, B. J., व्य. प्र., ४४१.

5. अन्यहस्ते तु–विश्वरूपः; अन्यहस्ते च–मिताक्षरा.

6. तथान्यहस्तविक्रीतं–मु. ना. स्मृ., १५९.

7. विनयं चैव राजनि–मु. ना. स्मृ., १५९.

8. अत्र पूर्वक्रयो बलवान् (वि. भङ्गार्णवः, ३, ३, ३९)

'सत्यंकारः' क्रयविक्रयसत्यापनार्थं यद्द्रव्यं दीयते तदुच्यते[1] ।

व्यासः

सत्यंकारं च यो दत्त्वा यथाकालं न दृश्यते ।
पण्यं भवेन्निसृष्टं तद्दीयमानमगृह्णतः ॥

'निसृष्टं' दत्तम्[2] ।

नारदः [११, ९]

दीयमानं न गृह्णाति [3]क्रीत्वा पण्यं च यः क्रयी ।
विक्रीणानस्तदन्यत्र विक्रेता नापराध्नुयात् ॥

याज्ञवल्क्यः [२, २५५]

विक्रीतमपि विक्रेयं[4] पूर्वक्रेतर्यगृह्णति ।
हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेत् ॥

नारदः[5]

दीयमानं न गृह्णाति क्रीतं पण्यं तु[6] यः क्रयी ।
स एवास्य भवेद्दोषो विक्रेतुर्योऽप्रयच्छतः ॥

1. यत्क्रेतुकामेन क्रयपरिस्थितये विक्रये समर्पितं तत् सत्यङ्कारपदार्थः । तस्माग्रे विक्रेता विक्रये विप्रतिपन्नो द्विगुणं क्रेत्रे दद्यादित्यर्थः ॥ (वि. र., १८१)

2. 'निसृष्टं' त्यक्तम् (वि. र., १९२)

3. क्रीतं पण्यं–मु. ना. स्मृ., १५९.

4. A. S. B., S. B. (a), S. B. (b), च, मिताक्षरा and वि. र. (१९२)–विक्रेयम्; other Mss. read विक्रीतम्

5. Ascribed to नारद by अपरार्क (८२९), स्मृ. चन्द्रि., p. 513, व्य. प्र., ४४० etc. but not traced in any printed texts of *Nāradasmṛti.*

6. च for तु–द, स्मृ. चं.

तथा [ना॰ स्मृ॰, ११, १०-१२]

दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्तितः ।
अदत्तेऽन्यत्र समयान्न विक्रेतुरतिक्रमः ॥

लाभार्थं वणिजां सर्वपण्येषु क्रयविक्रयः ।
स च लाभोऽर्घमासाद्य महान् भवति वा न वा ॥

तस्माद्देशे च काले च [1]वणिगर्घं समाश्रयेत् ।
न जैह्मेन प्रवर्तेत श्रेयानेवं वणिक्पथः[2] ॥

इति महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेवमहासान्धिविग्रहिकेण
भट्टहृदयधरात्मजेन भट्टश्रीमल्लक्ष्मीधरेण विरचिते
कृत्यकल्पतरौ व्यवहारकाण्डे
विक्रीयासंप्रदानम् ॥

---

1. प्रक्रमेताऽर्घविद्वणिक्–वि. र., १८३; A. S. B., S. B. (a), S. B. (b) and द; प्रक्रमेतार्घवित्स्वानुशयः–ज.

2. वणिक् यतः–द.

## ६६

# अथ क्रीत्वानुशयः

तत्र नारदः [१२, १-३]

क्रीत्वा मूल्येन यः पण्यं क्रीतं[1] न बहु मन्यते ।
क्रीतानुशय इत्येतद्विवादपदमुच्यते ॥

क्रीत्वा मूल्येन यः पण्यं दुष्क्रीतं मन्यते क्रयी ।
विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षतम् ॥

द्वितीयेऽह्नि ददत्क्रेता मूल्यं त्रिंशांशमावहेत्[2] ।
द्विगुणं तु तृतीयेऽह्नि परतः क्रेतुरेव तत्[3] ॥

कात्यायनः [६८६, ६८७]

[4]क्रीत्वा त्वनुशयात्पण्यं त्यजेद्दोषादृते यो नरः ।
[5]अदुष्टमेव काले तु स मूल्याद्दशमं वहेत् ॥

क्रीत्वा गच्छन्ननुशयं क्रयी हस्तमुपागते ।
षड्भागं [6]तत्र मूल्यस्य दत्वा क्रीतं त्यजेद्भृगुः[7] ॥

1. क्रेता–मु. ना. स्मृ. 2. ०माहरेत्–मु. ना. स्मृ.

3. विक्रयार्थं यद्द्रव्यं तत् 'पण्यम्' यद्विक्रीय तदुत्पन्नेन द्रव्यान्तरक्रयादिना पुरुषो व्यवहरति जीविकाधनमार्जयितुम्—तथा पणभूमौ प्रसारितमप्रसारितं च भवति वणिजाम् । तत्रेह 'पण्य' ग्रहणात् कश्चिद्विशेषो विवक्षितः । इतरथा क्रीत्वा मूल्येन इत्येतावदपेक्ष्यम् । 'कः पुनरसौ विशेषः?' उच्यते । यत् क्रीतमपि पण्यत्वमजहद्वणिग्भिः विक्रीयते । तर्हि विक्रयार्थमेव क्रीणन्ति । तेषां वणिजां इतरेतरं विक्रीणतां च नारदीयो विधिः, अन्येषां मानव [८, २२२] इति—[मेधातिथिः, मानव, ८, २२२]. Vide *supra*, p. 430.

4. 'क्रीत्वा चानुशयं पश्चात् त्यजेद्दोषादृते नरः' इति व्यवहारप्रकाशे श्लोकस्य पूर्वार्धः (पृ. ४३५)

5. अजुष्टमेव–व्य. प्र., ४३५. 6. तस्य–व्य. प्र., ४३५.

7. त्यजेन्नरः–व्य. प्र., ४३५; त्यजेद्बुधः–स्मृ. चं., p. 512.

याज्ञवल्क्यः [२, २५८]

क्षयं वृद्धिश्च वणिजा [1]पण्यानामविजानता ।
क्रीत्वा नानुशयः कार्यः कुर्वन् षड्भागदण्डभाक्[2] ॥

नारदः [१२, १६, १२, ४]

क्रीत्वा नानुशयं कुर्याद्वणिक् पण्यविचक्षणः ।
क्षयं वृद्धिं च[3] जानीयात्पण्यानां [4]यस्य यादृशी ॥

क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः ।
परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत्पुनः ॥

बृहस्पतिः [१८, ९]

परीक्षेत स्वयं पण्यमन्येषां च प्रदर्शयेत्[5] ।
परीक्षितं बहुमतं गृहीत्वा[6] न पुनस्त्यजेत् ॥

व्यासः

[7]चर्मकाष्ठेष्टकासूत्रधान्यासवरसस्य च ।
वस्त्रकुप्यहिरण्यानां सद्य एव परीक्षणम् ॥

नारदः [१२, ५, ६]

त्र्यहाद्दोह्यं परीक्षेत पञ्चाहाद्वाह्यमेव तु[8] ।
मुक्तावज्रप्रवालानां सप्ताहं स्यात्परीक्षणम् ॥

1. 'पण्यानां तु विजानता' इति विश्वरूपपाठः; पण्यानामभिजायते–स. पण्यानामभिजानतः इति विवादभङ्गार्णवपाठः ।

2. चन्द्रगत्यादिवशेन पण्यानमर्घहानिर्वृद्धिर्वा भवति । तच्चैवं विजानता वणिजा क्षयं वृद्धिं वा निरूप्याविरोधे सति 'क्रीत्वा' विक्रीय वा नानुशयः कार्यः । कुर्वतो वा पण्यमूल्यषड्भागो राजदण्डः ॥ (विश्वरूपः)

3. वृद्धिक्षयौ तु–मु. ना. स्मृ., १६२.

4. आगमं तथा–मु. ना. स्मृ.

5. प्रदर्शयन्–द.

6. प्रहीता–वि.

7. तृण–वि. र., १८६.

8. च for तु–द.

द्विपदामर्धमासं तु पुंसां तद्द्विगुणं स्त्रियः ।
दशाहः सर्वबीजानामेकाहो लोहवाससाम् ॥

[1]नारदोक्तक्रमेण परीक्षाकालमभिधाय—

बृहस्पतिः [१८, ७]

अतोऽर्वाक् पण्यदोषस्तु यदि संजायते क्वचित् ।
विक्रेतुः प्रतिदेयं तत् क्रेता मूल्यमवाप्नुयात् ॥

कात्यायनः [६८८]

अविज्ञातं तु यत्क्रीतं दुष्टं पश्चाद्विभावितम् ।
क्रीतं तत्स्वामिने देयं पण्यं कालेऽन्यथा न तु ॥

मनुः [८, २०३]

नान्यदन्येन संसृष्टं रूपं विक्रयमर्हति ।
न सावद्यं न च न्यूनं [2]न दूरे न तिरोहितम्[3] ॥

नारदः [१२, ७]

परिभुक्तं तु यद्वासः[4] क्लिष्टरूपं मलीमसम् ।
सदोषमपि तत्क्रीतं विक्रेतुर्न भवेत्पुनः ॥

[5]इति श्रीमहाराधिराजश्रीगोविन्दचन्द्रदेवमहासान्धिविग्रहिकेण
भट्टहृदयधरात्मजेन भट्टश्रीमल्लक्ष्मीधरेण विरचिते
कृत्यकल्पतरौ व्यवहारकाण्डे
क्रीत्वानुशयः

---

1. 'नारदोक्तक्रमेण' परीक्षाकालमुक्त्वा बृहस्पतिः—इति वि. र., १९९.

2. न दूरेण तिरोहितम्–द.

3. नान्यत् कुङ्कुमादिद्रव्यं (अन्येन) कुद्रव्येण तदाभासेन कुसुम्भादिना 'संसृष्टं' विक्रेयम् । सावद्यं चिरकालं भाण्डे स्थितत्वात् प्राप्तविभावम् । न च न्यूनं तुलामानादिना । दूरे दूरस्थितम् । तिरोहितं स्थगितं वस्त्रादिना ॥ (मेधातिथिः)

4. यत्स्वामी–स.

5. A. S. B., स, and S. B. (a) supply this colophon.

## ६७

# अथ सीमाविवादः

तत्र बृहस्पतिः [१९, १]

क्रयविक्रयानुशये विधिरेष [1]उदाहृतः ।
ग्रामक्षेत्रगृहादीनां[2] सीमावादं निबोधत ॥

नारदः [१४, १]

सेतुकेदारमर्यादाविकृष्टाऽकृष्टनिश्चये[3] ।
क्षेत्राधिकारो [4]यत्र स्याद्विवादः क्षेत्रजस्तु सः[5] ॥

अस्यार्थः—सेतुकेदारादिमर्यादादूरत्वसंनिहितत्वनिश्चये कर्तव्ये क्षेत्रविषयो विवादोऽसौ 'क्षेत्रज' उच्यत इति ।

कात्यायनः [७३२]

आधिक्यं न्यूनता ह्यंशे[6] अस्तिनास्तित्वमेव च[7] ।
[8]अभोगभुक्तिः सीमा च षड्विवादस्य हेतवः ॥

1. 'प्रकीर्तितः', 'प्रदर्शितः' इति वि. र., १९९.

2. 'गृहादीनां' इत्यादिशब्देन नगरदेशौ स्वीक्रियेते, तत्रापि सीमावादसद्भावात् । (स्मृ. चन्द्रिका, p. 545)

3. 'निर्णये' इति वि. र. पाठः

4. 'यस्तु' इति मु. ना. स्मृ., १६५.

5. 'सेतु'स्तोयप्रतिबन्धको बन्धः । 'केदारमर्यादा' केदारसीमा । 'विकृष्टं' खिलं सदुत्कृष्टम्, 'अकृष्टं' प्रहतं सदपकृष्टम् । एषां 'निर्णये' निश्चयार्थम् । यत्र विवादे क्षेत्रमधिक्रियते स विवादः 'क्षेत्रज' उच्यते (वि. र., १९९) ॥ 'केदारः' क्षुद्रसेतुभिः कल्पितो देशः, क्षेत्रमात्रं वा । 'मर्यादा' क्षेत्रादिसीमा । 'विकृष्टो' लाङ्गलादिनोद्भेदितो देशः । 'अकृष्टः' खिलो देशः । तेषां निश्चयाः 'क्षेत्राधिकाराः' क्षेत्रविषयाः यत्र भवेयुः स 'क्षेत्रजो विवादः'—स्मृतिचन्द्रिका, व्यव. का., १०.

6. 'न्यूनता चास्ते' इति वि. र. पाठः (१९९)

7. 'वा'–स.

8. 'अभोगे भुक्तिः'–वि. र., १९९.

'अभोगभुक्तिः' प्रागविद्यमानस्य क्षेत्रादेर्भुक्तिः ।

मनुः [८, २४५]

सीमां प्रति समुत्पन्ने विवादे ग्रामयोर्द्वयोः ।
[1]ज्येष्ठे मासि नयेदेनां[2] संप्रकाशेषु सेतुषु ॥

बृहस्पतिः [१९, २]

निवेशकाले कर्तव्यः[3] सीमाविधिविनिश्चयः ।
प्रकाशोपांशुचिह्नैश्च लक्षितः संशयापहः[4] ॥

मनुः [८, २४६-२४८]

सीमावृक्षांश्च कुर्वीरन् न्यग्रोधाश्वत्थकिंशुकान् ।
शाल्मलीसालतालांश्च क्षीरिणश्चैव पादपान् ॥

1. 'ज्येष्ठे' इति 'उ' प्रभृतयः, मेधातिथिश्च; 'ज्यैष्ठे' इति जोलिपाठः (J. Jolly).

2. 'नयेत्सीमां' इति मेधातिथिपाठः; 'नयेदेनां' इति वि. र.

3. कर्तव्या—ज.

4. This śloka is missing in the Udaipur manuscript, but its presence in the original is proved by the fragment 'निवेशकाले कर्तव्यः', followed by 'क्षांश्च कुर्वीरन्' which belongs to the verse of मनु which follows. The Udaipur copy gives correctly the opening word of the verse of Manu *i. e.* सीमावृक्षांश्च but omits मनुः before it. It has accordingly resulted in the ślokas of Manu, which begin here, being ascribed to Bṛhaspati in my edition of that Smṛti (G.O.S., No. LXXXV) p. १५९. The A.S.B. group of manuscripts add the commentary following to Bṛhaspati's śloka. It is missing, along with the śloka in the Udaipur copy as well as the Bikanir manuscript, and has been rejected as probably not Lakṣmidhara's, and as borrowed by the A. S. B. group from विवादरत्नाकर, in which it occurs (पृ. १००):—'प्रकाशचिह्नैः' वृक्षादिभिः । 'उपांशुचिह्नैः' करीषेष्टकादिभिः ।

गुल्मान्वेणूंश्च[1] विविधान् शमीवल्लीस्थलानि च ।
शरान् कुब्जकगुल्मांश्च तथा सीमा न नश्यति ॥

तडागान्युदपानानि [2]सरित्प्रस्रवणानि च ।
सीमासन्धिषु कार्याणि देवतायतनानि च[3] ॥

**बृहस्पतिः** [१९, ८-९]

[4]वापीकूपतडाकानि चैत्यारामसुरालयाः ।
स्थलनिम्ननदीस्रोतःशरगुल्माश्मराशयः ॥

प्रकाशचिह्नान्येतानि सीमायां कारयेत्सदा ।
निहितानि तथान्यानि यानि भूमिर्न भक्षयेत् ॥

**मनुः** [८, २४९-२५१]

[5]उपच्छन्नानि चान्यानि सीमालिङ्गानि कारयेत् ।
सीमाज्ञाने नृणां[6] वीक्ष्य लोके नित्यविपर्ययम् ॥

[7]अश्मनोऽस्थीनि गोवालांस्तथा भस्मकपालिकाः ।
करीषमिष्टकाङ्गारांश्छर्करा वालुकाश्च ह ॥

1. गुल्मानन्यांश्च–वि. र., २००.

2. वाप्यः प्रस्रवणानि च–**मनुः** (ed. Jolly), **मेधातिथिः**, A. S. B., S. B. (a), B. J., ज, द and **वि. र.**, २००.

3. 'गुल्माः' प्रकाण्डरहिताः सटाः। 'वल्ल्यो' गुडूच्यादयः। 'स्थलानि' कृत्रिममृत्पिण्डाः। कुब्जरूपाः गुल्माः। 'तडागानि' महाम्भांसि। 'उदपानं' कूपः। 'प्रस्रवणानि' नदीव्यतिरिक्तस्रोतांसि। (**वि. र.**, २००)

4. कूपवापीतडाकानि–**वि. र.**, २०१, उ, स.

5. उपच्छन्नानि–उ.

6. नृणां–B. J., ज, स, द, मु. **मनु**, **वि. र.**, २०१; उ, A. S. B. etc.–**तृणम्**

7. **अश्मनोऽस्थीनि**–A. S. B., S. B. (a), S. B. (b), B. J., **ज, द** and **मेधातिथिः**; **श्मशानोऽस्थीनि**–उ.

यानि चैवंप्रकाराणि कालाद्भूमिर्न भक्षयेत् ।
तानि सन्धिषु [1]सीमायामप्रकाशानि कारयेत्[2] ॥

<u>बृहस्पतिः</u> [१९, २०-२१]

करीषास्थितुषाङ्गारशर्कराश्मकपालिकाः ।
सिकतेष्टकगोवालकार्पासास्थीनि भस्म च ॥

प्रक्षिप्य कुम्भेष्वेतानि सीमान्तेषु निधापयेत् ।
ततः पौगण्डबालानां प्रयत्नेन प्रदर्शयेत् ॥

वार्धक्ये च शिशूनां तु[3] दर्शयेयुस्तथैव च ।
एवं परम्पराज्ञाने[4] सीमाभ्रान्तिर्न जायते ॥

<u>मनुः</u> [८, २५२]

एतैर्लिङ्गैर्नयेत्सीमां राजा विवदतां नृणाम् ।
[5]पूर्वभुक्त्या च सततमुदकस्यागमेन च ॥

'समुन्नयेयुः सीमानं'इत्यनुवृत्तौ <u>नारदः</u>[6] [१४, ६]

निम्नगापहृतोत्सृष्टनष्टचिह्नासु भूमिषु ।
तत्प्रदेशानुमानैश्च प्रमाणैर्लिङ्गदर्शनैः[7] ॥

1. सीमाया अप्रकाशानि–वि. र., २०१

2. 'उपच्छन्नानि' आवृतानि । 'अन्यानि' वक्ष्यमाणानि अश्मादीनि । 'कपालिकाः' कर्पराः । 'अङ्गाराः' निर्वाणोल्मुकाः । 'शर्कराः' क्षुद्रमाण्डादयः । (वि. र., २०१) । पाषाणकठिना मृदः 'शर्कराः' । 'कपालिकाः' कलशैकदेशाः । 'करीषं' शुष्कगोमयम् । 'अङ्गाराः' अग्निदग्धाः काष्ठावयवाः । (मेधातिथिः)

3. ते for तु–द, वि. र., २०२; 'ते' पोगण्डबालाः इति व्याख्यातम्

4. परस्परज्ञाने–वि.

5. पूर्वभुक्त्यापि सततं–द.

6. वि. र., २०३.

7. भोगदर्शनैः–मु. ना. स्मृ., १६५; A. S. B., S. B. (a), S. B. (b), ज, द, स, बि, वि. र., २०३.

मनुः [८, २५३]

यदि संशय एव स्याल्लिङ्गानामपि दर्शने ।
साक्षिप्रत्यय एव स्याद्विवादे सीमनिश्चयः ॥

कात्यायनः [७३३]

तस्मिन् भोगः प्रयोक्तव्यः स च साक्षिषु तिष्ठति ।
लेख्यारूढश्चेतरश्च साक्षी मार्गद्वयान्वितः ॥

मनुः [८, २५४, २५५, २५८]

[1]ग्रामेयककुलानां च[2] समक्षं सीमसाक्षिणः[3] ।
प्रष्टव्याः सीमलिङ्गानि तयोश्चैव विवादिनोः ॥

ते पृष्टास्तु यथा ब्रूयुः [4]समस्ताः सीम्नि निश्चयम् ।
तथा [5]तं च निबध्नीयात्समस्तांश्चैव नामतः ॥

साक्ष्यभावे तु चत्वारो ग्रामाः सीमन्तवासिनः ।
सीमाविनिर्णयं कुर्युः प्रयता राजसंनिधौ ॥

'ग्रामेयकः' ग्राम्यः[6] ।

याज्ञवल्क्यः [२, १५२]

सामान्ता वा समग्रामाश्चत्वारोष्टौ दशापि च[7] ।
रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः ॥

1. A. S. B. and S. B. (a)–ग्रामेयक; प्रमेयककुलानान्तु–द, ज.

2. तु for च–द.

3. क्षीणसाक्षिणः–द.

4. सामन्ताः–A. S. B., S. B. (a); ते पृष्टास्तु तथा ब्रूयुस्सम्मताः सीमनिश्चयम्–ज; समस्ताः सीमसाक्षिणः–वि; समस्ताः सीमनिश्चयम्–स.

5. तत्र–स.

6. 'ग्रामेयककुलानां' ग्रामीणपुरुषसमूहानाम्—मेधातिथिः

7. वा–द, स, वि. र., १०४.

कात्यायनः[1]

तेषामभावे सामन्ता मौलवृद्धोद्धृतादयः ।
स्थावरे षट्प्रकारेऽपि [2]कार्या नात्र विचारणा ॥

क्षेत्रवास्तुतडागेषु कूपोपवनसेतुषु ।
द्वयोर्विवादे सामन्तैः[3] प्रत्ययः सर्ववस्तुषु ॥

सामन्तभावात्सामन्तैः कुर्यात्क्षेत्रविनिर्णयम्[4] ।
ग्रामसीमासु च तथा तद्वन्नगरदेशयोः ॥

स्वार्थसिद्धौ[5] प्रदुष्टेषु सामन्तेष्वर्थगौरवात् ।
तत्संसक्तैस्तु[6] कर्तव्य उद्धारो नात्र संशयः ॥

संसक्तसक्तदुष्टेषु तत्संसक्ताः प्रकीर्तिताः ।
कर्तव्या न प्रदुष्टास्तु राज्ञा धर्मं विजानता ॥

त्यक्त्वा दुष्टांस्तु सामन्तानन्यान्मौलादिभिः सह ।
संमिश्र्य[7] कारयेत्सीमामेवं धर्मविदो विदुः ॥

सामन्ताः साधनं पूर्वमनिष्टोक्तौ गुणान्विताः ।
द्विगुणास्तूत्तरा ज्ञेयास्ततोऽन्ये त्रिगुणा मताः ॥

'तत्संसक्ताः' सामन्तप्रत्यासन्नाः ।

1. का. स्मृ. सार., ७३७, ७३४, ७३८, ७३९, ७४०, ७४२, ७४६.

2. 'नात्र कार्या विचारणा'–वि. र., २०४; तेषां साक्षिणामभावे 'षट्प्रकारे' अंशन्यूनताधिक्यादिषट्प्रकारभूमिवादे (वि. र., २०५)

3. 'सामन्तः' इति वि. र. पाठः (२०५); 'सामन्तः' सीमान्तवासी.

4. क्षेत्रादिनिर्णयः–द.

5. स्वार्थसिद्ध्यै–द, बि.

6. तत्संयुक्तेषु–B. J.,; तत्संसक्तैः–ज, द, स.; तत्संयुक्तैस्तु–उ.

7. समीक्ष्य–B. J., वि. र., २०६.

शङ्खलिखितौ

गृहक्षेत्रयोर्विरोधे सामन्तप्रत्ययः । सामन्तविरोधे [1][अभिलेख्यप्रत्ययः । अभि]लेख्य विरोधे ग्रामनगरवृद्धश्रेणिप्रत्ययः । ग्रामनगरवृद्धश्रेणिविरोधे [2]दशवर्षानुभुक्तमन्यत्र राजविप्रस्वात् ।

नारदः [१४, २, ३]

क्षेत्रसीमाविरोधे[3] तु सामन्तेभ्यो विनिश्चयः ।
नगरग्रामगणिनो ये च वृद्धतमा नराः ॥

[4]ग्रामसीमासु च बहिर्ये स्युस्तत्कृषिजीविनः ।
गोपाः शाकुनिका व्याधा ये चान्ये वनगोचराः ॥

मनुः [८, २५९-२६०]

सामन्तानामभावे तु मौलानां सीमसाक्षिणाम् ।
इमानप्यनुयुञ्जीत पुरुषान्वनगोचरान्[5] ॥

[6]व्याधांश्छाकुनिकान् गोपान् कैवर्तान् मूलखानकान् ।
व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनगोचरान्[7] ॥

नारदः [१४, ४, ५]

समुन्नयेयुः [8]सीमानं लक्षणैरुपलक्षिताम् ।
तुषाङ्गारकपालास्थिकूपैरायतनैर्द्रुमैः ॥

1. [ ] restored from B. J., ज, वि. र., २०६.
2. दशवर्षभुक्तानुभुक्तमन्यत्र–ज, वि. र., २०६.
3. विवादेषु–मु. ना. स्मृ., १६५.
4. ग्रामसीमादिषु बहि–स.
5. ग्रामप्रतिष्ठानकाले भवा उत्पत्तिसहभुवो 'मौला' उच्यन्ते । ते च सामन्ताः नित्याः नित्यसन्निहितत्वात् ॥ (मेधातिथिः)
6. Śloka missing in the Udaipur Ms. only.
7. 'व्याधाः' मृगयाजीविनः । 'शाकुनिकाः' शकुनिसंबन्धिजीविनः । 'कैवर्ताः' दाशाः । 'मूलखानकाः' मूलं वृक्षादेः खनयन्ति स्थूलकाशादेः । 'व्यालग्राहाः' सर्पग्राहिणः । 'उञ्छवृत्तयो' दरिद्राः । 'अन्यांश्च' फलकुसुमेन्धनार्थिनः ॥ (मेधातिथिः)
8. ते सीमां–मु. ना. स्मृ., १६५.

[1]अभिज्ञानैश्च वल्मीकैः स्थलनिम्नोन्नतादिभिः ।
केदाराराममार्गैश्च पुराणैः सेतुभिस्तथा ॥

मनुः [८, २६१]

ते पृष्टास्तु यथा ब्रूयुः सीमासन्धिषु लक्षणम् ।
तत्तथा स्थापयेद्राजा धर्मेण ग्रामयोर्द्वयोः ॥

बृहस्पतिः [१९, ३१]

शपथैः शापिताः स्वैः स्वैर्ब्रूयुः सीम्नि विनिश्चयम् ।
दर्शयेयुर्निधानानि[2] तत्प्रमाणमिति स्थितिः ॥

[3]मनुः [८, २५६]

शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः ।
सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समञ्जसम्[4] ॥

नारदः [१४, ९-१०]

नैकः समुन्नयेत्सीमां नरः प्रत्ययवानपि ।
गुरुत्वादस्य[5] कार्यस्य क्रियैषा बहुषु स्थिता ॥

एकश्चेदुन्नयेत्सीमां सोपवासः समुन्नयेत् ।
रक्तमाल्याम्बरधरः क्षितिमारोप्य मूर्धनि[6] ॥

बृहस्पतिः

ज्ञातृचिह्नविनाशेऽपि एकोऽप्युभयसंमतः ।
रक्तमाल्याम्बरधरो मृदमादाय मूर्धनि ॥

1. अभिज्ञातैः–मु. ना. स्मृ., १६५.
2. 'निधानानि' सीमानिधीयमानानि तुषाराङ्गारादीनि सीमाचिह्नानि । (वि. र., २०८)
3. B. J. omits this quotation; वि omits 'मनुः' only.
4. स्वैः स्वैः सुकृतैः धर्मैः शापितास्ते–"धर्मा अस्माकं क्षीणा भवन्ति यदि मिथ्यां वदाम" इति वादिता इत्यर्थः (वि. र., २०९)
5. गुरुत्वादपि–द.
6. एकश्चेदत्यन्ताप्तस्तयोभयानुमतो भवति, तदा सोपवासो रक्तमाल्याम्बरधरो मूर्ध्नि क्षितिमारोप्य सीमामुन्नयेदित्यर्थः । (वि. र., २०९)

सत्यव्रतः सोपवासः सीमां संदर्शयेन्नरः ।

मनुः[1] [८, २५७, २६३]

यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः ।
विपरीतं नयन्तस्तु [2]दाप्याः स्युर्द्विशतं दमम् ॥

सामन्ताश्चेन्मृषा ब्रूयुः सेतौ विवदतां नृणाम् ।
[3]सर्वे ते च पृथग्दण्ड्या राज्ञा मध्यमसाहसम् ॥

'सेतौ' सीमायाम् ।

कात्यायनः [७५०, ७४१]

बहूनां तु गृहीतानां न सर्वे निर्णयं यदि ।
कुर्युर्भयाद्वा लोभाद्वा दाप्यास्तूत्तमसाहसम् ॥

नाज्ञानेन हि मुच्यन्ते सामन्ता निर्णयं प्रति[4] ।
अज्ञानोक्तौ दण्डयित्वा पुनः सीमां विचारयेत् ।
कीर्तिते यदि भेदः स्याद्दण्ड्यास्तूत्तमसाहसम्[5] ॥

नारदः[6]

शेषाश्चेदनृतं ब्रूयुर्नियुक्ता भूमिकर्मणि ।
जघन्यास्तेऽपि प्रत्येकं विनेयाः पूर्वसाहसम् ॥

1. Name omitted in Udaipur Ms.

2. दाप्यास्ते–स.

3. सर्वे पृथक् पृथक् दण्ड्याः–द, ज, B. J., वि. र., २०९, मु. मनुस्मृतौ च.

4. यदि–वि. र., २१०; बि.

5. 'अज्ञानेन' ज्ञानेऽप्यज्ञानाभिधानेन । 'कीर्तिते' सम्भूय साक्ष्ये उक्ते, पुनस्तेषां 'यदि भेदो' वचनविरोधः स्यादित्यर्थः (वि. र., २१०)

6. Though ascribed to नारद by मिताक्षरा (२, १५३), अपरार्क (२, १५३), स्मृ. चं., p. 547, and विवादरत्नाकर, २१०, this is not found in any published *Nāradasmṛti.* The next śloka occurs as १४, ८ in Jolly's edn. (p. 167.)

गणवृद्धादयस्त्वन्ये[1] दण्डं दद्युः पृथक् पृथक् ।
विनेयाः प्रथमेनैव साहसेनानृते स्थिताः ॥

कात्यायनः [७३८, ७३९, ७४३]

[2]संसक्तकास्तु सामान्तास्तत्संसक्तास्तथोत्तराः ।
संसक्तसक्तसक्तान्ताः पद्माकाराः प्रकीर्तिताः ॥

ग्रामो ग्रामस्य सामन्तः क्षेत्रं क्षेत्रस्य कीर्तितम् ।
गृहं गृहस्य निर्दिष्टं समन्तात्परिरभ्य च ॥

ये तत्र पूर्वसामन्ताः पश्चाद्देशान्तरं गताः ।
तन्मूलत्वात्तु मौलास्ते ऋषिभिः संप्रकीर्तिताः ॥

'ग्रामो ग्रामस्य सामन्तः' इति । ग्रामजनो ग्रामजनस्य विवादे सामन्तो न पुनस्तद्ग्रामीण एव तत्र सामन्त इत्यर्थः । एवं क्षेत्रमित्याद्यपि । क्षेत्रगृहशब्दाभ्यां तत्स्वामिनौ लक्ष्येते[3] ॥

बृहस्पतिः [१९, ३८, ३९]

तदुत्पन्नाश्च सामन्ता येऽन्ये देशान्तरस्थिताः ।
मौलास्ते तु समादिष्टाः प्रष्टव्याः कार्यनिर्णये ॥

अदुष्टास्ते तु यद्ब्रूयुः[4] संदिग्धौ समवृत्तयः ।
तत्प्रमाणं तु कर्तव्यमेवं धर्मो न हीयते ॥

1. B. J.–गणवृद्धादयस्त्वेते

2. संसर्गजास्तु–ज, द, B. J.

3. ग्रामस्य ग्रामान्तरेण सह सीमाविवादे तत्प्रत्यासन्नोऽन्यो ग्रामसमूहः 'सामन्त' उच्यते । एवं गृहक्षेत्रयोरपि समन्तात् 'परिरभ्य' यः परितो वेष्टयित्वा स्थितः । ग्रामक्षेत्रगृहपदानि तन्निवासिपुरुषपराणीति ॥ (वि. र., २११)

4. सन्दिग्धे समवृत्तयः–A. S. B., S. B. (a), S. B. (b), ज, द, स; समवृत्तयः इति वि. र., २११; 'सन्दिग्धौ' सन्देहे (वि. र., २११)

कात्यायनः [७४४, ७४५]

निष्पाद्यमानं यैर्दृष्टं तत्कार्यं [1]नृगुणान्वितैः ।
वृद्धा वा यदि वाऽवृद्धास्ते वृद्धाः परिकीर्तिताः ॥

उपश्रवणसंभोगकार्याख्यानोपचिह्निताः ।
उद्धरन्ति ततो यस्मादुद्धृतास्ते [2]ततः स्मृताः ॥

'उपश्रवणं' परम्पराप्रसिद्धिः[3] । 'संभोगो' भुक्तिः । [4]'कार्याख्यानं' तत्फलकरग्रहणवार्ता ।

नारदः[5]

ध्वजिनी सन्धिनी[6] चैव नैधानी भयवर्जिता ।
राजशासननीता च सीमा पञ्चविधा स्मृता[7] ॥

व्यासः

निम्नोन्नता च ध्वजिनी नैधानी राजकारिता ।
स्थिरा[8] पञ्चविधा सीमा मत्स्यिनी तु [9]चला स्मृता ॥

1. A. S. B., S. B. (a), S. B. (b), ज, द, स and वि. र., २०२—त्रिगुणान्वितैः; विगुणान्वितैः–बि.

2. प्रकीर्तिताः–वि. र., २१२.

3. सिद्धम् for सिद्धिः–द.

4. S. B. (a) ends here.

5. Not found in Jolly's edn.; nor in the *Nāradīya-manusamhitā* edited by K. Sambasiva Sastri.

6. मत्स्यिनी–वि. र. पाठः

7. No commentary follows here in उ, बि, द and स; but B. J. and A. S. B. bring here the following notes, which are virtually identical with those given in वि. र., २१२ with a slightly different text—'ध्वजिनी' ध्वजतुल्यवृक्षवती । 'सन्धिनी' मत्स्यवन्नदीमती । 'नैधानी' तुषारादिमती । 'भयवर्जिता' वादिप्रतिवादिसम्मता ॥ वि. र. adds to this—'राजशासनानीता' ज्ञातृचिह्नाभावे राजाज्ञाकारिता ॥

8. स्थिता–वि. र., २१३.

9. B. J.–चपला स्मृता.

ग्रामयोरुभयोर्यत्र गर्तः[1] सीमाप्रवर्तकः ।
निम्नोपलक्षिता सा तु शास्त्रविद्भिरुदाहृता ॥

[2]शरकुब्जकवल्मीका यत्र देवगृहाणि च ।
अश्मकूटाश्च दृश्यन्ते ज्ञेया सा तु समुन्नता ॥

ग्रामयोरुभयोः सीम्नि वृक्षा यत्र समुन्नताः ।
समुच्छ्रिता ध्वजाकारा ध्वजिनी सा प्रकीर्तिता ॥

इष्टकाङ्गारसिकताः शर्करास्थिकपालिकाः ।
निहिता यत्र दृश्यन्ते नैधानी सा प्रकीर्तिता ॥

[3]साक्ष्यभावे द्वयोर्यत्र प्रभुणा[4] परिकल्पिता[5] ।
सामन्तानुमता सीमा ज्ञेया सा राजकारिता ॥

कात्यायनः [७४७]

[6]भयवर्जितभूपेन सर्वाभावे स्वयंकृता ।

नारदः [१४, ११]

यदा तु न स्युर्ज्ञातारः सीमाया न च लक्षणम् ।
तदा राजा द्वयोः सीमामुन्नयेदिष्टतः स्वयम् ॥

व्यासः

स्वच्छन्दगा बहुजला [7]झषकूर्मैः समन्विता ।
नित्यप्रवाहिनी यत्र सीमा सा मत्स्यिनी मता ॥

1. ग्रामयोरुभयोरत्र गर्भः–स.

2. All manuscripts except B. J. ज and बि read खर for शर; बि reads–रकुब्जक !

3. साध्यभावात्–वि. र., २१३. 4. प्रभुता–बि; प्रगुणा–स.

5. परिकीर्तिता–ज, द.

6. भयवर्जितनृपेणार्थाभावे स्वयंकृता–ज; भयवर्जिता नृपेण सर्वा–बि; भयवार्जिता नृपेण सर्वभेदे–स.

7. मत्स्यकूर्मैः—B. J.; मत्स्यकूर्मसमन्विता–ज.

<u>मनुः</u>[1] [८, २६५]

सीमायामविषह्यायां स्वयं राजैव धर्मवित् ।
प्रदिशेद्भूमिमेतेषामुपकारादिति स्थितिः ॥

<u>बृहस्पतिः, व्यासश्च</u> प्रथमे [बृह. १९, ४०]

अन्यग्रामात्समाश्रित्य[2] दत्ताऽन्यस्य यदा मही । १*
महानद्याऽथवा राज्ञा कथं तत्र विचारणा ॥ २
नद्योत्सृष्टा राजदत्ता यस्य तस्यैव सा मही । ३
अन्यथा [3]न भवेल्लाभो नराणां राजदैविकः ॥ ४
क्षयोदयौ जीवनं च [4]दैवराजवशान्नृणाम् । ५
तस्मात्सर्वेषु कार्येषु तत्कृतं न विचालयेत्[5] ॥ ६ (अ)

1. The śloka of Manu is missing in उ, बि, द and B. J., and is found in the other manuscripts as well as वि. र., १४.

2. अन्याद्ग्रामात्समाश्रित्य-बि: ०समाहृत्य-अपरार्कपाठः (p. 761)

* The lines are numbered at the right end to show the order in which they occur in different works and manuscripts of the *Kalpataru*. *Aparārka*, (pp. 761–2) follows the sequence indicated above, but he has missed or omitted २ and ३. *Smṛticandrikā*, (pp. 548–550) misses ६ and ८, but otherwise follows the above order. *Vivādaratnākara*, (p. 215) misses ९. *Vivādanirṇaya*, (३६९–३७०) omits ७ and ८. *Mādhava* (३९८–३९९) omits ८. 'उ' omits ७ and ९, and B. J. १४–१७.

3. तु for न (अपरार्कः)

4. राजदेववशान्नृणाम् (व्यव. निर्ण.)

5. विचारयेत् (वि. र.)

(अ) 'तत्कृतं' देवराजकृतम् । यद्यपि दैवशब्दो भाग्यमाचष्टे तथाऽपि नदीकृते दैवकृतमित्युच्यते । भाग्यस्यैव मूलकारणत्वात् ॥

ग्रामयोरुभयोर्यत्र मर्यादा कल्पिता नदी । ७
क्षयोदयेन चाल्पा[1] सा चालयन्दण्डमर्हति ॥ ८

कुरुते दानहरणं भाग्याभाग्यवशान्नृणाम् । ९
एकत्र [2]कूलपातं तु भूमेरन्यत्र [3]संस्थितिम् ॥ १०

नदी तीरे प्रकुरुते [4]तस्य तां न विचालयेत् ॥ ११ (आ)

[5]क्षेत्रं ससस्यमुल्लङ्घ्य भूमिश्छिन्ना[6] यदा भवेत् । १२
नदीस्रोतःप्रवाहेण पूर्वस्वामी लभेत[7] ताम् ॥ १३ (इ)

या राज्ञा क्रोधलोभेन छलन्यायेन वा [8]हृता । १४
प्रदत्ताऽन्यस्य तुष्टेन न सा सिद्धिमवाप्नुयात् ॥ १५

प्रमाणरहितां भूमिं भुञ्जतो यस्य या हृता । १६
[9]गुणाधिकाय वा दत्ता तस्य तां न विचालयेत् ॥ १७

1. तोल्या (वि. र.)
2. कूपपातं तु (व्यव. निर्णयः)
3. संस्थितिः (अपरार्कः)
4. तस्यैतां (अपरार्कः); तस्य तत् (वि. र.)
5. क्षेत्रशस्यं समुल्लङ्घ्य (माधवीयम्; B. J; वि.)
6. भूमिः छन्ना (व्यव. निर्ण.)
7. लभेच्च (माधवीयम्); तम्, (ज.)
8. कृता (स्मृ. चं.; B. J., वि.)
9. गुणाधिकस्य दत्तं वा तस्य तां नैव चालयेत् (अपरार्कः)

(आ) तत्र नदीवशाल्लब्धभूमिकस्य तां नदीं कृतभूमिसंस्थितिं पूर्वस्वामी न विचालयेत् । एतदनुप्तसस्यतीरविषयम् ॥

(इ) उप्तसस्यतीरविषयेऽप्याह स एव । 'तां' ससस्यां भूमिम् । छेदनादूर्ध्वमपि पूर्वस्वामी यावदुप्तसस्यफलप्राप्तिस्तावल्लभते । फललाभादूर्ध्वं प्राचीनविषयतुल्यतैव ॥ (स्मृतिचन्द्रिका, p. 549)

## १७ (क) अथातिदेशाः

तत्र कात्यायनः[1]

दशग्रामशतग्रामसहस्रग्रामलक्षणान् ।
विषयान्नृपतिः कुर्याच्चिह्नैः सीमाविनिश्चितान् ॥

याज्ञवल्क्यः [२, १५४]

[2]आरामायतनग्रामनिपानोद्यानवेश्मसु ।
एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु[3] ॥

अयमेव सामन्तसाक्ष्यादिलक्षणो विधिर्ज्ञातव्यः ।

मनुः [८, २६२]

क्षेत्रकूपतडागानामारामस्य गृहस्य च ।
सामन्तप्रत्ययो ज्ञेयः [4]सीमासन्धिविनिर्णयः ॥

कात्यायनः [७४९]

क्षेत्रकूपतडागानां केदारारामयोरपि ।
गृहप्रासादावसथेष्वेवं देवगृहेषु च ॥

बृहस्पतिः [१९, ४५-४६]

निवेशकालादारभ्य [5]गृहवार्यापणादिकम् ।
येन यावद्यथा भुक्तं तस्य [6]तन्नैव चालयेत् ॥

1. Not found in Kane's collection; known only from the *Kalpataru*.

2. ग्रामग्रहणेन नगरादिरपि लक्ष्यः । एष साक्षिसामन्तादिरूपो विधिः । (वि. र., २१६)

3. 'वर्षाम्बुप्रवहेषु च' इति विश्वरूपपाठः ॥

4. 'सीमासेतुविनिर्णयः' इति मेधातिथिपाठः.

5. गृहकार्य–द.

6. तन्न विचालयेत्–द.

वातायनं प्रणालीश्च तथा निर्यूहवेदिकाः ।
चतुःशालं स्यन्दनिकाः प्राङ्निविष्टा[1] न चालयेत् ।

'निर्यूहो' द्वारनिर्गतः काष्ठविशेषः । 'वेदिका' प्रतोल्यादिदेशे संस्कृतोन्नता भूमिः । 'चतुःशालं' चतुर्द्वारगृहम् । 'स्यन्दनिका' पटलप्रान्तः[2] ॥

कात्यायनः [७५२-७५३]

मेखलाभ्रमनिष्कासगवाक्षान्नोपरोधयेत्[3] ।
प्रणालीं गृहवास्तुं च पीडयन् दण्डभाग्भवेत् ॥

निवेशसमयादूर्ध्वं नैते योज्याः कदाचन[4] ।
दृष्टिपातं प्रणालीं[5] च न कुर्यात्परवेश्मसु ॥

'मेखला' कुड्यमूलबन्धः[6] । 'भ्रमः' जलनिर्गमः । 'निष्कासः' हर्म्यादिभित्तिषु निर्गतं काष्ठादिनिर्मितमस्पृष्टभूमिकमुपवेशस्थानम् । [7]'नोपरोधयेत्' न [8]निरुन्ध्यात् । 'गृहवास्तु' वासभूमिः । 'दृष्टिपातो' गवाक्षः ।

[9]बृहस्पतिः [१९, ४९]

वर्चःस्थानं वह्निचयं गर्तोच्छिष्टाम्बुमेचनम् ।
अत्यारात्परकुड्यस्य न कर्तव्यं कदाचन[10] ॥

'अत्यारात्' अतिसमीपे ।

1. निर्दिष्टाम्-B. J; निविष्टानि चालयेत्-द.
2. 'प्रणाली' जलनिर्गममार्गः (वि. र., २१७)
3. न्नोपधारयेत्-स.
4. Missing in ज.
5. प्रणालं-वि, ज.
6. कुड्यमूलभूमिः-द, B. J.
7. विरुद्धयात्-स.
8. 'इति कल्पतरुः' (वि. र., २१७)
9. Ascribed to कात्यायन by only वि. र , २१७; not included by Kane.
10. 'वर्चःस्थानं' मूत्रपुरीषोत्सर्गस्थानम् । 'वह्निचयं' अग्निस्थानम् । क्वचित् 'वह्निस्थानं' 'वह्निगृहं' इति वा पाठः । स तु सुगम एव । 'अत्यारात्' अतिसमीपे ॥ (विवादरत्नाकरः, २१८) 'अत्यारात्' अरत्निद्वयमविहायेत्यर्थः (स्मृ. चं., p. 551)

कात्यायनः [७५४]

विण्मूत्रोदकचक्रं च वह्निश्वभ्रानिवेशनम् ।
अरत्निद्वयमुत्सृज्य परकुड्यान्निवेशयेत्[1] ॥

बृहस्पतिः [१९, ५१]

यान्त्यायान्ति जना येन पशवश्चानिवारिताः ।
तदुच्यते संसरणं न रोद्धव्यं तु केनचित् ॥

नारदः [१४, १५]

अवस्करस्थलश्वभ्रभ्रमस्यन्दनिकादिभिः ।
चतुष्पथसुरस्थानरथ्यामार्गान्न रोधयेत्[2] ॥

'रथ्या' चत्वरः ।

शङ्खलिखितौ

मार्गक्षेत्रे पथि विसर्गो, राजमार्गे रथपरिवर्तनं, पूर्वमर्यादास्थापनं, तोरणगृहरथ्यान्तरेषु त्रिपदं, देवराजायतनेषु यथेष्टम् ॥

'मार्गक्षेत्रे' मार्गे यत्क्षेत्रं तत्र । 'पथि विसर्गो' वर्त्म नावरोद्धव्यमित्यर्थः । 'राजमार्गे रथपरिवर्तनं' यावता देशेन रथः परिवर्तते तावान् देशो राजमार्गे त्यक्तव्य इत्यर्थः । 'तोरणगृहरथ्यान्तरेषु त्रिपदं' तोरणगृहरथ्यासमीपे पदत्रयपरिमितं देशं परित्यजेदित्यर्थः[3] ॥

1. 'चक्रं' तैलादियन्त्रम् (वि. र., २१८, A. S. B. and ज) । 'अरत्निः' निष्कनिष्ठमुष्टिहस्तः (A. S. B., वि. र.)

2. 'अवस्करो' विष्ठा, गृहादिशोधनार्थं पांसुनिचय इति हरिहरादयः । 'स्थलं' वेदिका । 'श्वभ्रो' गर्तः । 'भ्रमो' जलनिर्गममार्गः । 'स्यन्दनिका' पटलप्रान्तः । 'आदि'शब्देनान्यदपि तादृशम् । 'रथ्यामार्गो' राजमार्गः । 'रथ्या' चत्वर इति कल्पतरुः (विवादरत्नाकरः, २१८). This comment is reproduced by व्यवहारप्रकाश, ४६४.

3. मार्गे यत्क्षेत्रं तत्र पथि स्थिते 'विसर्गः' त्यागः पथिकानां गच्छताम् । तेन स पन्था नावरोद्धव्य इत्यर्थः । 'राजमार्गे रथपरिवर्तनं' यावता देशेन रथप्रवृत्तिः स्यात्तावान् देशो राजमार्गे त्याज्य इत्यर्थः । 'पूर्वमर्यादास्थापनं' यावती पौरैः 'पूर्वमर्यादा' पूर्वसीमा कृता तस्याः स्थापनम् । 'तोरणगृहरथ्यान्तरेषु त्रिपदं' तोरणगृहरथ्यासमीपे पदत्रयपरिमितो देशस्त्याज्य इत्यर्थः ॥ (विवादरत्नाकरः, २१९)

<u>कात्यायनः</u> [७५५-७५७]

सर्वे जनाः सदा येन प्रयान्ति स चतुष्पथः[1] ।
[2]अनिषिद्धा यथाकालं राजमार्गः स उच्यते ॥

न तत्र रोपयेत्किंचिन्नोपहन्यात्तु केनचित् ।
गुर्वाचार्यनृपादीनां मार्गादानात्तु दण्डभाक् ॥

यस्तत्र [3]सङ्करश्वभ्रान्वृक्षारोपणमेव च ।
कामात् पुरीषं कुर्याच्च तस्य दण्डस्तु माषकः ॥

'सङ्करो' अवकरः ।

<u>मनुः</u> [९, २८२-२८३]

समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि ।
स द्वौ कार्षापणौ दद्यादमेध्यं [4]स च शोधयेत् ॥

[5]आपद्गतस्तथा वृद्धो गर्भिणी बाल एव वा ।
परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः ॥

'दण्ड्य' इत्यनुवृत्तौ <u>विष्णुः</u> [५, १०५]

पथ्युद्यानोदकसमीपेष्वशुच्युत्करादित्यागे पणशतम्[6] ॥

<u>कात्यायनः</u> [७५८, ७५९]

तडागोद्यानतीर्थानि [[7]योऽमेध्येन विनाशयेत् ।
अमेध्यं शोधयित्वा तु दण्डयेत्पूर्वसाहसम्[8] ॥

1. चतुष्पदाः-वि, स; जतुष्पदः-ज; चतुष्पादाः-द.
2. अनिरुद्धा यथाकामं-वि. र., २१९. 3. संकरश्वभ्रात्-वि. र., ज.
4. चाशु शोधयेत् इति वि, मेधातिथिश्च; च सुशोधयेत्-ज.
5. आपद्गतोऽथवा-वि. र. २२०.
6. वि. र., २२०, adds the next *sūtra*-तच्चापास्य ।
7. 'योऽमेध्येन विनाशयेत्' इति वि. र., २२०. Gap in उ shown by [ ].
8. वि. र. follows up this line with the half-verse:—'दूषयन् सिद्धतीर्थानि स्थापितानि महात्मभिः', which all our manuscripts omit. This line is itself omitted by उ, वि and स.

दूषयेत्सिद्धतीर्थानि] स्थापितानि महात्मभिः ।
[1]पुराणानि पवित्राणि प्राप्नुयात्पूर्वसाहसम् ॥

मनुः [८, २६४]

गृहं तडागमारामं क्षेत्रं वा भीषया हरन् ।
शतानि पञ्च दण्ड्यः स्यादज्ञानाद्द्विशतो दमः ॥

'भीषया' भयोत्पादनेन ।

वृद्धमनुः

स्थापितां चैव मर्यादामुभयोर्ग्रामयोस्तथा ।
अतिक्रामन्ति ये पापास्ते दण्ड्या द्विशतं दमम् ॥

याज्ञवल्क्यः [२, १५५]

मर्यादायाः प्रभेदे तु सीमातिक्रमणे तथा ।
[2]क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः ॥

शङ्खलिखितौ

क्षेत्रमर्यादाभेदेऽष्टशतं, सीमाव्यतिक्रमेऽष्टसहस्रं, क्षेत्रोदकापहरणेऽष्टशतम्[3] ।

विष्णुः [५, १७२]

सीमाभेत्तारमुत्तमं साहसं दण्डयित्वा पुनः सीमां कारयेत्[4] ।

कात्यायनः [७६०, ७६१]

सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः ।
फलं पुष्पं च सामान्यं[5] क्षेत्रस्वामिषु निर्दिशेत् ॥

1. 'धान्यानि वापनीयानि प्राप्नुयात्पूर्वसाहसम्'–वि. र., २२० ; 'पुण्यानि च पवित्राणि'–द.

2. क्षेत्रापहरणे–ज, द.

3. 'अष्टशतं' अष्टभिरधिकं शतम् । एवमष्टसहस्रमपि । 'क्षेत्रोदकाहरणे' क्षेत्रसस्यनिर्वाहकोदकाहरणे । (वि. र., २२१)

4. सीमां लिङ्गान्वितां कारयेत्–मु. वि. स्मृ. 5. फलं मूलं च संजातं–A. S. B.

अन्यक्षेत्रेषु जातानां शाखा यत्रान्यसंस्थिताः ।
[1]स्वामिनं तु विजानीयाद्यत्र क्षेत्रे तु [2]संस्थिताः ॥

इति सप्रक्रियमहासान्धिविग्रहिकभट्टश्रीहृदयधरात्मज-
भट्टश्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
व्यवहारकाण्डे सीमाविवादाख्यं पर्व[3]

६७-(ख) अथ सेतुः

तत्र नारदः [१४, १७]

परक्षेत्रस्य मध्ये तु सेतुर्न प्रतिषिध्यते ।
महागुणोऽल्पबाधश्चेद्वृद्धिरिष्टा क्षये सति ॥

अस्यार्थः—अन्यक्षेत्रेऽन्येन क्रियमाणः सेतुर्यदि बहूपकारकः क्षेत्रस्वामिनश्चाल्पबाधाकरस्तदा[4] नासौ निवर्त्यः[5] । यतोऽल्पोपक्षये सत्यपि वृद्धिः सस्याद्युपचयलक्षणा सर्वस्येष्टा भवति[6] ।

याज्ञवल्क्यः [२, १५६-१५७]

न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः[7] ।
परभूमिं हरन् कूपः स्वल्पक्षेत्रो बहूदकः ॥
स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्तयेत्[8] ।
उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः ॥

1. स्वामिनं तं विजानी–वि, ज, द, स.
2. संस्कृता–S. B. (b); संस्थिताः–ज, द; सा स्थिता–ङ.
3. A. S. B., ज.
4. करस्तेनासौ न निषेधनीयः–ज; तेनासौ न निषेधनीयः–द.
5. निषेधनीय–B. J.
6. Paraphrased by वि. र., २२२.
7. यस्य क्षेत्रे स्वल्पदोषो बहूदकः खन्यमानः कूपः स्यात्, तस्यासौ खन्यमानो राजोपकारकत्वेन क्षेत्रस्वामिनो भूमिं हरेदिति ॥ (विश्वरूपः)
8. प्रकल्पयेत्–B. J., ज, द.

नारदः[1] [१४, २०-२२]

पूर्वप्रवृत्तमुत्सन्नमपृष्ट्वा स्वामिनं तु यः ।
सेतुं प्रवर्तयेत्कश्चिन्न स तत्फलभाग्भवेत् ॥
मृते तु स्वामिनि पुनस्तद्वंश्ये वाऽपि मानवे ।
राजानमामन्त्र्य ततः कुर्यात्सेतुप्रवर्तनम् ॥
अतोऽन्यथा क्लेशभाक् स्यान्मृगव्याधानुदर्शनात् ।
इषवस्तस्य नश्यन्ति यो [2]विद्धमनुविध्यति ॥

'स्वामिनं' सेतुस्वामिनम् ।

कात्यायनः [७६२, ७६३]

अस्वाम्यनुमतेनैव संस्कारं कुरुते तु यः ।
गृहोद्यानतडागानां संस्कर्ता लभते न तु ॥
देयं[3] स्वामिनि चायाते न निवेद्य नृपे यदि ।
अथावेद्य प्रयुक्तस्तु तत्कृतं[4] लभते व्ययम् ॥

नारदः [१४, १७, १८]

सेतुस्तु द्विविधः प्रोक्तः खेयो बन्ध्यस्तथैव च ।
तोयप्रवर्तनात्खेयो बन्ध्यः [5]स्याद्विनिवर्तनात् ॥
नान्तरेणोदकं सस्यं [6]नाशश्चाभ्यधिके सति ।
य एवानुदके दोषः स एवात्युदके भवेत् ॥

इति महासान्धिविग्राहिकसप्रक्रिय[7]भट्टहृदयधरात्मज-
भट्टलक्ष्मीधरविरचिते कृत्यकल्पतरौ
विवादकाण्डे सेतुपर्व[8] ॥

1. Name omitted by B. J., द.
2. विद्धमनुवर्तते-स.
3. देशं-स.
4. तद्गतं-स.
5. स्यात्तन्निवर्तनात्-मु. ना. स्मृ., १६७.
6. नश्येदभ्युदकेन तु-मु. ना. स्मृ., १६७.
7. सप्रक्रिय-ज.
8. A. S. B.

## ६७ (ग) [1]अथ विकृष्टाकृष्टे

तत्र नारदः [१४, २३, २४]

अशक्तप्रेतनष्टेषु क्षेत्रिकेष्वनिवारितः ।
क्षेत्रं चेद्विकृषेत्कश्चिदश्नुवीत स तत्फलम् ॥

विकृष्यमाणे क्षेत्रे तु क्षेत्रिकः पुनरावजेत् ।
खिलोपचारं[2] तत्सर्वं दत्त्वा क्षेत्रमवाप्नुयात् ॥

कात्यायनः[3] [७६४]

अशक्तितो न दद्याच्चेत्खिलार्थे यः कृतो व्ययः ।
तदष्टभागहीनं तु कर्षकः फलमाप्नुयात् ॥
वर्षाण्यष्टौ स भोक्ता स्यात्परतः [4]स्वामिनस्तु तत्[5] ।

नारदः [१४, २६, २७; १४, ४२, ४३]

संवत्सरेणार्धखिलं खिलं स्याद्वत्सरैस्त्रिभिः ।
पञ्चवर्षावसन्नं तु [6]क्षेत्रं स्यादटवीसमम् ॥

क्षेत्रं [7]त्रिपुरुषं यत्स्याद्गृहं वा स्यात्क्रमागतम् ।
राजप्रसादादन्यत्र न [8]तद्भोगः [9]परं नयेत् ॥

1. अथ कृष्टाकृष्टे–ज.
2. 'खिलोपचारं' खिलकर्षणार्थमायासनिष्क्रयम् (वि. र., २२५)
3. कल्पतरौ कात्यायनः इति विवादरत्नाकरोऽत्र (२२६)
4. स्वामिने तु तत्–स.
5. अनेनाष्टमे वर्षे कर्षकस्य भोगो विहितः पूर्वेण तु निषिद्ध इति विरोधे पूर्वं कष्टसाध्यकर्षणभूमिविषयम्, उत्तरं चातिकष्टसाध्यकर्षणभूमिविषयमिति व्यवस्था (वि. र., २२६)
6. स्यात् क्षेत्रमटवीसमम्–ज, मु. नार., १६९.
7. त्रिपुरुषं यस्य–ज, द, वि.
8. भोगपरं–ज; भोगं परं–स.
9. परान्नयेत्–वि. र., २२६.

गृहं क्षेत्रं च [1]दृष्टे द्वे वासहेतू कुटुम्बिनाम् ।
तस्मात्ते नाक्षिपेद्राजा तद्धि मूलं कुटुम्बिनाम्[2] ॥

वृद्धे जनपदे राज्ञो [3]धर्मः कोशश्च वर्धते ।
हीयते हीयमाने तु [4]वृद्धिहेतुमतः श्रयेत्[5] ॥

याज्ञवल्क्यः [२, १५८]

फालाहतमपि क्षेत्रं [6]यो न कुर्यान्न कारयेत् ।
तं प्रदाप्याकृष्टसदं क्षेत्रमन्येन कारयेत्[7] ॥

'अकृष्टसदं' इति—अकृष्टस्य क्षेत्रस्य 'सदं' सस्यादिफलं, कृष्टक्षेत्रानुसारेण दापयित्वा[8] इत्यर्थः ।

बृहस्पतिः

गृहीत्वा वाहयेत्काले[9] वापगोपनसंग्रहान्[10] ।
अकुर्वन् स्वामिने दाप्यो मध्यं कृष्टसदं तु[11] यः ॥

'मध्यं कृष्टसदं' नोत्कृष्टं नापकृष्टं यत् [12]कृष्टक्षेत्रफलं तदनुसारेण दापयितव्य इत्यर्थः ॥

1. वस्तू द्वे वासहेतु–ज, वि. र.; दृष्टे द्वे–मु. नार. १७२; दृष्टेऽर्थे दासहेतुकु–उ.

2. Line omitted by उ, बि and given by A. S. B., S. B. (a), ज, द, वि. र., २२६

3. धर्मः कोशश्च-स, वि. र, २२७, मु. ना., १७२; धर्मकोशश्च–उ.

4. वृद्धिहेतु–स, बि, वि. र.

5. गृहक्षेत्रयोः करादिना त्रैपुरुषिकसंभोगे सति राजप्रसादाद्विना न तद्भोक्तृपुरुषसकाशात्तयोर्भोगच्छेदः करणीय इत्यर्थः ॥ वि. र., २२६

6. न कुर्याद्यो न कारयेत् इति मिताक्षरापाठः

7. 'फालाहतं' प्रत्यब्दं कृष्यमाणं 'अकृष्टसदं' अकृष्टे कृष्टफलमिति यावत् । वि. र., २२७

8. दापयेदित्यर्थः–ज, द, स.

9. वापयेत्काल–स.

10. नामगोपनसंग्रहान्–S. B. (a)

11. शदं तु सः–A. S. B., S. B. (a), B. J., बि, ज.

12. यत्क्षेत्रे फलम्–स; यत् कृष्टक्षेत्रफलानुसारेण–उ.

<u>व्यासः</u>

क्षेत्रं गृहीत्वा यः कश्चिन्न कुर्यान्न च कारयेत् ।
स्वामिने स सदं दाप्यो [1]राज्ञा दण्ड्यश्च तत्समम् ॥

[2]चिरावसन्ने दशमं कृष्यमाणे तथाष्टमम् ।
सुसंस्कृते तु षष्ठं स्यात्परिकल्प्य यथास्थिति[3] ॥

[इति कृष्टाकृष्टपर्व[4]]

## ६७-(घ) अथ सस्यरक्षा

तत्र <u>याज्ञवल्क्यः</u> [२, १६६]

ग्रामेच्छया[5] गोप्रचारो भूमी[6] राजवशेन वा[7] ।

<u>तथा</u> [१६७]

[8]धनुःशतं परीणाहो ग्रामक्षेत्रान्तरं भवेत् ।
द्वे शते [9]खर्वटस्य स्यान्नगरस्य चतुःशतम् ॥

'खर्वटः' बहुकारुकृषीवलो ग्रामः ।

1. राज्ञा दण्डं च तत्समम्-ज; राज्ञे दण्डं च-स, राज्ञो दण्डं च सत्तमम्-द.

2. चिरावकृष्टे-स.

3. भूमिं कर्षणार्थं गृहीत्वा यः स्वयं न कर्षति परद्वारा वा न कर्षयेत्, स स्वामिने सदं दाप्यः दण्डं राज्ञश्च तत्समम् । तत्र च चिरावसन्नायां भूमौ दशमं, कृष्यमाणायामष्टमं, अकृष्टायां च षष्ठं भागमित्यर्थः । (वि. र., २२७)

4. इति सप्रक्रियमहासान्धिविग्रहिकभट्टहृदयधरात्मजभट्टलक्ष्मीधरविरचिते कृत्यकल्पतरौ व्यवहारकाण्डे कृष्टाकृष्टपर्व-A. S. B., S. B. (a), ज; उ, वि have no colophon.

5. 'ग्राम्येच्छया' इति मिताक्षरापाठः । 'ग्रामेच्छया' इति विश्वरूपः, वि. र., २२८.

6. 'गोप्रचारभूमी'-(विश्वरूपः)

7. 'ग्राम्येच्छया (ग्रामेच्छया) ग्राम्यजनापेक्षया (ग्रामवासिजनापेक्षया) भूम्यल्पत्वमहत्त्वापेक्षया (त्वानुसारेण वा) राजेच्छया (राजाज्ञया) वा गोप्रचारो (गोप्रचारणार्थभूभागः) कर्तव्यः । गवादीनां चरणार्थं कियानपि भूभागोऽकृष्टः परिकल्पनीय इत्यर्थः ॥ मिताक्षरा (वि. र., २२८)

8. चतुःशतम्-द, स.

9. कर्पटस्य-वि, वि. र., विश्वरूपः; ग्रामनगरोभयधर्मयुक्तं कर्पटम्-विश्वरूपः । ग्रामाधिको नगराम्न्यूनो 'खर्वटः'-अपरार्कः ॥ 'खर्वटस्य' प्रचुरकण्टकसंतानस्य ग्रामस्य इति मिताक्षरा ।

<u>मनुः</u> [८, २३७-२३८]

धनुःशतं परीहारो[1] ग्रामस्य स्यात्समन्ततः ।
[2]शम्यापातास्त्रयो वापि त्रिगुणो नगरस्य तु[3] ॥

तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि ।
न तत्र प्रणयेद्दण्डं नृपतिः [4]पशुरक्षिणाम्[5] ॥

<u>नारदः</u> [१४-४०]

ग्रामोपान्ते च यत्क्षेत्रं विवीतान्ते[6] महापथे ।
अनावृतं चेत्तन्नाशे न पालस्य व्यतिक्रमः ॥

<u>विष्णुः</u> [५, १४७-१४९]

पथि ग्रामे विवीतान्ते न दोषोऽनावृते चाल्पकालम्[7] ।

<u>याज्ञवल्क्यः</u> [२, १६२]

[8]पथि ग्रामे विवीतान्ते क्षेत्रे दोषो न विद्यते ।
अकामतः कामचारे चौरवद्दण्डमर्हति ॥

1. परीणाहो–B. J., द, स, बि, वि. र., २२९. 'परीवारो' इति नन्दनपाठः

2. ससंपाताः–उ, बि.; शरपातस्ततो द; सम्यापाता–वि. र., २२९; 'शम्यापाता' इति मेधातिथिपाठः

3. अनुसस्या भूमिः पशूनां सुखप्रचारार्था कर्तव्या । 'शम्या' दण्डयष्टिः, सा बाहुवेगेन प्रेरिता यत्र पतति ततः प्रदेशादुद्धृत्य पुनः पातयितव्या, यावत् त्रिस्तस्य परिमाणो वा शम्यापातः परीहारः (मेधातिथिः) ॥

4. पशुलक्षणम्–स.

5. 'तत्र' परीहारस्थाने क्षेत्रं न कर्तव्यम् । अथ कृतं कस्माद्वृतिर्न कृता । अतः क्षेत्रिण एवापराध्यन्ति न पशुपालाः । (मेधातिथिः)

6. 'विवीतो' गवादिविनियोगार्थं रक्षितयवसो भूप्रदेशः–वि. र., २२९.

7. महापथे विवीतान्ते च यत्क्षेत्रमनावृतमल्पकालं पशुभिः खाद्यते न तत्र पालदोषः । एवं चानल्पकाले तु दोष एवेति मन्तव्यम् । (वि. र., २३०)

8. 'पथिग्रामे .....अकामतः' इति च्छेदः । ग्रामान्ते विवीतान्ते वा यत् क्षेत्रं, तत्र प्रमादादवतीर्णेषु महिष्यादिषु नापराधः ॥ अभिप्रायावतरणे त्वाह-कामकारे चौरवद्दण्डमर्हति । पालः स्वामी वा । यद्वोभावपि ॥ (विश्वरूपः)

'विवीत'शब्देन यवसाद्यर्थं रक्षितो भूप्रदेश उच्यते ।

मनुः [८, २४०]

पथि क्षेत्रे परिवृते ग्रामान्तीयेऽथवा पुनः ।

सपालः शतदण्डार्हो [1]विपालं धारयेत्पशुम् ॥

[2]'ग्रामान्तीये' ग्रामसमीपे क्षेत्रे । 'विपालं' रक्षकशून्यम् ।

नारदः [१४, २८]

उत्क्रम्य तु वृतिं यः स्यात्सस्यघातो गवादिभिः ।

पालः शास्यो भवेत्तत्र न [3]चेच्छक्तो निवारयेत् ॥

'वृतिः' आवरणम् ।

उशना

गोभिर्विनाशितं धान्यं यो नरः प्रतियाचते ।

पितरस्तस्य नाश्नन्ति नाश्नन्ति च दिवौकसः ॥

नारदः [१४, ४१]

पथि क्षेत्रे वृतिः कार्या यामुष्ट्रो नावलोकयेत् ।

[4]न लङ्घयेत् पशुर्नाश्वो न भिन्द्याद्यां तु सूकरः[5] ॥

शङ्खलिखितौ

मार्गक्षेत्रे वृतिः कार्या यामुष्ट्रो नावलोकयेत् ।

1. विपालान् वारयेत् पशून्–इति मेधातिथिपाठः । विपालाः पशवो वारयितव्या दण्डादिना न तु दण्डनीयाः । विपालाश्चोत्सृष्टवृषादयः । अन्येषां तु विपालानां स्वामिनो दण्डः ॥ (मेधातिथिः ॥) 'विपालं वारयेत् पशुम्' इति–स.

2. 'ग्रामान्तीयं' ग्रामसमीपं क्षेत्रम्–स.

3. चेच्छक्त्या–मु. ना. स्मृ., १६९.

4. This half verse and the first sentence of शङ्खलिखित are missing in उ and वि.

5. यामुष्ट्रो नावलोकयेदित्यत्र एकस्मिन् वृतिपार्श्वे स्थित उष्ट्रो येन परिमाणेन वृतेः पार्श्वान्तरं नावलोकते इति हलायुधः । यां वृतिमुल्लङ्घ्य सस्यं नावलोकयेदिति पारिजातः । (वि. र., २३१)

नाश्वसूकरावन्तरं विन्देताम्[1] ।

कात्यायनः [६६६]

अजातेष्वपि सस्येषु[2] कुर्यादावरणं महत् ।
दुःखेन हि निवार्यन्ते लब्धस्वादुरसा मृगाः ॥

इति सस्यरक्षा[3]

## ६७-(क) अथ सस्यघातदण्डः

तत्र मनुः [८, २४१]

क्षेत्रेष्वन्येषु तु पशुः सपादं दण्डमर्हति ।

'अन्येषु' इति—पथिक्षेत्रग्रामान्तीयेभ्य[4] इत्यवगन्तव्यम् ।[5]

शङ्खलिखितौ

रात्रौ चरन्ती गाः पञ्च माषान् । दिवा त्रीन् । मुहूर्ते माषम् । ग्रासे[6] त्वदण्ड्यः[7] ।

कात्यायनः [६६७]

दापयेत्पणपादं गां द्वौ पादौ महिषीं तथा ।
[8]अथाजाविकवत्सानां पादो दण्डः प्रकीर्तितः ॥

1. B. J. adds here–'अन्तरं' अवकाशम्—a comment given also by वि. र.

2. अजातक्षेत्रसस्येषु–B. J.

3. इति कृत्यकल्पतरौ सस्यरक्षा–A. S. B.; इति कृत्यकल्पतरौ व्यवहारकाण्डे सस्यरक्षापर्व–ज.

4. ग्रामान्तीये ग्रामसमीपे–ज.

5. 'अन्येषु' पार्श्वक्षेत्रादिव्यतिरिक्तेषु । 'पशु'रत्र पशुपाल एव पशोरदण्ड्यत्वात् । अत्र चैकैकं पशुं प्रति सपादः पणो दण्ड इति मन्तव्यम् । (वि. र., २३२)

6. ग्रामे–वि. र. पाठः–'ग्रामे त्वदण्डो' ग्रामसीमाक्षेत्रादावदण्ड एव–(२३२)

7. अदण्डः–वि. र., २३२.

8. तथाजाविक–ब.

गौतमः [१२, १९-२२]

पञ्च माषा गवि । [1]षडुष्ट्रखरे । अश्वमहिष्योर्दश । अजाविषु[2] द्वौ द्वौ ।

दण्डं प्राप्नुयादित्यनुवृत्तौ शङ्खलिखितौ

सर्वेषामेव वत्सो माषं, महिषी दश, [3]खरोष्ट्रं षोडश, अजाविकं चतुरः ।

याज्ञवल्क्यः [२, १५९]

[4]माषानष्टौ तु महिषी सस्यघातस्य कारिणी ।
दण्डनीया तदर्धं तु गौस्तदर्धमजाविकम् ॥

नारदः[5] [१४, २९]

समूलसस्यनाशे तु स्वामी सदमवाप्नुयात् ।
वधेन गोपो मुच्येत दण्डं स्वामिनि पातयेत् ॥

याज्ञवल्क्यः [२, १६०]

भक्षयित्वोपविष्टानां यथोक्ताद्द्विगुणो दमः ।
सममेषां विवीतेऽपि खरोष्ट्रं महिषीसमम्[6] ॥

1. षडुष्ट्रे । अश्व–स.

2. अजाविके–स.

3. खरोष्ट्रं दशाजाविकं चतुरः–द.

4. कार्षापणविंशतिभागो 'माषः'–(विश्वरूपः) । माषश्चात्र ताम्रिकपणस्य विंशतितमो भागः–इति मिताक्षरा ।

5. This śloka is brought in between the quotations from याज्ञवल्क्य and विष्णु at the end of this sub-section by A. S. B., S. B. (a), B. J., ज, स, and वि. र., २३५.

6. 'भक्षयित्वोपविष्टानां द्विगुणोऽवसतां दमः' इति विश्वरूपपाठः । भक्षयित्वोपविष्टानामवसतां पूर्वोक्ताद्द्विगुणो दण्डः कार्यः । वसतां तु चतुर्गुणः स्मृत्यन्तरात् । 'विवीते' गोप्रचार क्षेत्रे । (विश्वरूपः)

नारदः [१४, ३१, ३४]

[1]गावः पादं प्रदण्ड्याः स्युर्महिष्यो द्विगुणं ततः ।
अजाविके सवत्से तु माषो दण्डः परः स्मृतः ॥
सन्नानां द्विगुणो दण्डो वसतां च चतुर्गुणः ।
[2]प्रत्यक्षचारकाणां तु चौरदण्डः स्मृतो बुधैः[3] ॥

विष्णुः [५, १४०-१४५]

महिषी चेत्सस्यनाशं कुर्यात्पालकस्त्वष्टौ माषान् दण्ड्यः । अपालकायाः स्वामी । अश्वस्तूष्ट्रो गर्दभो वा । गौश्चेत्तदर्धम् । तदर्धमजाविकं चेत् । भक्षयित्वोपविष्टेषु द्विगुणम् ॥

'अश्वस्तूष्ट्रो गर्दभो वा' सस्यनाशं कुर्यादित्यन्वयः[4] ।

नारदः [१४, ३५]

[5]नष्टा या पालदोषेण गौः क्षेत्रं तु विनाशयेत् ।
न तत्र स्वामिनो दोषः[6] पालस्ताडनमर्हति ॥

बृहस्पतिः[7] [१६, १७]

सस्याभिवारयेद्वास्तु चीर्णे दोषो द्वयोर्भवेत् ।
स्वामी सदमं[8] दाप्यः पालस्ताडनमर्हति ॥

1. 'माषं गां दापयेद्दण्डं द्वौ माषौ महीषीं तथा' is the version of the first half of the śloka in Jolly's edn. (p. 170) and नार. म. संहिता, ११, २५ (p. 121). The *Kalpataru* version of it is found in अपरार्क (p. 761) and वि. र., २३४, but the former reads प्रदाप्याः for प्रदण्ड्याः

2. उ and बि–प्रत्यक्षघारकाणां.

3. 'सन्नानां' सस्यभक्षणश्रान्तानाम् । 'वसतां' तत्रैव चरित्वा नीतरात्रीणाम् । तदेतदप्रत्यक्षचारकाभिप्रायम्–विवादरत्नाकरः, २३४.

4. अश्वस्तूष्ट्र इत्यादौ सस्यनाशं कुर्यादित्यनुषज्यते–वि. मि., २३५

5. "या नष्टाः पालदोषेण गावः क्षेत्रं यदाप्नुयुः । न तत्र गोमिनां दण्डः पालस्तं दण्डमर्हति ।" इति मुद्रितनारदीये (पृ. १७०)

6. दण्डः पाल–वि. र., २३५

7. Ascribed to Bṛhaspati by Mādhava (p. 384), स्मृ. चं., p. 498 and व्यवहारप्रकाश, पृ. ४५०, also and wrongly to Nārada by वि. र., २३५

8. सदमं–ज.

'सदृदमं' भक्षितक्षेत्रे फलानुरूपं दमम् ।

[1]याज्ञवल्क्यः [२, १६१]

यावत्सस्यं विनश्येत्तु तावत्स्यात्क्षेत्रिणां[2] फलम् ।
गोपस्ताड्यश्च गोमी तु पूर्वोक्तं दण्डमर्हति ॥

'गोमी' गोस्वामी ।

विष्णुः [५, १४६]

सर्वत्र स्वामिने विनष्टसस्यमूल्यं च[3] ।

नारदः [१४, ३८, ३९]

गोभिस्तु भक्षितं सस्यं[4] यो नरः प्रतियाचते ।
सामन्तानुमतं देयं धान्यं यत्तत्र [5]वापितम् ॥
[6]गवलं गोमिना देयं धान्यं वै कर्षकाय च ।
एवं हि विनयः प्रोक्तो गवां [7]सस्यावमर्दने ॥

'गवलं' यवसम् ।

इति सस्यघातकपर्व ।[8]

1. याज्ञवल्क्य [२,१६१] is missing in ज and बि, and is supplied by the A. S. B. group and वि. र., २६५; along with बि they bring (between this verse and *sūtra* of Viṣṇu below) the śloka of Nārada-समूलसस्यनाशे तु etc. *supra* p. 465.

2. क्षेत्रिणः (मिताक्षरा)

3. दाप्यत इति शेषः । 'सर्वत्र' सपाले अपाले च । चकारात् राजदण्डसमुच्चयः (वि र., २३६)

4. धान्यं-मु. ना. स्मृ., १७१.

5. भक्षितम्-मु. ना. स्मृ., वि. र., B. J.; बाधितम्-A. S. B., ज

6. गावस्तु गोमिना देया धान्यं तत्कर्षकस्य तु । (मु. ना. स्मृ.)

7. सस्यावपातनात्-मु. ना. स्मृ., १७१. This line is omitted by वि, र.

8. इति (श्री) महासान्धिविग्रहिकभट्टश्रीहृदयधरात्मजभट्टश्रीलक्ष्मीधरविरचिते (कृत्य) कल्पतरौ सस्यघातकपर्व ॥ ज and A. S. B.

## ६७-(च) अथादण्ड्याः

तत्र पाल इत्यनुवर्तमाने नारदः [१४, ३६, ३७]

राजग्राहगृहीतो वा वज्राशनिहतोऽपि वा ।
अथ सर्पेण वा दष्टो वृक्षाद्वा पतितो भवेत् ॥
व्याघ्रादिभिर्हतो वापि व्याधिभिर्वाप्युपद्रुतः ।
न तत्र दोषः पालस्य न च दोषोऽस्ति गोमिनाम् ॥

याज्ञवल्क्यः [२, १६३]

[1]महोक्षोत्सृष्टपशवः [2]सूतिकागन्तुकादयः ।
पालो येषां न ते मोच्या दैवराजपरिप्लुताः[3] ॥

मनुः [८, २४२]

[4]अनिर्दशाहां गां सूतां वृषान्देवपशूंस्तथा ।
सपालान्वा विपालान्वा न दण्ड्यान्मनुरब्रवीत्[5] ॥

शङ्खः

छागवृषभा अनिर्दशाहा गावः सस्यापराधे न दण्डमाप्नुयुः[6] ।

1. महोक्षो स्वेषु पशवः सूतिकाद्ववृषादयः–द.

2. 'सूतिकागन्तुकी च गौः' इति विश्वरूपाचार्यपाठः ।

3. 'महोक्षो' बीजसेक्ता वृषः । 'उत्सृष्टपशवः' वृषोत्सर्गादिना त्यक्तपशवः । 'सूतिका' प्रसूता अनिर्दशाहा । 'आगन्तुकः' स्वयूथपरिभ्रष्टः । आदिशब्देन हस्त्यादयो अदण्ड्यतया ऋष्यन्तरैरुक्ता ग्राह्याः । एते मोच्या न दण्ड्या इत्यर्थः (वि. र., २३७)

4. गोग्रहणान्महिष्यादिषु दोषः । 'वृषाः' उक्षाणः । 'देवपशवो' देवयागार्थे यजमानेन कल्पिताः प्रत्यासन्नयागाः । अथवेष्टकादिकूटस्थापिताः हरिहरादीनां प्रतिकृतयो 'देवा' उच्यन्ते । तेषां पशवः तानुद्दिश्य केनचिदुत्सृष्टाः । वृषोत्सर्गविधानेनोत्सृष्टाः 'वृषाः' कैश्चित्परिगृह्यन्ते॥ –(मेधातिथिः)

5. B. J. adds here the commentary–'देवपशवः' देवार्थमुत्सृष्टा पशवः । ज and वि have a blank after देवपशवः here.

6. वृषभशब्देन बीजसेक्तृपित्रर्थोत्सृष्टवृषभयोर्ग्रहणम् । छागशब्दोऽपि तादृशछागपरः । (वि. र., २३८)

नारदः [१४, ३०]

गौः प्रसूता दशाहं तु महोक्षो वाजिकुञ्जराः[1] ।
निवार्याः स्युः प्रयत्नेन तेषां स्वामी न दण्डभाक् ॥

उशना

अदण्ड्या हस्तिनोऽश्वाश्च प्रजापाला हि ते स्मृताः ।
अदण्ड्याः काणकूटाश्च[2] वृषश्च कृतलक्षणः ॥
अदण्ड्यागन्तुका गौश्च[3] सूतिका चाभिसारिणी[4] ।
अदण्ड्याश्चोत्सवे गावः श्राद्धकाले तथैव च[5] ॥

शङ्खलिखितौ

क्षुद्रपशवः सर्वथानिवार्याः । अश्वतरगजवाजिनश्चादण्ड्याः । अवध्याश्च शनैरपवार्याः[6] ॥

कात्यायनः [६६५, ६६४]

अधमोत्तममध्यानां पशूनां चैव ताडने ।
स्वामी तु विवदेद्यत्र तत्र दण्डं प्रकल्पयेत् ॥

1. ०कुञ्जरौ-मु. ना. स्मृ., १६९ । 'वाजिकुञ्जराः' प्रजापालनोपयुक्ताः इति वि. र., २३८.

2. कुब्जाश्च-ज; काणकुण्टाश्च-वि. र., २३८

3. आगन्तुका गौश्च-ज, स, बि; आगन्तुका या गौः-वि. र.,

4. अभिचारिणी-बि; चाभिचालिनी-स; अतिचारिणी-वि. र.

5. ज adds here this commentary :—

'कुब्जः' खञ्जः; अत्र कुब्जकाणशब्दाभ्यां अन्यथासमर्थ उपलक्ष्यते । 'वृषः' त्रिशूलाद्यङ्कितः ॥ 'अभिचारिणी' अत्यन्तमारणशीला ॥ Almost identical with वि. र., २३८.

6. A. S. B. and ज give here this commentary, identical with वि. र., २३९-'अश्वतरः' अश्वायां रासभादुत्पन्नः । 'अवध्याः' शीघ्रं निवारयितुमशक्याः ।

क्षेत्रारामविवीतेषु गृहेषु पशुकादिषु ।
ग्रहणं तत्प्रविष्टानां ताडनं च बृहस्पतिः ॥

[इत्यदण्ड्यपर्व]

इति महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेवमहासान्धिविग्रहिक-
भट्टश्रीहृदयधरात्मजभट्टश्रीलक्ष्मीधरविरचिते
कृत्यकल्पतरौ व्यवहारकाण्डे
सीमाविवादः[1] ॥

---

1. A. S. B and ज; the latter has अदण्ड्यपर्व instead of सीमाविवादः Three sub-sections on सेतु, सस्यघात and अदण्ड्य are brought by Lakṣmīdhara within सीमाविवाद. *Dharmakośa* brings them under स्वामिपालविवाद.

## ६८

# अथ वाक्पारुष्यम्

तत्र नारदः [१८, १]

देशजातिकुलादीनामाक्रोशन्यङ्गसंज्ञितम्[1] ।
यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते[2] ॥

'आक्रोशो' निन्दा । तत्र 'देशाक्रोशो' यथा गौडं प्रति "कलहप्रिया गौडा" इति । 'जात्याक्रोशो' यथा विप्रं प्रति "नितान्तलोलुपा विप्रा" इति । 'कुलाक्रोशो' यथा "क्रूरचरिता वैश्वामित्रा" इति । 'आदि'शब्देन विद्यादेरुपादानम् । 'न्यङ्गसंज्ञितं' अश्लीलम् ।

कात्यायनः [७६८]

[3]हुङ्कारं कासनं चैव लोके यच्च विगर्हितम् ।
अनुकुर्यादनुब्रूयाद्वाक्पारुष्यं तदुच्यते ॥

नारदः [१८, २, ३]

निष्ठुराश्लीलतीव्रत्वात्तदपि त्रिविधं स्मृतम् ।
गौरवानुक्रमादस्य[4] दण्डो युक्तः[5] क्रमाद्गुरुः[6] ॥

1. (a) आक्रोशन्यङ्गसंयुतम्–मु. ना. स्मृ. (Jolly), २०९; (b) आक्रोशं न्यङ्ग-संयुतम्–मिताक्षरा (२, २०४), व्य. प्र., ४८२; (c) आक्रोशन्यङ्गसंशितम्–वि. र., (२४०), व्यव. निर्ण. (४८३); (d) आक्रोशन्यङ्गसंहितम्, ना. सं. (१५१); (e) आक्रोश-न्यङ्कुसंशितम्- दण्डविवेकः, १९६.

2. 'आक्रोशः' आक्षेपः । 'न्यङ्गसंशितं' निकृष्टाङ्गसंशितम् (वि. र., २४०) । 'उच्चैः भाषणं' आक्रोशः; 'न्यङ्गं' अवद्यं, तदुभययुक्तं यत्प्रतिकूलार्थं उद्वेगजननार्थं वाक्यं तद्वाक्पारुष्यमुच्यते । (मिताक्षरा)

3. हुंकारं–वि, ज, द; हुंकारः–उ.

4. क्रमात्तस्य–ना. सं., १५, २; वि. र., २४१.

5. दण्डोऽप्युक्तः–स, वि. र., २४१; दण्डोऽपि–ना. सं.

6. त्रिविधः स्मृतः–ना. सं., १५, २.

साक्षेपं निष्ठुरं ज्ञेयमश्लीलं न्यङ्गसंज्ञितम् ।
पतनीयैरुपक्रोशैस्तीव्रमाहुर्मनीषिणः ॥

'गौरवानुक्रमात्' अनुक्रमेण गुरुतरत्वात् ।

<u>कात्यायनः</u> [७७०-७७२]

यस्त्वसत्संज्ञितैरङ्गैः[1] परमाक्षिपति[2] कचित् ।
अभूतैर्वाऽथ भूतैर्वा निष्ठुरा वाक् स्मृता तु सा ॥

न्यङ्गावगूरणं[3] वाचा क्रोधात्तु कुरुते यदा ।
वृत्तदेशकुलानां च अश्लीला सा बुधैः स्मृता ॥

महापातकयोक्त्री च राजद्वेषकरी[4] च या ।
जातिभ्रंशकरी वाऽथ[5] तीव्रा सा प्रथिता तु वाक् ॥

'न्यङ्गावगूरणं' [6]निकृष्टाङ्गप्रकाशेन तिरस्करणम् ।

<u>बृहस्पतिः</u>

अप्रियोक्तिस्ताडनं च पारुष्यं द्विविधं स्मृतम् ।
एकैकं तु त्रिधा[7] भिन्नं [8]दमश्चोक्तस्त्रिलक्षणः ॥

देशग्रामकुलादीनां क्षेपः पापे[9] नियोजनम् ।
द्रव्यं विना तु प्रथमं वाक्पारुष्यं तदुच्यते ॥

1. स, A. S. B. and S. B. (a)-अर्थैः
2. पुनराक्षिपति-स.
3. 'न्यग्भावकरणं' इति व्यवहारप्राकाश--माधवधृतपाठः । 'कल्पतरौ न्यङ्गावगूरणमिति पठित्वा निकृष्टाङ्गप्रकाशेन तिरस्करणमिति व्याख्यातम् । न्यग्भावकरणमिति तु माधवादिसंमतः पाठः ।' (व्य. प्र., ४८३)
4. रागद्वेषकरी-ज, वि. र., २४१, व्य. प्र. ४८३.
5. जातित्रासकरी-स.
6. विकृष्टाङ्गप्रकाशेन-स.
7. द्विविधा-ज.
8. दण्डश्चोक्तः-B. J.
9. प्रायो-स.

भगिनीमातृसम्बन्धमुपपातकशंसनम् ।
पारुष्यं मध्यमं प्रोक्तं वाचिकं[1] शास्त्रवेदिभिः ॥

अभक्ष्यापेयकथनं[2] महापातकदूषणम् ।
पारुष्यमुत्तमं प्रोक्तं तीव्रं मर्माभिघट्टनम् ॥

'द्रव्यं विना' इत्यत्र द्रव्यशब्दोऽभिधेयपरः । तेनोच्यमानार्थव्यतिरेकेणैवं-[3]विधमभिधानं वाक्पारुष्यमित्यर्थः[4] ।

कात्यायनः [७७३-७७४]

[5]योऽगुणान् कीर्तयेत्क्रोधान्निर्गुणे वा गुणज्ञताम् ।
अन्यसंज्ञानुयोगी[6] च वाग्दुष्टं तं नरं विदुः ॥

[7]दुष्टस्यैव हि यान् दोषान् कीर्तयेत्क्रोधकारणात् ।
[8]अन्यापदेशवादी च वाग्दुष्टं तं नरं विदुः ॥[9]

1. ज-वाचकं; द-वाविकं; स-वादिकं.
2. प्रथनं-वि. र., २४२.
3. विषमभिधानं-स, व्य. प्रका., ४८३; विधाभिधानं-उ.
4. Cited by व्य. प्रका., ४८३, which continues-द्रव्यं विना द्रव्यवैशिष्ट्यं विना इति मदनरत्नः । 'अभिघट्टनं' उत्पाटनम् (व्य. प्र.) ॥ भगिनीमातृसंबन्धमुपपातकशंसनं 'तव भगिनी, तव माता मया ग्राह्या' इत्यभिकीर्तनमित्यर्थः । (वि. र., २४२) cf., याज्ञवल्क्य, २, २०५-अभिगन्तास्मि भगिनीं मातरं वा तवेति च । शपन्तं दापयेद्राजा पञ्चविंशतिकं दमम् ॥
5. 'योऽगुणान् कीर्तयेत्क्रोधान्निर्गुणे वा गुणेऽशताम्'-स.
6. संज्ञानुयोजी-ज, स, वि, वि. र., २४२.
7. अदुष्टस्यैव यो दोषान्-वि. र., २४३.
8. अन्यापदेशवादी-वि.
9. 'अन्यसंज्ञानुयोजी' निम्हितसंज्ञाव्यपदेशकारी । 'अदुष्टस्यैव' इत्येवकारोऽप्यर्थः । 'वाग्दुष्टं' वाक्पारुष्यदुष्टम् । (वि. र., २४३)

बृहस्पतिः [२०, ८]

समानयोः समो दण्डो न्यूनस्य द्विगुणस्तु सः ।
उत्तमस्यार्धिकः प्रोक्तो वाक्पारुष्ये परस्परम्[1] ॥

याज्ञवल्क्यः [२, २०६, २०७]

अर्धोऽधमेषु द्विगुणः परस्त्रीषूत्तमेषु च ।
दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरैः ॥

प्रतिलोमापवादेषु[2] द्विगुणास्त्रिगुणा[3] दमाः ।
[4]वर्णानामानुलोम्येन तस्मादर्धार्धहानितः ॥

'अर्धो' पञ्चविंशतेः । 'पञ्चविंशतिको दमः' इति पूर्वमुक्तत्वात् । 'अधमेषु' आक्षेप्त्रपेक्षया निकृष्टगुणादिषु आक्षिप्तेष्वाक्षेप्तुरुत्तमादर्धदण्डो राज्ञा ग्राह्य इत्यर्थः । एवमुत्तरत्रापि । 'वर्णाः' [5]क्षत्रविप्रादयः । 'जातयो'ऽत्र [6]मूर्धावसिक्तम्लेच्छादयः ।[7]

1. परस्परं वाक्पारुष्ये वृत्ते आक्षेपकस्य दण्डे यद्यसौ आक्षिप्तेन समो जात्यादिभिस्तदा समो दण्डः । यदि न्यूनः तदा तस्योक्तद्विगुणः । यदि उत्कृष्टः तदा तस्योक्तादर्धो दण्ड इत्यर्थः । (वि. र., २४३)

2. प्रतिलोमापराधेषु–ज, द; प्रतिलोम्यपवादेषु–B. J.

3. द्विगुणा त्रिगुणा–ज.

4. 'वर्णान्त्येष्वानुलोम्येन तस्मादेवार्धहानतः' इति विश्वरूपपाठः

5. विप्रक्षत्रादयः–स.

6. मूर्धावसिक्ताम्बष्ठादयः–स.

7. परशब्द उत्कृष्टार्थः । परैरुत्कृष्टैः गुणतो वर्णतो वा परिणीताः परस्त्रियः । तास्वधिक्षिप्तासु । उत्तमेषु च गुणवर्णादिभिः पुरुषेषु स्त्रीषु वा । ...'वर्णान्त्याः' शूद्राः । तेषां प्रतिलोमापवादे ब्राह्मणादिक्रमेणोक्तदण्डस्य चतुर्गुणादिकल्पनम् । आनुलोम्येन तु तस्मादेवार्धहानतः उक्तदण्डात् अर्धापचयेन । शूद्रापवादे अर्धदण्डो वैश्यस्य, पादः क्षत्रियस्य, अर्धपादो ब्राह्मणस्य । एवं गुणाद्यानुलोम्येऽपि बोध्यम् । (विश्वरूपः)

**कात्यायनोशनसौ** [७७५]

मोहात्प्रमादात्संहर्षात्प्रीत्या चोक्तं मयेति यः ।
नाहमेवं पुनर्वक्ष्ये दण्डार्धं तस्य कल्पयेत् ॥[1]

**याज्ञवल्क्यः** [२, २०४]

[2]सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणाम् ।[3]
क्षेपं करोति चेद्दण्ड्यः पणानर्धत्रयोदश ।[4]

**बृहस्पतिः** [२०, ५]

समजातिगुणानां च[5] वाक्पारुष्ये परस्परम् ।
विनयोऽभिहितः शास्त्रे पणानर्धत्रयोदश ॥

**विष्णुः** [५, ३५-३६]

समवर्णाक्रोशने द्वादशपणान् दण्ड्यः । हीनवर्णाक्रोशने षट्[6] ।

**मनुनारदौ** [मनु, ८, २७४; नारद, १८, १८]

काणं वाऽप्यथवा खञ्जमन्यं वापि तथाविधम् ।[7]
तथ्येनापि ब्रुवन्दाप्यो दण्डं [8]कार्षपणावरम् ॥

**विष्णुः** [५, २७]

दण्ड्यः काणखञ्जादीनां तथात्वाद्यपि कार्षापणद्वयम् ।

1. परिहार्यवाक्पारुष्यकाराभिप्रायमेतत् (वि. र., २४०.)

2. सत्वासत्वान्यथास्तोत्रैः–द.

3. 'हीनाङ्गेन्द्रियरोगिणाम्' इति विश्वरूपाचार्यः । 'हीनाङ्गाः' खञ्जादयः । हीनेन्द्रियाः काणादयः । कुष्ठाद्यभिभूता रोगिणः । (विश्वरूपः)

4. प्रथमवाक्पारुष्ये समजातिगुणविषयमेतत् । (वि. र., २४५)

5. तु–द, स.

6. वि. स्मृ.–षट् दण्ड्यः

7. एकेनाक्ष्णा विकलः 'काणः' । 'खञ्जः' पादविकलः । 'तथाविधं' कुणिचिपिटनासम् । 'तथ्येन' नासत्येन अपिशब्दाद्वितथेन अकाणे काण इत्युक्ते 'कार्षापणावरो दण्डः'–(मेधातिथिः)

8. कार्षपणावरम्–ज.

शङ्खलिखितौ

यथाकालमुत्तमवर्णाक्षेपे [1]तत्प्रमादो दण्डस्त्रयो वा कार्षापणाः । [2]शुक्तवाक्याभिधानेऽप्येवमेव ।[3]

[4]तथा

सवर्णव्यतिक्रमे[5] द्वादश[6] कार्षापणाः । यथारूपविशिष्टाक्षेपेऽविशिष्टस्य चतुर्विंशतिः । अविशिष्टस्यातिक्रमे विशिष्टस्य ततोऽर्धम् ।

म. नारदौ [मनु, ८, २६९; नार. १८, १७]

[7]सवर्णे हि द्विजातीनां द्वादशैव व्यतिक्रमे ।
वादेष्ववचनीयेषु[8] तदेव द्विगुणं भवेत् ॥[9]

याज्ञवल्क्यः [२, २०५; २०८-२०९]

अभिगन्तास्मि भगिनीं मातरं च तवेति ह ।
शपन्तं दापयेद्राजा पञ्चविंशतिकं दमम् ॥[10]

1. तत्प्रमादो–A. S. B.; तत्वमादो–ज; तत्प्रसादो दण्डाः–स.

2. भक्तवाक्याभिधाने–वि.

3. ज adds here the explanation–'शुक्तं' अम्लमित्यर्थः ॥ वि. र., २४६, explains 'शुक्तं' परुषम् । परुषवाक्येऽतिदेशात्तदम्यवाक्पारुष्यपरः ।

4. पुनः शङ्खलिखितौ–ज, वि.

5. सर्ववर्णव्यतिक्रमे–द.

6. द्वादशपणाः–द.

7. 'समवर्णे' इति मुद्रितकोशेषु

8. वादेषु वचनीयेषु–all Mss. except स and ज.

9. समवर्णव्यतिक्रमे परस्पराक्रोशे द्वादश दण्डः । 'वादाः' आक्रोशाः । 'अवचनीयाः' अत्यन्तनृशंसाः मातृभगिनीभार्यादिगताः । (मेधातिथिः)

10. अयं च समवर्णानां समानगुणानां च दण्डकल्पः । गुणवर्णवैषम्ये पुनः 'अर्धोऽधमेषु' इत्यादि [पूर्वोक्तम्]–विश्वरूपः

बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः ।
शत्यस्ततोऽधिकः[1] पादनासाकर्णकरादिषु ॥[2]

अशक्तस्तु वदन्नेवं दण्डनीयः पणान् दश ।
[3]तथा शक्तः प्रतिभुवं दाप्यः क्षेमाय तस्य तु ॥

'वाचिके विनाशे' [4]'बाहुं छेत्स्यामीत्यादिरूपतः । 'शत्यः' शतपरिमितो दण्डः । 'पादनासाकर्णकरादिषु विनाशे वाचिके' इत्यनुषङ्गः । 'अशक्तः' [5]विनाशकरणासमर्थः । 'प्रतिभुवं दाप्यः' शतं दण्डयित्वा अशक्तस्य क्षेमार्थं लग्नकं दापयितव्य इत्यर्थः ।

'दण्ड्य' [6]इत्यनुवृत्तौ विष्णुः [५, ३३]

व्यङ्गतायुक्ते क्षेपे कार्षापणशतम् ।

मनुः [८, २७५]

मातरं पितरं जायां भ्रातरं तनयं गुरुम् ।
आक्षारयन् शतं दाप्यः पन्थानं वाऽददद्गुरोः ॥

'आक्षारयन्' तिरस्कुर्वाणः ।

[7]'क्रोशत' इत्यनुवृत्तौ शङ्खलिखितौ—

[8]तथाधिकृतान् विप्रान् गुरूंश्च निर्भर्त्सनं[9] मुण्डनं ताडनं, गोमयानुलेपनं खरारोहणं दर्पहरो[10] दण्डो वा ।

1. शत्यस्तदधिकः–ज, B. J.

2. शतेनापि निवृत्तः 'शत्यः' । शतं दण्ड्य इत्यर्थः । ऊर्वस्थिसक्थीत्युच्यते । (विश्वरूपः)

3. शक्तः प्रतिभुवं दाप्यस्तथा क्षेमाय तस्य तु–ज.

4. बाहू ते छेत्स्यामीत्यादिरूपतः–स, बि.

5. विनाशकरणासमर्थः–द.

6. तुष्यतु–उ.

7. क्रो इत्यनुवृत्तौ–बि.

8. तथा विधिकृतान्–ज.

9. निर्वासनं–ज.

10. द्रव्यहरो–बि.

'दण्ड्य' इत्यनुवृत्तौ विष्णुः [५, २८]

गुरूनाक्षारयन्[1] कार्षापणशतम् ।

बृहस्पतिः [२०, ९]

क्षिपन् स्वस्रादिकं[2] दद्यात्पञ्चाशत्पणिकं दमम् ।

मनुनारदौ [मनु, ८, २६७; नारद, १८, १५]

शतं ब्राह्मणमाक्रुश्य[3] क्षत्रियो दण्डमर्हति ।
वैश्योऽध्यर्धशतं द्वे वा शूद्रस्तु [4]वधमर्हति ॥

'दण्ड' इति शेषे हारीतः

अधोवर्णानामुत्तमवर्णाक्रोशाक्षेपाभिमन्ते द्वष्टौ पुराणाः ।[5]

शङ्खलिखितौ

आक्रोशे [6]ब्राह्मणस्य क्षत्रियः शतं दण्ड्यः । शतार्धं वैश्यस्य । पञ्चविंशतिं शूद्रस्य ।

मनुनारदौ [मनु, ८, २६८][7]

[8]विप्रः पञ्चाशतं दण्ड्यः क्षत्रियस्याभिशंसने ।
[9]वैश्यस्य वार्धपञ्चाशत् शूद्रे द्वादशको दमः ॥

1. गुरूनाक्षिपन्–मु. वि. स्मृ.

2. विप्रादिकं–व्य. प्र. पाठः (४८५); श्वश्र्वादिकं–व्य. प्र., (४८६)

3. परुषवचनं 'आक्रोशः'–(मेधातिथिः) ॥ 'आक्रुश्य' 'मध्यमेन वाक्पारुष्येणेति पारिजातः (वि. र., २४८)

4. 'वधः' जिह्वाच्छेदादि (वि. र., २४९)

5. पणः–द; पुराणशब्दोऽत्र द्वात्रिंशद्रूप्यकृष्णलपरः (वि. र., २४९)

6. Lacuna in वि after this to end of the citation.

7. नारदीयमनुसंहिता, १६, १५ [पृ. १६८]; 'वैश्यं' इति तत्र पठितम् ॥ नारदस्मृति, १४, १५:—पञ्चाशत् ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंसने । वैश्ये स्यादर्धपञ्चाशच्छूद्रे द्वादशको दमः ॥

8. विप्रः शतार्धं दण्ड्यस्तु–B. J., वि. र., २४९.

9. वैश्यस्य त्वर्धपञ्चाशत्–B. J., वि. र., २४९.

बृहस्पतिः [२०, १२-१६]

विप्रे शतार्धं दण्डस्तु क्षत्रियस्याभिशंसने ।
विशस्तथार्धपञ्चाशत् शूद्रस्यार्धत्रयोदश ॥

सच्छूद्रस्यायमुदितो विनयोऽनपराधिनः ।
गुणहीनस्य पारुष्ये ब्राह्मणो नापराध्नुयात् ॥

वैश्यस्तु क्षत्रियाक्रोशे दण्डनीयः शतं भवेत् ।
तदर्धं क्षत्रियो वैश्यं क्षिपन् विनयमर्हति ॥

[1]शूद्राक्रोशे क्षत्रियस्य पञ्चविंशतिको[2] दमः ।
वैश्यस्य [3]चैतद्द्विगुणं शास्त्रविद्भिरुदाहृतम् ॥

[4]वैश्यमाक्षारयन् शूद्रो दाप्यः स्यात्प्रथमं दमम् ।
क्षत्रियं मध्यमं चैव विप्रमुत्तमसाहसम् ॥

विष्णुः [५, ३४]

मातृयुक्ते तूत्तमसाहसम् ।

'मातृयुक्ते' आक्रोशे 'उत्तमसाहसं' दण्डनीय इत्यर्थः ।

[5]'शूद्रस्य' इत्यनुवृत्तौ बृहस्पतिः

धर्मोपदेशकर्ता च वेदोदाहरणान्वितः[6] ।
आक्रोशकस्तु विप्राणां जिह्वाच्छेदेन [7]दण्ड्यते ॥

1. शूद्राऽऽक्षेपे-वि. र., २५०.
2. पणविंशतिको-वि. र., २५०.
3. चेत्स्याद्द्विगुणं-वि. र., २५०.
4. 'प्रथमं दमं' पणानां द्वे शते सार्धम् । 'मध्यमं' पञ्चशतानि । 'उत्तमं' सहस्रम्-(वि. र., २५०)
5. शूद्र इत्यनुवृत्तौ-द.
6. वेदोदाहरणानि च-द.
7. दण्डयन्-द.

गौतमः [१२, १]

शूद्रो द्विजातीनभिसन्धायाभिहत्य[1] च वाग्दण्डपारुष्याभ्यामङ्गं मोच्यो येनोपहन्यात् ॥[2]

'अभिसन्धाय' बुद्धिपूर्वं वाचाऽतिक्रम्य। 'अभिहत्य' ताडयित्वा बुद्धिपूर्वमुग्रेण दण्डेन ताडयित्वा। 'अङ्गं मोच्यो' तेनाङ्गेन वियोजनीयः।

आपस्तम्बः [२, २७, १४]

जिह्वाच्छेदनं शूद्रस्य [3]आर्यं धार्मिकमाक्रोशतः।

पुराणाधिकारे 'अधमवर्णानामुत्तमवर्णस्य' इत्यनुवर्तमाने—

हारीतः

अनृताभिशंसने तदङ्गच्छेदः पञ्चशतं वा। [4]आद्येषु [5]पादो न वा। स्वामित्वादादिवर्णत्वाच्चोत्तमानाम्।

'आद्येषु' ब्राह्मणादिवर्गेषु। 'पादो' अष्टौ पुराणाः पूर्वमुक्तास्तेषां चतुर्थो भागः। 'न वा' पादो दण्ड इत्यन्वयः।

मनुनारदौ [मनु, ८, २७०-२७२; नार., १८, २२-२४]

[6]एकजातिर्द्विजातींस्तु वाचा दारुणया क्षिपन्।
जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः॥

1. निहत्य च–बि.

2. दण्डग्रहणं हस्तादेरपि उपलक्षणम्। एवं कुर्वन्नङ्गमोच्योऽवयवेन वियोजनीयो येनाङ्गेनोपहन्यादपराधं कुर्यात्तदङ्गं मोच्यः। हस्तेन ताडने हस्तच्छेदः पादेन ताडने पादच्छेदः वाचा जिह्वाच्छेदः। पारुष्यग्रहणात् परिहासेनाप्रियवचने परिहासादिना ताडने च नेदं भवति। (हरदत्तः)

3. अतिधार्मिकमाक्रोशतः–वि. र., २५१.

4. चाद्येषु पादोनं वा–ज; पञ्चाशतं क्षेपपादो–द.

5. 'पादो न वा किंचित्' इति दण्डविवेकपाठः; पादोनं वा–उ.

6. 'एकजातिः' शूद्रः। सः त्रैवर्णिकान् 'क्षिपन्' आक्रोशन् 'दारुणया' पातकादियोगिन्या 'वाचा' नृशंसादिरूपया जिह्वाच्छेदं लभते। 'जघन्यप्रभव' इति पादाभ्यां ब्रह्मण उत्पन्न इति हेत्वभिधानं प्रतिलोमानामपि ग्रहणार्थम्-(मेधातिथिः)

[1]नामजातिग्रहं त्वेषामभिद्रोहेण कुर्वतः ।
निक्षेप्योऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः ॥

धर्मोपदेशं दर्पेण द्विजानामस्य कुर्वतः ।
तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः ॥

शूद्र[2] इत्यनुवृत्तौ गौतमः [१२, ४]

अथ [हा][3]स्य वेदमुपशृण्वतस्त्रपुजतुभ्यां [4]श्रोत्रपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेदः ॥

[5]मनुः [८, २७३]

श्रुतं देशं च जातिं च कर्म शारीरमेव च ।
[6]वितथेन ब्रुवन् दर्पाद्दाप्यः स्याद्द्विशतं दमम् ॥

विष्णुः [५, २६]

श्रुतदेशजातिकर्मणामन्यथावादी कार्षापणशतद्वयं[7] दण्ड्यः ।

[8]नारदः [१८, १९]

न किल्बिषेणापवदेच्छास्त्रतः कृतपावनम् ।
न राज्ञो धृतदण्डं च दण्डभाक् तद्व्यतिक्रमात् ॥

1. 'अभिद्रोहः' आक्रोशः । अभिद्रोहेण क्रोधेन-(मेधातिथिः)
2. शूद्रस्य–द.
3. अथ हास्य इति मस्करिपाठः (p. 195).
4. श्रोत्रप्रतिपूरणम् (मस्करिपाठः); कर्णपूरणं–ज.
5. Before मनुः the following dictum of हारीत and a comment are introduced in ज and वि. र., २५२—

तस्माद्वेदश्रुतिश्रवणे शूद्रस्य त्रपुसीसौ विप्लाव्य कर्णौ पूरयेत् ।
'विप्लाव्य' द्रवीकृत्य ।

6. 'वितथेन' असत्येन (वि. र., २५२)
7. 'पणद्वयं' इति वि. र. पाठः (२५३)
8. This śloka is wrongly made by वि. र., २५३, a 'prose' continuation of the previous sentence from *Viṣṇusmṛti*.

<u>याज्ञवल्क्यः</u> [२, २१०]

[1]पतनीयकृते क्षेपे दण्डो मध्यमसाहसः ।
उपपातकयुक्ते तु दाप्यः प्रथमसाहसम् ॥

<u>मनुः</u> [८, २७६-७]

[2]ब्राह्मणक्षत्रियाभ्यां तु दण्डः कार्यो विजानता ।
ब्राह्मणे साहसः पूर्वः क्षत्रिये त्वेव मध्यमः ॥

[3]विट्शूद्रयोरत्वेवमेव स्वजातिं प्रति तत्त्वतः ।
छेदवर्जंप्रणयनं दण्डस्येति विनिश्चयः ॥

<u>व्यासः</u>

पापोपपापवक्तारो महापातकशंसकाः ।
आद्यमध्योत्तमान् दण्डान् [4]दण्ड्यास्ते ते यथाक्रमम् ॥[5]

<u>विष्णुः</u> [५, २९-३२]

परस्य पतनीये क्षेपे कृते तूत्तमसाहसम् । उपपातकयुक्ते मध्यमम् । त्रैविद्यवृद्धानां क्षेपे जातिपूगानां च । ग्रामदेशयोः प्रथमम् ।[6]

1. पतनीये कृतक्षेपे–B. J.; पतनीये कृते क्षेपे–ज, वि. र., २५२.

2. 'ब्राह्मणक्षत्रियाभ्यां' परस्पराक्रोशे कृते तयोरयं 'दण्डः' इत्येवमध्याहारेण योजना ॥ (मेधातिथिः)

3. एवमेव प्रथममध्यमौ साहसौ इत्यतिदिश्यते । तेनैव क्रमेण वैश्यस्य शूद्राक्रोशे प्रथमः शूद्रस्य वैश्याक्रोशे मध्यमः । छेदवर्जं दण्डस्य प्रणयनमिति 'एकजातिर्द्विजातिम्' इत्यनेन जिह्वाच्छेदं प्राप्तं निवर्तयति । 'प्रणयनं' प्रवर्तनम् । (मेधातिथिः)

4. दद्युस्त्वेते–A. S. B., S. B. (a), B. J., ज, स.

5. महापातकाम्न्यूनमुपपातकम् । ततो न्यूनं पापम् । तत्र पापेऽधमो दण्डः, उपपापे मध्यमः, महापातके तूत्तमः । (वि. र., २५४)

6. त्रैविद्यवृद्धानामित्यत्र उत्तमसाहसमित्यनुषङ्गः । जातिपूगानामित्यत्र मध्यममित्यनुषङ्गः । (वि. र., २५४)

याज्ञवल्क्यः [२, २११]

त्रैविद्यनृपदेवानां क्षेप उत्तमसाहसः ।[1]
[2]मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोः ॥[3]

बृहस्पतिः [१०, १७, १९]

देशादिकं क्षिपन् दाप्यः पणानर्धत्रयोदश ।
पापेन योजयन्दर्पाद्दाप्यः प्रथमसाहसम् ॥

एष दण्डः समाख्यातः पुरुषापेक्षया मया ।
समन्यूनाधिकत्वेन कल्पनीयो मनीषिभिः ॥

नारदः [१८, ३०]

[4]अवक्रुश्य च राजानं [5]वर्त्मनि स्वे व्यवस्थितम् ।
जिह्वाच्छेदाद्भवेच्छुद्धिः [6]सर्वस्वहरणेन वा ॥

याज्ञवल्क्यः [२, ३०२]

राज्ञोऽनिष्टप्रवक्तारं तस्यैवाक्रोशकं तथा ।
तन्मन्त्रस्य च भेत्तारं छित्त्वा जिह्वां प्रवासयेत् ॥

नारदः [१८, २०]

लोकेऽस्मिन् द्वाववक्तव्याववध्यौ च प्रकीर्तितौ ।
ब्राह्मणश्चैव राजा च तौ हीदं बिभ्रतो जगत् ॥

1. साहसः–मु. मिता. पाठः; साहसम्–उ.

2. This line and the first verse of बृहस्पति are missing in उ, चि and S. B. (b)

3. नृपग्रहणमाचार्यपितृश्रोत्रियादीनामपि सामान्यात् लक्षणार्थम् । पूगशब्दश्चात्र गणमात्रवचनः । ततश्च जातिपूगानां जातिमतां गणानां क्षत्रियादिसमुदायानामित्यर्थः । (विश्वरूपः)

4. उपक्रुश्य–मु. ना. स्मृ., २१३.

5. कर्मणि स्वे–वि. र., १५५; मु. ना. स्मृ., २१३.

6. सर्वस्व हरणेन–द.

पतितं पतितेत्युक्त्वा चौरं चौरेति वा पुनः ।
[1]वचनात्तुल्यदोषः स्यान्मिथ्या द्विर्दोषतां व्रजेत् ॥[2]

<u>कात्यायनः</u> [७७६-७७८]

यत्र स्यात्परिहारार्थं पतितस्तेन कीर्तितः ।
वचनात्तत्र न स्यात्तु दोषो यत्र विभावयेत् ॥

अन्यथा तुल्यदोषः स्यान्मिथ्योक्तौ तूत्तमो दमः ।
महता तु प्रयत्नेन वाग्दुष्टं साधयेन्नरम् ॥

अतथ्यं [3]श्रावितं राजा प्रयत्नेन विचारयेत् ।
अनृताख्यानशीलानां जिह्वाच्छेदाद्विशोधनम् ॥

<u>हारीतः</u>

मिथ्यादूषिणां मेलकानां राजा जिह्वां छिन्द्यात् । दण्डयेद्वा सहस्रम् । [4]कणान् भक्षयेदब्दम् ।

'मेलको' भक्षकः ।

<u>उशना</u>

यत्र नोक्तो दमः पूर्वैरानन्त्यात्तु [5]महात्मभिः ।
तत्र कार्यं परिज्ञाय कर्तव्यं दण्डधारणम् ॥

कल्पतरौ व्यवहारकाण्डे वाक्पारुष्यम्[6]

1. वचनादस्य दोषः स्यात्-द.

2. A. S. B., ज and B. J. add here the comment—'वचनात्' वाक्यरूपात्, followed by the introduction to the next verse, (एतदपवादमाह कात्यायनः)—which occur in वि. र., २५६.

3. श्रावितो राजा-द; सीधितं राजा-वि.

4. A. S. B. adds-कणान् भक्षयेदब्दम्

5. महामतिः-द.

6. A. S. B. has इति व्यवहारकाण्डे विवादप्रकरणे कृत्यकल्पतरौ वाक्पारुष्यपर्व; इति महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेवमहासान्धिविग्रहिकेण भट्टहृदयधरात्मजेन भट्टश्रीमल्लक्ष्मीधरेण विरचिते कृत्यकल्पतरौ व्यवहारकाण्डे वाक्पारुष्यम् ॥-S. B. (a), ब; इति व्यवहारकल्पतरौ वाक्पारुष्यपर्व-ज.

६९

# अथ दण्डपारुष्यम्

तत्र बृहस्पतिः [२१, १]

हस्तपाषाणलगुडैर्भस्मकर्दमपांसुभिः ।
आयुधैश्च प्रहरणं दण्डपारुष्यमुच्यते ॥

व्यासः

भस्मादीनां प्रक्षेपणं ताडनं च करादिना ।[1]
आवेष्टनं चांशुकाद्यैर्दण्डपारुष्यमुच्यते ॥

नारदः [१८, ४-६]

[2]परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः ।
भस्मादिभिश्चोपघातो दण्डपारुष्यमुच्यते ॥

[3]तत्रापि दृष्टं त्रैविध्यं मृदुमध्योत्तमक्रमात् ।
अवगूरणनिस्सङ्कपीडनाक्षतदर्शनैः[4] ॥

हीनमध्योत्तमानां तु त्रयाणां समतिक्रमात् ।
त्रीण्येव [5]साधनान्याहुः तत्र कण्टकमोचने ॥[6]

बृहस्पतिः [१९, ६-७]

भस्मादीनां प्रक्षेपणं ताडनं च करादिना ।[7]
प्रथमं दण्डपारुष्यं दमः कार्योऽत्र माषकः[8] ॥

1. करादिभिः–द.  2. परदाररतिर्द्रोहो–द.

3. तस्यापि–मु. ना. स्मृ., (p. 209).

4. पातनाक्षतदर्शनात्–A. S. B.; पानक्षतदर्शनात्–B. J.; निश्शङ्कपातनक्षतदर्शनात्–ज; पातनन्तु दर्शनात्–द.

5. साहसान्याहुः–A. S. B., ज, वि. र., २५९, मु. ना. स्मृ. २०९.

6. कण्टकशोधनम्–द, मु. ना. स्मृ., २१०; कण्टकशोधने–A. S. B., B. J., ज, स, वि.

7. करादिभिः–द.  8. माषिकः–वि. र., २५९; स, अपरार्कः, (८११)

एष दण्डः समेषूक्तः परस्त्रीष्वधिकेषु च ।
द्विगुणस्त्रिगुणो ज्ञेयः प्राधान्यापेक्षया बुधैः ॥

याज्ञवल्क्यः [२, २१३-२१४]

भस्मपङ्करजःस्पर्शे दण्डो दशपणः स्मृतः ।
अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणः स्मृतः ॥

समेष्वेवं परस्त्रीषु द्विगुणस्तूत्तमेषु च ।
हीनेष्वर्धदमो मोहमदादिभिरदण्डनम् ॥[1]

कात्यायनः [७८४]

छर्दिमूत्रपुरीषाद्यैरापाद्यः स चतुर्गुणः ।
षड्गुणः कायमध्ये तु मूर्ध्नि त्वष्टगुणः स्मृतः ॥

याज्ञवल्क्यः [२, २१७]

पादकेशांशुककरोल्लुञ्छनेषु पणान् दश ।
पीडाकर्षांशुकावेष्टपादाध्यासे शतं दमः ॥[2]

पीडा चाकर्षश्चांशुकावेष्टश्च पादाध्यासश्चेति समाहारद्वन्द्वः । एतदुक्तं भवति। अंशुकेनावेष्ट्य गाढमापीड्याकृष्य यः पादेनाध्यास्ते तस्य पणशतं दण्डः ।[3]

कात्यायनः [७८५]

उद्गूरणे तु हस्तस्य कार्यो द्वादशको दमः ।
स एव द्विगुणः प्रोक्तः पातनेषु सजातिषु[4] ॥

1. 'आदि' ग्रहणादुन्मादो लक्ष्यते । (वि. र., २६०)

2. 'पीडाकर्षाञ्जनावेष्टय पादध्यासे शतं दमः' इति विश्वरूपपाठः। 'पीडया कर्षणेनाञ्जनं पीडाकर्षाञ्जनम् आञ्जनेन ध्यामीकरणेन त्वावेष्टय वशं नीत्वेत्यर्थः' इति व्याख्यातं च।

3. Repeated by वि. र., २६०.

4. पालनेषु सजातिषु–द.

बृहस्पतिः [२१, ८]

उद्यतेऽश्मशिलाकाष्ठे कर्तव्यः प्रथमो दमः ।
[1][परस्परं हस्तपादे पंचविंशतिकस्तथा ॥]

[2]'दण्ड्य' इत्यनुवृत्तौ विष्णुः [५, ६०-६२, ६४]

हस्तेनोद्गूरयिता दश कार्षापणान् । पादेन विंशतिम् । काष्ठेन प्रथम-साहसम् । शस्त्रेणोत्तमम् ॥

अधमो यदा शस्त्रेणोत्तमस्योद्गूरणं करोति तदासावुत्तमसाहसं दण्ड्य इत्यर्थः ।[3]

याज्ञवल्क्यः [२, २१६]

उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ ।
[4]परस्परस्य सर्वेषां शस्त्रे मध्यमसाहसम् ॥

[5]एतच्च समानजातीयानामवगन्तव्यम् । असमानजातीयानां दण्डान्तर-श्रवणात् ॥

पणानुवृत्तौ[6] शङ्खलिखितौ

प्रहारोद्यमे षट्पंचाशन्निपातने तद्द्विगुणम् ।[7]

1. This second half is found in वि. र., २६२, and A. S. B. with the explanation—अयं चोभयोरेव समानजात्यादेः, and is missing in the other manuscripts.

2. Supplied by उ, वि, स, ज, and द, and confirmed by वि. र., २६१; omitted by A. S. B., S. B. (a) and B. J.

3. Repeated in वि. र., २६१.

4. परस्परन्तु सर्वेषां–द.

5. Repeated in वि. र., २६२.

6. वि omits 'पणानुवृत्तौ'

7. इदं च उत्तमवर्णेनाधमवर्णस्य दण्डोद्यमने बोद्धव्यम्–वि. र., २६२.

बृहस्पतिः [२१, ९-१०]

मध्यमः [1]शस्त्रसंधाने संयोज्यः क्रुद्धयोर्द्वयोः ।[2]
कार्यः क्षतानुरूपस्तु लग्ने घाते दमो बुधैः ॥

इष्टकोपलकाष्ठैस्तु ताडने तु द्विमाषकः ।
द्विगुणः शोणितोद्भेदे दण्डः कार्यो मनीषिभिः ॥

विष्णुः [५, ६६, ६७]

[[3]दण्ड्यः] शोणितेन विना दुःखमुत्पादयिता द्वात्रिंशत्पणान् । सह शोणितेन चतुःषष्टिम् ।

मनुः [८, २८४]

त्वग्भेदकः शतं दण्ड्यो लोहितस्य च [4]दर्शकः ।
मांसभेत्ता तु षण्णिष्कान् प्रवास्यस्त्वस्थिभेदकः ॥[5]

बृहस्पतिः [२१, ११-१२]

त्वग्भेदे प्रथमो दण्डो मांसभेदे तु मध्यमः ।
उत्तमश्चास्थिभेदे तु घातने च प्रमापणम् ॥

कर्णनासाकरच्छेदे दन्तभेदेऽङ्घ्रिभेदने ।
कर्तव्यो मध्यमो दण्डो द्विगुणः पतितेषु च ॥

कात्यायनः [७८१]

कर्णौष्ठघ्राणपादाक्षिजिह्वाशिश्नकरस्य च ।
छेदने चोत्तमो दण्डो भेदने मध्यमो भृगुः ॥

1. शस्त्रसंपाते–ज, A. S. B.
2. क्षुद्रयोर्द्वयोः–A. S. B., ज.
3. In Jolly's edn. दण्ड्यः forms the last word in the preceding *sūtra*.
4. प्रवर्तकः–B. J.
5. A. S. B. and ज add here the comment–'निष्कः' चत्वारः सुवर्णाः ।

याज्ञवल्क्यः [२, २१९-२२०]

करपाददन्तभङ्गे छेदने कर्णनासयोः ।
मध्यो दण्डो व्रणोद्भेदे मृतकल्पहते तथा ॥[1]

चेष्टाभोजनवाग्रोधे नेत्रादिप्रतिभेदने ।
कन्धराबाहुसक्थ्नां[2] च भङ्गे मध्यमसाहसः ॥[3]

दण्ड इत्यनुवर्तमाने विष्णुः [५, ७०-७२]

नेत्रकन्धराबाहुसक्थ्यंसभङ्गे चोत्तमम् । उभयनेत्रभेदिनं राजा यावज्जीवं बन्धनान्न मुञ्चेत्[4] । तादृशमेव वा कुर्यात् ।[5]

याज्ञवल्क्यः [२, ३०४]

द्विनेत्रभेदिनो राजद्विष्टादेशकृतस्तथा ।
विप्रत्वेन तु शूद्रस्य जीवतोऽष्टशतो दमः ॥[6]

मनुः [८, २८६]

मनुष्याणां पशूनां च दुःखाय प्रहृते सति ।
यथा यथा महद्दुःखं दण्डं कुर्यात्तथा तथा ॥

1. 'व्रणोद्भेदे' प्ररूढप्रायव्रणस्य पुनर्नवीकरणे । 'मृतकल्पो' मृतप्रायः । (वि. र., २६०)

2. सक्थ्नां च–विश्वरूप–मिताक्षरापाठः; सक्थ्ने च–उ.

3. 'चेष्टानिरोधो' मूर्छा । भोजननिरोधोऽस्त्यभिघातात् भोक्तुमशक्तिः । 'वाङ्निरोधो' वागुच्चारणाशक्तिः । 'कन्धरा' गलस्कन्धसंचारिणी सिरा । (विश्वरूपः)

4. विमुञ्चेत्–मु. वि. स्मृ., २१.

5. तादृशं नेत्रद्वयरहितं वा कुर्यात्कारयेदित्यर्थः । (केशववैजयन्ती)

6. 'राजद्विष्टादेशकृत्' द्वितीये वर्षे राजा मरिष्यतीति आदेशकारी । 'विप्रत्वेन' विप्रचिह्नोपवीतधारणादिना 'जीवतः' शूद्रस्य । (वि. र., २६४); 'श्राद्धभोजनार्थं पुनः शूद्रस्य विप्रवेषधारिणः तप्तशलाकया यज्ञोपवीतवद्रपुष्यालिखेत्' इति स्मृत्यन्तरोक्तं द्रष्टव्यम् । वृत्त्यर्थं तु यज्ञोपवीतादिब्राह्मणलिङ्गधारिणो वध एव । 'द्विजातिलिङ्गिनः शूद्रान् घातयेत्' इति स्मरणात् । (मिताक्षरा)

हारीतः

अधोवर्णानामुत्तमवर्णाक्रोशाभिभवाक्षेपेष्वष्टौ पुराणाः । ग्रीवाभञ्जन[1]-गळस्तनकचवक्त्रग्रहणेषु त्रिंशत् ।[2] रोमोत्पाटनतर्जनावगूरणेषु त्रिषष्टिः । शिखाकर्णाङ्गभङ्गच्छेदेषु द्विशतम् । पादताडनेऽनृताभिशंसने तदङ्गच्छेदः । पञ्चशतं वा । आद्येषु[3] पादोनं वा । [4]स्वामित्वादाद्यवर्णत्वाच्चोत्तमवर्णानामीशानतमो ब्राह्मणः ॥

याज्ञवल्क्यः [२, २१५]

विप्रपीडाकरं छेद्यमङ्गमब्राह्मणस्य तु ।
उद्गूर्णे[5] प्रथमो दण्डः संस्पर्शे तु तदर्धिकः ॥

[6]'संस्पर्शे' वधोद्यमनार्थे[7] शस्त्रादिसंस्पर्शने ।

नारदः [१८, २५; १८, ३१]

येनाङ्गेनावरो वर्णो ब्राह्मणस्यापराध्नुयात् ।
तदङ्गं तस्य छेत्तव्यमेवं शुद्धिमवाप्नुयात् ॥

राजनि प्रहरेद्यस्तु कृतागस्यपि दुर्मतिः ।
शूल्यं[8] तमग्नौ विपचेद्ब्रह्महत्यासमातिगम्[9] ॥

1. ग्रीवसञ्जन–ज, द, स, B. J.; 'आसञ्जन' means 'catching'.
2. 'त्रिंशत्' पुराणाः इत्यर्थः (वि. र., २६५)
3. 'आद्येषु' इत्यादिना–हीनवर्णस्य दण्डमुक्त्वाधिकस्याप्युक्तः । (वि. र., २६५)
4. स्वामित्वादिवर्णत्वाच्चोत्तमानामीशानां–बि; स्वामित्वादिवर्णत्वाच्चोत्तमानामीशानतमो–स.
5. अपूर्णो प्रथमो दण्डः–द.
6. 'उद्गूर्णे' वधार्थमुद्यमनविषयीकृते शस्त्रादौ । 'संस्पर्शे' वधोद्यमनार्थमेव शस्त्रादेः संस्पर्शे । (वि. र., २६५)
7. अपमानार्थे शास्त्रादि–बि.
8. शूले–मु. ना. स्मृ., २१३; शूल्यं–द.
9. शताधिकम्–A. S. B., S. B. (a), B. J., ज, द, मु. ना. स्मृ.; शतातिगम्–स.

'कृतागसि' कृतापराधे । शूलमारोप्य यत्संस्क्रियते तत् 'शूल्यम्' ।[1]

<u>मनुः</u> [८, २७९-२८०]

येन केनचिदङ्गेन हिंस्याच्छ्रेयांसमन्त्यजः[2] ।
छेत्तव्यं तत्तदेवास्य <u>तन्मनोरनु</u>शासनम् ॥

पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति ।
पादेन [3]प्रहरेत्कोपात्पादच्छेदनमर्हति ॥

<u>मनुनारदौ</u> [मनु, ८, २८१-२८३]

सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः[4] ।
कट्यां कृताङ्को निर्वास्यः स्फिचं वास्य [5]प्रकर्तयेत् ॥

अवनिष्ठीवतो दर्पाद्द्वावोष्ठौ छेदयेन्नृपः ।
अवमूत्रयतो [6]मेढ्रमवशर्धयतो गुदम् ॥

केशेषु गृह्णतो हस्तौ छेदयेदविचारयन् ।
पादयोर्दाढिकायां च[7] ग्रीवायां वृषणेषु च ॥

'सहासनमभिप्रेप्सुः' एकासनोपवेशाभिमतः । 'एकासनोपवेशी कट्यां कृताङ्को निर्वास्यः' इति <u>विष्णुवचनात्</u>[8] । 'दाढिका' श्मश्रु ।

1. तेन प्रथमतस्तस्य शूलभेदेन पीडां विधाय अग्निपाकेन पीडा कर्तव्येत्यर्थः । (वि॰ र॰, २६६)

2. 'हिंस्याच्चेच्छ्रेष्ठमन्त्यजः' इति मेधातिथिपाठः

3. 'प्रहरन् कोपात्' इति मेधातिथिपाठः

4. अवकृष्टजः-मु. ना. स्मृ., २१२.

5. अवकर्तयेत्-मु. ना. स्मृ., २१३.

6. शिश्नम्-मु. ना. स्मृ., २१३.

7. तु-मु. ना. स्मृ., २१३.

8. विष्णुस्मृति, ५, २०; वि. र., २६७, has shown this as part of the text and not of the commentary.

गौतमः[1] [१२, ५]

आसनशयनवाक्पथिषु समप्रेप्सुर्दण्ड्यः ।[2]

शूद्रस्येत्यनुवर्तमाने आपस्तम्बः [२, २७, १५]

वाचि पथि शय्यायामासन इति समीभवतो दण्डताडनम् ।[3]

कात्यायनः [७८६]

वाक्पारुष्ये यथैवोक्ताः प्रतिलोमानुलोमतः ।
तथैव दण्डपारुष्ये पात्या दण्डा यथाक्रमम् ॥

विष्णुः [५, ७३-७४]

एवं बहूनां निघ्नतां प्रत्येकश उक्तो दण्डो द्विगुणः[4] । उत्क्रोशन्तमनभिधावतां तत्समीपवर्तिनां संसरतां च ।

याज्ञवल्क्यः [२, २२१]

एकं घ्नतां बहूनां तु यथोक्ताद्द्विगुणो दमः ।
कलहापहृतं[5] देयं दण्डं च द्विगुणं ततः ॥

कात्यायनः [७८८]

वाग्दण्डस्ताडनं चैव येषूक्तमपराधिषु ।
हृतभग्नं प्रदाप्यास्ते शोध्यं निस्स्वैस्तु कर्मणा ॥

कर्मकरणेन 'शोध्यं' तद्धनं परिपूरणीयमित्यर्थः ।

1. वि. र., २६७; present only in A. S. B. and ज.

2. वाक्समत्वं समकालोच्चारणम् । पथि साम्यं पृष्ठतो मुक्त्वा सह गमनम् । (मस्करिभाष्यम्, p. 196)

3. पूर्ववाक्ये [गौतमीये] अस्मिन्नेव विषये दण्ड्यत्वाभिधानं पारुष्यकर्तुः धनवत्त्वपक्षे । इदन्तु निर्धनपक्षे दण्डताडनं इत्यविरोधः । (वि. र., २६८)

4. प्रत्येकमुक्ताद्दण्डाद्द्विगुणः-मु. वि. स्मृ., २१.

5. कालं दायकृतं देयं-बि, उ, स; 'कलहापहृतं' इति विश्वरूप-अपरार्क-मिताक्षरा पाठः

बृहस्पतिः [२१, १५]

अङ्गावपीडने चैव भेदने छेदने तथा ।
समुत्थानव्ययं दाप्यः कलहाय कृतं च यत् ॥

याज्ञवल्क्यः [२, २२२]

दुःखमुत्पादयेद्यस्तु ससमुत्थानजं व्ययम् ।[1]
दाप्यो दण्डं च यो यस्मिन् कलहे समुदीरितः ॥

मनुः [८, २८७]

अङ्गावपीडनायां च [2]प्राणशोणितयोस्तथा ।
समुत्थानव्ययं दाप्यः सर्वदण्डमथापि वा ॥

[3]'अङ्गावपीडनायां' अङ्गानां करचरणादीनां पीडनायाम् । 'प्राणशोणितयो'श्च पीडनायां सत्याम् । 'समुत्थानव्ययं' यावत्कालेन समुत्थानसमर्थो भवति तावत्कालेन पथ्यौषध्यादिना यावद्धनव्ययो भवति तमसौ दापयितव्यः । अथ तस्य यद्यसौ न व्ययं दातुमिच्छति तदा यः समुत्थानव्ययो यश्च दण्डः, तत्सर्वं दण्डत्वेन दाप्य इत्यर्थः ।

कात्यायनः [७८७]

देहेन्द्रियविनाशे तु यथादण्डं प्रकल्पयेत् ।
तथा तुष्टिकरं देयं [4]समुत्थानं च पण्डितैः ॥
समुत्थानव्ययं चासौ दद्यादाव्रणरोपणम् ।

1. यो दुःखमुत्पादयेत् तेन यावत् सम्यगस्योत्थानं निर्दुःखता भवति तावत् यो व्ययः स समुत्थानजो व्ययः स देयः—(विश्वरूपः)

2. प्राणशोणित—इति मेधातिथि-गोविन्दराजपाठः । 'व्रणशोणितयोः' इति कुल्लूकपाठः ।

3. Kullūka has reproduced this commentary almost *verbatim*, while Caṇḍeśvara seems to have missed it.

4. समुखो (मूर्खो) न च पण्डितैः–द.

विष्णुः [५, ७५-७६]

सर्वे [1]च पुरुषपीडाकरास्तदुत्थानव्ययं दद्युः । ग्राम्यपशुपीडाकराश्च ।

मनुः [८, २९९-३००]

भार्या पुत्रश्च दासश्च शिष्यो भ्राता च सोदरः ।
प्राप्तापराधास्ताड्यास्स्यू रज्ज्वा वेणुदलेन वा ॥

पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथंचन[2] ।
अतोऽन्यथा तु प्रहरन् प्राप्तः स्याच्चौरकिल्बिषम् ॥[3]

यमः

भार्या पुत्रश्च दासश्च दासी शिष्यश्च पञ्चमः ।
प्राप्तापराधास्ताड्यास्तु रज्ज्वा वेणुदलेन वा ॥

अधस्तात्तु प्रहर्तव्यं नोत्तमाङ्गे कथंचन ।
अतोऽन्यथा प्रवृत्तस्तु यथोक्तं दण्डमर्हति ॥

ब्रह्मचारीत्यनुवृत्तौ नारदः [८, १३-१४]

अनुशास्यः स गुरुणा न चेदनुविधीयते ।
अवधेनाथवा तन्वा[4] रज्ज्वा वेणुदलेन वा ॥

भृशं न ताडयेदेनं नोत्तमाङ्गे न वक्षसि ।
अनुशास्य च विश्वास्यः शास्यो [5]राज्ञान्यथा गुरुः ॥

[6]'अवधेन' अताडनेन ।

1. सर्वे परप्रपीडाकरा–द.
2. कदाचन–वि. र., २७०.
3. 'भ्राता' कनिष्ठः । 'पृष्ठतो' मर्मणि । 'नोत्तमाङ्गे' न मर्मणि इत्यर्थः । (वि. र., २७०)
4. अविधिनाथवा बध्वा रज्ज्वा–मु. ना. स्मृ., १४३; तन्त्र्या–B. J., वि. र., २७०; ड–तथा
5. राज्ञोऽन्यथा गुरुः–वि. र., २७१; B. J.; राज्ञाऽन्यथा गुरुः–मु. ना. स्मृ., २७१; ज.
6. एतदारभ्य ४९८ पृष्ठे 'मर्यादातिक्रमे' इत्येतत्पर्यन्तो भागः 'स' कोशे नास्ति ।

<u>गौतमः</u> [२, ४९-५१]

शिष्यशिष्टिरवधेन। अशक्तौ रज्जुवेणुविदलाभ्यां तनुभ्याम्। अन्येन घ्नन् राज्ञा शास्यः।

शिष्यानुवृत्तौ <u>आपस्तम्बः</u> [१, ८, २९-३०]

अपराधेषु चैनं सततमुपालभेत। [1]अभित्रास उपवास उदकोपस्पर्शन-मदर्शनमिति दण्डा यथामात्रमानिवृत्तेरिति ॥

अपराधानुरूपं दण्डपातनं कर्तव्यमपराधनिवृत्तिपर्यन्तमित्यर्थः।

<u>नारदः</u> [१८, ३२]

पुत्रापराधे न पिता नाश्वे न शुनि दण्डभाक्।
न मर्कटे च तत्स्वामी तेनैव प्रहितो न चेत् ॥

<u>याज्ञवल्क्यः</u> [२, ३००]

शक्तो ह्यमोक्षयन् स्वामी [2]दंष्ट्रिणां शृङ्गिणां तथा।
प्रथमं साहसं [3]दद्याद्विक्रुष्टे द्विगुणं तथा ॥

'विक्रुष्टे' स्वकीयं शृङ्गिनमपसारयेत्यसकृदाक्रोशे[4] कृते।

<u>बृहस्पतिः</u> [२१, १६-१७]

विविक्ते ताडितो यस्तु [5]हतोऽदृश्येन वा भवेत्।
हन्ता तदानुमानेन विज्ञेयः शपथेन वा ॥

अन्तर्वेश्मन्यरण्ये वा निशायां यत्र ताडितः।
शोणितं यत्र दृश्येत न पृच्छेत्तत्र साक्षिणः ॥

'अदृश्येन' अदृश्यमानेन घातकेन।[6]

1. अभित्रास उपादन उदको–वि.
2. पक्षिणां शृङ्गिणामपि–वि. र., २७१; शृङ्गिणो दंष्ट्रिणस्तथा (विश्वरूपपाठः)
3. दाप्यो विक्रुष्टे–(विश्वरूपः); दण्ड्यो विक्रुष्टे–वि. र., २७१; ज, द, B. J.
4. सारयेत्युत्क्रोशने सति–उ, बि.
5. हेतिर्दृश्यो–वि. र., २७२.
6. अदृश्यमानताडके ताद्रूप्येन मध्यस्थे वा अविद्यमाने–B. J.

नारदबृहस्पती [ना, ४, १७६; बृ., २१, १८]

कश्चित्कृत्वात्मनश्चिह्नं द्वेषात्परमभिद्रवेत् ।
हेत्वर्थगतिसामर्थ्यैस्तत्र युक्तं परीक्षणम् ॥[1]

याज्ञवल्क्यः [२, २१२]

असाक्षिकहते चिह्नैर्युक्तिभिश्चागमेन वा[2] ।
द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृताद्भयात् ॥

कात्यायनः [७७९]

हेत्वादिभिर्न पश्येच्चेद्दण्डपारुष्यकारणम् ।
[3]तदसाक्षिकृतं तत्र दिव्यं वाथ नियोजयेत् ॥

[4]अथ वाग्दण्डपारुष्याधिकारे—

नारदः[5]

विधिः पञ्चविधस्तूक्त एतयोरुभयोरपि ।
विशुद्धिर्दण्डभाक्त्वं च तत्र संबध्यते यथा ॥

पारुष्ये सति संरम्भादुत्पन्ने क्षुब्धयोर्द्वयोः ।
स मान्यते यः क्षमते दण्डभाग्योऽतिवर्तते ॥

1. 'आत्मनश्चिह्नं' व्रणादिरूपं, 'परमभिद्रवेत्' अहमनेन व्रणवान् कृतोऽयं दण्ड्यतामित्यनुयुञ्ज्यात् । 'हेतुः' गद्गदस्वरादिः । 'अर्थः' प्रयोजनम् । 'गतिः' सन्निधिगमनम् । 'सामर्थ्यम्' प्रहारक्षमता । (वि. र., २७२)

2. च–द; व्य. प्र., ४८१; वि. र., २७२.

3. तदा साक्षिकृतं तत्र दिव्यं चापि नियोजयेत्–वि. र., २७३; तदा साक्षिकृतं तत्र दिव्यं नाविनियोजयेत्–व्य. प्र., ४८२; तत्र साक्षिकृतं चैव दिव्यं वा विनियोजयेत्–अपरार्कः, ८११.

4. अथ वाग्दण्डपारुष्ये मनुः । विधिः पञ्चविध–ज, द.

5. A. S. B., S. B. (a), B. J., ज, द–'मनुः'; the first śloka is from *Nāradasmṛti*, १८, ७; all the other ślokas are from नारदीयमनुसंहिता, १६, ७–९, ११, १० (पृ. १६६–१६७)

[1]पारुष्यदोषावृतयोर्युगपत्संप्रवृत्तयोः ।
विशेषश्चेन्न दृश्येत विनयः स्यात्समस्तयोः ॥

द्वयोरापन्नयोस्तुल्यमनुबध्नाति [2]यः पुनः ।
स तयोर्दण्डमाप्नोति पूर्वो वा यदि वोत्तरः[3] ॥

पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक् ।
पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः ॥

'आपन्नयोस्तुल्य'मिति पारुष्ये तुल्यवृत्तयोरित्यर्थः ।[4]

कात्यायनः [७८०]

[5]आभीषणेन दण्डेन प्रहरेद्यस्तु मानवः ।
पूर्वं वा पीडितो वाथ स दण्ड्यः परिकीर्तितः ॥

बृहस्पतिः [२१, १९; २१, ५]

आक्रुष्टस्तु समाक्रोशंस्ताडितः प्रतिताडयन् ।
हत्वाततायिनं चैव नापराधी भवेन्नरः ॥

वाक्पारुष्यादिना नीचो यः सन्तमभिलङ्घयेत् ।
स एव ताडयंस्तस्य नान्वेष्टव्यो [6]महीभुजा ॥

1. पारुष्यदोषधुतयोः–ना. म. सं., १६६; पारुष्यदोषाच्च तयोः–वि. र., २७३; B. J.

2. योऽधिकम्–A. S. B., ज, B. J.

3. यदि वेतरः–ना. म. सं., १६६; यदि वोत्तरः–वि. र., २७४; वि, ज; यदि चोत्तमः–उ.

4. 'विधिः' क्रिया । वाक्पारुष्यं 'त्रिधा'–निष्ठुराश्लीलतीव्रत्वात् । दण्डपारुष्यं द्विधा—अभिद्रोहाघातरूपत्वात् । 'विशुद्धिः' दण्डाऽभावः ॥ 'क्षुब्धयोः' क्रुद्धयोः । 'मान्यते' न दण्ड्यते । 'क्षमते' पारुष्यं नानुबध्नाति । 'अतिवर्तते' पारुष्यं तनोति । 'विशेषः' अयं एवं पूर्वं कृतवानित्याकारः ॥ 'अनुबध्नाति' असकृत् कलहं करोति ॥ 'दोषभाक्' दण्ड्यः । 'असत्कारी' अपराधवान् ॥ (वि. र., २७३–२७४)

5. 'अभीषणेन' खड्गादिना (वि. र., २७४)

6. महीभृता–वि. र., २७५.

'स एव' उत्तम एव। 'ताडयंस्तस्य' तस्य नीचस्य ताडनं कुर्वन्नृपेण दण्डे [1]'नान्वेष्टव्य' इत्यर्थः।

<u>नारदः</u> [१८, ११-१४]

[2]श्वपाकपशुचाण्डालवेश्यासु [3]बकवृत्तिषु।
हस्तिपव्रात्यदासेषु गुर्वाचार्यातिगेषु च॥
मर्यादातिक्रमे सद्यो घात एवानुशासनम्।
न च तद्दण्डपारुष्ये [4]दोषमाहुर्मनीषिणः॥
यमेव ह्यतिवर्तेरन्नेते[5] सन्तं जनं नृषु।
स एव विनयं कुर्यान्न तद्विनयभाङ्नृपः॥
मला ह्येते मनुष्याणां[6] धनमेषां मलात्मकम्।
अपि तान् घातयेद्राजा नार्थदण्डेन दण्डयेत्॥

'सद्यो घातः' सद्यस्ताडनम्।[7]

1. दण्डनार्थे नान्वेष्टव्य–B. J.; दण्डनाय–वि; दण्डदापनाय–ज.
2. श्वपाकमेदचण्डालव्यङ्गेषु वधवृत्तिषु–इति मु. ना. स्मृ., २१०.
3. बाधकवृत्तिषु–ज; वधकवृत्तिषु–A. S. B., B. J.
4. स्तेयमाहुः–मु. ना. स्मृ., २११.
5. वर्तेत नीचः सन्तं–मु. ना. स्मृ., २११.
6. मनुष्येषु–मु. ना. स्मृ., २११.
7. A. S. B., and ज add the following additional commentary: 'श्वपाकः' क्षत्रियायां उग्राज्जातः। उग्रस्तु शूद्रायां क्षत्रियाज्जातः। 'पशु'शब्दः क्लीबपरः। 'चाण्डालः' शूद्रात् ब्राह्मण्यां जातः। परवध एव 'वृत्तिः' जीवनं यस्य स 'वधकवृत्तिः'। स्वार्थे कन्। This is part of the commentary in वि. र., २७५-२७६, which continues thus: 'हस्तिपो' हस्त्यधिरोहकः। दासोऽत्र गृहजातादिः। 'गुर्वाचार्यातिगो' गुर्वाचार्यवचनलङ्घनकर्ता। 'मर्यादा' धर्मव्यवस्था। 'सद्यो'ऽविलम्बितम्। 'घात एव' ताडनमेव। श्वपाकादयो येषु पारुष्यं कुर्वते, त एवैषां घातरूपं दण्डं कुर्युः। तेषामसामर्थ्ये तु राजा घातरूपमेव दण्डं कुर्यान्नार्थदण्डम्। अत्र हेतुर्मला ह्येत इत्यादि॥ (वि. र., २७६)

बृहस्पतिः [२१, २०]

प्रतिलोमास्तथा चान्त्याः पुरुषाणां मलाः स्मृताः ।
ब्राह्मणातिक्रमे वध्या न दातव्या दमं क्वचित् ॥

कात्यायनः [७८३]

अस्पृश्यधूर्तदासानां म्लेच्छानां पापकारिणाम् ।
प्रातिलोम्यप्रसूतानां ताडनं नार्थतो दमः ॥

[1]याज्ञवल्क्यः [२, २२५-२२६]

दुःखिते[2] शोणितोत्पादे शाखाङ्गच्छेदने तथा ।
दण्डः क्षुद्रपशूनां तु [3]द्विपणाद्द्विगुणः क्रमात् ॥

लिङ्गस्य छेदने मृत्यौ मध्यमो मूल्यमेव च ।
महापशूनामेतेषु स्थानेषु द्विगुणो दमः ॥

'शाखा'ऽत्र शृङ्गादिका । 'अङ्गं' चरणादि । 'द्विगुणः' पणद्वयादारभ्य यथाक्रमं द्विगुणो दण्ड इत्यर्थः ॥

'कार्षापणशतं दण्ड' इत्यनुवृत्तौ—विष्णुः [५, ११९]

पशूनां पुंस्त्वोपघातकारी ।

पुनर्विष्णुः [५, ४८-५४]

गजाश्वोष्ट्रगोघाती त्वेककरपादः कार्यः । विमांसविक्रयी च । [4]ग्राम्यपशुघाती च [5]कार्षापणशतं दण्ड्यः । पशुस्वामिने च तन्मूल्यं दद्यात् ।

1. A gap from here to p. ५०१ ('याज्ञवल्क्यः') occurs in S. B. (a)
2. 'दुःखे च'–(मिताक्षरा)
3. 'द्विपणप्रभृतिः क्रमात्'–(मिताक्षरा)
4. ग्रामपशुघाती कार्षापणशतं दण्ड्यः–ज, द.
5. कार्षापणं दण्ड्यः–बि.

आरण्यपशुघाती पञ्चाशत् कार्षापणान्। पक्षिघाती मत्स्यघाती च दशकार्षापणान्[1]। कीटोपघाती कार्षापणम् ॥

'विमांसम्' श्वसृगालादिमांसम्।

<u>कात्यायनः</u> [७९०]

[2]त्रिपणो द्वादशपणो [3]वधे तु मृगपक्षिणाम्।
सर्पमार्जारनकुलश्वसूकरवधे नृणाम् ॥

<u>मनुः</u>[4]

गोकुमारीदेवपशूनुक्षाणं वृषभं तथा।
वाहयन् साहसं पूर्वं प्राप्नुयादुत्तमं वधे ॥

श्ववृषाधिकारे <u>बृहस्पतिः</u> [२१, ३१]

श्रान्तान् क्षुधार्तांस्तृषितानकाले वाहयेत यः।
स गोघ्नो निष्कृतिं कार्यो दाप्यो वा प्रथमं दमम् ॥

<u>कात्यायनः</u> [७८९]

श्रान्तांस्तृषार्तान् क्षुधितानकाले वाहयेन्नरः[5]।
खरगोमहिषोष्ट्रादीन् प्राप्नुयात्पूर्वसाहसम् ॥

1. णान्। सर्पमार्जारनकुल–द.

2. द्विपणो–ज; B. J.; द्विगुणो–ज.

3. घाते तु–B. J.; 'वा धेनु' (?) ज, बि.

4. Not traced in any printed edition of Manu, but cited as from Manu by Aparārka (p. 818), *Parāśara-Mādhavīya*, p. 424, and *Vyavahāranirṇaya*, p. 496. *Dharmakośa*, (पृ. १८१२) says—असत्संगृहीतप्राचीनतमपुस्तके वर्तते। तत्र तु—गां कुमारीं ग्राम्यपशुमुक्षाणं वाजिनं तथा। दारयन् साहसं त्वर्धं प्राप्नुयात् घातने समम् ॥

5. वाहयन्नरः–द.

मनुः [८, २९०-२९२]

[1]यानस्य चैव यन्तुश्च यानस्वामिन एव च ।
दशातिवर्तनान्याहुः शेषे दण्डो विधीयते[2] ॥

[3]छिन्ननास्ये भिन्नयुगे तिर्यक्प्रतिमुखागते ।
अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च ॥

छेदने चैव यन्त्राणां योक्त्ररश्म्योस्तथैव च ।
[4]आक्रन्दे [5]चाप्यपैहीति न दण्डं मनुरब्रवीत्[6] ॥

'यन्तुः' सारथेः । 'अतिवर्तनानि' छिन्ननासादीनि, दण्डमतिक्रम्य वर्तत इति व्युत्पत्त्या ।

याज्ञवल्क्यः [२, २९८]

चतुष्पादकृते दोषो नापैहीति प्रभाषतः ।
काष्ठलोष्टेष्टपाषाणबाहुयुग्यकृतस्तथा[7] ॥

काष्ठलोष्टपाषाणबाहुभिरभ्यासकारणे यः परोपघाताद्दण्डार्हतालक्षणो दोष आपद्यतेऽसौ प्रथमत एवापैहीति भाषमाणस्य न भवतीत्यर्थः[8] ।

1. यानस्यैव तु यन्तुश्च–ज; 'यातुः' इति मुद्रितपुस्तके.

2. 'यानं' गन्त्र्यादि यदारुह्य यान्ति पन्थानम् । तच्च गन्त्र्यादि बलीवर्दगर्दभमहिषादि-वाह्यम् । ता एव गर्दभादयः पृष्ठारोह्या 'यानानि' । 'याता' तदारूढः सारथ्यादिः । यानस्वामी यस्य तत् स्वयानम् । 'अतिवर्तनानि' अतिक्रम्य हिंसादण्डं वर्तते नात्र दण्डोऽस्ति दण्डनिमित्तानि न भवन्तीति यावत् । 'शेषे दण्डः' उक्तनिमित्तेभ्योऽन्यत्र ॥ (मेधातिथिः)

3. छिन्ननासे–उ, बि.

4. A. S. B.-आक्रुष्टे

5. वाप्यपैहीति–द.

6. नासायां भवं 'नास्यम्' तस्मिन् 'छिन्ने' त्रुटिते । 'तिर्यक्प्रतिमुखागते' याने । 'अक्षचक्रे' रथाङ्गे । 'यन्त्राणि' चर्मबन्धनानि शकटकाष्ठानाम् । 'योक्त्रं' पशुग्रीवाकाष्ठम् । 'रश्मिः' प्रग्रहः । 'आक्रन्दः' उच्चैः शब्दः ॥ (मेधातिथिः)

7. S. B. (a)-अश्वतस्तथा

8. Repeated by वि. र., २७९.

तथा [२, २९९]

छिन्ननास्येन यानेन तथा भग्नयुगादिना ।
पश्चाच्चैवापसरतां हिंसने स्वाम्यदोषभाक्[1] ॥

मनुः [८, २९३-२९८]

यत्रापवर्तते युग्यं वैगुण्यात् प्राजकस्य तु[2] ।
तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतो दमः ॥

प्राजकश्च भवेदाप्तः प्राजको दण्डमर्हति ।
युग्यस्थाः प्राजकेऽनाप्ते सर्वे दण्ड्याः शतं शतम् ॥

स चेत्तु पथि संरुद्धः पशुभिर्वा रथेन वा ।
प्रमापयेत्प्राणभृतस्तस्य [3]दण्डोऽविचारतः ॥

मनुष्यमारणे क्षिप्रं चौरवत्किल्बिषं भवेत् ।
प्राणभृत्सु महत्स्वर्धं[4] गोगजोष्ट्रहयादिषु ॥

क्षुद्रकाणां पशूनां च हिंसायां द्विशतो दमः ।
पञ्चाशत्तु भवेद्दण्डः शुभेषु[5] मृगपक्षिषु ॥

गर्दभाजाविकानां तु दण्डः स्यात्पञ्चमाषकः ।
माषकस्तु भवेद्दण्डः श्वसूकरनिपातने ॥

1. ज, द, B. J. and वि. र., २७६, add this verse. [२, २९९]

2. 'प्राजको' यानसारथिः, तस्य वैगुण्यमशिक्षितत्वं न तु प्रमादः । तस्माद्धेतोः यदि 'युग्यं' यानं सहसा अपवर्तते स्पष्टं मार्गं हित्वा तिर्यक् पश्चाद्वा गच्छेत् किञ्चिन्नाशयेत्तत्र स्वामी दण्ड्यः । (मेधातिथिः)

3. दण्ड्यो-'उ'

4. महत्सु महत्त्वं गवां प्रभावतो हस्त्यादीनां प्रमाणतः । (मेधातिथिः)

5. शुभाः मृगाः पृषतादयः-आकारतो लक्षणतश्च । पक्षिणो हंसशुकसारिकादयः—(मेधातिथिः)

'प्राजकः' प्रेरकः सारथ्यादिः । 'आप्तो'ऽत्र कुशलः । 'स चेत् त्विति' स च प्राजकः । पथि पश्वादिभिरवरुद्धोऽपि रथप्रेरणेन तान् प्रमापयति तदा तस्याविचारतो दण्ड इत्यर्थः ।

कात्यायनः [७९२]

प्रमापणे प्राणभृतां प्रतिरूपं तु दापयेत् ।
तस्यानुरूपमूल्यं वा दाप्य इत्यब्रवीन्मनुः ॥

मनुः[1] [८, २८५]

वनस्पतीनां सर्वेषामुपभोगो यथा यथा ।
तथा तथा दमः कार्यो हिंसायामिति धारणा[2] ॥

याज्ञवल्क्यः [२, २२७-२२९]

प्ररोहिशाखिनां शाखास्कन्धपर्वविदारणे ।
उपजीव्यद्रुमाणां तु विंशतेर्द्विगुणा दमाः ॥

चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये ।
जातद्रुमाणां द्विगुणो दमो वृक्षेऽथ विश्रुते ॥

गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम् ।
पूर्वस्मृतादर्धदण्डः स्थानेषूक्तेषु कृन्तने ॥

'प्ररोहिशाखिनाम्' वटादीनाम् । 'स्कन्धः' यतः शाखाः प्रभवन्ति । 'उपजीव्यद्रुमाणाम्' आम्रादीनाम् । 'विंशतेर्द्विगुणा दमाः' शाखाच्छेदने स्कन्धच्छेदने समूलच्छेदने च यथाक्रमं विंशतिपणाद्दण्डादारभ्य पूर्वस्मादुत्तरोत्तरो द्विगुणो दम इत्यर्थः । 'गुल्माः' माळत्यादयः । 'गुच्छाः' अवल्लीरूपाः

1. B. J. and वि. र. attribute this śloka to कात्यायन, and Kane has included it in का. स्मृ. as ७९३.

2. वनस्पतिशब्द उपयुक्तसर्वस्थावरोपलक्षणार्थो न्यायसाम्यात् । (वि. र., २८२)

कुरण्टकादयः। 'क्षुपाः' करवीरादयः। 'लताः' द्राक्षाप्रभृतयः। 'प्रतानाः' काण्ड प्ररोहरहिताः[1] सरळयायिन्यः सारिवादयः। 'ओषध्यः' फलपाकावसानाः शाल्यादयः। 'वीरुधः' छिन्ना अपि या विविधं प्ररोहन्ति गुडूच्यादयः।

'दण्ड' इत्यनुवृत्तौ विष्णुः [५, ६५-५९]

फलोपगद्रुमच्छेदी तूत्तमसाहसम्[2]। पुष्पोपगमद्रुमच्छेदी मध्यमम्। वल्ली-गुल्मलताच्छेदी कार्षापणम्। तृणच्छेद्येकम्। सर्वे च तत्स्वामिनां तदुत्पत्तिम्॥

[3]दद्युरिति शेषः॥

वसिष्ठः [१९, ११-१३]

फलपुष्पोपगान् पादपान्न हिंस्यात्। कर्षणकरणार्थं चोपहन्यात्। गार्हस्थ्यांशे[4] च॥

[5]इति दण्डपारुष्यम्॥

---

1. ताः सारिवादयः-ज.

2. सम्। पुष्पोपयोगच्छेदी मध्यमम्। वल्लीगुल्म-ज.

3. दद्युः॥-ज.

4. स्याङ्गे च-ज; गार्हस्थ्याङ्गानां च-मु. वासिष्ठे (पृ. ५६)

5. इति महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेव [S. B. (a)] सप्रक्रिय [A. S. B. ज] महासांधिविग्रहिक [केण] भट्टहृदयधरात्मज [जेन] भट्ट [श्रीमल्ल] लक्ष्मीधर [ेण] विरचिते कृत्यकल्पतरौ व्यवहारकाण्डे [विवादप्रकरणे A. S. B.] दण्डपारुष्यम् [ष्यम्., B. J.]

## ७०

# अथ स्तेयम्

तत्र मनुः [८, ३०१, ३३२]

एषोऽखिलेनाभिहितो [1]दण्डपारुष्यनिर्णयः ।
स्तेयस्याथ[2] प्रवक्ष्यामि विधिं दण्डविनिर्णये ॥

स्यात्साहसं त्वन्वयवत् [3]प्रसभं कर्म यत्कृतम् ।
निरन्वयं भवेत्स्तेयं कृत्वापव्ययते च यत्[4] ॥

'अन्वयवत्' रक्षकपुरुषसमक्षम् । 'प्रसभं' बलात्कारेण [5]सान्वयं हरणमित्यर्थः ।

कात्यायनः [७९६]

सान्वयस्त्वपहारो यः प्रसह्य [6]करणं च यत् ।
साहसं च भवेदेवं स्तेयमुक्तं विनिह्नवः ॥

साहसानन्तरं नारदः[7]

[8]तस्यैव भेदः स्यात्स्तेयं विशेषस्तत्र तूच्यते ।

1. 'दण्डपारुष्यनिर्णयः' दण्डव्यवस्था–(मेधातिथिः)
2. 'स्तेनस्यातः' इति मेधातिथि-कुल्लूकाद्यादृतपाठः
3. प्रसभात् हरणं–द; प्रसृतं–उ.
4. च यः–उ; स कृत्वोपव्ययते तु यत्–ज.
5. B. J. reads अपहृत्य आहरणं साहसमित्यर्थः; बलात्कारेण कृत्वा सान्वयं–all other Mss.
6. हरणं–ज, B. J., स.
7. नारदस्मृति (ed. Jolly), १७, १२–१८; नारदीयमनुसंहिता (ed. Trivandram), १४, ११–१६. The latter seems to be the recension of the smṛti used by Lakṣmīdhara.
8. B. J. omits this verse and wrongly ascribes those that follow to कात्यायन.

आधिः साहसमाक्रम्य स्तेयमाधिश्छलेन च[1] ॥

तदपि त्रिविधं प्रोक्तं द्रव्यापेक्षं मनीषिभिः ।
क्षुद्रमध्योत्तमानां तु द्रव्याणामपकर्षणात् ॥

मृद्भाण्डासनखट्वास्थिदारुचर्मतृणादि यत् ।
[2]शमीधान्यं कृतान्नं च क्षुद्रं द्रव्यमुदाहृतम् ॥

वासः कौशेयवर्जं[3] च गोवर्जं पशवस्तथा ।
हिरण्यवर्जं लोहं च मध्यं व्रीहियवा अपि ॥

हिरण्यरत्नकौशेयं स्त्रीपुंसौ[4] गजवाजिनः ।
देवब्राह्मणराज्ञां च विज्ञेयं द्रव्यमुत्तमम् ॥

उपायैर्विविधैरेषां[5] छलयित्वापकर्षणम् ।
सुप्तमत्तप्रमत्तेषु[6] स्तेयमाहुर्मनीषिणः[7] ॥

1. 'आधिः' द्रव्यहरणम् । तद्यदाक्रम्य रक्षकानवधीर्य ह्रियते तत्साहसम् । (वि. र., २८५) 'तस्य' साहसस्य ।

2. फलं चाप्यकृतान्नं–ना. म. संहि. पाठः

3. वर्णं च–स.

4. स्त्रीपुंगोगज–मु. ना. स्मृ., ना. म. सं. पाठः; स्त्रीपुंसौ–वि. र., (२८६) पाठः

5. विविधैः सर्वैः–मु. ना. स्मृ., २०६.

6. सुप्तमत्तप्रमत्तेभ्यः–मु. ना. स्मृ., ना. म. सं., वि. र., २८६.

7. A. S. B. and ज interpolate between the second and third śloka a verse of याज्ञवल्क्य (२, २७५), as a verse of नारद—

क्षुद्रमध्यमहाद्रव्यहरणे सारतो दमः ।
देशकालवयःशक्ति संचिन्त्यं दण्डकर्मणि ॥

It is not cited anywhere in विवादरत्नाकर and is an obvious insertion by a reader of the manuscript, which is the parent of A. S. B. and ज.

'आधिः' पीडा, सा यत्रातिक्रम्य क्रियते तत् 'साहसम्' । छलेन स्वाधिकरणे चौर्यम् ॥[1]

इति स्तेयम्[2]

## ७० (क) अथ स्तेनाः

तत्र मनुः [९, २५६]

द्विविधांस्तस्करान् विद्यात्परद्रव्यापहारिणः ।
प्रकाशांश्चाप्रकाशांश्च [3]चारचक्षुर्महीपतिः ॥

व्यासः

प्रकाशाश्चाप्रकाशाश्च तस्करा द्विविधाः स्मृताः ।
सुचिह्नैरेव[4] विज्ञेयाश्चारैस्तस्करवेदिभिः ॥

बृहस्पतिः [२२, १-३]

प्रकाशाश्चाप्रकाशाश्च तस्करा द्विविधाः स्मृताः ।
प्रज्ञासामर्थ्यमायाभिः प्रभिन्नास्ते सहस्रधा ॥

नैगमा वैद्यकितवाः [5]सभ्योत्कोचकवञ्चकाः ।
दैवोत्पादविदो भद्राः शिल्पज्ञाः प्रतिरूपकाः[6] ॥

1. A. S. B. and ज add at the end of the sub-section the undermentioned (unidentified) śloka and a comment based on it, as if it was from *Nāradasmṛti*, in which it is not traced:

तथा । एषां त्रयाणां द्रव्याणां गोपयित्वापकर्षणम् । क्रियते यद्विमूढत्वात्तत् स्तेयं समुदाहृतम् ॥ 'अपकर्षणं' अपहरणम् ।

2. इति सप्रक्रियमहासान्धिविग्रहिकभट्टश्रीहृदयधरात्मजभट्टलक्ष्मीधरविरचिते कृत्यकल्पतरौ स्तेयाख्यं पर्व–A. S. B., ज.

3. चाराः प्रच्छन्ना राष्ट्रे राजकृत्यज्ञानिनः । ते चक्षुषी इव यस्य सः चारचक्षुः—(मेधातिथिः)

4. 'स्वचिह्नैः' इति वि. र., स पाठः; 'चोरचिह्नैः मोषादिभिः' इति व्याख्यातञ्च (२८७)

5. 'सभ्योत्कोचक' इति वि. र.

6. 'नैगमा' अत्र कपटतुलादिधारणद्वारा अर्थहारिणः । 'कितवाः' कूटदेवनद्वारा अर्थहारिणः । 'भद्राः' शान्तिनियुक्ताः शान्तिमकृत्वैवार्थहराः ॥ (वि. र., २८८)

अक्रियाकारिणश्चैव मध्यस्थाः कूटसाक्षिणः[1] ।
प्रकाशतस्करा ह्येते तथा कुहकजीविनः[2] ॥

नारदः [२१, २-३]

प्रकाशवञ्चकास्तत्र कूटमानतुलाश्रिताः ।
[3]उत्कोचकाः [4]सोपधिकाः वञ्चकाः पण्ययोषितः ॥

प्रतिरूपकराश्चैव [5]मङ्गलादेशवृत्तयः ।
इत्येवमादयो ज्ञेयाः प्रकाशास्तस्करा भुवि[6] ॥

व्यासः

प्रकाशापणसंस्थाश्च नानापण्योपजीविनः ।
प्रकाशवञ्चका ज्ञेया भिषक्प्रभृतयोऽपरे ॥

'आपणः' पण्यवीथी ।

मनुः [९, २५८-२६०]

उत्कोचकाः सोपधिकाः कितवा वञ्चकास्तथा ।
मङ्गलादेशवृत्ताश्च [7]भद्राश्चेक्षणिकैः सह ॥

असभ्यकारिणश्चैव महामात्राश्चिकित्सकाः ।
शिल्पोपचारयुक्ताश्च निपुणाः पण्ययोषितः ॥

1. 'मध्यस्थाः' मूल्यव्यवस्थापकाः कूटमूल्यव्यवस्थापनेन अर्थहराः ।

2. 'कुहकजीविनः' इन्द्रजालादिनाऽर्थहराः (वि. र., २८८)

3. उत्कोदकाः'—ना. म सं.; 'उत्कोचभक्षाः' इति भवस्वामिना व्याख्यातम् ।

4. 'साहसिकाः कितवाः पण्ययोषितः' इति मु. ना, २२३; A. S. B. B. J. स and ज read 'कितवा' for 'वञ्चकाः'

5. 'मङ्गलादेशकारिणः' इति वि. र. पाठः

6. 'प्रकाशलोकतस्कराः' मु. ना. स्मृ., २२३; ना. म. सं., १८१.

7. 'भद्रप्रेक्षणिकैः सह' इति मेधातिथिपाठः

एवमादीन्विजानीयात्प्रकाशाँल्लोककण्टकान् ।
निगूढचारिणश्चान्याननार्यानार्यलिङ्गिनः ॥[1]

तथा [९, २५७]

प्रच्छन्नवञ्चका ज्ञेया ये[2] स्तेनाटविकादयः ।

नारदः [ना. म. संहि. प्रकीर्णक, ५६]

अप्रकाशास्तु विज्ञेया बहिरभ्यन्तराश्रिताः ।[3]
सुप्तमत्तप्रमत्तांश्च मुष्णन्त्याक्रम्य ये नराः ॥

बृहस्पतिः [२२, ४]

[4]सन्धिच्छिदः पान्थमुषो द्विचतुष्पदहारिणः ।
उत्क्षेपकाः सस्यहरा ज्ञेयाः प्रच्छन्नतस्कराः ॥

व्यासः

साधनाङ्गान्विता रात्रौ विचरन्त्यविभाविताः ।
अविज्ञातविशेषाश्च[5] ज्ञेयाः प्रच्छन्नवञ्चकाः[6] ॥

1. तत्र ये क्रयार्थे मानतुलाविशेषेण मुष्णन्ति द्रव्याणामागमस्थाननिर्गमनापेक्षार्थे कुर्वन्ति ते 'प्रकाशवञ्चकाः' वणिजकाः । 'उत्कोचकाः' ये कस्यचित्कार्येण कस्यचिद्राजामात्यादेः प्रवृत्ता ग्रहणातिकार्यसिद्धौ प्रवर्तन्ते । 'औपाधिकाः' छद्मव्यवहारिणः । 'कितवाः' धनग्रहणवञ्चकाः विप्रलम्भकाः । 'मङ्गलादेशवृत्ता' ये ह्युपदेशिका ज्योतिषिकादयः । सर्वस्य करवर्धने 'भद्रप्रेक्षणिकाः' प्रशंसिपुरुषलक्षणाः । 'महामात्राः' मन्त्रिपुरोहितादयो राजनिकटिकाः, ते 'चेदसम्यकारिणः' । 'शिल्पोपचारयुक्ताः' चित्रपत्रच्छेदरूपकारादयः । पण्ययोषितो निपुणाश्चोपचारेणासत्प्रीतिदर्शनेन । 'प्रच्छन्नवञ्चकाः' ये रात्रेरनुहरन्ति ते । 'स्तेना आटविका' विजने प्रदेशे वसन्ति ॥ (मेधातिथिः)

2. 'वञ्चकास्त्वेते ये'–इति मेधातिथिपाठः

3. Jolly's edn. २१, ४ has for the second half—मुग्धां प्रसक्तांश्च नरा मुष्णन्त्याक्रम्य चैव ते ॥ ना. म. सं., १८१ has instead—सुप्तान् मत्तान् प्रमत्तांश्च मुष्णन्त्याक्रम्य चैव ये ॥ 'सुप्तमत्तप्रमत्तार्तान्'–वि. र., २९०; ज, B. J.

4. संविच्छिदः सान्द्रमुखः–द.

5. 'विशेषाः' seems to be meant for 'वेषाः' or 'निवेशाः'. The latter occurs in the commentary, which follows, and is more apposite; अविज्ञातनिवेशाः–स.

6. प्रच्छन्नतस्कराः–वि. र., २९०, स., च

उत्क्षेपकः सन्धिभेत्ता पान्थमुट् ग्रन्थिभेदकः ।
स्त्रीपुंगोऽश्वपशुस्तेयी चौरो नवविधः स्मृतः ॥

'साधनाङ्गान्विताः' स्तेयसाधनखनित्रशस्त्रादियुक्ताः । 'अविज्ञातविशेषाः'[1] अविज्ञातप्रवेशाः । 'उत्क्षेपक' इति, अग्रत एव अनवहितस्य दृष्टिवञ्चनेनोत्क्षेपे यो अपहरत्यसौ उच्यते ।

चौरानन्तरं नारदः—[2]

तान् विदित्वा तु कुशलैश्चारैस्तत्कर्मवेदिभिः ।
अनुसृत्य तु गृह्णीयाद्गूढप्रणिहितैर्नरैः[3] ॥

चौरानन्तरं मनुः [९, २६१-२६२]

तान् विदित्वा तु चरितैर्गूढैस्तत्कर्मवेदिभिः ।
चारैश्चानेकसंस्थानैः प्रोत्साह्य वशमानयेत् ॥

तेषां दोषमभिख्याप्य स्वे स्वे कर्मणि तत्त्वतः ।
कुर्वीत शासनं राजा सम्यक् [4]सारापराधतः ॥

बृहस्पतिः [२२, ५]

संसर्गचिह्नलोप्त्रैश्च[5] विज्ञाता राजपूरुषैः[6] ।
प्रदाप्यापहृतं शास्या दमैः शास्त्रप्रचोदितैः ॥

1. 'अविज्ञातनिवेशाः'-ज, B. J.; अविज्ञातविवेशाः-वि, स.

2. Not found in Jolly's edition of *Nāradasmṛti*. नारदीयमनुसंहिता, २१, ५८ (p. 182) reads—तान् विदित्वा सुनिपुणैश्चारैस्तत्कर्मवेदिभिः । अनुसृत्य गृहीतव्या गूढैः प्रणिहितैर्नरैः ॥ Bhavasvāmin interprets चोरैः as तत्कर्मकारिभिः चोरव्यञ्जनैः पुराणचोरैः । 'चारैः' इति विवादरत्नाकर [२९०] पाठः

3. चरैः (चारैः?)-B. J.

4. सारशब्दोऽपहृतधनपरः । तेन अपहृतधनानुसारिणा अपराधेन तान् दण्डयेत् । (वि. र., २९१)

5. रूपैश्च-(पराशरमाधवीये, p. 439)

6. 'संसर्गो' निर्णीतचौरैस्सह मिलनम् । 'लोप्त्रं' मुषितद्रव्यम् । (वि. र., २९१)

मनुः[1]

न हि दण्डादृते शक्यः कर्तुं [2]न्यायविनिग्रहः ।
स्तेनानां पापबुद्धीनां निभृतं[3] चरतां क्षितौ ॥

परमं यत्नमातिष्ठेत्स्तेनानां निग्रहे नृपः ।
स्तेनानां निग्रहादस्य यशो राष्ट्रं[4] विवर्धते ॥

अभयस्य हि यो दाता स पूज्यः सततं नृपः ।
[5]सत्रं हि वर्धते तस्य सदैवाभयदक्षिणम् ॥

निर्भयं वा भवेद्यस्य राष्ट्रं बाहुबलाश्रितम् ।
तस्य तद्वर्धते नित्यं सिच्यमान इव द्रुमः ॥

आपस्तम्बः [२, २५, १५]

क्षेमकृद्राजा यस्य विषये ग्रामेऽरण्ये वा तस्करभयं न विद्यते ।[6]

मनुः [७, १४३]

विक्रोशन्त्यो यस्य राष्ट्राद्ध्रियन्ते दस्युभिः प्रजाः ।
संपश्यतः [7]सभृत्यश्च मृतः [8]स च न जीवति ॥

1. मनु-९, २६३; ८, ३०२-३०३; ९, २८५.

2. 'पापविनिग्रहः' इति मेधातिथिपाठः; वि. र , २९१; A. S. B.; ज, स.

3. 'निभृतं' अप्रकाशम् । (वि. र., २९१)

4. 'राष्ट्रं च वर्द्धते'-मेधातिथि-वि. र. (२९१) पाठः

5. 'सत्रं हि वर्द्धते' इति मेधातिथिपाठः; ज, B. J. 'सूत्रं हि वर्तते'-वि; 'मन्त्रं हि वर्द्धते' इति इतरमातृकासु ॥ 'सत्रं' क्रतुविशेषो गवामयनादि (मेधातिथिः)

6. A. S. B., S. B. (a) and ज add—तस्मात्पः प्रजाः नोद्विजन्ति, which is not found in Bühler's edn., ११. The sentence is probably a comment added by a reader.

7. सभृत्यस्य-मेधातिथिः; वि. र., २९२.

8. स न तु (मेधातिथिः), स न हि (वि. र., २९२)

[तथा][1]

अशासंस्तस्करान् यस्तु बलिं गृह्णाति पार्थिवः ।
तस्य प्रक्षुभ्यते राष्ट्रं स्वर्गाच्च परिहीयते ॥

हारीतः

पापास्तु यस्य राष्ट्रे वर्धन्ते दस्यवः सदा ।
तत्पापमतिवृद्धं हि राज्ञो मूलं निकृन्तति ॥

[इति कृत्यकल्पतरौ व्यवहारकाण्डे
विवादप्रकरणे स्तेनाख्यं पर्व][2]

७० (ख) अथ प्रकाशतस्करदण्डाः

तत्र व्यासः

तुलामानविशेषेण लेख्येन गणनेन च ।
अर्घस्य वृद्धिह्रासेन मुष्णन्ति वणिजो नरान् ॥

तद्द्रव्यसदृशैरन्यैर्हीनमूल्यैर्विमिश्रणम् ।
कुर्वन्त्यौपाधिकाश्चान्ये पण्यानां परिवर्तने ॥

याज्ञवल्क्यः [२, २४४]

मानेन तुलया वापि [3]यो योऽशमष्टमं हरेत् ।
दण्डं स दाप्यो द्विशतं वृद्धौ हानौ च कल्पितम् ॥[4]

1. ९, २५४. 'तथा' has been inserted to mark a break.

2. A. S. B.; ज omits 'विवादप्रकरणे'. All others omit the colophon.

3. योऽशमष्टमकं हरेत्–स.

4. अपहृतद्रव्याष्टमांशादाधिक्ये न्यूनत्वे वा कल्पितं न्याससिद्धाधिकन्यूनभावकल्पनानुसारिदण्डं दाप्यः । 'अपि'शब्देन गणनावञ्चनादिपरिग्रहः । चकारात् मूल्यविशेषापहृतद्रव्यस्य न्यूनाधिकभावः समुच्चीयते । (वीरमित्रोदयः, ७०५)

अपहृतद्रव्यस्य 'वृद्धौ हानौ च' दण्डस्यापि वृद्धिहानी कल्प्य इत्यर्थः ॥

कात्यायनः [८१२]

तुलामानप्रतीमानप्रतिरूपकलक्षितैः ।
चरन्नलक्षितैर्वापि प्राप्नुयात्पूर्वसाहसम् ॥[1]

मनुः [९, २८७, २९१]

समैर्हि विषमं यस्तु चरेद्वै मूल्यतोऽपि वा ।
स प्राप्नुयाद्दमं पूर्वं नरो मध्यममेव वा ॥

अबीजविक्रयी [2]यश्च बीजोत्कृष्टा तथैव च ।
मर्यादाभेदकश्चैव विकृतं प्राप्नुयाद् [3]वधम् ॥

'समैर्विषम'मित्यादि—'समैः' सममूल्यदातृभिः सह उत्कृष्टापकृष्ट-विषमद्रव्यदानेन यो व्यवहरत्यसौ पूर्वसाहसं [4]प्राप्नोति । समे च द्रव्ये बहल्पं च मूल्यमाददानो मध्यमसाहसमित्यर्थः । 'अबीजविक्रयी' अबीजं बीजत्वेन यो विक्रीणाति । 'बीजोत्कृष्टा' उप्तं बीजमुत्खननेन[5] यो गृह्णाति ।[6]

1. 'प्रतीमानं' परिमाणम् । तुलामानप्रतीमानैः प्रतिरूपकैः आभासलक्षितैर्वा, 'चरन्' व्यवहरन्, पूर्वसाहसं प्राप्नुयात् । एतच्च अष्टमांशाधिकहरणपक्षे । तेन न पूर्वोक्तेन याज्ञवल्क्येन विरोधः ॥ वि. र., २९४.

2. 'चैव' इति मेधातिथिः; 'यस्तु' इति वि. र., २९४.

3. धनम्-ब्रि.

4. प्राप्नुयात्-ज.

5. उत्खाय-A. S. B., ज.

6. Comment appropriated and expanded by वि. र., २९४ thus: हलायुधस्तु विनिमयवृत्तयोरेकतरस्यार्थित्वं ज्ञात्वा अल्पमूल्येन बहुमूल्यस्य विनिमय-व्यवहारं विषमं यश्चरति, यो वा क्रेतुः आर्थिताविशेषं ज्ञात्वा अल्पमूल्यं वस्तु बहुमूल्येन विक्रीणीते, स धनापेक्षया प्रथमं साहसं मध्यमं साहसं वा दण्ड्य इत्याह ॥

[1]याज्ञवल्क्यः [२, २४५]

भेषज-स्नेह-लवण-गन्ध-धान्य-गुडादिषु[2] ।
पण्येषु हीनं क्षिपतः पणा दण्डस्त्रयोदश[3] ॥

नारदो,[4] मनुश्च[5] द्वितीये

शुल्कस्थानं वणिक् प्राप्तः शुल्कं दद्याद् [6]यथोचितम् ।
न तद् व्यभिचरेद्राज्ञां[7] बलिरेष प्रकीर्तितः ॥

शुल्कस्थानं परिहरन्नकाले क्रयविक्रयौ[8] ।
[9]मिथ्यावाची च संस्थाने दाप्योऽष्टगुणमत्ययम् ॥

'अष्टगुणमत्ययं' अपहृतद्रव्यापेक्षयाऽष्टगुणं दण्डं दाप्य इत्यर्थः ।

याज्ञवल्क्यः [२, २६२]

मिथ्यावदन् परीमाणं शुल्कस्थानादपाक्रमन् ।
दाप्यस्त्वष्टगुणं यश्च स व्याजक्रयविक्रयी ॥

1. A. S. B., ज and वि. र., २९५, bring the following verse of *Bṛhaspati* (२२, १३) and a comment before याज्ञवल्क्यः. They are absent in the other manuscripts.

प्रच्छन्नदोषव्यामिश्रं पुनस्संस्कृतविक्रयी ।
पण्यं तद्द्विगुणं दाप्यः वणिग्दण्डं च तत्समम् ॥

'प्रच्छन्नदोषः' गोपितदोषः । 'व्यामिश्रं' अनभिमतद्रव्येण । 'पुनःसंस्कृतं' पुरातनमेव मार्जनादिना नवीकृतम् ॥

2. रसादिषु–A. S. B., ज, B. J.

3. षोडश–(विश्वरूप, मिताक्षरा, वि. र., २९५); B. J.

4. नारदस्मृतिः (ed. Jolly), ६, १२, १३ (p. 135)

5. मनुस्मृति, ८, ४००.

6. यथोदितम्–मु. ना. स्मृ.

7. द्राज्ञां बलिरेष प्रकल्पितः–स; द्राज्ञां बलिरेष प्रकीर्तितः–उ.

8. क्रयविक्रयी–मु. ना. स्मृ.; वि. र., २८५, स.

9. 'मिथ्योक्त्वा च परीमाणं दाप्योऽष्टगुणमत्ययम्' इति मुद्रितनारदीये (ed. Jolly); मिथ्यावादी–वि. र., २९५. स.

विष्णुः [३, ३१]

शुल्कस्थानादपाक्रामन्[1] सर्वापहारमाप्नुयात्[2] ।

शङ्खलिखितौ

कूटतुलामानप्रतिमानव्यवहारे शारीरोऽङ्गच्छेदो वा ।

'शारीरो'ऽत्र मुण्डनादिदण्डः ।[3]

याज्ञवल्क्यः [२, २४०-२४१]

तुलाशासनमानानां[4] कूटकृन्नाणकस्य च ।
एभिश्च व्यवहर्ता यः स दाप्यो दममुत्तमम् ॥

अकूटं कूटकं ब्रूते कूटं यश्चाप्यकूटकम् ।
स नाणकपरीक्षी तु दाप्य उत्तमसाहसम् ॥[5]

दण्डसाहसमित्यनुवृत्तौ विष्णुः [५, १२२-१२६]

[6]तुलानाणककूटकर्तुश्च । तदकूटकूटवादिनश्च । द्रव्याणां प्रतिरूपविक्रयकस्य च[7] । सम्भूय वणिजां पण्यमनर्घेणोपरुन्धताम् । प्रत्येकस्य विक्रीणतां च ॥

1. अनाक्रमन्—वि. र., २९६ 'अनाक्रमन्' परिहरन् ।

2. 'अपाक्रमन्' अपसरन्, अन्यमार्गेण च गच्छन् वणिक् । सर्वपण्यापहारं आप्नुयात् ॥ (वैजयन्ती)

3. 'अङ्गच्छेदः' कर्णादिच्छेदः । अर्थगौरवागौरवाभ्यां विकल्पस्थितिः । (वि. र., २९६)

4. तुलासमानमानां—द.

5. A. S. B. and ज add here the comment: 'नाणकः' कार्षापणटङ्कादिः, which is also found in वि. र., २९७.

6. Jolly's edn., pp. 23–24 read the sūtras thus: तुलामानकूटकर्तुश्च । तदकूटे कूटवादिनश्च । द्रव्याणां प्रतिरूपविक्रयिकस्य च । संभूयवणिजां पण्यमनर्घेणावरुन्धताम् । प्रत्येकं विक्रीणतां च ॥ वि. र., २९७ shows these variants from the text:—प्रतिरूपविक्रयिकस्य; अनर्घेणावरुन्धताम् । प्रतिरूपकञ्च कृतकमुक्तादि । संभूय वणिजां इत्यादि— मिलित्वा वणिजामधिकमूल्यं पण्यं अल्पमूल्येन क्रीणतां अल्पमूल्यञ्च वस्त्वधिकेन विक्रीणताञ्च एकैकस्योत्तमसाहसं दण्ड इत्यर्थः ॥ (वि. र., २९७) । ये देशान्तरगतं पण्यमनर्घेण हीनमूल्येन प्रार्थयमाना अवरुन्धन्ति (वैजयन्ती) ।

7. प्रतिरूपविक्रयिकस्य च—ज; विक्रयकस्य—बि, स.

याज्ञवल्क्यः [२, २४९-२५०]

संभूय कुर्वतामर्घं सबाधं कारुशिल्पिनाम् ।
अर्घस्य हानिं वृद्धिं च साहस्रो दण्ड उच्यते ॥

संभूय वणिजां पण्यमनर्घेणोपरुन्धताम्[1] ।
[2]विक्रीणतां च विहितो दण्ड उत्तमसाहसः ॥

'सबाधं' पीडाकरम् । 'अर्घस्य' राजकृतस्य । 'अनर्घेणोपरुन्धतां' देशान्तरादागतं पण्यमनुचितमूल्यप्रार्थनेनोपरुन्धताम् । 'विक्रीणतां' अनर्घेणेत्यन्वयः ।

मनुः [८, ३९९]

[3]राज्ञः प्रख्यातभाण्डानि प्रतिषिद्धानि यानि च ।
तानि निर्हरतो लोभात्सर्वहारं हरेन्नृपः ॥

याज्ञवल्क्यः [२, २६१]

व्यासिद्धं राजयोग्यं यद्विक्रीतं राजगामि तत् ।

"शारीरोऽङ्गच्छेदो वा दण्ड" इत्यनुवृत्तौ—

शङ्खलिखितौ

प्रतिषिद्धभाण्डनिर्हारे ।

मनुः [८, ४०१-४०३]

आगमं निर्गमं स्थानं तथा वृद्धिक्षयावुभौ ।
विचार्य सर्वपण्यानां कारयन् क्रयविक्रयौ[4] ॥

1. अवरुन्धताम्-ज, B. J. 2. विक्रीणतो वाभिहितो-ख.

3. राज्ञः संबन्धितया 'प्रख्यातानि' यानि भाण्डानि राजोपयोगितया, यथा हस्तिनः काश्मीरेषु कुङ्कुमम्...........प्रतिषिद्धानि, यानि राज्ञा मदीयदेशान्नैतदन्यत्र नेयम् अत्रैव वा विक्रेयम्, यथा दुर्भिक्षे धान्यमित्येवमादीनि—(मेधातिथिः)

4. 'आगमम्' किं प्रत्यागच्छति देशान्तरादुत न, तथेयतो दूरादागच्छति, एवं 'निर्गमस्थाने' किं संप्रत्येव विक्रीयते उत तिष्ठति । संप्रति निष्क्रामतो द्रव्यस्य स्वल्पोऽपि लाभो महाफलस्तदुत्थितेन मूल्येन द्रव्यान्तराविषयेण क्रयविक्रयेण पुनर्लाभः । 'स्थानात् वृद्धिक्षयौ' कियत्यस्य वृद्धिस्तिष्ठति कीदृशो वा क्षयः-इत्येतत्सर्वं परीक्ष्य स्वदेशे 'क्रयविक्रयौ' कारयेत् ॥ (मेधातिथिः)

पञ्चरात्रे पञ्चरात्रे पक्षे पक्षेऽथवा गतौ ।
कुर्वीत चैषां प्रत्यक्ष[1]मर्घसंस्थापनं नृपः ॥
तुलामानं प्रतीमानं सर्वं तत्स्यात्सुरक्षितम् ।
षट्सु षट्सु च मासेषु पुनरेव परीक्षयेत्[2] ॥

<u>शङ्खलिखितौ</u>

तुलामानप्रतीमानव्यवहारार्घसंस्थापनं देशद्रव्यानुरूपं प्रत्ययितपुरुषाधिष्ठितम् ॥

राज्ञाऽत्र कर्तव्यमिति शेषः ।

<u>याज्ञवल्क्यः</u> [२, २५३, २५१, २५२]

पण्यस्योपरि संस्थाप्य व्ययं पण्यसमुद्भवम् ।
अर्घोऽनुग्रहकृत्कार्यः क्रेतुर्विक्रेतुरेव च ॥

राजनि स्थाप्यते योऽर्घः प्रत्यहं तेन विक्रयः ।
क्रयो वा निःस्रवस्तस्माद्वणिजो लाभकृत् स्मृतः ॥

स्वदेशपण्ये तु शतं वणिग्गृह्णीत पञ्चकम् ।
दशकं पारदेश्ये तु यः सद्यः क्रयविक्रयी ॥

'निःस्रवः' पण्यविक्रयेण यदुत्पन्नमामूलधनादधिकं धनम् ।

'राज्ञ' इत्यनुवृत्तौ <u>गौतमः</u> [१०, ३४]

[3]पण्यं वणिग्भिरर्घापचयेन देयम् ।

1. ज, बि, वि. र., २९९, मु. मनु; सर्वसंस्थानं इति इतरे

2. 'तुला' प्रसिद्धा । 'मानं' प्रस्थो द्रोण इत्यादि । 'प्रतीमानं' सुवर्णादीनां परिच्छेदार्थं यत्क्रियते । सर्वतो भागे 'तत्सुलक्षितं' राजचिह्नैरङ्कितं कार्यम् ।—(मेधातिथिः ॥)

3. Manuscripts corrupt. उ reads पण्यं वणिग्भरघ्याद्यवयवे न देयम्; बि–पण्यं वणिग्भिरर्घामतये देयम्. [वि. र., ३०१–'पण्यं वणिग्भिरर्घापचये न देयम्' ॥ 'अर्घापचये' मूल्यापचये । तेन मूल्यापचये पण्यमप्रयच्छन्नपि वणिक् न दण्ड्य इति तात्पर्यम् ।] "मासि मासि एकैकमित्यनुवर्तते शुल्कादधिकमिदम् । 'अर्घापचयः' अर्घावरमूल्यम् । तथा च बृहस्पतिः–शुल्कं दद्यात्ततो मासमेकैकं पण्यमेव च । अर्घार्घावरमूल्येन वणिजस्ते पृथक् पृथक् ॥ इति"–[मस्करिभाष्यम्, p. 165] । मासि मासि एकैकमित्यनुवर्तते । विंशतिभागः

वसिष्ठः [१९, १४-१६]

[1]अधिष्ठानान्निर्हारः सार्थानाम् । अर्घमानमूल्यमात्रं नैर्हारिकं स्यात् । महामहयोस्त्वनत्ययः स्यात् । अभयं च ।

विष्णुः [३, २९-३०]

स्वदेशपण्यात् शुल्कांशं दशमम्[2] । परदेशपण्याच्च विंशतितमम् ।

'शुल्कांशं[3] दशमम्' दशममंशं गृह्णीयादित्यर्थः ।

मनुः [८, ३९८]

शुल्कस्थानेषु[4] कुशलाः सर्वपण्यविशारदाः ।
कुर्युरर्घं यथापण्यं ततो विंशं नृपो हरेत् ॥

राज्ञ इत्यनुवृत्तौ गौतमः [१०, २५-२७]

विंशतिभागः शुल्कः पण्ये । मूलफलपुष्पौषधमधुमांसतृणेन्धनानां षाष्ठः[5] । तद्रक्षणधर्मित्वात् । तेषु च नित्ययुक्तः स्यात् ॥

'षाष्ठः' षष्टितमो भागः ।

पण्य इत्युक्तम् । ततः शुल्कादधिकमिदं मासि मास्येकं पण्यमर्थापचयेन प्राप्तस्य मूल्यस्य किंचिन्न्यूनतां कल्पयित्वा वणिजो राज्ञे दद्युः ॥ (हरदत्तमिताक्षरा, पृ. ७५) । (अर्थापचयेति हरदत्तधृतपाठः)

1. Führer's edn. reads—अधिष्ठानान्न नीहारः स्वार्थानाम् । मानमूल्यमात्रं नैर्हारिकं स्यात् । महामहयोः स्थानात्ययः स्यात् ॥ 'अभयं च' is not found in it. वि. र. reads the four sūtras as one sentence (३०१)

'अधिष्ठानं' पत्तनम् । 'महामहः' महोत्सवः (वि. र., ३०२)

2. दशममादद्यात्-मु. वि. स्मृ.

3. शुल्कांशं दशममिति गृह्णीयादित्यर्थः-ज; 'शुल्कांशं दशमम्' दशमांशं शुल्कांशं गृह्णीयादित्यर्थः-स.

4. येषु प्रदेशेषु शुल्कमादीयते तानि शुल्कस्थानानि । (मेधातिथिः)

5. 'षाड्भ्यः' इति मस्करिपाठः

बौधायनः [१, १८, १३-१५]

सामुद्रशुल्कः। वरं रूपमुद्धृत्य दशपणं शतम्। [1]अन्येषामपि सारानुरूपेणाऽनुपहत्य धर्म्यं प्रकल्पयेत्॥

'सामुद्रः' समुद्रसम्बन्धी। 'वरं रूपमुद्धृत्य दशपणं [2]शत'मिति, मुक्ताफलादिषु [3]मध्ये एकं वस्तु पृथक्कृत्वाऽन्यत्र वस्तुनि दशपांशं शुल्कं गृह्णीयादित्यर्थः।

वसिष्ठः [१९, ३७]

शुल्के चापि मानवं श्लोकमुदाहरन्ति—

न भिन्नकार्षापणमस्ति शुल्कं[4]
न शिल्पवृत्तौ न शिशौ न दूते।
न भैक्ष्यलब्धे[5] न कृतावशेषे[6]
न श्रोत्रिये प्रव्रजिते न यज्ञे॥ इति।

'न भिन्नकार्षापणमस्ति शुल्कम्' (इति)—भिन्नो न्यूनः कार्षापणो मूल्यं यस्य वस्तुनस्तत्तथा। [7]तन्निर्मितः शुल्कोपि 'भिन्नकार्षापणः'। तेन कार्षापणादर्वाग् यस्य मूल्यं तत्र शुल्को न ग्राह्य इत्यर्थः।[8]

1. अन्येषामपि लाभभूयस्त्वप्रयोजकदेशान्तरागतानां सारानुरूपेण श्रेष्ठं वस्तूद्धृत्य गृहीत्वा 'धर्म्यं' धर्मादनपेतं शुल्कं 'प्रकल्पयेत्' गृह्णीयादित्यर्थः। 'अनुपहत्य' इत्यनेन वणिजो द्रव्योपघातो न कार्य इत्युक्तम्। हलायुधस्तु 'उपहत्य' इति पठित्वा गृहीत्वेति व्याख्यातवान्, फलतो न विशेषः। (वि. र., ३०३)

2. शतपणमिति–ख.

3. मध्ये एकं–ज, बि; मध्यमकं–उ.

4. शुल्के–मु. वासिष्ठे (पृ. ५७)

5. भैक्षलब्धे–ibid.

6. हृतावशेषे–ibid.

7. तन्निमित्तः–बि.

8. न शिल्पित्वात्प्राप्तवित्ते; 'शिशौ' विक्रय्य गवादि–वत्सादौ; 'दूते' दूतवस्तुनि; 'कृतावशेषे' वणिजः शेषवस्तुनि; 'यज्ञे' यज्ञार्थमानीयमानद्रव्ये। (वि. र., ३०३)

बृहस्पतिः [२२, १०]

अज्ञातौषधिमन्त्रस्तु यस्य व्याधेरतत्त्ववित् ।
रोगिभ्योऽर्थं समादत्ते स दण्ड्यश्चौरवद्भिषक् ॥

याज्ञवल्क्यः [२, २४२]

भिषङ्मिथ्याचरन् दाप्यस्तिर्यक्षु प्रथमं दमम् ।
मानुषे मध्यमं राजमानुषेषूत्तमं तथा ॥[1]

विष्णुः [५, १७५-१७७]

उत्तमसाहसं दण्डनीयो[2] भिषङ्मिथ्याचरन्नुत्तमेषु पुरुषेषु । मध्यमं मध्यमेषु[3] । तिर्यक्षु प्रथमम् ।

व्यासः—

अनिच्छन्तमभूमिज्ञं[4] संयोज्य व्यसने नरम् ।
अपकर्षन्ति तद्द्रव्यं वेश्याकितवशिल्पिनः ॥

नारदः [१९, ६]

कूटाक्षदेविनः पापान्निर्हरेद् द्यूतमण्डलात् ।
कण्ठेऽक्षमालामासज्य स ह्येषां[5] विनयः स्मृतः ॥

बृहस्पतिः [२२, ११]

ग्लहः प्रकाशः कर्तव्यो निर्वास्याः कूटदेविनः ।

[6]'ग्लहः' द्यूते यः [7]पातः क्रियते ।

1. पशवो वर्णापसदाश्च तिर्यञ्चः । विट्शूद्राः मानुषम् । क्षत्रिया ब्राह्मणाश्च राजमानुषम् । एवं मिथ्याचरतो वैद्यस्य प्रथमसाहसादयो दण्डाः । उदाहरणार्थं चैतत् । सर्वथा चिकित्सास्वरूपं पीडाविशेषं च वैद्यकृतमालोच्य यथार्हं दण्डकल्पना इत्येतत् । (विश्वरूपाचार्यः)

2. 'उत्तमसाहसं दण्डनीयः' इति पूर्वसूत्रभागः मुद्रितविष्णुस्मृतौ ।

3. मध्यमेषु मध्यमम्–मु. विष्णु. स्मृ., २६.

4. 'अनिच्छन्तं' प्रवृत्त्यनुन्मुखम् । 'अभूमिज्ञं' कार्याकार्यज्ञानहीनम् । (वि. र., २०४)

5. ह्येषु–मु. ना. स्मृ., २१४.

6. ग्लहे द्यूतेषु पापक्रिया–ज.

7. पणः–B. J.; वि. र., २०६, स.

तथा [२२, १२]

कूटाक्षदेविनः क्षुद्रा राजभागहराश्च[1] ये ।
गणानां[2] वञ्चकाश्चैव दण्ड्यास्ते कितवास्स्मृताः ॥

याज्ञवल्क्यः [२, २०२]

राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपधिदेविनः ।

विष्णुः [५, १३४-१३५]

द्यूते च कूटाक्षदेविनां [3]करच्छेदः । उपधिदेविनां संदंशच्छेदः ॥
['संदंशच्छेदः'][4] अङ्गुष्ठतर्जनीच्छेदः ।

अथ व्यासः

न्यायस्थाने [5]येऽधिकृता गृहीत्वार्थं विनिर्णयम्[6] ।
कुर्वन्त्युत्कोचकास्ते तु राजद्रव्यविनाशकाः ॥

बृहस्पतिः [२२, १४]

अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः ।
विश्वस्तवञ्चकाश्चैव निर्वास्याः सर्व एव ते ॥

याज्ञवल्क्यः [१, ३३९]

उत्कोचजीविनो द्रव्यहीनान् कृत्वा विवासयेत् ।

व्यासः

स्त्रीपुंसौ वञ्चयन्तीह मङ्गलादेशवृत्तयः ।
गृह्णन्ति छद्मना चार्थमनार्याश्चार्यलिङ्गिनः[7] ॥

1. राजभाग्यहराश्च–वि, उ, स; राजभार्याहराश्च–(पराशरमाधवीय, ४३९)
2. गुणानां–वि.; गणका–माधवीय, ४३९.
3. कर्णच्छेदः–स.
4. वि. र., ३०६.
5. ह्यधिकृता–वि. र., ३०५.
6. 'विनिर्णयं' विरुद्धनिर्णयम्–वि. र., ३०५.
7. 'अनार्या आर्यलिङ्गिनः' इति वि. र. पाठः (३०६)

बृहस्पतिः [२२, १५-१६]

ज्योतिर्ज्ञानं तथोत्पातमविदित्वा तु ये नृणाम् ।
श्रावयन्त्यर्थलोभेन विनेयास्ते[1] प्रयत्नतः ॥

दण्डाजिनादिना युक्तमात्मानं दर्शयन्ति ये ।
हिंसन्ति छद्मना नणां वध्यास्ते राजपूरुषैः ॥

मनुः [९, २९२]

सर्वकण्टकपापिष्ठं हेमकारं तु पार्थिवः ।
प्रवर्तमानमन्याये छेदयेल्लवशः क्षुरैः ॥[2]

याज्ञवल्क्यः[3] [२, २९७]

कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी ।
[4]अङ्गहीनास्तु कर्तव्या दाप्याश्चोत्तमसाहसम् ॥[5]

तथा [२, २४६-२४८]

मृच्चर्ममणिसूत्रायःकाष्ठवल्कलवाससाम् ।
अजातौ जातिकरणे[6] विक्रयेऽष्टगुणो दमः[7] ॥

समुद्रपरिवर्तं च सारभाण्डं च कृतकमम् ।
आधानं विक्रयं चापि नयतो[8] दण्डकल्पना ॥

1. विनेयास्ते-बि; ते विनेयाः प्रयत्नतः-ज; विनेयास्तु प्रयत्नतः-उ.

2. यावन्तः केचन 'कण्टकाः' पूर्वमुक्ताः तेषां पापतमः सुवर्णकारः—**मेधातिथिः** । 'कण्टकः' प्रकाशतस्करः (वि. र., ३०७)

3. B. J. and विवादरत्नाकर (३०७) ascribe to कात्यायन this śloka and the three succeeding ślokas; other *nibandhas* correctly ascribe them to याज्ञवल्क्य.

4. 'व्यङ्गहीनास्तु' इति विश्वरूपपाठः, चण्डेश्वरेणादृतश्च; स.

5. धूपितरञ्जितादि 'कूटस्वर्णम्' । श्वसृगालादिप्रभवं 'विमांसम्' । तद्विशेषापेक्षया धनदण्डः ।

6. 'अजातेर्जातिकरणे' इति विश्वरूपपाठः; बि च.

7. विक्रयाष्टगुणो दमः-बि.

8. नयेतो-बि.

भिन्ने पणे तु पञ्चाशत्पणे तु शतमुच्यते ।
द्विपणे द्विशते दण्डो मूल्यवृद्धौ च वृद्धिमान्[1] ॥

[2]'अङ्गहीनाः' नासाकर्णकरैर्हीनाः । 'मृच्चर्म' इत्यादि । मृदादीनामल्पमूल्यापकृष्टजातीनां बहुमूल्यलाभार्थमुत्कृष्टजातिकरणेन गृहीतमूल्यादष्टगुणो दमः । अपकृष्टजातेरुत्कृष्टजातिकरणं यथा—मृदः मल्लिकामोदसंचरणेन सुगन्धामलकमिति; मार्जारचर्मणि वर्णोत्कर्षापादनेन व्याघ्रचर्मेति; स्फटिके लौहित्यकरणेन पद्मराग इति; कार्पासिके सूत्रे गुणोत्कर्षाधानेन पट्टसूत्रमिति; कार्ष्णायसे वर्णोत्कर्षाधानेन [रजतमिति][3] । 'समुद्गं' सम्पुटकम् । 'सारभाण्डं' कुङ्कुमकर्पूरमुक्ताफलादि । 'भिन्ने पणे' न्यूने पणे ।[4]

<u>बृहस्पतिः</u> [२२, १७-१८]

अल्पमूल्यं तु संस्कृत्य नयन्ति बहुमूल्यताम् ।
स्त्रीबालकान् वञ्चयन्ति दण्ड्यास्तेऽर्थानुरूपतः ॥

1. बुद्धिमान्—बि.  2. व्यङ्गहीना–ख

3. A. S. B., ज, B. J.; वि. र., ३०८.

4. The manuscripts are defective in their renderings of the above commentary. The Udaipur and Bikanir manuscripts end with न्यूने पणे, as above. Three manuscripts (A. S. B., B. J., and ख) continue the commentary thus:

कङ्कोलत्वगाख्ये लवङ्गमिति । कार्पासिके वाससि गुणोत्कर्षाधानेन कौशेयमिति ।

The commentary in the text refers to *all* the three ślokas of Yājñavalkya, and occurs at the end of their citation, in the manner usual with Lakṣmīdhara. It is reproduced and slightly amplified as usual by the *Vivādaratnākara*, (pp. 307–308). The extension by the A. S. B. etc. is evidently from the later digest. An intriguing feature is that the sentences furnishing illustrations occur almost in the same form in the *middle* of the *Mitākṣarā* comments on Y., II, 246 thus:

यथा मल्लिकामोदसंचारेण मृत्तिकायां सुगन्धामलकमिति । मार्जारचर्मणि वर्णोत्कर्षापादानेन व्याघ्रचर्मेति । स्फटिकमणौ वर्णान्तरक्रमेण पद्मराग इति । कार्पासिके सूत्रे गुणोत्कर्षाधानेन पट्टसूत्रमिति । कार्ष्णायसे (कालायसे, *v. e.*) वर्णोत्कर्षाधानेन रजतमिति । कङ्कोलत्वगाख्यं लवङ्गमिति । कार्पासिके वाससि गुणोत्कर्षाधानेन कौशेयमिति ।

हेममुक्ताप्रवालाद्यं कृत्रिमं कुर्वते तु ये ।
क्रेते मूल्यं प्रदाप्यास्ते राज्ञा तद्‌द्विगुणं दमम् ॥

नारदः

[1]लोहानामपि सर्वेषां हेतुरग्निक्रियाविधौ ।
क्षयः संस्क्रियमाणानां तेषां दृष्टोऽग्निसंगमात् ॥

[2]सुवर्णेषु क्षयो नास्ति रजते द्विपलं शतम् ।
शतमष्टपलं ज्ञेयं क्षयस्तु त्रपुसीसयोः ॥

ताम्रे पञ्चपलं विद्याद्विकारा ये च [3]मृन्मयाः ।
तद्धातूनामनेकत्वादयसो[4]ऽनियमः क्षये ॥

'क्रियाविधौ' घटनकर्मणि । 'तद्विकाराः' कांस्यरीत्यादयः । उक्ताधिकक्षये सुवर्णकारादयो दाप्या दण्ड्याश्च ।

याज्ञवल्क्यः [२, १७८]

अग्नौ सुवर्णमक्षीणं द्विपलं रजते शतम् ।
अष्टौ तु त्रपुसीसेषु ताम्रे पञ्च दशायसि ॥

मनुः [८, ३९७]

तन्तुवायो दशपलं दद्यादेकपलाधिकम् ।
अतोऽन्यथा वर्तमानो दाप्यो द्वादशकं दमम् ॥[5]

1. लोहानामपि सर्वेषां हेतुरग्निक्रियाविधौ-omitted by all mss. but found in स.

2. सुवर्णशब्दोऽत्र शुद्धपरः, अम्यादृशे तत्रापि क्षयात् । (वि. र., ३०९)

3. 'तन्मये' इति उ, वि, वि. र., ३०९; 'तन्मयाः' कांस्यादयः (वि. र.) ।

4. अयःशब्दोऽपि शुद्धायसो व्यतिरिक्तायःपरः । शुद्धे तु नियमोऽग्रत एव उक्तः (वि. र.) ।

5. तन्तून्वयति 'तन्तुवायः' कुविन्दः । शाटकादेः पटस्य कर्ता । स सूत्रपलानि दश गृहीत्वा शाटकं वयन् एकपलाधिकं वस्त्रं दद्यात् । अनया वृद्धया सर्वं दद्यात् । (मेधातिथिः)

याज्ञवल्क्यः [२, १७९]

शते दशपला वृद्धिरौर्णे कार्पासिके तथा ।
मध्ये पञ्चपला सौत्रे[1] सूक्ष्मे तु त्रिपला मता ॥

नारदः [१२, १३-१४]

तान्तवस्य तु संस्कारे क्षयवृद्धी उदाहृते ।
तत्र कार्पासिकोर्णानां वृद्धिर्दशपला शते ॥

स्थूलसूत्रवतामेषां मध्यानां पञ्चकं शतम्[2] ।
त्रिपलं तु सुसूक्ष्माणामतः क्षय उदाहृतः ॥

त्रिंशांशो रोमबद्धस्य क्षयः कर्मकृतस्य तु ।
कौशेयवल्कलादीनां नैव वृद्धिर्न च क्षयः ॥

याज्ञवल्क्यः [२, १८०]

कार्मिके[3] रोमबद्धे च त्रिंशद्भागः क्षयो मतः ।
न क्षयो न च वृद्धिः स्यात्कौशेये वल्कलेषु च ॥

'कार्मिकं' यत्र निष्पन्ने पटादौ रुचकस्वस्तिकादिकं चित्रं सूत्रैः सूच्या क्रियते तदुच्यते । यत्र प्रावारादौ रोमाणि बध्यन्ते स 'रोमबद्धो' नेपालकम्बलादिः ।[4]

1. मध्ये पञ्चपला हानिः—इति विश्वरूपपाठः । मध्यमे तूक्तवृद्धितः पञ्चपलहान्या वृद्धिरित्यर्थः ।-(विश्वरूपः)

2. पञ्चविंशतिः-B. J.

3. चार्मिके इति विश्वरूपपाठः । चर्मकृतं 'चार्मिकं' कुरण्ठादि इति व्याख्यातं च ।

4. यथा मिताक्षरायाम्—'कार्मिकं', यत्र निष्पन्ने पटे चक्रस्वस्तिकादिकं चित्रं सूत्रैः क्रियते तत्कार्मिकमुच्यते । यत्र प्रावारादौ रोमाणि बध्यन्ते स 'रोमबद्धः' ।

<u>मनुः</u> [८, ३९६]

शाल्मले फलके [1]श्लक्ष्णे [2]नेनिज्यान्नेजकः शनैः ।
न च वासांसि वासोभिर्निर्हरेन्न विवासयेत्[3] ॥

<u>याज्ञवल्क्यः</u> [२, २३८; २, १८१]

वसानस्त्रीन् पणान् दाप्यो नेजकस्तु[4] पराशुकम् ।
विक्रयावक्रयाधानयाचितेषु पणान् दश ॥

देशं कालं च भोगं च ज्ञात्वा नष्टे बलाबलम् ।
द्रव्याणां कुशला ब्रूयुर्यत्तद्दाप्यमसंशयम् ॥

'अवक्रयो' भाटकः ।

<u>नारदः</u> [१२, ८-९]

[5]मूल्याष्टभागो हीयेत सकृद्धौतस्य वाससः ।
द्विः पादस्त्रिस्त्रिभागस्तु चतुःकृत्वोऽर्धमेव तु ॥

अर्धक्षयात्तु परतः पादशोऽपचयः[6] क्रमात् ।
यावत्क्षीणदशं [7]वस्त्रं जीर्णस्यानियमः क्षये ॥

<u>बृहस्पतिः</u> [२२, १९-२०]

[8]मध्यस्था वञ्चयन्त्येकं[9] स्नेहलोभादिना यदा ।
साक्षिणश्चान्यथा ब्रूयुर्दाप्यास्ते द्विगुणं दमम् ॥

1. सूक्ष्मे–द. 2. निर्निज्यात्–B. J.

3. 'शाल्मली' नाम वृक्षस्तद्विकारे 'फलके' । 'श्लक्ष्णे'ऽपरुषे च । 'वासांसि' अन्यदीयानि अन्यदीयैः 'वासोभिः' न निर्हरेत् । 'न च वासयेत्' अन्यदीयानि वासांसि अन्यस्मै न प्रयच्छेत्, मूल्येन वसनार्थं न दद्यात् । (मेधातिथिः)

4. 'रजकस्तु' इति विश्वरूपपाठः ।

5. शून्याष्ट–द.

6. पादांशापचयः–मु. ना. स्मृ., १६१.

7. जीर्णे–मु. ना. स्मृ.

8. मध्यस्थानं च प्रत्येकं स्नेहलोभादिना यदा–ज.

9. वञ्चयन्लोकं–द.

मन्त्रौषधिबलात्किञ्चित्संप्राप्तिं दर्शयन्ति ये[1] ।
मूलकर्म च कुर्वन्ति निर्वास्यास्ते महीभुजा ॥

मनुः [९, २२५-२२६]

कितवान् कुशीलवान् केरान्[2] पाषण्डस्थांश्च मानवान् ।
विकर्मस्थान् शौण्डिकांश्च क्षिप्रं निर्वासयेत् पुरात् ॥

एते राष्ट्रे वर्तमाना राज्ञः प्रच्छन्नतस्कराः ।
विकर्मक्रियया नित्यं बाधन्ते भद्रिकाः प्रजाः ॥[3]

व्यासः

नैगमाद्या भूरिधना दण्ड्या दोषानुरूपतः ।
यथा ते नातिवर्तन्ते तिष्ठन्ति समये यथा ॥

[इति प्रकाशतस्करदण्डाः][4]

## ७० (ग) अथाप्रकाशतस्करदण्डाः

तत्र मनुः [९, २७६]

सन्धिं कृत्वा तु ये चौर्यं रात्रौ कुर्वन्ति तस्कराः ।
तेषां छित्वा नृपो हस्तौ तीक्ष्णे शूले निवेशयेत् ॥

[5]व्यासः

सन्धिच्छेत्ताऽनेकविधं धनं प्राप्नोति वै गृहात् ।
प्रदाप्यः स्वामिने सर्वं तीक्ष्णे [6]शूले निवेशयेत् ॥

1. यावन्ति वञ्चयन्ति ये-B. J., वि. र., ३१२; संप्राप्तिं दर्शयन्ति ये-वि.
2. 'क्रूरान्' इति मेधातिथिपाठः
3. A. S. B., ज and B. J. follow up with 'केराः' परस्त्रीपुरुषसङ्केतकारिणः. It occurs in the comments of वि. र., ३१३.
4. इति कृत्यकल्पतरौ प्रकाशतस्करदण्डाख्यं पर्व-A. S. B., ज and B. J.
5. A. S. B., B. J. and ज add here: एतत्तु अभ्यासे यथा
6. 'द्रुतं शूले'-A. S. B., B. J., ज, वि. र., ३१४.

बृहस्पतिः

[1]सन्धिच्छिद्रो हृतं त्याज्याः शूलमारोपयेत्तु तान् ।
तथा [2]पान्थमुषो वृक्षे गळे बद्ध्वाऽवलम्बयेत् ॥

नारदकात्यायनौ[3]

स्वदेशघातिनो ये स्युस्तथा मार्गनिरोधिनः ।
तेषां सर्वस्वमादाय राजा शूले निवेशयेत् ॥

मनुः[4] [८, ३२३]

पुरुषाणां कुलीनानां नारीणां च विशेषतः ।
मुख्यानां चैव रत्नानां हरणे वधमर्हति ॥[5]

बृहस्पतिः [२२, २२]

मनुष्यहारिणो राज्ञा दग्धव्यास्तु कटाग्निना ।[6]

व्यासः

स्त्रीहर्ता लोहशयने [7]दग्धव्यो वै कटाग्निना ।
नरहर्ता हस्तपादौ छित्वा स्थाप्यश्चतुष्पथे ॥

1. सन्धिच्छेदोऽसकृदेतान् शूलमारोपयेत्ततः ।–A. S. B., B. J. and ज.

2. पान्थमुखो–उ, त्रि; पान्थमयो-ज; पान्थमुषो–A. S. B., B. J., S. B. (a), चि. र., ३१३ स

3. नारद, २१, ७ (परिशिष्ट); कात्या. स्मृ. सा., (२०)

4. याज्ञवल्क्यः–स.

5. सत्कुले जाता विद्यादिगुणयोगिनः 'कुलीनाः' । 'नारीणां च विशेषतः' गुणरूपसौभाग्यसंपन्नानामित्यर्थः । मुख्यानि उत्तमानि रत्नानि वज्रवैडूर्यमरकतप्रभृतीनि–(मेधातिथिः)

6. 'कटं' तृणं, तेन योऽग्निः प्रदीप्यते स कटाग्निः । अपराधिनोऽङ्गं तृणेनावेष्ट्य तदग्निना प्रज्वाल्य दाहयितव्य इत्यर्थः । (पराशरमाधवीये-व्याख्या, ४४०)

7. दग्धव्या चैकयाग्निना-द.

नारदः [२१, २८]

पुरुषं हरतो हस्तौ[1] दण्ड उत्तमसाहसः ।
सर्वस्वं हरतो नारीं[2] कन्यां तु हरतो वधः[3] ॥

[4]कात्यायनः

सर्वस्वं हरतः स्त्रीं तु कन्याया हरणे वधः ।
वाजिवारणबालानां चाददीत बृहस्पतिः ॥

[5]'आददीत' सर्वस्वमिति ।

शङ्खलिखितौ

राजपुत्रापहारेषु सहस्रं शारीरो वा दण्डः । तत्कुलीनेष्वर्धम् । स्त्रीपुरुषयोश्च । हस्त्यश्वगोरथवृषयानेषु राजपुत्रापहारवद्दण्डः ।

तथा

अजाविकेऽर्धत्रयोदशम्[6] । [7]नकुलबिडालापहरणे त्रयः कार्षापणाः ।

मनुः [८, ३४२]

असन्दितानां सन्दाता [8]सन्दितानां च मोक्षकः ।
दासाश्वरथहर्ता च प्राप्तः स्याच्चौरकिल्बिषम् ॥

'सन्दितानां' चरणबद्धानाम् ।

1. पात्यो–मु. ना. स्मृ., २२६.
2. सर्वस्वं स्त्रीं तु हरतः–*ibid.*
3. कन्यानां हरतो वधः–द.
4. Not found in Kane's collection.
5. आददीत सर्वस्वमित्यर्थः–स.
6. दशपणाः–B. J.
7. A. S. B. and ज read पक्षिनकुल
8. ये च संदिताः पादस्थशृङ्खलादिना तेषां 'मोक्षकः'–(मेधातिथिः)

नारदः [२१, ३३]

गोषु ब्राह्मणसंस्थासु [स्थूराया]श्छेदनं भवेत् ।
दासीं च हरतो[1] मध्यस्तथा पादस्य छेदनम् ॥

'स्थूरा' पार्ष्णेरुपरिभागः ।

बृहस्पतिः

गोहर्तुर्नासिकां छित्वा[2] बध्वा चाम्भसि मज्जयेत् ।

मनुः [८, ३२५, ३२४]

गोषु ब्राह्मणसंस्थासु छुरिकायाश्च[3] भेदने ।
पशूनां चैव हरणे सद्यः कार्योऽर्धपादिकः ॥

महापशूनां हरणे शस्त्राणामौषधस्य च ।
कालमासाद्य कार्यं च राजा दण्डं प्रकल्पयेत् ॥[4]

याज्ञवल्क्यः [२, २७३]

बन्दिग्राहांस्तथा वाजिकुञ्जराणां च हारिणः ।
प्रसह्य घातिनश्चैव[5] शूलमारोपयेन्नरान् ॥[6]

मनुः [९, २८०]

कोष्ठागारायुधागारदेवतागारभेदिनः ।
हस्त्यश्वरथहर्तॄंश्च हन्यादेवाविचारयन् ॥

1. हरतो नित्यमर्धपादविकर्तनम्–मु. ना. स्मृ., २२६.

2. छिन्द्यात्–स्मृ. च. पाठः (p. 739)

3. स्थूरिकायाश्च–स.

4. 'ब्राह्मणसंस्था' ब्राह्मणाश्रिता ब्राह्मणस्वामिकाः । तासां हरणे । पादस्यार्धमर्धपादम्, तदस्यास्ती'त्यर्धपादिकः' । खरिका यथा गोरथक्षेत्रादौ वाह्यते बलीवर्दः । भेदने वाह्यमानायाः प्रतोदेन पीडोत्पादने । 'महापशवो' हस्त्यश्वादयः । 'कालमासाद्य'ज्ञात्वा निरूप्य दण्डं कल्पयेत् (मेधातिथिः)

5. हारिणश्चैव–S. B. (a); स.

6. नरवचनमब्राह्मणार्थम्–(विश्वरूपः)

'अविचारयन्' अविलम्बयन्।[1]

विष्णुः [५, ७६-७७]

[2]गोऽश्वखरोष्ट्रगजापहार्येककरपादिकः कार्यः। [3]अजापहार्येककरश्च।

व्यासः

अश्वहर्ता हस्तपादौ कटिं छित्वा प्रमाप्यते।
पशुहर्तुश्चार्धपादं तीक्ष्णशस्त्रेण कर्तयेत्॥

नारदः [२१, २९]

महापशूंस्तेनयतो दण्ड उत्तमसाहसम्।
मध्यमं मध्यमपशून् पूर्वं क्षुद्रपशौ हृते॥

अथ व्यासः

उत्क्षेपकग्रन्थिभेदौ संदंशेन वियोजयेत्।

याज्ञवल्क्यः [२, २७४]

उत्क्षेपकग्रन्थिभेदौ [4]करनासाविहीनकौ।
कार्यौ द्वितीयापराधे करपादैकहीनकौ॥[5]

1. यन्। त्वरितमेव-ज; 'कोष्ठागारं' धान्याद्यागारम्-वि. र., ३१८.

2. गोऽश्वोष्ट्र-A. S. B., S. B. (a), ज, स.

3. अजाद्यपहार्येककरश्च-मु. विष्णु., २१, स. अजाद्यपहार्येककरः कार्य इत्यर्थः। अत्र पूर्वं व्यासेन अजाविहरणेऽर्धत्रयोदशपणा इत्यभिधानात्, अनेनाजाविहरणे एककरस्योक्तेः विरोधस्य प्रसङ्गे, धनशून्यचौरत्वे यशोपयुक्ताजाविहरणे वा विष्णुरिति परिहारः। (वि. र., ३१८)

4. 'करसंदंशहीनकौ' इति विश्वरूप-मिताक्षरा-विवादरत्नाकराद्दृतपाठः; B. J. स.

5. 'उत्क्षेपकः' पटाक्षेपकः। 'ग्रन्थिभेदकः' ग्रन्थिभेत्ता। तावुभावपि 'करसंदंशहीनौ' प्रथमेऽपराधे कार्यौ। 'करसंदंशो'ऽङ्गुल्यः, तद्धीनौ। यद्वा करसंपुटः 'करसंदंशः', तद्धीनौ। अन्यतरहस्तच्छेदनमित्यर्थः। द्वितीयेऽपराधे त्वेको हस्तः पादश्च। (विश्वरूपः)॥ वस्त्रादुत्क्षिपति हरतीत्युत्क्षेपकः। वस्त्रादिबद्धं स्वर्णादिकं विस्रस्योत्कृत्य वा यो हरत्यसौ 'ग्रन्थिभेदः' (मिताक्षरा)।

[1]**मनुः** [९, २७७]

अङ्गुली ग्रन्थिभेदस्य छेदयेत्प्रथमग्रहे ।
द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥

**नारदः** [२१, ३२]

प्रथमे ग्रन्थिभेदश्च [2]अङ्गुल्यङ्गुष्ठयोर्वधः ।
द्वितीये चैव तज्ज्ञेयं तृतीये वधमर्हति ॥

**बृहस्पतिः** [२२, २४]

धान्यहारी दशगुणं दाप्यस्तु द्विगुणं दमम् ।

**मनुः** [८, ३२०; ८, २४३]

धान्यं दशभ्यः कुम्भेभ्यो हरतो[3] ह्यधिको वधः ।
शेषेऽप्येकादशगुणं दाप्यस्तस्य च तद्धनम् ॥[4]

क्षेत्रिकस्यात्यये दण्डो भागाद्दशगुणो भवेत् ।
ततोऽर्धदण्डो भृत्यानामज्ञानात्क्षेत्रिकस्य तु ॥

'शेषे' न्यूने । 'क्षेत्रिकस्यात्यये' कृषीवलस्यातिक्रमे भागापहारलक्षणे ।[5]

1. The quotations from Manu, Nārada and Bṛhaspati which follow are found only in A. S. B., S. B. (a), ज, द and B. J., as well as वि. र., ३१९-३२०.

2. तर्जन्यङ्गुष्ठयोश्छेदः-A. S. B., ज.

3. हरतोऽभ्यधिको वधः-स.

4. कुम्भशब्दः परिमाणविशेषे वर्तते न घटमात्रे । क्वचित् विंशतिप्रस्थान् क्वचिद्द्वाविंशतिरिति देशभेदाद् व्यवस्था । (मेधातिथिः)

5. 'शेषे' दशकुम्भाधिकन्यूने । तस्य तद्धनं स्वामिने यदपहृतं तद्दाप्यः । 'क्षेत्रिकस्यात्यये' कृषीवलभागहरणे धान्यापहारी एकादशगुणं दण्ड्यः, शस्यापहारी च । मनूक्तधान्यापहारे एकादशगुणदण्डाभिधानं स्वामिने च हृतधान्यदानाच्च प्रथमधान्यचौर्यविषयम् । बार्हस्पत्यन्तु स्वामिने एकादशगुणधान्यदानं राज्ञश्च तद्द्विगुणधनदानं चौर्याभ्यासविषयम् इत्यविरोधः । हलायुधस्तु—द्वितीये श्लोके क्षेत्रस्वामिनोऽत्ययेन दोषेण यदा शस्यनाशो भवति, तदा राज्ञा स्वग्राह्यभागाद्दशगुणं दण्डनीयः । एतज्ज्ञानाच्च । भृत्यदोषेण शस्यनाशे भृत्य एव तदर्धेन दण्ड्य इत्यर्थमाह । (विवादरत्नाकरः, ३२०-३२१)

<u>विष्णुः</u> [५, ७९-८०]

धान्यापहार्येकादशगुणं दण्ड्यः । सस्यापहारी च ॥

काष्ठभाण्डेत्यादिश्लोकद्वयानन्तरं—

<u>नारदः</u> [२१, २५]

तुलाधरिममेयानां गणिमानां च सर्वशः ।
[1]एभिस्तूत्कृष्टमूल्यानां मूल्याद्दशगुणो दमः ॥[2]

<u>मनुः</u> [८, ३२१-३२२]

तथा धरिममेयानां शतादभ्यधिके वधः ।
सुवर्णरजतादीनामुत्तमानां च वाससाम् ॥

पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते ।
शेषेऽप्येकादशगुणं मूल्याद्दण्डं प्रकल्पयेत् ॥[3]

हरत[4] इत्यनुवृत्तौ <u>नारदः</u> [२१, २७]

सुवर्णरजतादीनामुत्तमानां च वाससाम् ।
रत्नानां चैव सर्वेषां[5] शतादभ्यधिके वधः ॥

शारीरोऽङ्गच्छेदो वेति दण्डे—

<u>शङ्खलिखितौ</u>

सुवर्णरत्नापहरणे ।[6]

1. 'एभ्यः' इति मु. ना. स्मृ., २२६, स.

2. 'तुलाधरिमं' कर्पूरादि, 'मेयं' व्रीह्यादि, 'गणिमं' पूगादि । 'एभिः' काष्ठादिभिः । (वि. र., ३२१) 'धरिमं' तुलनीयम् (*ib.*)

3. धरणं 'धरिमा' तुला । तेन मीयन्ते परिच्छिन्द्यते तानि 'धरिममेयानि' । 'उत्तमानां च वाससाम्' कौशेयपट्टादीनाम् । (मेधातिथिः)

4. हरण–वि. र., ३२२.

5. मुख्यानां शताद्–मु. ना. स्मृ., २२६.

6. A. S. B. and ज add the commentary–यत्किंचित्स्वल्पं सुवर्णरत्नं वापहरन्नभ्यर्हितः ताडनीयः । तदूने छिन्नकर्णः कार्यः ।

दण्ड इत्यनुवृत्तौ विष्णुः [५, ८७]

रत्नापहार्युत्तमसाहसम् ।

मनुः [८, ३२३]

मुख्यानां चैव रत्नानां हरणे वधमर्हति ।

शङ्खलिखितौ

अष्टशतं सीताद्रव्यापहारे च ।[1]

मनुयमौ [८, ३३१]

परिपूतेषु धान्येषु शाकमूलफलेषु च ।
निरन्वये शतं दण्ड्यः सान्वयेऽर्धशतं दमः ॥[2]

'परिपूतेषु' अपाकृतबुसेषु । 'निरन्वये' रक्षकरहिते ।

मनुः [८, ३३०]

पुष्पेषु हरिते[3] धान्ये गुल्मवल्लीनगेषु च ।
अल्पेष्वपरिपूतेषु दण्डः स्यात्पञ्चकृष्णलः ॥

'अल्पेषु अपरिपूतेषु' धान्येषु इति सम्बन्धः ।[4]

1. वि. र., ३२२ adds at the end of the *sūtra*–यथाकालम्, explained as कर्षणसमये; 'शीता'–इति उ, वि.

2. मनुनैव दशकुम्भाधिकधान्यहरणे वधाभिधानात्, तन्न्यूने एकादशगुणदण्डाभिधानाद् विरोधप्राप्तावयं शतदण्डः खलस्थधान्यहरणे, गृहधान्यहरणे तु पूर्व इत्याहुः । (वि. र., ३२३)

3. रहिते–वि; सहिते–उ.

4. B. J. adds–'अल्पेषु' पुरुषवाह्याम्न्यूनेषु । 'अपरिपूतेषु' अनपहृतकल्केषु । 'धान्येषु' इति सम्बन्धः; 'अल्पेष्वपरिपूतेषु' इत्यत्र धान्येष्विति–स; नवमालिकादीनि पुष्पाणि । 'हरितं' धान्यं क्षेत्रस्थं अपक्वम् । 'नगाः' वृक्षाः । 'अन्येष्वपरिपूतेषु' बहुवचनादुत्तरश्लोके धान्यग्रहणमेवाकृष्यते । गुल्मादीनां हि सत्यपि पलाशध्यामिश्रत्वे पुष्पाणां च न परिपूतव्यवहारः । (मेधातिथिः)

यमः

फलेषु हरिते[1] धान्ये शाकमूलससिग्रुजे[2] ।
[3]अल्पेष्वपरिपूतेषु दण्डः स्यात्पञ्चकृष्णलः ॥

व्यासः

[4]मध्यहीनद्रव्यहारी पुष्पमूलफलस्य च ।
दाप्यस्तु द्विगुणं दण्डमथवा पञ्च कृष्णलान् ॥

गौतमः [१२, १५]

फलहरितधान्यशाकादाने पञ्च कृष्णलमल्पे ।

दण्ड इति शेषः ।

मनुः [८, ३२६-३२९; ३३३]

सूत्रकार्पासबिल्वानां[5] गोमयस्य गुडस्य च ।
दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च ॥

वेणुवैणवभाण्डानां लवणानां तथैव च ।
मृन्मयानां च हरणे मृदो भस्मन एव च ॥

मत्स्यानां पक्षिणां चैव तैलस्य च घृतस्य च ।
मांसस्य मधुनश्चैव यच्चान्यत्पशुसंभवम् ॥

अन्येषामेवमादीनां मद्यानामोदनस्य च ।
पक्वान्नानां च सर्वेषां तन्मूल्याद्द्विगुणो दमः ॥

1. रहिते–बि; सहिते–उ.
2. सशिग्रुके–स.
3. अल्पेष्वपरिपूतेषु–स; अल्पेषु परिपूतेषु–उ.
4. मध्यमूलद्रव्यहारी–स.
5. किण्वानां–बि, ज, द, स.

यस्त्वेतान्युपक्लृप्तानि द्रव्याणि स्तेनयेन्नरः ।
तं शतं दण्डयेद्राजा यश्चाग्निं चोरयेद्गृहात् ॥[1]

[2]'उपक्लृप्तानि' उपयोगयोग्यतां [3]नीतानि ।

विष्णुः [५, ८३-८४]

सूत्रकार्पासगोमयदधिक्षीरतक्रगुडतृणलवणमृद्भस्ममत्स्यपक्षिघृततैलमांसमधुवैदलवेणुमृन्मयलोहभाण्डानामपहर्ता मूल्यात्त्रिगुणं[4] दण्ड्यः । पक्वान्नानां च ।

शङ्खलिखितौ

कृतकाष्ठाश्मकौलालचर्मवेत्रविदलभाण्डेषु मूल्यात्पञ्चगुणः । त्रयो वा कार्षापणाः । एकचक्रापहरणे चत्वारिंशत् । शकटे त्वशीतितमः[5] ।

नारदः [२१, २२-२४]

काष्ठभाण्डतृणादीनां मृन्मयानां तथैव च ।
वेणुवैणवभाण्डानां तथा स्नाय्वस्थिचर्मणाम् ॥
शाकानामार्द्रमूलानां[6] हरणे फलपुष्पयोः[7] ।
गोरसेक्षुविकाराणां तथा लवणतैलयोः ॥
पक्वान्नानां कृतान्नानां मद्यानामोदनस्य[8] च ।
सर्वेषामल्पमूल्यानां मूल्यात्पञ्चगुणो दमः ॥

1. 'सूत्रं' ऊर्णासणादि । 'लवणानि' सैन्धवविड्लवणादीनि । 'यच्चान्यत्पशुसंभवं' आमिषादि । 'अन्येषां' अपूपमोदकादीनाम् । 'आदि'शब्दः प्रकारे । (मेधातिथिः)

2. उपक्लृप्तानि कार्यार्थं निधापितानि । B. J.

3. योग्यचरितानि-ज.

4. द्विगुणं-ज, B. J.

5. अशीतिशतम्-B. J.

6. शाकहरिमूलानाम्-मु. ना. स्मृ., २२५

7. तृणपुष्पयोः-*ibid.*

8. आमिषस्य च-मु. ना. स्मृ., २२५.

व्यासः

[1]अल्पधान्यापहरणे क्षीरे तद्विकृतौ तथा ।
स्वामिने तत्समं दाप्यो [2]दण्डं वा द्विगुणं नृपे ॥

मनुः [८, ३१९]

यस्तु रज्जुं घटं[3] कूपाद्धरेद्भिन्द्याच्च यः प्रपाम् ।
स दण्डं प्राप्नुयान्माषं तच्च तस्मिन् समाहरेत् ॥

दण्ड इत्यनुवृत्तौ विष्णुः [५, ८८]

अनुक्तद्रव्याणामपहर्ता मूल्यसमम् ।

याज्ञवल्क्यः [२, २७५]

क्षुद्रमध्यमहाद्रव्यहरणे सारतो[4] दमः ।
देशकालवयःशक्ति सञ्चिन्त्यं दण्डकर्मणि ॥

नारदः [१७, २१]

साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः ।
स एव दण्डः स्तेयेऽपि द्रव्येषु त्रिष्वनुक्रमात्[5] ॥

कात्यायनः [८२२]

येन येन परद्रोहं करोत्यङ्गेन तस्करः ।
छिन्द्यात्तत्तन्नृपस्तस्य न करोति यथा पुनः ॥

1. अल्पमूल्यापहरणे-B. J., वि. र., ३२६.

2. दण्डं च द्विगुणं नृपे-B. J. स; दण्डं च त्रिगुणे नृपे-ज; दण्डश्च द्विगुणं नृपे-वि. र., ३२६.

3. रज्जुं घटं-वि. र., ३२६; मेधातिथिपाठश्च, स; रज्जुघटं-उ.

4. 'सारतो' मूल्यानुसारात् (वि. र., ३२६)

5. 'त्रिषु' प्रथममध्यमोत्तमेषु । 'द्रव्येषु त्रिषु' क्षुद्रमध्यमहत्सु । (वि. र., ३२७)

नारदः [२१, ३४]

येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते ।
तत्तदेवास्य च्छेत्तव्यं तन्मनोरनुशासनम् ॥

बृहस्पतिः [२२, २५]

तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम् ।
अनापृच्छ्य तु गृह्णानो हस्तच्छेदनमर्हति ॥[1]

शङ्खलिखितौ[2]

[3]ब्राह्मणो ब्राह्मणस्य समिदाज्येध्माग्नि*काष्ठतृणोलप[4]पुष्पफलमूलान्यपहरन् [5]बलादविज्ञातो वा हस्तच्छेदमाप्नुयात् । कुशकरका*ग्निहोत्रद्रव्या-

1. विष्णुः [५, ५७] तृणच्छेद्येकम्-इति—

तृण कुशदूर्वादि । गवाद्यर्थं विना तच्छेद्येकं कार्षापणं दण्ड्यः । यत्तु—"द्विजस्तृणैध-पुष्पाणि सर्वतः स्ववदाहरेत्" इति योगिवचनं तद्गवाद्यर्थंतृणादिविषयम् । "गोऽग्न्यर्थे तृणमेधान् वीरुद्वनस्पतीनां च पुष्पाणि स्ववदाददीत फलानि च परिवृतानाम्" इति गौतमस्मरणात् । एतच्च परिगृहीतविषयम् । अपरिगृहीते द्विजव्यतिरिक्तस्यापि परिग्रहादेव स्वत्वसिद्धिः ॥ यथाह स एव "स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु" इति ॥ यत् पुनर्बार्हस्पत्ये—"तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम् । अनापृच्छन् हि गृह्णानो हस्तच्छेदनमर्हति ॥" इति—तद्ब्राह्मणस्वामिकापहर्तृद्विजव्यतिरिक्तविषयमनापद्विषयं वा, गवादिव्यतिरिक्तविषयं वा, राजादिरक्षितविषयं वा, ब्राह्मणस्यापि बलाद्ब्राह्मणस्वामिकापहारविषयं वा ॥ तथा च शङ्खलिखितौ—ब्राह्मणो ब्राह्मणसमिदाज्य etc. ॥—इति वैजयन्ती.

2. Text follows स. As regards the initial word, वि. र., ३२७, holds that it should be अब्राह्मणो and not ब्राह्मणो as in all the manuscripts. The text in उ and वि (followed by the other manuscripts) has become unintelligible ['अशुद्धिबाहुल्यम्', *Dharmakośa*, १६७२] by the omission of the words between the two asterisks (*). The variant readings of विवादरत्नाकर are shown below against the relevant numbers.

3. अब्राह्मणः (for ब्राह्मण)-वि. र.

4. उपल (for उलप), both readings are given by वैजयन्ती.

5. बलादपि ज्ञातो वा-इति वैजयन्तीपाठः.

ण्यपहरतः[1] प्रत्यक्षतोऽङ्गच्छेदः स्यात् । अप्रत्यक्षं [2]यदा विदितोयं किल्विषीति ब्राह्मणः[3] खरयानमाप्नुयात्[4] । मूत्रमौण्ड्यमितरेषां खरयानमेव तु ॥[5]

चौर्याधिकारे गौतमः [१२, ४३-४५]

न शारीरो ब्राह्मणदण्डः । कर्मवियोगविख्यापनविवासनाङ्ककरणानि । अवृत्तौ प्रायश्चित्ती सः ॥

'शारीरः' ताडनाङ्गच्छेदादिरूपः । कस्तर्हि दण्ड इत्याह—कर्मवियोगेत्यादि । 'कर्मवियोगः' तेन सह सर्वक्रियानारम्भः । 'विख्यापनं' डिण्डिमकेन परिभ्रमणं स्तेयलक्षणप्रकाशनार्थम्[6] । 'विवासनं' देशान्निष्कासनम् । 'अङ्ककरणं' श्वपदेनाङ्कनम् । 'अवृत्तौ प्रायश्चित्ती सः', अन्येन प्रकारेण जीवनासम्भवे यदि स्तेयं करोति तदाऽस्य प्रायश्चित्तमात्रं भवति न दण्ड इत्यर्थः ॥[7]

1. अपहारे (for अपहरतः); 'अपहरन्'–इति वैजयन्ती.

2. यथाविदितोऽयं (for यदा विदितोयं in ख, यदि विदितोयं in उ, बि)–वैजयन्ती.

3. ब्राह्मणो–उ.

4. मवाप्नुयात् (for प्नुयात् in उ, बि)–वैजयन्ती.

5. Medhātithi (मनु, ८, ३३३):—यागद्रव्येष्वपह्रियमाणेषु "कुशकरकाग्निहोत्रद्रव्याण्यपहरतोऽङ्गच्छेदः स्यात्" इति शङ्खः.

6. लक्षणकर्मप्रकाशनार्थम्–ख.

7. एतानि च यागादिपरब्राह्मणे । लक्ष्मीधरेण तु शङ्खलिखितवाक्यं 'ब्राह्मणोऽब्राह्मणस्य' इति पठितम् । तन्मते ब्राह्मणस्याब्राह्मणेन समिदादिहरणे हस्तादिच्छेद एव । ब्राह्मणस्य ब्राह्मणेन हरणे तु न शारीरो दण्ड इत्यादिकमुन्नेयम् । 'अवृत्तौ प्रायश्चित्ती हि स इति'–अन्येन प्रकारेण जीवनानुपपत्तौ चोरयन् ब्राह्मणो न दण्ड्यः, किन्तु प्रायश्चित्तं कुर्यादित्यर्थः ॥ (विवादरत्नाकरः, ३२८)

आपस्तम्बः [२-२७-१६-१७]

पुरुषवधे स्तेये भूम्यादान इति स्वान्यादाय वध्यः । चक्षुर्निरोधश्चैतेषु[1] ब्राह्मणस्य ॥

'स्वानि' वस्तूनि ।[2]

बृहस्पतिः [२२, २६]

वृत्तस्वाध्यायवांस्तेयी बन्धने क्लिश्यते चिरम् ।
स्वामिने तद्धनं दाप्यः प्रायश्चित्तं च[3] कार्यते ॥

याज्ञवल्क्यः [२, २७०]

चौरं प्रदाप्यापहृतं घातयेद्विविधैर्वधैः ।[4]
सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत् ॥

विष्णुः [५, ८९-९०]

[स्तेनाः][5] सर्व[6] एवापहृतं[7] धनिकस्य दाप्याः । ततस्तेषामभिहितदण्डप्रयोगः ॥

1. निरोधश्च तेषु-वि. र., ३२८; 'निरोधस्त्वेतेषु' इति हरदत्तपाठः (पृ. २९२, Chowkhamba ed.)

2. उ, वि, स, द and S. B. (a) stop with this brief comment. The other manuscripts add—'स्तेयं' स्वर्णहरणम् । [ए] तेषु [त्रिषु] ब्राह्मणेतरस्य वधः । ब्राह्मणस्य चक्षुर्निरोधनं [चक्षुरुत्पाटनम्] । एतच्च [इदञ्च] अधमब्राह्मणविषयम् [परम्] ॥ This comment, with the readings shown within brackets, is that of विवादचिन्तामणि (पृ. १४२) thus interpolated into the text of the *Kalpataru.*

3. तु for च (वि. र., ३२६)

4. एवमब्राह्मणम् । ब्राह्मणं तु कथं कुर्यात्-'सचिह्नम्' इत्यादि-(विश्वरूपः)

5. All Mss. except स omit स्तेनाः which is part of the *sūtra,* So cited by वि. र., ३२९.

6. सर्वमपहृतं-मु. वि. स्मृ., २२.

7. 'हृतं धनं' इति

नारदः [२१, ६][1]

न त्वहोढान्विताश्चोरा वध्या राज्ञा ह्यनागमाः ।[2]
सहोढान् सोपकरणान् क्षिप्रं राजा प्रमापयेत् ॥

'होढ'श्चोरलिङ्गं लोप्त्रादिः ।

वृद्धः[3]

अन्यायोपात्तवित्तत्वाद्धनमेषां मलात्मकम् ।
अतस्तान् घातयेद्राजा नार्थदण्डेन दण्डयेत् ॥[4]

कात्यायनः [८२३-८२६]

मानवाः सद्य[5] एवाहुः सहोढानां प्रवासनम् ।
गौतमानामनिष्टं [6]तत्प्राणच्छेदाद्विगर्हितम् ॥

सहोढमसहोढं वा तत्त्वागमितसाहसम् ।
प्रगृह्य चिह्नमावेद्य सर्वस्वैर्विप्रयोजयेत्[7] ॥

1. Jolly's text (२१, ६, p. 223) reads thus:

न त्वहोढान्विताश्चोरा वध्या राज्ञा अनागसः ।
सहोढान् स्तेयकरणात् क्षिप्रं चोरान्प्रशासयेत् ॥

नारदीयमनुसंहिता [२१, ६६, पृ. १८३]—

लोप्त्रादिरहिताश्चोरा राज्ञा वध्या ह्यनागमम् ।
सहोढान् सोपकरणांश्चोरान् क्षिप्रं विवासयेत् ॥

2. ह्यनागसः–वि. र., पाठः (३२६)

3. 'वृद्धमनुः' इति मिताक्षरा [२, २७०], वि. र., ३३०; वीरमित्रोदय (२, २७३, पृ. ७२६–'इति मनुस्मरणात्'; विवादचिन्तामणि, १४२–'नारदः'; वि–'बृ' (*i. e.* बृहस्पतिः)

4. एतद्ब्राह्मणेतरचोरविषयम्–वि. र., ३३०.

5. सर्व–स.

6. यत्प्राण्युच्छेदाद्विगर्हितम्–वि. र., ३३०.

7. विनियोजयेत्–स.

[1]अयःसन्दानगुप्तास्तु[2] मन्दभक्ता बलान्विताः ।
कुर्युः कर्माणि नृपतेरामृत्योरिति कौशिकः ॥

परदेशाद्धृतं द्रव्यं वैदेश्येन यदा भवेत् ।
गृहीत्वा तस्य [3]तद्द्रव्यमदण्डं तं विसर्जयेत् ॥

'तत्वागमितसाहसः' तत्वेन ज्ञापितं साहसं यस्य स तथा । 'अयः-सन्दानगुप्ताः' निगडबद्धाः । ये 'बलान्विताः' ते निगडबद्धा अल्पभक्ता सन्तः यावदायुर्नृपतेः कर्माणि कुर्युरिति योजना ॥[4]

वसिष्ठः [१९, ३८-३९]

स्तेनोऽनुप्रवेशाच्च दुष्यति । शस्त्रधारी सहोढो व्रणसंपन्नश्च व्यपदिष्टस्त्वे-केषाम्[5] ॥

अस्यार्थः—नानुप्रवेशमात्रेण स्तेनो भवति । किन्तु शस्त्रधारणनिमित्त-मन्तरेण शस्त्रधारी सहोढः कृतव्रणश्च दुष्यतीति ॥[6]

1. अयस्सादानगुप्ताश्च (?)–स.

2. गुप्ताश्च–वि. र.

3. बि has a gap between गौतम in the first śloka and तद्द्रव्यं in the second line of the last śloka; उ omits the last two ślokas but gives the commentary relating to the missing lines. A. S. B., द, ज and स supply the omitted portions; वि. र., gives all four ślokas.

4. अत्र कात्यायनवाक्ये वृत्तस्वाध्यायवतः प्रवासनम्, तच्छून्यस्य धनवतः सर्वस्वहरणं, निर्धनस्य तु तथाविधस्य बन्धनादिकमभिप्रेतं, ब्राह्मणविषयं चैतत् । 'तत्वागमितसाहसं' तत्वेन आगमितं ज्ञापितं साहसं चौर्यम् । पूर्वं बलान्विताः सन्तः अयःसन्दानगुप्ताः लौहनिगडबद्धाः मन्दभक्ताः कर्ममात्रौपयिकबलजनकभोजनभाजः कर्माणि कुर्युरामृत्योरिति योजना ॥ (वि. र., ३१०)

5. व्यपदिष्टश्चैकेषाम्–वि. र., ३११.

6. 'सहोढः' सलोप्त्रः–वि. र., ३११.

## ७० (घ) अथ चोरान्वेषणम्

तत्र नारदः [ना. स्मृ., १७, १८; २१, ८-११][1]

सहोढग्रहणात्स्तेयं [2]होढेऽसत्युपभोगतः ।
शङ्का [3]त्वसज्जनैकार्थ्यादनायव्ययतस्तथा ॥

[4]सहोढान् विमृशेच्चौरान् [5]गृहीतपारेशङ्कया ।
[6]नयोपधाभिश्चित्राभिर्ब्रूयुस्तथ्यं यथा हि ते ॥

[7]देशं ग्रामं दिशं नाम जातिं वासं प्रतिश्रयम् ।
[8]कृतकार्यसहायाश्च प्रष्टव्याः स्युर्निगृह्य ते ॥

वर्णस्वराकारभेदात् [9]ससान्दिग्धनिवेदनात् ।
अदेशकालदृष्टत्वान्निवासस्य विशोधनात् ॥[10]

असद्व्ययात् पूर्वचौर्यादसत्संसर्गकारणात् ।
[11]लेशैरप्यनुगन्तव्या न होढेनैव केवलम् ॥

1. नारदीयमनुसंहिता–१५, १७; प्रकी., ६८–७१.

2. होढमस्त्युपभोगतः, ना. स्मृ., २०६; होढेऽसत्यतिभोगतः–ना. म. संहि., १६२.

3. त्वसजनैकत्वादन्यायव्ययतस्तथा-ना. स्मृ., २०६.

4. अहोढान् etc.–ना. स्मृ., २२४; वि. र., ३३२; स.

5. गृहीतान् यदि शङ्कया–ना. स्मृ., २२४; गृहीत्वा परिशङ्कया–ना. म. सं., १८४; गृहीत्वयनिःशङ्कया (?)–स.

6. भयोपधाभिश्चित्राभिर्ब्रूयुस्तथा यथाकृतम्–ना. स्मृ.; ब्रूयुः सत्यं यथा हि ते–ना. म. सं., १८४; तथोपधाभिश्चित्राभिः–वि. र., ३३१.

7. देशं कालं दिशं जातिं नाम वा संप्रतिश्रयम्–ना. स्मृ.; देशं कालं तथा जातिं नाम रूपं प्रतिश्रयम्–ना. म. सं.

8. कृत्यं कर्मकरा वा स्युः प्रष्टव्यास्ते विनिग्रहे–ना. स्मृ.; कृत्यं कर्म सहायांश्च प्रष्टव्याः स्युर्निगृह्यते–ना. म. सं.; सहायास्तु etc., वि. र., ३३२.

9. संसदि त्वनिवेदनात्–ना. स्मृ.; सन्दिग्धविनिवेदनात्–वि. र.

10. निवासस्याप्यविशोधनात्–ना. स्मृ.; वासस्याप्यविशोधनात्–ना. म. सं.; निवासस्याविशोधनात्–वि. र., and स.

11. लेख्यैरप्यवगन्तव्या–ना. स्मृ., वि. र., ३३१.

'होढः' लोप्त्रम् । [1]'उपभोगतः असति तु होढे' अपहृतद्रव्यस्यासाधारणस्य प्रकारान्तरेणासंभवात्प्राप्तेः कर्पूरादेरुपभोगदर्शनेन स्तेयं ज्ञेयम् । 'असज्जनैकार्थ्यात्'—'असज्जनैः' द्यूतमद्यपानाद्यासक्तैः सहैककार्यत्वात् । 'उपाधिभिः चित्राभिः' उपायैः नानाविधैः ।

याज्ञवल्क्यः [२, २२६-२२८]

ग्राहकैर्गृह्यते चौरो लोप्त्रेणाथ पदेन वा[2] ।
पूर्वकर्मापराधी च तथा चाशुद्धवासकः[3] ॥

अन्येऽपि शङ्कया ग्राह्या नामजात्यादिनिह्नवैः ।
द्यूतस्त्रीपानसक्ताश्च भिन्नशुष्कमुखस्वराः[4] ॥

परद्रव्यगृहाणां च पृच्छका गूढचारिणः ।
निराया व्ययवन्तश्च विनष्टद्रव्यविक्रयाः ॥

'ग्राहकै'र्गृह्यते चोर इति । ग्राहकैश्चौरोऽयमिति निर्दिष्टः सन् गृहीतव्य इत्यर्थः । 'पदेन' नाशदेशादारभ्य चौरादिपादबिम्बानुसारेण । 'अशुद्धवासकः' अविज्ञातवासस्थानः । 'विनष्टद्रव्यविक्रयाः' भग्नस्य कुण्डलादेर्विक्रयकारिणः ।

नारदः [१७, २२-२६]

गवादिषु प्रणष्टेषु द्रव्येष्वपहृतेषु[5] च ।
पादेनान्वेषणं[6] कुर्युरामूलात्तद्विदो जनाः ॥

1. होढे सत्युपयोगतः–बि, स.

2. च–द.

3. 'पदेन' हरणदेशादारभ्य पादबिम्बानुसारेण । 'अशुद्धवासकः' अपरिचितदेशवासः । (वि. र., ३३३) ॥ 'लोप्त्रेण' अपहृतद्रव्येण । (विश्वरूपः)

4. स्वनाः–स.

5. द्रव्येष्वपहृतेषु–ज, बि, मु. ना. स्मृ., २०७; वि. र., ३३३.

6. पदस्यान्वेषणं–मु. ना. स्मृ.; पदेनान्वेषणं–स; पदैरन्वेषणं–ज.

ग्रामे व्रजे विवीते[1] वा यत्र तन्निपतेत्पदम् ।
बोढव्यं तन्निवेशेन न चेत्सोऽन्यत्र[2] तन्नयेत् ॥

पादे[3] प्रमृष्टे भग्ने वा विषमत्वाज्जनान्तिके ।
यस्त्वासन्नतरो ग्रामो व्रजो वा तत्र पातयेत् ॥

समेऽध्वनि[4] द्वयोर्यत्र स्तेनप्रायोऽशुचिर्जनः ।
पूर्वापराधै[5]र्दुष्टो वा संसृष्टो वा दुरात्मभिः ॥

[6]नैवान्तरिक्षान्न दिवो न समुद्रान्न चान्यतः ।
दस्यवः सम्प्रवर्तन्ते तस्मादेवं प्रकल्पयेत् ॥

ग्रामेष्वन्वेषणं कुर्युश्चण्डालवधकादयः ।
रात्रिसञ्चारिणो ये च बहिः कुर्युर्बहिश्चराः ॥

'समेऽध्वनि'[7] तुल्यमार्गे । 'द्वयोः' ग्रामयोः[8] । 'स्तेनप्रायः' चौरबहुलः ।

मनुः [९, २३४-२३६]

सभाप्रपापूपशालावेशमद्यान्नविक्रयाः ।
चतुष्पथाश्चैत्यवृक्षाः[9] समाजाः प्रेक्षणानि च ॥

जीर्णोद्यानान्यरण्यानि कारुकावेशनानि च ।
शून्यानि चाप्यगाराणि वनान्युपवनानि च ॥

1. विविक्ते–मु. ना. स्मृ., २०७.

2. न चेत्सोऽन्यत्र–ख, मु. ना. स्मृ., वि. र., ३३३; न चेत्तोऽप्यत्र–उ.

3. पदे–ख, मु. ना. स्मृ., वि. र., ३३४.

4. सीमाध्वनि–B. J., वि. र., ३३४.

5. दृष्टो वा–वि. र., ३३४.

6. This śloka is missing in both Jolly's edition and in नारदीयमनुसंहिता, but is ascribed to Nārada by अपरार्क [८४०] also.

7. सीमाध्वनि–B. J.; does not fit in with the commentary.

8. द्वयोर्मार्गयोः–उ.

9. 'चैत्यवृक्षाः' प्रौढपादपाः (वि. र., ३३५)

एवंविधान्नृपो देशान् गुल्मैः स्थावरजङ्गमैः ।
तस्करप्रतिषेधार्थं चारैश्चाप्यनुचारयेत् ॥

'अपूपशाला' कन्दुगृहम् । 'वेशः' वेश्यागृहम् । 'कारुकावेशनानि' शिल्पशालाः । 'गुल्मैः' पदातिसमूहैः । 'स्थावरजङ्गमैः' एकस्थानस्थितैः प्रचारिभिः ।

नारदः[1]

[2]विचित्रैश्चारयेच्चारैश्चोरग्रहणतत्परैः ।
तथा[3] चान्ये प्रणिहिताः श्रद्धेयाश्चित्रवादिनः ॥

चारा[4] ह्युत्साहयेयुस्तान् तस्करान् पूर्वतस्कराः ।
[5]अन्नपानमहादानैः समाजोत्सवदर्शनैः ॥

तथा [6]शौर्यापदेशैश्च कुर्युस्तेषां [7]समागमम् ।
[8]यत्र ते नोपसर्पन्ति [9]चारैः प्रणिहितैरपि ॥

[10]तेऽपि स्युः सन्निगृहीतव्याः सपुत्रज्ञातिबान्धवाः ।
[11]यांस्तत्र चौरान् गृह्णीयात्तान्विताड्य[12] निबध्य च ॥

1. नारदमनुसंहिता-(प्रकीर्णं) १९, ६०-६५. The verses are not traced in Jolly's नारदस्मृति

2. चारैर्विचेयान्येतानि-ना. म. सं., १८२.

3. तथैवान्ये-ना. म. सं.

4. चोरा-ना. म. सं.

5. अन्नपानमहादानैः-ना. म. सं.; अर्थदानैः महादानैः-वि. र., ३३५; अल्पपान-महादानैः-उ.

6. चौरोपदेशैश्च-वि. र., ३३५.

7. प्रसर्पणम्-ना. म. सं.

8. ये तत्र-ना. म. सं.; वि. र., ३३५.

9. सुताः प्रणिहिता अपि-ना. म. सं.

10. तेऽभिसृत्य ग्रहीतव्याः सपुत्रपशुबान्धवाः-ना. म. सं.

11. तांस्तत्र-वि. र., ३३५.

12. तानाताड्य निबध्य च-ना. म. सं.; तान् विभाज्य विलोड्य च-वि. र., ३३५; तान् विताड्य विडम्ब्य च-ह.

[1]अवघुष्य च सर्वत्र [2]हन्याच्चित्रवधेन तु ।
अचौरा अपि दृश्यन्ते चौरैः सह समागताः ॥
[3]यदृच्छया नैव तु तान् नृपो दण्डेन संस्पृशेत् ।

कात्यायनः [८११]

अन्यहस्तात्परिभ्रष्टमकामादुद्धृतं भुवि ।
चौरेण वा परिक्षिप्तं यत्नाल्लोप्त्रं परीक्षयेत् ॥

नारदः[4]

दस्युवृत्ते यदि नरे शङ्का स्यात्तस्करेऽपि वा ।
यदि स्पृश्येत लेशेन[5] कार्यः स्याच्छपथं ततः ॥

'लेशेन' युक्तिलेशेन मुखशोषादिना ।

याज्ञवल्क्यः [२, २६९]

गृहीतः शङ्कया चौर्ये[6] [7]आत्मानं चेन्न शोधयेत् ।
दापयित्वा हृतं द्रव्यं चौरदण्डेन दण्डयेत् ॥

कात्यायनः [८२१]

अचौराद्दापितं द्रव्यं चौरान्वेषणतत्परैः ।
उपलब्धे लभेरंस्ते द्विगुणं तत्र दापयेत् ॥

1. अवघुष्य–ना. म. सं., १८३; वि. र., ३३५; उ; अवद्रुष्य–उ.
2. बध्यात्–ना. म. सं.
3. याद्दच्छिकान् नैव तु तान् राजा दण्डेन शासयेत्–ना. म. सं., १८३.
4. ना. म. सं., १९, ७२ (पृ. १८५); २१, १२ (पृ. २२४)
5. 'लेशेन' युक्तिलेशेन मुखशोषणादिना (वि. र., ३३६)
6. शङ्कया चौर्ये–उ; विश्वरूपपाठश्च.
7. यद्यात्मानं न शोधयेत्–वि. र. पाठः (३३६); नात्मानं चेद्विशोधयेत्–(विश्वरूपः)

## ७० (ङ) अथ स्तेनातिदेशाः[1]

तत्र मनुः [९, २७१; २७८]

ग्रामेष्वपि च ये केचिच्चौराणां [2]भक्ष्यदायकाः ।
भाण्डावकाशदाश्चैव सर्वांस्तानभिघातयेत्[3] ॥

अग्निदान् भक्तदांश्चैव तथा शस्त्रावकाशदान् ।
सन्निधातॄंश्च मोषस्य हन्या[4]च्चौरानिवेश्वरः ॥[5]

[6]'मोषस्य' अपहृतद्रव्यस्य ।

याज्ञवल्क्यः [२, २७६]

भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान् ।
कृत्वा चौरस्य हन्तुर्वा जानतो दण्ड उत्तमः ॥

'भक्तम्' अशनम् । 'अवकाशो' निवासस्थानम् । 'अग्निः' शीतापनोदाद्यर्थः । [7]'उदकं' तृषितस्य । 'मन्त्रः' चौर्यप्रकारोपदेशः । 'उपकरणं' चौर्यसाधनम् । 'व्ययः' अपहारार्थे देशान्तरं गच्छतः पाथेयम् ।[8]

नारदः [ना॰ स्मृ॰, १७, १९; २१, १४][9]

भक्तावकाशदातारः स्तेनानां ये प्रसर्पताम् ।

1. स्तेनातिदेशः–ज, द.
2. भक्तदायकाः–स; वि. र., ३३६; मेधातिथिपाठश्च
3. सर्वांस्तानपि पातयेत्–स.
4. चौरानिवेश्वरः–बि, ज, स; चौरमिवेश्वरः–मेधातिथिः; चौराणि चेश्वरः–उ.
5. अग्निदाः शीतापनोदनाद्यर्थं येऽग्निं ददति । शस्त्रं कर्तरिकादि । मोषस्य सन्निधातारः कर्तारः–(मेधातिथिः) अग्निश्चौर्यानुकूलः (वि. र., ३३७)
6. मोष्यस्य–उ.
7. 'उदकं' चौरोपष्टम्भकमिति वि. र., ३३७.
8. पाथेयदानम्–B. J.
9. ना. म. सं., १५, १८ (पृ. १६२); १९, ७४—
भक्तावकाशदातारः स्तेनानां ये प्रसर्पताम् ।
शक्तौ च य उपेक्षन्ते तेऽपि तद्दोषभागिनः । [१५, १८]

शक्ताश्च [1]य उपेक्षन्ते[2] तेऽपि तद्दोषभागिनः ॥

[3]आहायकादेशकरास्तथा चान्तरदायकाः ।

समदण्डाः स्मृताः सर्वे ये च प्रच्छादयन्ति तान् ॥

कात्यायनः [८२७][4]

चौराणां भक्तदा ये स्युस्तथाग्न्युदकदायकाः ।

क्रेतारश्चैव भाण्डानां प्रतिग्रहण एव च ।

समदण्डास्स्मृता ह्येते ये च प्रच्छादयन्ति तान् ॥

इन्यादित्यनुवृत्तौ विष्णुः [५, १६-१७]

प्रसह्य तस्कराणां चावकाशभक्तप्रदांश्च । अन्यत्र राजाशक्तेः ॥[5]

मनुः [८, ३४०; ९, २७२, २७४]

योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम् ।

1. ये उपेक्षन्ते–स.

2. उपेक्षन्ते–बि, ज; उत्क्षिपन्ते–उ.

3. आवासदा देशिकाश्च तथैवोत्तरदायकाः—ना. स्मृ., २१, १३ [२२४]; आवसदा देशिकदाः तथैवान्तरदायकाः—ना. म. सं., २१, ७३; (आवासदा) आवेसदः देशकाश्च तथैवान्तरदायकाः–स, ज.

4. चौराणां भक्तदा ये स्युस्तथाग्न्युदकदायकाः ।
आवासदा देशिकाश्च तथैवोत्तरदायकाः ॥
क्रेतारश्चैव भाण्डानां प्रतिग्रहिण एव च ।
समदण्डाः स्मृतास्तु ते ये च प्रच्छादयन्ति तान् ॥

[इति नारदस्मृतिः, २१, १३, १४ (पृ. २२४); ना. म. संहिता, १९, ७३–७४]. Omitting the second line, the three lines are ascribed to कात्यायन by पराशरमाधवीय (p. 446). The identity has made ज ascribe three lines also to नारद instead of कात्यायन.

5. राज्ञश्चेचौरनिवारणे न शक्तिस्तदा ग्रामनिवासिनां आत्मत्राणाय चौरादिरक्षणेऽपि न वध इत्यर्थः । (वैजयन्ती); राजा चेत् चौरनिराकरणाप्रभविष्णुस्तदा स्वरक्षणाय चौरभक्तादिदानेऽपि न दोष इत्यर्थः । (वि. ए., ३३८)

याजनाध्यापनेनापि[1] यथा स्तेनस्तथैव सः ॥

राष्ट्रेषु राष्ट्राधिकृतान् सामन्तांश्चैव [2]चोदितान् ।
उपघातेषु[3] मध्यस्थांश्छिन्द्यांश्चोरानिव द्रुतम् ॥

ग्रामघाते [4]हिडाभङ्गे पथि [5]मोषादिदर्शने ।
शक्तितो नाभिधावन्तो निर्वास्याः सपरिच्छदाः ॥

'अदत्तादायिनः' चौरस्य । राष्ट्र इत्यादि—राष्ट्राधिकृतान् ग्रामवासिनश्च प्रजानां चौरादिभिः उपघातेषु क्रियमाणेषु मध्यस्थानुपेक्षकान् चौरानिव[6] दण्डयेदित्यर्थः । 'हिडाभङ्गः' परक्षेत्रोत्पन्नसस्यनाशनमिति मेधातिथिः ।[7] 'मोषादिदर्शने' अपहृतद्रव्यदर्शने ॥[8]

1. ध्यापनेनैव–उ.

2. देशितान्–B. J., वि. र., ३३९.

3. अभ्यागतेषु–स, उ, वि. र., उपघातेषु–ज.

4. 'हडाभङ्गे' इति गोविन्दराजपाठः; 'हिताभङ्गे' इति कुल्लूकः; 'हिडाभङ्गे' इति राघवानन्दः; हिताभङ्गे इति वि. र., ३३९ । 'हिताभङ्गे' 'सस्यानुकूलजलबन्धविदारणे' इति वि. र.; जलसेतुभङ्गे इति कुल्लूकः. Govindarāja's commentary is lost after IX, 71.

5. मोषाभिमर्शने–स.

6. चोरवत्–वि, ज.

7. ग्रामलुण्ठने तस्करादिभिः क्रियमाणे 'हिताभङ्गे' जलसेतुभङ्गे जाते, क्षेत्रोत्पन्नसस्यनाशनवृत्तिभङ्गे च इति मेधातिथिः । (कुल्लूकः). The passage in question is missing in the editions of Manu with the *bhāṣya* of Medhātithi by V. N. Mandlik (p. 1250) and Sir Gangānath Jhā (II, 314). In these editions there is no commentary for the twelve verses immediately preceding Manu, IX, 274 and only four lines for that śloka itself.

8. 'ग्रामघाते' ग्रामोपद्रवे, 'हिताभङ्गे' सस्यानुकूलजलबन्धविदारणे, 'मोषाभिदर्शने' मुष्यमाणदर्शने, 'शक्तितोऽनभिधावन्तो' 'निर्वास्याः' स्वदेशं त्याजयितव्याः, 'सपरिच्छदाः' सपरिवाराः । (वि. र., ३३९)

## अथ वर्णतः स्तेयविशेषः

तत्र मनुः [८, ३३७-३३८]

> अष्टापाद्यं हि शूद्रस्य स्तेयो भवति किल्बिषम् ।
> षोडशैव तु वैश्यस्य द्वात्रिंशत् क्षत्रियस्य तु ॥
>
> ब्राह्मणस्य [1]चतुःषष्टिः[2] पूर्णं वापि शतं भवेत् ।
> द्विगुणा वा चतुःषष्टिस्तद्दोषगुणविद्धि षः ॥[3]

कात्यायनः [४८५]

> येन दोषेण शूद्रस्य दण्डो भवति धर्मतः ।
> तेन विट्क्षत्रविप्राणां [4]द्विगुणो द्विगुणो भवेत् ॥

## ७० (च) अथ स्तेनालाभे हृतदानम्

तत्रापस्तम्बः [२-२६, ४-८]

ग्रामेषु नगरेषु चाऽऽर्यान् शुचीन् सत्यशीलान् प्रजागुप्तये निदध्यात् । तेषां पुरुषास्तथागुणा एव स्युः । सर्वतो योजनं नगरं तस्करेभ्यो रक्ष्यम् । क्रोशो ग्रामेभ्यः । तत्र यन्मुष्यते[5] तैस्तत्प्रतिदाप्यम् ।

1. चतुष्षष्टिपूर्णं चापि–वि; चतुष्षष्टिस्तद्दोषगुणवर्द्धि च–ज.

2. चतुः पर्णं (?)–उ; षष्टिः पूर्णं चापि शतं–स.

3. 'तद्दोषगुणविद्धि सः' इति हेत्वभिधानात् विदुषां दण्डोऽयम् । यत्र खलजन एकं कार्षापणं दाप्यते तत्र विद्वान् शूद्रोऽष्टगुणम् । अष्टभिः आपद्यते संबध्यते [इति अष्टापद्यम् ] । एवं तदेव द्विगुणं वैश्यस्य—सहि साक्षादध्ययनज्ञानयोरधिकृतः; शूद्रस्तु कथंचिद्ब्राह्मणापाश्रित-तत्संगत्या किंचदपि जानाति । क्षत्रियस्तु रक्षाधिकारदोषेण समाने विद्वत्वे ततोऽपि द्विगुणं दण्ड्यते । ब्राह्मणोऽपि दण्डविधौ न तृप्यति । चतुःषष्टिशतमष्टविंशं वा शतमिति । तस्य हि प्रवचनमुपदेष्टृत्वं वाधिकं च—यतो रक्षा ततो भवेत् । प्राकृतजनस्य तिर्यक्प्रख्यस्य कोऽपराधः । अविद्वांसो गुणदोषानभिज्ञा अकार्ये प्रवर्तन्ते । विद्वानपि तथैव चेद्वर्तेत हन्त हतं जगत्, तृतीयस्य धिषितुरभावात् । तदुक्तं "द्वौ लोकविश्रुतौ राजा ब्राह्मणश्च बहुश्रुतः" [गौतमः, ८, १] इति ॥ (मेधातिथिः)

4. द्विगुणैर्द्विगुणो भवेत्–स.

5. तत्र यन्मुषितम्–B. J.; तत्र यन्मुख्यं ते–उ.

<u>कात्यायननारदौ</u> [का., ८१३; नार., २१, १८]

[1]गृहेषु मुषितं राजा चौरग्राहांस्तु दापयेत् ।
आरक्षकांस्तु दिक्पालान् यदि चौरो न लभ्यते ॥

<u>याज्ञवल्क्यः</u> [२, २७१-२७२]

[2]घातितेऽपहृते दोषो ग्रामभर्तुरनिर्गते ।
विवीतभर्तुस्तु पथि चौरोद्धर्तुरवीतके ॥

[3]स्वसीम्नि दद्याद्ग्रामस्तु पदं वा यत्र गच्छति ।
पञ्चग्रामी बहिः[4]कुष्टाद्दशग्राम्यथवा पुनः ॥

'चौरोद्धर्तुः' चौररक्षानियुक्तस्य । 'अवीतके' [5]विवीतव्यतिरिक्ते क्षेत्रादौ । 'बहिःकुष्टात्' कर्षणप्रदेशादन्यत्र यदपहृतं तत्पञ्चग्राममिलिता दद्युः । सन्निधानापेक्षया दशग्रामीति विकल्पः ।

<u>नारदः</u> [२१, १६-१७]

गोचरे यस्य मुष्येत तेन चौरः प्रयत्नतः ।
[6]मृग्यो दाप्योऽन्यथा मोषं पदं यदि न निर्गतम् ॥

निर्गते तु [7]यदेतस्मान्न चेदन्यत्र पातितम् ।
सामन्तान्मार्गपालांश्च दिक्पालांश्चैव दापयेत् ॥

1. गृहे तु and अरक्षकान्-अपरार्क, ८४४. 'आरक्षकाः' ग्रामरक्षानियुक्तः । "दिक्पालः" देशपतिः । (वि. र., ३४१)

2. घातितापहृते इति विश्वरूपपाठः

3. यत्र द्विपदचतुष्पदायनवरतं सञ्चरति सा स्वसीमा । (विश्वरूपः)

4. 'बहिः क्रोशात्', इति मिताक्षरा-विवादरत्नाकर(पृ. ३४२)-पाठः । 'बहिः कुष्टात्' इति विश्वरूपः ।

5. रक्षाविध्यधिरिक्ते क्षेत्रादौ-B. J.

6. मृग्या-इति मु. ना. स्मृ., २२५.

7. यदा यस्मिन्नदेऽन्यत्र न पातयेत् । (मु. ना. स्मृ.)

कात्यायनः [८१४]

ग्रामान्ते[1] तु हृतं द्रव्यं ग्रामाध्यक्षं प्रदापयेत् ।
विवीते स्वामिना देयं [2]चौरोद्धर्ताऽविवीतके ॥

विष्णुः [३, ६६-६७]

चौरापहृतं धनमवाप्य सर्वमेव सर्ववर्णेभ्यो दद्यात् । अनवाप्य स्वकोशादेव दद्यात् ।

कात्यायनः [८१५]

स्वदेशे यस्य यत्किञ्चित् हृतं देयं नृपेण [3]तत् ।
गृह्णीयात्तत्स्वयं नष्टं प्राप्तमन्विष्य पार्थिवः ॥

नारदकात्यायनौ [ना. २१, २१; का., ८१६]

चौरैर्हृतं प्रयत्नेन स्वरूपं[4] प्रतिपादयेत् ।
तदभावे तु मूल्यं [5]स्यादन्यथा किल्बिषी नृपः ॥

कात्यायनः [८१७]

लब्धे तु चौरे यदि वा[6] मोषस्तस्मान्न लभ्यते ।
दद्यात्तमथवा चौरं दापयेत्तु[7] यथेष्टतः ॥

1. ग्रामान्तेषु-वि. र., १४३. ग्रामान्तरे-(अपरार्कः)
2. चोरोद्धर्ता त्वविवीतके-वि. र.; चौरोद्धर्ता विवीतके इति अपरार्कः, ८४४.
3. 'नृपेण तु' इति अपरार्कः.
4. चौरहृतं प्रपद्यैव सरूपं-मु. ना. स्मृ., २२५.
5. स्याद्दण्डं दाप्यश्च तत्समम्-मु. ना. स्मृ.
6. लब्धे च चोरे यदि च-वि. र., १४३.
7. दापयेद्वा-इति वि. र., B. J., ज; चोरं वा धनं वा इति विकल्पः-वि. र., १४३; दापयेत्तु-ख.

वृद्धमनुः[1]

तस्मिंश्चेद्दाप्यमानानां भवेन्मोषे तु संशयः ।
मुषितः शपथान् दाप्यो बन्धुभिर्वापि शोधयेत् ॥

यस्मादपहृताल्लब्धं द्रव्यात्स्वल्पं तु स्वामिना ।
तच्छेषमाप्नुयात्तस्मात्प्रत्यये स्वामिना कृते ॥

याज्ञवल्क्यः [२, १७३-१७४]

शौल्किकैः[2] स्थानपालैर्वा नष्टापहृतमाहृतम्[3] ।
[4]अर्वाक्तु वत्सरात्स्वामी हरेत परतो नृपः ॥

पणानेकशफे दद्याच्चतुरः पञ्च मानुषे ।
महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके ॥

[5]'एकशफे' अश्वादौ प्रणष्टाधिगते स्वामी राज्ञे रक्षणनिमित्तं 'चतुरः पणान्' दद्यात् ।

गौतमः [१०, ३५-३७]

[6]प्रणष्टमस्वामिकमधिगम्य राज्ञे प्रब्रूयुः । विख्याप्य संवत्सरं राज्ञा रक्ष्यम् । ऊर्ध्वमधिगन्तुश्चतुर्थं राज्ञः शेषम् ॥

1. Aparārka (८४४) ascribes these verses to कात्यायन, and they have been included accordingly in MM. P. V. Kane's collection; वि. र. ascribes them to वृद्धमनु; उ reads वृद्धः.

2. शौरिकैः–द.

3. माहृते–द.

4. अर्वाक् संवत्सरात्–B. J., स, विश्वरूपः, अपरार्कः, मिताक्षरा; अर्वाक् सा वत्सरात्–ज.

5. मिताक्षरा—"एकशफे अश्वादौ प्रनष्टाधिगते तत्स्वामी राज्ञे रक्षणनिमित्तं चतुरः पणान् दद्यात् ।"; 'एकशफे एकखुरे अश्वादौ इति यावत् । पणान् चतुर इत्यन्वयः ।' वि. र., ३४५.

6. प्रणष्टस्वामिकम्–वि.

मनुः [८, ३१-३४]

ममेदमिति यो ब्रूयात्सोऽनुयोज्यो[1] यथाविधि ।
संवाद्य रूपसंख्यादीन् स्वामी तद्द्रव्यमर्हति[2] ॥

अवेदयंस्तु[3] नष्टस्य देशं कालं च तत्त्वतः[4] ।
वर्णं रूपं प्रमाणं च तत्समं दण्डमर्हति[5] ॥

आददीताथ षड्भागं प्रणष्टाधिगतान्नृपः ।
दशमं द्वादशं वापि सतां धर्ममनुस्मरन् ॥

प्रणष्टाधिगतं द्रव्यं तिष्ठेद्युक्तैरधिष्ठितम् ।
यांस्तत्र चौरान् गृह्णीयात्तान् राजेभेन [6]घातयेत् ॥

'इभेन' हस्तिना ।

आपस्तम्बः [२, २८, ८-१०]

प्रमादादरण्ये पशूनुत्सृष्टान् ग्राममानीय स्वामिभ्यो विसृजेत् । पुनः प्रमादे सकृदवरुध्य । तदूर्ध्वं न सूर्क्षेत् ।

'न सूर्क्षेत्' नाहरणं कुर्यादित्यर्थः[7] ॥

इति कृत्यकल्पतरौ व्यवहारकाण्डे स्तेयपर्व ॥[8]

---

1. सोऽनुशोध्यः–बि.

2. यः कश्चिदागत्य 'ममेदं' स्वं द्रव्यमिति 'ब्रूयात् सोऽनुयोज्यो यथाविधि'। अनुयोज्यः प्रष्टव्य इत्यर्थः । स यदि संवादयति 'रूपसंख्यादीन्' 'तद्द्रव्यमर्हति' स्वीकर्तुम् । (मेधातिथिः)

3. अवेदयानो—मेधातिथिः

4. कालस्तथैव च–द.

5. 'तत्त्वतः' परमार्थतः । 'वर्णं' शुक्लादिकम् । 'रूपं' पटीशाटकयुगं वेत्यादिकमाकारम् । 'प्रमाणं' पञ्चहस्तायामं सप्तहस्तमात्रं वा–(मेधातिथिः)

6. ताडयेत्–B. J.

7. 'न सृज्येत' इति वि. र. पाठः । नाऽऽदरं कुर्यात्–B. J., स; न हरणं कुर्यात्–A. S. B.; 'न सूर्क्षेत्' नाद्रियेत इति उज्ज्वला (पृ. २९५, काशीकोश); 'न ऊर्ध्वं गृह्णेत' नादृतं कुर्यात्–उ.

8. इति महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेवमहासान्धिविग्रहिकेण भट्टहृदयधरात्मजेन भट्टश्रीमल्लक्ष्मीधरेण विरचिते कृत्यकल्पतरौ व्यवहारकाण्डे स्तेयपर्व ॥–S. B. (b), स.

## ७१

# अथ साहसम्

तत्र नारदः[1]

मनुष्यमारणं चौर्यं[2] परदाराभिमर्शनम् ।
[3]पारुष्यमुभयं चेति साहसं पञ्चधा स्मृतम् ॥

सहसा क्रियते कर्म यत्किञ्चिद्बलदर्पितैः ।
तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥

[4]तस्यैव भेदः स्तेयं स्याद्विशेषस्तत्र दृश्यते ।
आधिः साहसमाक्रम्य स्तेयमाधिश्छलेन तु ॥

तत्पुनस्त्रिविधं प्रोक्तं[5] प्रथमं मध्यमं तथा ।
उत्तमं चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥

फलमूलोदकादीनां क्षेत्रोपकरणस्य च ।
[6]भङ्गाक्षेपावमर्दाद्यैः[7] प्रथमं साहसं स्मृतम् ॥

1. नारदस्मृति (ed. Jolly), १७, २, १, ३–६; नारदीयमनुसंहिता, १४, १–५ (from the second verse onwards). The first śloka is not traced in **ना. म. सं.**, but the text follows this recension.

2. स्तेयं परदाराभिमर्शनम्, इति मु. ना. स्मृ., (Jolly)

3. पारुष्यं द्विविधं ज्ञेयं साहसं च चतुर्विधम्–*Ibid.*

4. A. S. B., and ज interpolate this śloka here; [ना. स्मृ., १७, १२; ना. म. सं., १४, ११, वि. र., ३४८]; ज wrongly ascribes the śloka to मनु, and *prefixes* to it a comment which seems to relate to it: पीडनं यत्तत्साहसम् । छलेन तदज्ञाने...न आधिः यत्पीडनं तत्स्तेयमित्यर्थः । विवादरत्नाकर completes this śloka (पृ. ३४८) by a half-verse—आक्रम्य रक्षितुर्ज्ञाने सत्वेन च बलेन वा, which is not found in either recension of नारदस्मृति.

5. ज्ञेयम्–*Ibid.*

6. भङ्गाक्षेपोपमर्दाद्यैः–*Ibid.*, वि. र., ३४७ gives both readings.

7. 'भङ्गः' फलादिस्वरूपनाशनम् । 'आक्षेपः' आक्रोशः, वाक्तिरस्करणमिति यावत् । 'अपमर्दः' स्वरूपावशेषेण पीडनम् । (व्यवहारप्रकाशः, ४११)

वासःपश्वन्नपानानां गृहोपकरणस्य च ।
एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ॥

[1]व्यापादो विषशस्त्राद्यैः [2]परदारप्रधर्षणम् ।
प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम् ॥

<u>मनुः</u> [८, ३३२]

स्यात्साहसं त्वन्वयवत्प्रसभं कर्म यत्कृतम्[3] ।

<u>बृहस्पतिः</u> [२३, ३; ८-८]

हीनमध्योत्तमत्वेन त्रिविधं तत्प्रकीर्तितम् ।
द्रव्यापेक्षो दमस्तत्र [4]प्रथमो मध्य उत्तमः ॥

क्षेत्रोपकरणं सेतुं पुष्पमूलफलानि च ।
विनाशयन् हरन् दण्ड्यः शताद्यमनुरूपतः ॥

पशुवस्त्रान्नपानानि गृहोपकरणं तथा ।
हिंसयन् चोरवद्दाप्यो द्विशताद्यं दमं तथा ॥

स्त्रीपुंसौ[5] हेमरत्नानि देवविप्रधनं तथा ।
कौशेयं चोत्तमद्रव्यमेषां मूल्यसमो दमः ॥

द्विगुणो वा कल्पनीयः पुरुषापेक्षया नृपैः ।
हन्ता च घातनीयः स्यात्प्रसङ्गविनिवृत्तये[6] ॥

1. व्यापारो–द.

2. परदाराभिमर्शनम्–स.

3. निरन्वयं भवेत्स्तेयं कृत्वापव्ययते च यत् ॥ अयमर्थः—यत्र रक्षकसमक्षमेव ह्रियते असौ साम्वयोऽपहारः साहसम् । यत्र तु रक्षकासमक्षे परद्रव्यं गृहीत्वापलापः क्रियते तत्स्तेयम् । मनुरपि नारदेन सहैकार्थ एव ॥ (वि. र., ३४८)

4. प्रथमोत्तममध्यमाः–उ.

5. पुंगो–ज, A. S. B.; स्त्रीपुंसौ मणिरत्नानि–स.

6. प्रसङ्गप्रधनं तथा–वि, उ.

साहसानुवृत्तौ नारदः [१७, ७-८]

तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः ।
मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पञ्चशतावरः ॥

[1]वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने ।
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसः ॥

याज्ञवल्क्यः [२, २३०; २२३]

सामान्यद्रव्यप्रसभहरणात्साहसं स्मृतम् ।
तन्मूल्याद्द्विगुणो दण्डो निह्नवे च चतुर्गुणः[2] ॥

अभिघाते तथा भेदे छेदे कुड्यावपातने ।
पणान् दाप्यः पञ्चदश विंशतिं तद्व्ययं तथा[3] ॥

'सामान्यं' नानास्वामिकं 'द्रव्यम्' ।

मनुः [८, २८८-२८९]

द्रव्याणि हिंस्याद्यो यस्य ज्ञानतोऽज्ञानतोऽपि वा ।
स तस्योत्पादयेत्तुष्टिं [4]राज्ञा दण्ड्यश्च तत्समम् ॥

1. B. J. omits this śloka; 'उत्तमसाहसे' इति ना. म. सं., १६०, ना. स्मृ., २०५, वि. र., ३५०, मिताक्षरा [२, २३०]; ना. स्मृ. and मिताक्षरा prefix a half-verse—उत्तमे साहसे दण्डः सहस्रावर इष्यते ।

2. सामान्यं द्रव्यं द्वयोर्यदन्यतरेण प्रसभं प्रसह्यान्यतरं परिभूयापह्रियते तत् स्तेयमपि प्रसह्य हरणात् साहसमिति स्मृतं महर्षिभिर्यस्मात् तस्मान्न तत्र स्तेयदण्डः । किन्तर्हि अपहृतद्रव्यमूल्याद्द्विगुणः साहसिकदण्ड इत्यभिप्रायः ।—(विश्वरूपः)

3. प्रातिवेश्मिकगृहाणां दौरात्म्यात् पाषाणादिनाभिघाते कृते पञ्च पणान् दाप्यः । तथा भेदेऽभिघातसन्त्रासाज्जाते दश पणान् दाप्यः । छेदने तु तद्द्वैधीभावे कुड्यावपातने वा विंशतिम् । व्ययं तु व्यापन्नसमाधानार्थं गृहिणे दद्यात् ।—(विश्वरूपः)

4. राज्ञे दद्याच्च तत्समम्—स, वि. र. ३५१, मेधातिथिश्च.

चर्मचार्मिकभाण्डेषु काष्ठलोष्टमयेषु च ।
मूल्यात्पञ्चगुणो दण्डः पुष्पमूलफलेषु च[1] ॥

कात्यायनः [८०७]

क्षतं भङ्गोपमार्दौ[2] वा कुर्याद्द्रव्येषु यो नरः ।
प्राप्नुयात्साहसं पूर्वं द्रव्यभाक् [3]स्वाम्युदाहृतः ॥

याज्ञवल्क्यः [२, २२४]

दुःखोत्पादि गृहे[4] द्रव्यं क्षिपन् प्राणहरं तथा ।
षोडशाद्यः पणान् दाप्यो द्वितीयो मध्यमं दमम् ॥

'दुःखोत्पादि' कण्टकादि । 'प्राणहरं' सर्पादि ।

दण्ड[5] इत्यनुवृत्तौ विष्णुः [५, १०८-११९]

गृहकुड्याद्युपभेत्ता मध्यमसाहसम् । तच्च[6] योजयेत् । गृहे पीडाकरं द्रव्यं प्रक्षिपन् पणशतम् । साधारण्यापलापी च । [7]प्रेषितस्याप्रदाता च । पितृपुत्राचार्ययाज्यर्त्विजामन्योन्यापतितत्यागी[8] च । न च तान् जह्यात् । शूद्र-

1. चर्मविकारा'चार्मिकाणि' भाण्डानि कटिसूत्रवरत्रादीनि । 'चर्माणि' अविकृतानि गवादीनाम् । अथवा चर्मभाण्डानि केवलचर्ममयानि चर्मावनद्धानि 'चार्मिकाणि' । 'काष्ठ'मयभाण्डान्युलूखलमुसलफलकादीनि । 'लोष्टो' मृद्विकारः पाषाणाकृतिः पिण्डीभूता मृत् तन्मयानि स्वल्पपाकाधानादीनि ।—(मेधातिथिः)

2. भङ्गोऽवमर्दौ वा–B. J.; भङ्गोपमर्दौ–अपरार्कः, (८२२), वि. र., ३५१; क्षतं मर्दोपभङ्गौ वा–ज; कृतभङ्गोऽपमर्दौ वा–स.

3. स्वाम्युपाहृतः–स.

4. 'गृहे' परगृहे–वि. र., ३५२.

5. दण्ड्य–स.

6. तच्च–स., मु. वि. स्मृ., २२, वि. र., ३५२.

7. प्रेषितस्याप्रदानाच्च–स.

8. मन्योन्यमपतितत्यागी च–स, वि. र., ३५२.

प्रव्रजितानां दैवे पित्र्ये भोजकस्य। अयोग्यकर्मकारी च। समुद्रगृहभेदकश्च। [1]अनियुक्तः शपथकारी। पशूनां पुंस्त्वोपघातकारी च ॥[2]

पुनर्विष्णुः [५, १०४-१०५]

अस्पृश्यः[3] कामकारेण [4]स्पृश्यं स्पृशन्वध्यः। रजस्वलां शिफाभिस्ताडयेत्।

'शिफाभिः' वृक्षजटाभिः।

याज्ञवल्क्यः [२, २३२-२३७]

[5]अभ्याक्रोशातिक्रमकृद्भ्रातृभार्याप्रहारकः[6]।
संदिष्टस्याप्रदाता च समुद्रगृहभेदकः॥

सामन्तकुलिकादीनामपकारस्य कारकः।
पञ्चाशत्पणिको दण्ड एषामिति विनिश्चयः॥

स्वच्छन्दविधवागामी[7] विक्रुष्टे [8]नाभिधावकः।
अकारणे च विक्रोष्टा चाण्डालश्चोत्तमान् स्पृशन्॥

1. अनियुक्तश्च शपथकारी–स.

2. 'योजयेत्' प्रतिसंस्कुर्यात्। पूर्वं याज्ञवल्क्येन कुड्यमात्रसंबन्धिनि भेदमात्रे दशपणात्मको दण्ड उक्तः। इह च गृहसहितकुड्यादिगते प्रौढविदारणे मध्यमसाहसमित्यविरोधः। पीडाकरद्रव्यस्य गृहे क्षेपं कुर्वतः षोडशपणदण्डाभिधानं याज्ञवल्क्यस्य, विष्णोश्च तत्रैव पणशतदण्डाभिधानम्। तदत्र पीडातिशयहेतुत्वाहेतुत्वाभ्यां व्यवस्था॥ (वि. र., ३५२–३५३)

3. अपस्पृश्यः–स.

4. स्पृशन् स्पृश्यान्–वि, स.

5. अभ्याक्रोशाति–ज, द, B. J., वि. र., ३५३: विश्वरूप-अपरार्कौ च; अभ्याक्षेपाति-(मिताक्षरा); अभ्याक्रोशाति–ड.

6. प्रहारदः–स.

7. 'स्वच्छन्दविधवागामी' नियोगाऽभावेऽपि तद्गामी (वि. र., ३५५)

8. नाभिघातकः–Bik. Ms.; विक्रुष्टेनविधायकः–ज.

[1]शूद्रप्रव्रजितानां च दैवे पित्र्ये च भोजकः ।
अयुक्तं शपथं कुर्वन्नयोग्यो योग्यकर्मकृत् ॥

[2]वृषक्षुद्रपशूनां च पुंस्त्वस्य प्रतिघातकः ।
साधारणस्यापलापी दासीगर्भविनाशकृत् ॥

[3]पितापुत्रस्वसृभ्रातृदम्पत्याचार्यशिष्यकाः ।
एषामपतितान्योन्यत्यागी च [4]शतदण्डभाक् ॥

मनुः [८, ३८९]

न माता न पिता [5]न स्त्री न पुत्रस्त्यागमर्हति[6] ।
त्यजन्नपतितानेतान् राज्ञा दाप्यः शतानि षट् ॥

शङ्खलिखितौ

न मातापित्रोरन्तरं गच्छेत[7] पुत्रः । कामं मातुरेवानुयायात्[8] । सा हि धारिणी पोषणी च । न पुत्रः प्रतिमुच्येतान्यत्र सौत्रामणीयागाज्जीवन्नृणान्मातुः[9] । एवमत्याज्या माता । तथा पिता । सपिण्डा गुणवन्तः सर्व एवात्याज्याः । यस्त्यजेत्कामादपतितान् स दण्डं प्राप्नुयाद्द्विशतम् । न मातापितरावतिक्रमेत्[10] । न गुरुम्[11] । [12]त्रयाणामतिक्रमेऽङ्गच्छेदः ।

1. शूद्रः प्रव्रजितानां च-इति मिताक्षरापाठः; शूद्रप्रव्रजितानामिति विश्वरूप-चण्डेश्वरौ.
2. 'वृक्षक्षुद्र'-'वृक्षाणामौषधादिना पुंस्त्वस्य फलप्रसवशक्तेः प्रतिघातकः । (वि. र., ३५५)
3. पितृपुत्र-इति मिताक्षरापाठः
4. All Mss. except B. J. and ब read श्रुतदण्डभाक्.
5. नन्दा-द. for न स्त्री; 'स्त्रीशब्दोऽत्र पत्नीपरः' इति वि. र., ३५५.
6. पुत्रोत्सर्गमर्हति-वि.
7. इच्छेत्-वि. र., ३५६; अन्तरं विच्छेदं न इच्छेत् कामं विशेषतः इत्यर्थः । मातुरेव अन्तरं न इच्छेत् । गच्छेत्पुत्र इति पाठान्तरम्-वि. र., ३५६.
8. कामं मातुरेव यत्-वि. र., ३५६.
9. जीवन्नृणं मातुः-उ.
10. अतिक्रमोऽत्र पदाभिघातः (वि. र., ३५६)
11. गुरून्-वि. र.
12. त्रयाणां व्यतिक्रमे-वि. र.

विष्णुः [५, ९१-९७]

येषां देयः पन्थास्तेषामपथदायी कार्षापणपञ्चविंशतिं[1] दण्ड्यः । आसनार्हस्यासनमददच्च । पूजार्हमपूजयंश्च । प्रातिवेश्यब्राह्मणे[2] निमन्त्रणातिक्रमे च । निमन्त्रयित्वा भोजनादायिनश्च[3] । निमन्त्रितस्तथेत्युक्त्वा चाभुञ्जानः सुवर्णमाषकम् । [4]निकेतयितुश्च [5]द्विगुणमन्नम् ॥

मनुः [८, ३९२-३९३]

प्रातिवेश्यानुवेश्यौ च कल्याणे विंशतिद्विजे ।
अर्हावभोजयन्विप्रो दण्डमर्हति माषकम् ॥

श्रोत्रियः श्रोत्रियं साधुं भूतिकृत्येष्वभोजयन् ।
तदन्नं द्विगुणं दाप्यो हैरण्यं[6] चैव माषकम् ॥[7]

'कल्याणे विंशतिद्विजे' इति—यत्र कल्याणे विंशतिद्विजा भुञ्जत इति ।

मत्स्यपुराणे [२२७, ८]

आमन्त्रितो द्विजो यस्तु वर्तमानः प्रतिग्रहे ।
निष्कारणं न गच्छेत्तु स दाप्योऽष्टशतं दमम् ॥

1. पणञ्च विंशतिं–वि. र., ३५७.
2. प्रातिवेश्यब्राह्मणनिमन्त्रणातिक्रमी–वि. र.
3. भोजनादायी–वि. र.
4. निकेतयश्च–स.
5. द्विगुणम्–वि. र., ३५७.
6. हिरण्यं–उ.
7. वेशो निवासः । तत्प्रतिगतः प्रतिनिवेशः गृहाभिमुखः, तत्र भवः 'प्रातिवेश्यः' । एवं 'अनुवेश्यः' पृष्ठतो वसन्नुच्यते । 'कल्याणे' विवाहाद्युत्सवे । 'भूतिकृत्येषु' विभवनिमित्तेषु । अब्रह्मचारिणामयं नियमः । (मेधातिथिः); पूर्वश्लोके माषकः रौप्यो बोद्धव्यः । उत्तरश्लोके मानवेन अधिके भूतितुल्यात्मके प्रातिवेश्यश्रोत्रियाभोजनरूपेऽपराधे विशिष्य हिरण्यमाषकदण्डाभिधानात् इति हलायुधः (वि. र., ३५७)

याज्ञवल्क्यः [२, २६३]

तरिकः स्थलजं शुल्कं गृह्णन् दाप्यः पणान् दश ।
ब्राह्मणः प्रातिवेश्यांश्च तद्वदेवानिमन्त्रयन् ॥

'तरिकः' नद्यादेः [1]सन्तारणशुल्काधिकृतः ।

विष्णुः [५, १२०-१२१]

[2]पितापुत्रविरोधे तु साक्षिणां दशपणो दण्डः । [3]यस्तयोश्चान्तरे स्यात्तस्योत्तमसाहसम् ।

याज्ञवल्क्यः [२, २३९]

पितापुत्रविरोधे तु[4] साक्षिणां त्रिपणो दमः ।
[5]अन्तरे तु तयोर्यः स्यात्तस्याप्यष्टशतो दमः ॥

दण्ड इत्यनुवृत्तौ विष्णुः [५, ९८-१०३]

[6]अभक्ष्येण ब्राह्मणं दूषयित्वा षोडशसुवर्णान् । जात्यपहारिणा[7] शतम् । सुरया वध्यः । क्षत्रियं दूषयितुस्तदर्धम् । वैश्यं दूषयितुस्तदर्धमपि । शूद्रं दूषयितुः प्रथमसाहसम् ।

'अभक्ष्येण' विष्ठादिना । 'जात्यपहारिणा' अभक्ष्येण लशुनादिना[8] । शूद्रस्याभक्ष्यं पञ्चनखमांसादि ।[9]

1. नद्यादिसन्तारण–स.
2. पितृपुत्रविरोधेन–द.
3. यस्तयोस्सान्तरं स्यात्–स, उ.
4. विरोधेन–द.
5. अन्तरेण–द; 'सान्तरश्च तयोः' इति विश्वरूपपाठः, 'सान्तरः' विश्लेषकरः इति व्याख्यानं च
6. अभक्ष्येण ब्राह्मणस्य दूषयिता–स.
7. जात्यपहारिणाम्–स.
8. 'जात्यपहारि' सुराव्यतिरिक्तं लशुनादि, सुरायाः पृथगुक्तत्वात् । (वि. र., ३५६)
9. शूद्रस्य 'अभक्ष्यं' कपिलादुग्धादि, 'निषिद्धं' पञ्चनखमांसादि । (वि. र.)

याज्ञवल्क्यः [२, २९६]

द्विजं प्रदूष्याभक्ष्येण दण्ड्य उत्तमसाहसम् ।
क्षत्रियं मध्यमं वैश्यं प्रथमं शूद्रमर्धिकम् ॥[1]

मनुः[2]

अभक्ष्यमथ चापेयं वैश्यादीनाशयन् द्विजान् ।
जघन्यमध्यमोत्कृष्टान् दण्डानर्हेद्यथाक्रमम् ॥

पणाः शूद्रे भवेद्दण्डश्चतुःपञ्चाशदेव तु ।
ग्रसितारः स्वयं कार्या राज्ञा निर्विषयास्तु ते ॥[3]

विष्णुः [५, १७३]

जातिभ्रंशकरस्याभक्ष्यस्य भक्षयिता विवास्यः ।

याज्ञवल्क्यः [२, ३०१, ३०३]

जारं चोरेत्यभिवदन्[4] दाप्यः पञ्चशतं दमम् ।
उपजीव्य धनं मुञ्चंस्तदेवाष्टगुणीकृतम् ॥

मृताङ्गलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा ।
[5]राजयानासनारोढुर्दण्डो मध्यमसाहसः ॥

1. अयं पाठो अपरार्केण, चण्डेश्वरेण चादृतः। विज्ञानेश्वरपाठस्तु—अभक्ष्येण द्विजं दूष्य दण्ड उत्तमसाहसम् । मध्यमं क्षत्रियं वैश्यं प्रथमं शूद्रमर्धिकम् ॥ 'अभक्ष्यैर्दूषयन् विप्रं दण्ड्य उत्तमसाहसम्' इति विश्वरूपपाठः

2. These two ślokas are not found in मनुस्मृति though ascribed to Manu by Aparārka (p. 821) also. It is missed in the परिशिष्ट of the Kāśi Sanskrit Series edition.

3. अत्र विष्णूक्तो दण्डो ब्राह्मणादिषूत्तमेषु दूषितेषु । मन्वाद्युक्तश्चानुत्तमेषु इत्यविरोधः । (वि. र., ३६०)

4. 'चोरं चोरेत्यभिवदन्' इति विश्वरूपपाठः । चोरमतिक्रम्य अचोरमेवान्यं चोरेति वदतः पञ्चशतो दमः इति व्याख्यातं च ।

5. 'राजशय्यासन' इति विश्वरूपपाठः

'जारं चोरेत्यभिवदन्' स्ववंशकलङ्कशङ्कया[1] स्वस्त्रीदोषमपह्नुवानो जारं चोरोऽयं निर्गच्छतीति ब्रुवन् । 'उपजीव्य धनं मुञ्चन्' धनं गृहीत्वा जारं[2] परित्यजन् ।

मनुः [९, २९०, २८६]

अभिचारेषु सर्वेषु कर्तव्यो द्विशतो दमः ।
मूलकर्मणि चानाप्तैः कृत्यासु विविधासु च ॥[3]

अदूषितानां द्रव्याणां दूषणे भेदने तथा ।
मणीनामवबाधेषु दण्डः प्रथमसाहसः ॥

तथा [१०, ९६]

यो लोभादधमो जात्या जीवेदुत्कृष्टकर्मभिः ।
तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत् ॥[4]

याज्ञवल्क्यः [२, ३०४]

विप्रत्वेन तु शूद्रस्य जीवतोऽष्टशतो दमः ॥

मनुः [९, २८५]

संक्रमध्वजयष्टीनां प्रतिमानां च भेदकः ।
प्रतिकुर्याच्च तत्सर्वं पञ्च दद्याच्छतानि च ॥

1. स्वकुलभ्रंशकलङ्कसम्पर्कभयात्–B. J.

2. जनम्–बि.

3. अदृष्टेनोपायेन मन्त्रशक्त्या मारणमभिचारः । तत्र प्रवृत्तानाममृतेऽभिचारणीये दण्डोऽयम् । अनभिचारणीयाभिचारेषु नैतावता मुच्यते । तत्र मनुष्यमारणदण्डः स विज्ञेयः । 'सर्व' ग्रहणं लौकिकवैदिकयोरविशेषेण दण्डार्थम् । वैदिकाः श्येनादयः । लौकिकाः पादपांशुग्रहण-सूचीभेदनादयः । 'मूलकर्म' वशीकरणादि । 'आप्ताः' पौत्रभार्यादयः, ततोऽन्येऽनाप्ताः । 'कृत्याः' अभिचारप्रकारा एव मन्त्रादिशक्तयः । (मेधातिथिः)

4. 'यो जात्याधमो' निकृष्टः क्षत्रियादिः । सत्यपि प्रकृतत्वे राजन्यस्य, सर्वेषामयं ब्राह्मण-वृत्तिप्रतिषेधः । एवमेवायं श्लोकः । (मेधातिथिः)

कात्यायनः

हरेद्भिन्द्याद्दहेद्वापि देवानां प्रतिमां यदि ।
तद्गृहं चैव यो भिन्द्यात्प्राप्नुयात्पूर्वसाहसम् ॥

विष्णुः [५, १७४]

अभक्ष्यस्याविक्रेयस्य विक्रयी देवप्रतिमाभेदकश्चोत्तमसाहसं दण्डनीयः ।

नारदः [४, ६७]

अविक्रेयाणि विक्रीणन् ब्राह्मणः प्रच्युतः पथः ।
मार्गे पुनरवस्थाप्यो राज्ञा दण्डेन भूयसा ॥[1]

शङ्खलिखितौ

प्रतिमारामकूपसङ्क्रमध्वजसेतुनिपानद्विजायतनभङ्गेषु तत्समुपस्थानं प्रतिसंस्कारोऽष्टशतं दमं च ।

मनुः [९, २८१; २७९]

यस्तु पूर्वनिविष्टस्य तडागस्योदकं हरेत् ।
आगमं चाप्यपां भिन्द्यात्स दाप्यः पूर्वसाहसम् ॥

तडागभेदकं हन्यादप्सु शुद्धवधेन वा ।
तद्वापि प्रतिसंस्कुर्याद्दाप्यश्चोत्तमसाहसम् ॥

हन्यादित्यनुवृत्तौ विष्णुः [५, १५]

सेतुभेदकृतश्च ।

'शारीरोऽङ्गच्छेदो वे'ति दण्डः ।

शङ्खलिखितौ

वापीतडागोदपानभेदमार्गरसद्रव्यदूषणे । अदासीदाससंप्रदानकरणे[2] ॥

1. अत्र यान्यविक्रेयानि निर्दिष्टानि तानि विक्रीणन् ब्राह्मणो मार्गच्युतो भवति। स च राज्ञा पुनरपि मार्गे स्थापनीयो महता दण्डेनेति । इति ऋणादाने आपद्ब्राह्मणवृत्तिश्चतुर्थः । (असहायः)

2. दासप्रकरणे-उ, बि; दासप्रदानकारणे-ज.

याज्ञवल्क्यः [२, २७८]

विषाग्निदां[1] स्त्रियं चैव पुरुषघ्नीमगर्भिणीम् ।
सेतुभेदकरं[2] चाप्सु शिलां बद्ध्वा प्रवेशयेत् ॥[3]

'विषाग्निदां' पतिगुरुनिजापत्यप्रमापणीं विकर्णकरनासोष्ठीं कृत्वा गोभिः प्रमापयेत् । 'पुरुषघ्नीमगर्भिणीं' पुरुषमारिणी या स्त्री भवेत् सा यदि गर्भरहिता भवति तदा तां जले प्रवेशयेन्नान्यथा ।

यमः

उल्काग्निदायकाश्चौराः घातकाश्चोपघातकाः ।
स्वशरीरेण दण्ड्यास्स्युर्मनुराह प्रजापतिः ॥

याज्ञवल्क्यः [२, २७८]

क्षेत्रवेश्मग्रामवनविवीतखलदाहकाः ।
राजपत्न्यभिगामी च दग्धव्यास्तु कटाग्निना ॥[4]

कात्यायनः [८०९]

प्राकारं भेदयेद्यस्तु पातयेच्छातयेत्तथा ।
बध्नीयादम्भसो मार्गं प्राप्नुयात्पूर्वसाहसम् ॥

मनुः [९, २८९, २७५, २७२]

प्राकारस्यावभेत्तारं परिखाणां च पूरकम् ।
द्वाराणां चैव भेत्तारं क्षिप्रमेव प्रमापयेत् ॥

1. विषप्रदामिति विश्वरूपपाठः; विप्रदुष्टां स्त्रियं भ्रूणपुरुषघ्नीमिति अपरार्कपाठः; विप्रदुष्टां स्त्रियं इति मिताक्षरा.

2. सेतुभेदकरीमिति विश्वरूप-अपरार्क-विज्ञानेश्वराः; ज च.

3. औषधादिव्याजेन विषप्रदां स्त्रियम् । 'च' शब्दात्पुरुषं च । एवकारोऽन्यत्र स्त्रीवधाभावज्ञापनार्थः । वधाभावेऽपि विषादिमृत्युनिमित्तप्रयोक्त्री हन्तव्येत्यर्थः । पुरुषघ्नीं साहसिकपरपुरुषप्रसङ्गातिशयात् पुरुषमारणनिमित्तभूताम् । ज्ञात्यादिभयाच्च गर्भं पातयित्वा 'अगर्भिण्यहम्' इति या वदति तामगर्भिणीमाहुः । तथा च स्मृत्यन्तरम्—'या पातयित्वा स्वं गर्भं ब्रूयादहमगर्भिणी । तामप्सु प्रक्षिपेद्राजा जारैश्च नरमारिणीम्' ॥ (विश्वरूपः)

4. चशब्दः श्रोत्रियादिस्त्र्यर्थः—(विश्वरूपः)

राज्ञः कोशापहर्तृंश्च प्रतिकूलेष्ववस्थितान्।[1]
घातयेद्विविधैर्दण्डैररीणां चोपजापकान्॥

राष्ट्रेषु रक्षाधिकृताः परस्वादायिनः शठाः।
भृत्या भवन्ति प्रायेण तेभ्यो रक्षेदिमाः प्रजाः॥

तथा [७, १२४]

ये कार्येभ्योऽर्थमेवं[2] हि गृह्णीयुः पापचेतसः।
तेषां सर्वस्वमादाय राजा कुर्यात्प्रवासनम्॥

तथा [९, २३१]

[3]ये नियुक्तास्तु कार्येषु हन्युः कार्याणि कार्यिणाम्।
धनोष्मणा पच्यमानास्तान् निःस्वान् कारयेन्नृपः॥

याज्ञवल्क्यः [१, ३३८-३३९]

ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा[4] विचेष्टितम्।
साधून् संमानयेद्राजा[5] विपरीतांस्तु घातयेत्॥

उत्कोचजीविनो द्रव्यहीनान् कृत्वा विवासयेत्।
सदानमानसत्कारान्[6] श्रोत्रियान् वासयेत्सदा[7]॥

1. राज्ञः कोशापहर्त्तॄं च प्रतिकूलेषु च स्थितान्-स.

2. 'ये कार्यिकेभ्योऽर्थमेव'-मेधातिथिपाठः। 'ये' रक्षाधिकृताः। 'कार्यिकेभ्यः' व्यवहर्तृभ्यो व्यापारवद्भ्यो। (मेधातिथिः)

3. तत्त्वानामभ्यासेन वर्तमानानां वक्ष्यमाणदण्डान्तरविधौ (९, २३४) एष एव दण्डो न्याय्यः। येऽप्यन्ये सेनापतिप्रभृतयः कस्यचित्साहाय्यके नियुज्यन्ते ततश्चार्थं गृहीत्वा नाशयन्ति तेऽप्येवमेव दण्ड्याः। अन्ये तु 'येऽनियुक्ता' इत्यकारप्रश्लेषं पठन्ति। ये राजवल्लभ्यात् बलातिशयाद्वाऽन्यस्य साहाय्यार्थं कुर्वन्ति, कार्यनाशनार्थं द्वितीयस्य, तेषामयं दण्डः॥ (मेधातिथिः)। 'विनियुक्तास्तु' इति वि. र. पाठः (३६६)

4. ज्ञात्वाऽपि चेष्टितम्-वि.

5. सम्मानयेन्नित्यं-विश्वरूपपाठः

6. सदानमानसत्कारैः-विश्वरूपपाठः

7. श्रोत्रियवचनं दृष्टान्तार्थम्। यद्वा दानादिभिरिति श्रोत्रियानेव वासयेत्। न करदानमप्यविनीतानामित्यर्थः। (विश्वरूपः)

तथा [याज्ञ., २, २४३]

[1]अवध्यं यस्तु बध्नाति वध्यं यश्च प्रमुञ्चति ।
अप्राप्तव्यवहारं च स दाप्यो दममुत्तमम् ॥

विष्णुः [५, १९५]

[2]दण्ड्यमुन्मोचयन् दण्ड्याद्द्विगुणं [3]दण्डमावहेत् ।
नियुक्तश्चाप्यदण्ड्यानां दण्डकारी नराधमः ॥

कात्यायनः [९५५-९५६]

राजक्रीडासु ये शक्ता[4] राजवृत्त्युपजीविनः ।
[5]अप्रियस्य तु यो वक्ता वधं तेषां [6]प्रकल्पयेत् ॥

प्रतिरूपस्य कर्तारः प्रेक्षणाः[7] प्रकराश्च ये ।[8]
राजार्थमोषकाश्चैव प्राप्नुयुर्विविधं वधम् ।

हन्यादित्यनुवृत्तौ विष्णुः [५, १८]

ये चाऽकुलीना [9]राष्ट्रमभिकामयेयुः ।[10]

1. अवध्यं यश्च बध्नाति बद्धं-मिताक्षरा, वि. र. पाठः; 'अवन्ध्यं' 'बन्ध्यं' इति विश्वरूपपाठौ

2. दण्ड्यं प्रमोचयन्-मु. वि. स्मृ.

3. दममावहेत्-स.

4. 'सक्ता' इति स्मृ. चं., (p. 773) पाठः

5. अप्रियस्य तु वक्तारः-B. J., ज.

6. प्रवर्तयेत्-स्मृ. चं.

7. 'प्रेक्षकाः', 'प्रेक्षणाः', इति (वि. र. (३६८) पाठौ; क्षेपणाः-ज.

8. 'प्रतिरूपस्य' राजवेषस्य राजानुमतिं विना कारकाः । 'प्रकराः' ये दण्डाख्यं करं प्रकृष्टं गृह्णन्ति । (वि. र., ३६८)

9. राज्यमभि-स.

10. 'अकुलीनाः' राज्ञो यत्कुलं तदप्रसूताः (वि. र., ३६८)

याज्ञवल्क्यः [२, २९५]

ऊनं वाऽप्यधिकं वाऽपि लिखेद्वा[1] राजशासनम् ।
पारदारिकचौरं[2] वा मुञ्चतो दण्ड उत्तमः ॥

शङ्खलिखितौ

कूटशासनप्रयोगे राजशासनप्रतिषेधे कूटतुलामानप्रतिमानव्यवहारे शारीरोऽङ्गच्छेदो वा ।[3]

कात्यायनः [९५४]

प्रमाणेन तु कूटेन मुद्रया वापि कूटया ।
कार्यं तु साधयेद्यो वै स दाप्यो [4]दण्डमुत्तमम् ॥

मनुः [९, २३२]

कूटशासनकर्तॄंश्च[5] प्रकृतीनां च दूषकान् ।[6]
स्त्रीबालब्राह्मणघ्नांश्च हन्याद्द्विट्सेविनस्तथा ॥

विष्णुः [३, ३३-३५; ३७]

स्वाम्यमात्यदुर्गकोशदण्डराष्ट्रमित्राणि प्रकृतयः । तद्दूषकांश्च हन्यात् । स्वराष्ट्रपरराष्ट्रयोश्च चारचक्षुस्स्यात् । दुष्टांश्च हन्यात् ॥

पुनर्विष्णुः [५, ९-११]

कूटशासनकर्तॄंश्च राजा हन्यात् । कूटलेख्यकरांश्च । गरदाग्निदप्रसह्यतस्करान् स्त्रीबालपुरुषघातिनश्च ॥

1. 'लिखेद्यो'-वि, ज, स, B. J., वि. र., मिताक्षरा च.
2. 'चौरो वा' वि. र., ३६८.
3. विकल्पस्तु अपराधोत्कर्षापकर्षाभ्यां व्यवस्थाप्य-इति वि. र., ३६९.
4. दममुत्तमम्-स.
5. राजशासनकर्तॄंश्च-ज.
6. 'प्रकृतीनाञ्च दूषकान्' अमात्यानां विना दोषं दोषोद्भावकान् (वि. र., ३६९); प्रकृतीनां कुद्धलुब्धानां दूषकाः भेदकाः (मेधातिथिः)

याज्ञवल्क्यः [२, २७७]

शस्त्रावपाते गर्भस्य पातने चोत्तमो दमः ।[1]

[2][उशना

परिक्लेशेन पूर्वः स्याद्भैषज्येन तु मध्यमः ।
प्रहारेण तु गर्भस्य पातने दण्ड उत्तमः ॥]

[3]कात्यायनः [७९९]

व्यापादने तु तत्कारी वधं चित्रमवाप्नुयात् ।

बृहस्पतिः [२३, ९-१२]

साहसं पञ्चधा प्रोक्तं वधस्तत्राधिकः स्मृतः ।
तत्कारिणो नार्थदण्डैः शास्या वध्याः प्रयत्नतः ॥

प्रकाशवधका ये तु [4]तथैवोपांशुघातकाः ।
[5]ज्ञात्वा सम्यग्धनं हृत्वा हन्तव्या विविधैर्वधैः ॥

मित्रप्राप्त्यर्थलोभैर्वा राज्ञा लोकहितैषिणा ।
न मोक्तव्याः [6]प्रयत्नेन सर्वभूतभयावहाः ॥

लोभाद्भयाद्वा यो राजा न हन्यात्पापकारिणः ।
तस्य प्रक्षुभ्यते राष्ट्रं [7]राज्यात्स परिहीयते ॥

1. उत्तरार्धं ['उत्तमो वाधमो वापि पुरुषस्त्रीप्रमापणे] omitted by उ, बि and वि. र., २६९, but supplied by A. S. B., B. J., ज and स.

2. Omitted by उ and बि but present in वि. र., २७०.

3. Cited only by कल्पतरु, वि. र., विवादचिन्तामणि, १६४, and दण्डविवेक, ६१.

4. तथा चोपांशुघातकाः–बि, ज.

5. राज्ञा सम्यग्धनं–इति वि. र. पाठः । 'राज्ञा' लोकहितैषिणा हन्तव्या इत्यर्थः (वि. र., २७२)

6. साहसिकाः सर्वे–स.

7. राज्याच्च–स.

तथा [२३, १३]

बन्धाग्निविषशस्त्रेण परान्यस्तु प्रमापयेत् ।
क्रोधादिना निमित्तेन नरः साहसिकस्तु सः ॥

बौधायनः[1]

क्षत्रियादीनां ब्राह्मणवधे वधः सर्वस्वहरणं च । तेषामेव तुल्यापकृष्टवधे यथाबलमनुरूपदण्डं[2] प्रकल्पयेत् । क्षत्रियवधे गोसहस्रं वृषभैकाधिकं[3] राज्ञ उत्सृजेद्वैरनिर्यातनार्थम् । शतं वैश्ये दश शूद्रे वृषभश्चात्राधिकः[4] । शूद्रवधेन स्त्रीवधो गोवधश्च व्याख्यातः । अन्यत्राऽऽत्रेय्या [5]वधात् । [6]धेन्वनडुहोश्च । वधे धेन्वनडुहोरन्ते चान्द्रायणं चरेत् । आत्रेय्या वधः क्षत्रियवधेन व्याख्यातः । हंसभासबर्हिणचक्रवाक[7]बलाकाकोलूकमण्डूकडिड्डिकडेरिकाश्वबभ्रुनकुलादीनां[8] वधे शूद्रवत् ॥[9]

बृहस्पतिकात्यायनौ[10]

एकस्य बहवो यत्र प्रहरन्ति रुषान्विताः ।
मर्मप्रहारदो यश्च घातकः स उदाहृतः ॥

1. १, १८, १९–२०; १, १९, १–८.
2. अनुरूपान् दण्डान् इति मु. बौधा.; अनुरूपश्च दण्डम्–वि. र., ३७१.
3. वृषमाधिकम्–वि. र.
4. वृषभश्चाधिकः–वि. र.
5. वधात् omitted in वि. र.
6. Omitted in वि. र.
7. प्रचलाकाक–मु. बौधा. ९४.
8. उलूक–मूषिक–नकुल–भेक–तैलीक–बभ्रु–नकुलादीनां–वि. र.; उलूक–कण्टक-डिड्डिक—मु. बौधा.
9. 'आत्रेयी' ऋतुमती । 'बभ्रु' स्थूलनकुलः । 'आदि' शब्देनान्येऽपि तिर्यञ्चो विवक्षिताः । (वि. र., ३७२)
10. बृहस्पति, व्यव., २३, १४–१५, २०; the verses are not included in Kane's collection. वि. र., ३७२, ascribes them to Bṛhaspati alone. A. S. B. wrongly ascribes them also to Manu.

मर्मघाती तु यस्तेषां यथोक्तं दापयेद्दमम् ।
आरम्भकृत्सहायश्च दोषभाजस्तदर्धतः ॥

क्षतस्याल्पमहत्त्वं च मर्मस्थानं च यत्नतः ।
सामर्थ्यं चानुबन्धं च ज्ञात्वा चिह्नैः प्रसाधयेत् ॥

नारदः [१७, ९-१०]

अविशेषेण सर्वेषामेष दण्डविधिः स्मृतः ।
वधादृते ब्राह्मणस्य न वधं ब्राह्मणोऽर्हति ॥

शिरसो मुण्डनं दण्डस्तस्य निर्वासनं पुरात् ।
ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन च ॥

साहसचौर्ययोर्यमः

न शारीरो ब्राह्मणस्य दण्डो भवति कर्हिचित् ।
गुप्ते तु बन्धने बध्वा राजा भक्तं प्रदापयेत् ॥

अथवा बन्धनं [1]रज्ज्वा [2]कर्म वा कारयेन्नृपः ।
मासार्धमासं कुर्वीत कार्यं विज्ञाय तत्त्वतः ॥

यथापराधं विप्रं तु विकर्माण्यपि कारयेत् ।
[3]राजदुष्टानि भाषेत दण्डो निर्विषयः स्मृतः ॥

अवध्या ब्राह्मणा गावो लोकेऽस्मिन् वैदिकी श्रुतिः ।

'दण्डो निर्विषय' इति । विषयोद्देशान्निष्क्रान्तः कार्यः स एव दण्ड इत्यर्थः ।

याज्ञवल्क्यः [२, २३१]

यः साहसं कारयति स दाप्यो द्विगुणं दमम् ।
यश्चैवमुक्त्वाहं दाता कारयेत्स चतुर्गुणम् ॥

1. रश्मा-द.
2. कर्म नाकारयेन्नृपः-स.
3. राजा दुष्टानि-स.

'अहं दाते'ति । 'अहं तुभ्यं[1] धनं दास्यामि त्वं कुरु' इत्यभिधाय, यः कारयति स चतुर्गुणं दण्ड्य इत्यर्थः ।

कात्यायनः [८३२-८३४]

आरम्भकृत्सहायश्च तथा मार्गानुदेशकः ।
आश्रयः शस्त्रदाता च भक्तदाता विकर्मिणाम् ॥

युद्धोपदेशकश्चैव तद्विनाशप्रदर्शकः ।
[2]उपेक्षकोऽनियुक्तश्च दोषवक्ताऽनुमोदकः ॥

अनिषेद्धा क्षमो यः स्यात्सर्वे तत्कार्यकारिणः ।
यथाशक्त्यनुरूपं[3] तु दण्डमेषां प्रकल्पयेत् ॥

'तद्विनाशप्रदर्शकः' तद्विनाशोपायोपदेशकः । 'अनियुक्तश्च दोषवक्ता' 'अनियुक्तो' राज्ञाऽनियुक्तो यो दोषं वदति ।

नारदः [४, २४५-२४६]

अयुक्तं साहसं कृत्वा प्रत्यासत्तिं भजेत यः ।
ब्रूयात् स्वयं वा सदसि[4] तस्यापि विनयः स्मृतः[5] ॥

गूहमानस्तु दौःशील्याद्यदि पापः स [6]जीवति ।
सभ्याश्चास्य न तुष्यन्ति तीव्रो दण्डश्च [7]पात्यते ॥[8]

1. तुभ्यं दास्यामि–उ.
2. उपेक्षाकार्ययुक्तश्च दोषवक्तानुमोदकः–स.
3. यथाशब्दानुरूपं–बि.
4. सदिति–मु. ना. स्मृ., ११०.
5. तस्यार्धविनयः स्मृतः–मु. ना. स्मृ.; ना. म. सं., p. 82; B. J.; तस्यार्धं–ज.
6. जीयते–मु. ना. स्मृ.
7. पातयेत्–द.
8. हलायुधस्तु साहसकार्येऽपि अन्यायसाहसं कृत्वा यदि 'प्रत्यासत्तिं' प्रायश्चित्तं भजते, स्वयमेव वा साहसकर्तृत्वं निवेद्य 'दण्डो मे क्रियताम्' इति वदेत्, तस्य यथोक्तदण्डादर्धदण्डः। यस्तु दौःशील्यं गूहमानः तस्मादेव जीवति, तस्य तु इङ्गितादिभिः साहसकारित्वं निश्चित्य स्वल्पेऽपि साहसे तीव्रो दण्ड इत्यर्थमाह ॥ (वि. र., ३७५)

## ७१ (क) अथ घातकान्वेषणम्

तत्र याज्ञवल्क्यः [२, २८०-२८१]

अविज्ञातहतस्याशु कलहं सुतबान्धवाः ।
प्रष्टव्या योषितश्चास्य परपुंसि रताः पृथक् ॥

स्त्रीद्रव्यवृत्तिकामो वा केन [1]वायं गतः सह ।
तत्प्रदेशसमासन्नं पृच्छेद्वापि जनं शनैः ॥

बृहस्पतिः [२३, २१, २३-२५]

[2]हतः संदृश्यते यत्र घातकस्तु न दृश्यते ।
[3]पूर्ववैरानुमानेन ज्ञातव्यः स महीभुजा ॥

प्रातिवेश्यानुवेश्यौ च तस्य मित्रारिबान्धवाः[4] ।
प्रष्टव्या राजपुरुषैः सामादिभिरुपक्रमैः ॥

विज्ञेयोऽसाधुसंसर्गाच्चिह्नैर्होढेन [5]वा नरैः ।
एषोदिता घातकानां तस्कराणां च भावना ॥

गृहीतः शङ्कया यस्तु न तत्कार्यं प्रपद्यते ।
शपथैः स विशोद्धव्यः सर्ववादेष्वयं विधिः ॥

व्यासः

ज्ञात्वा तु घातकं सम्यक् ससहायं सबान्धवम् ।
हन्याच्चित्रैर्वधोपायैरुद्वेजनकरैर्नृपः ॥

1. वा सह सङ्गतः–B. J.
2. हते स दृश्यते यत्र–द; हतः सन् मृष्यते यत्र–स.
3. पूर्वचौरानुमानेन–द.
4. मित्राणि बान्धवाः–स.
5. मानवैः–चि. र. पाठः (२७६), B. J.

बृहस्पतिः [२३, २६]

दिव्यैर्विशुद्धो मोच्यः स्यादशुद्धो वधमर्हति ।
निग्रहानुग्रहाद्राज्ञः कीर्तिर्धर्मश्च वर्धते ॥

इति साहसपर्व[1]

---

1. इति श्रीमहाराजाधिराजश्रीमद्गोविन्दचन्द्रदेवसप्रक्रियमहासान्धिविग्रहिकेण भट्ट-हृदयधरात्मजेन भट्टश्रीलक्ष्मीधरेण विरचिते कृत्यकल्पतरौ व्यवहारकाण्डे साहसपर्व ॥ [A. S. B., S. B. (a) and ख.]

# ७२

## अथ स्त्रीसङ्ग्रहणम्

तत्र बृहस्पतिः [२४, १-५]

पारुष्यं द्विविधं प्रोक्तं साहसं च द्विलक्षणम्[1] ।
पापमूलं सङ्ग्रहणं त्रिप्रकारं निबोधत ॥

बलोपधिकृते द्वे तु तृतीयमनुरागजम् ।
तत्पुनस्त्रिविधं प्रोक्तं प्रथमं मध्यमुत्तमम् ॥

अनिच्छन्त्या यत्क्रियते सुप्तोन्मत्तप्रमत्तया ।
प्रलपन्त्या वा रहसि बलात्कारकृतं तु तत् ॥

छद्मना गृहमानीय दत्वा वा [2]मद्यकार्मणम् ।
संयोगः क्रियते यस्यास्तदुपाधिकृतं विदुः ॥

अन्योन्यचक्षूरागेण दूतीसंप्रेषणेन च ।
[3]कृतं रूपार्थलोभेन ज्ञेयं तदनुरागजम् ॥

व्यासः

सङ्ग्रहस्त्रिविधः [4]प्रोक्तः प्रथमो मध्यमस्तथा ।
उत्तमश्चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥

अदेशकालसंभाषा अरण्ये च परस्त्रिया ।
अपाङ्गप्रेक्षणं[5] हास्यं [6]पूर्वसङ्ग्रहणं स्मृतम् ॥

1. त्रिलक्षणम्–B. J.; वि. र., ३७५ (notes variant द्विलक्षणम्)

2. मदकारणम् इति माधवाहतपाठः (४६२); मद्यकर्मणाम्–द; मद्यकार्मिणम्–इति दण्डविवेके (१५५); गत्वा वा तत्स्वसद्मनि–वि. र. पाठः (३७५)

3. कृतं रूपावलोकेन–B. J.

4. ज्ञेयः–द, ब.

5. प्रेषणं–द.

6. प्रथमः संग्रहः स्मृतः–B. J.

बृहस्पतिः [२४, ६]

अपाङ्गप्रेक्षणं हास्यं दूतीसंप्रेषणं तथा ।
स्पर्शो भूषणवस्त्राणां प्रथमः संग्रहः स्मृतः ॥

नारदः [१५, ६३]

नदीनां सङ्गमे तीर्थेष्वारामेषु वनेषु च ।
स्त्रीपुंसौ यत्समेयातां तच्च सङ्ग्रहणं स्मृतम् ॥[1]

बृहस्पतिः [२४, १०]

प्रेषणं गन्धमाल्यानां फलमद्यान्नवाससाम् ।
सम्भाषणं च रहसि मध्यमं संग्रहं विदुः ॥

व्यासः

प्रेषणं गन्धमाल्यानां धूपभूषणवाससाम् ।
प्रलोभनं चान्नपानैर्मध्यमः संग्रहः स्मृतः ॥

बृहस्पतिः [२४, ८]

एकशय्यासनं क्रीडा चुम्बनालिङ्गनं तथा ।
एतत्संग्रहणं प्रोक्तमुत्तमं शास्त्रवेदिभिः ॥

1. A. S. B., S. B. (a), B. J., ज and द bring immediately below this śloka its continuation, with a comment which is identical with one in विवादचिन्तामणि, (१७०):

दूतीसंप्रेषणैर्वापि लेखसंप्रेषणैरपि ।
अन्यैर्वापि व्यभीचारैराद्यं संग्रहणं स्मृतम् ॥

सम्यक् गृह्यते तदनुरक्ततया प्रमीयते आश्रयो येन तत्संग्रहणम् ।

The śloka is cited in वि. र., ३७६, which reads व्यभिचारैः. Jolly's Text reads—

दूतीप्रस्थापनैर्वापि लेखसंप्रेषणैरपि ।
अन्यैश्च विविधैर्दोषैर्ज्ञात्वा संग्रहणं बुधैः ॥

(p. 181) । 'अन्यैश्चाभिव्यतीचारैः प्राद्यं' इति 'ख' मातृकायाम् ।

व्यासः

शय्यासने विविक्ते तु परस्परमुपाश्रयः[1] ।
केशाकेशिग्रहश्चैव ज्ञेय उत्तमसंग्रहः ॥

नारदो मनुश्चाद्ययोः[2]

उपकारक्रिया[3] केलिः स्पर्शो भूषणवाससाम् ।
सह शय्यासनं चैव[4] सर्वसंग्रहणं स्मृतम् ॥

स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत् तया ।
परस्परस्यानुमते[5] सर्वं संग्रहणं स्मृतम् ॥

नारदः [१५, ६९, ६७]

दर्पाद्वा यदि वा मोहाच्छ्लाघया वा स्वयं वदेत् ।
[6]पूर्वं मयेयं भुक्तेति तच्च संग्रहणं स्मृतम् ॥

पाणौ यश्च[7] निगृह्णीयाद्वेण्यां वस्त्राञ्चलेऽपि वा ।
तिष्ठ तिष्ठेति वा ब्रूयात्सर्वं संग्रहणं स्मृतम् ॥

याज्ञवल्क्यः [२, २८३-२८४]

पुमान्संग्रहणे ग्राह्यः केशाकेशि परस्त्रिया[8] ।
[9]सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा ॥

1. परस्परमुपाश्रयम्–स; परस्परमपाश्रयः-उ.
2. मनुः, ८, ३५७-३५८; नारदः, १५, ६६, ६५.
3. 'उपचारक्रिया' इति कुल्लूकपाठः
4. 'सह खट्वासनं चैव'–मुद्रितमनुनारदौ, स.
5. परस्परस्यानुमतं–मु. ना. स्मृ., १८१.
6. मयेयं भुक्तपूर्वेति–मु. ना. स्मृ., १८२.
7. पाणौ यश्च–मु. ना. स्मृ., १८१.
8. परस्त्रियाः–विश्वरूप-विज्ञानेश्वरपाठः
9. साद्यैर्वा–विश्वरूपपाठः

नीवीस्तनप्रावरणमूरुकेशावमर्शनम्[1] ।
अदेशकालसंभाषं [2]सहावस्थानमेव च ॥

'सहावस्थानम्' इत्यादिषु कुर्वाण इति शेषः ।

कात्यायनः[3]

यानि कर्माण्यभिलषन् पुमान् वै कुरुते क्वचित् ।
आरम्भास्ते तु निर्दिष्टा गर्हिताः[4] कामसाधकाः ॥

दूतोपचारयुक्तश्चेदवेलास्थानसंस्थितः ।
कण्ठकेशाम्बरग्राही कर्णनासाकरादिषु ॥

एकस्थानासनाहारः संग्रहो नवधा स्मृतः ।
न ग्राह्यो ह्यन्यथाकारी[5] ग्राहको दण्डमर्हति ॥

गर्भपातो नखानां च दर्शनं[6] गर्भधारणम् ।
धारणं परवस्त्राणामलङ्कारायुधस्य च ॥

एभिश्चिह्नैः सदा ज्ञेया व्यभिचाररताः स्त्रियः ।
गन्धमाल्याम्बरैश्चापि लेख्यसंप्रेषणैस्तथा ॥

ग्राहकं सर्वमेव स्यादारम्भकरणं हि यत् ।
[7]अस्मादकार्यसंसर्गाद्ग्रहं संग्रहणं विदुः ॥

1. नाभिकेशावमर्शनम्–विश्वरूपः; सक्थिकेशावमर्शनम्–मिताक्षरा, व्य. प्रका., ५०५; A. S. B., B. J., ज.

2. सहैकासनमेव च–मिताक्षरा.

3. Only the second and third ślokas are found in Kane's collection (का. स्मृ. सा., ८२९-८३०)

4. ग्राहकाः–द; गर्हकाः–स.

5. अन्यथाकामी–उ.

6. दंशनम्–*Ibid.*

7. असात्कुकार्य–वि. र., ३८३; यस्मादकार्य–स.

कामी तु संस्थितो यत्र आरम्भे कामसाधके ।
तत्तस्माद्ग्रहणं तस्य प्राहुः संग्रहणं [1]यतः ॥

बृहस्पतिः [२४, ११]

त्रयाणामपि चैतेषां प्रथमो मध्य उत्तमः[2] ।
त्रिनयः कल्पनीयः स्यादधिको द्रविणाधिके ॥

मनुः [८, ३५४]

[3]परस्य पत्न्या पुरुषः संभाषं योजयन् रहः ।
पूर्वमाक्षारितो दोषैः प्राप्नुयात्पूर्वसाहसम् ॥

पूर्वमेव 'दोषैः' तत्स्त्रीप्रार्थनादिभिः । 'आक्षारितः' अभिशस्तः ।

आपस्तम्बः [२, २६, १८-१९]

अबुद्धिपूर्वमलङ्कृतो युवा परदारमनुप्रविशन् कुमारीं वा वाचा बाध्यः[4] । बुद्धिपूर्वं तु [दुष्टभावो][5] दण्ड्यः ॥

मत्स्यपुराणे [२२७, ११९-१२०; १२५-१२६]

भिक्षुकोऽप्यथवा नारी योऽपि स्यात्तु कुशीलवः ।
प्रविशेत्प्रतिषिद्धस्तु प्राप्नुयाद्द्विशतं दमम् ॥

यस्तु सञ्चारकस्तत्र पुरुषः स तथा भवेत् ।
पारदारिकवद्दण्ड्यो यश्च स्यादवकाशदः ॥

मनुः [८, ३५५]

यस्त्वनाक्षारितः पूर्वमभिभाषेत कारणात् ।
न दोषं प्राप्नुयात् किंचिन्न हि तस्य व्यतिक्रमः ॥

1. ग्रतः–*Ibid.*

2. मध्यमोत्तमः–द.

3. परपत्न्या तु पुरुषः–ज; विवादचिन्तामणि, १७२.

4. वाच्यः–स.  5. [दुष्टभावो]–मुद्रितपुस्तके.

नारदः [१५, ६७]

नाथवत्या परगृहे संयुक्तस्य स्त्रिया सह ।
दृष्टं संग्रहणं तज्ज्ञैर्नागतायाः स्वयं गृहे ॥

अभिगमनानुवृत्तौ कात्यायनः[1]

अतोऽन्येन प्रकारेण प्रवृत्तौ ग्रहणं भवेत् ।
स्वयमेवागतायां तु पुंगृहे न तु दोषभाक् ॥

नारदकात्यायनौ[2] [ना., १५, ६१]

[3]अदुष्टत्यक्तदारस्य क्लीबस्याक्षमकस्य[4] च ।
स्वेच्छानुपेयुषो दारान्न दोषः साहसे भवेत् ॥

अस्यार्थः—अदुष्टाः प्रदुष्टास्त्यक्ताः स्वदारा येन तस्य । दुष्टान् दारान् [तथा] [5]क्लीबाक्षमयोर्दारान् दाराणामेवेच्छयोपगच्छन्न दण्डनीय इति ।

मनुः [८, ३६०-३६१]

भिक्षुका वन्दिनश्चैव दीक्षिताः कारवस्तथा ।
सम्भाषणं गृहे स्त्रीभिः कुर्युरप्रतिवारिताः ॥

न भाषणं परस्त्रीभिः प्रतिषिद्धः समाचरेत् ।
निषिद्धो भाषमाणस्तु सुवर्णं दण्डमर्हति ॥

1. 'अभिगमनानुवृत्तौ विष्णुः' इति वि. र., ३८५. 'पुंगृह' इति-स्वगृहं गते पुंसि स्त्रियां स्वयमुपस्थितायां अधिकः पुंसो न दोष एवेत्यर्थः। एतद्वचनं कल्पतरौ सङ्ग्रहणप्रकरणे पठितम् । रत्नाकरे तु 'अभिगमनानुवृत्तौ कात्यायन (?) इति कृत्वा तत्रैवावतारितम् ।'-(दण्डविवेक, १५७-१५८)-Not included in Kane's collection and not found in the printed *Viṣṇusmṛti*.

2. Not traced in Kane's collection of Kātyāyana's verses.

3. 'अदुष्टस्त्री' इति उ, वि, न, B. J., वि. र., and Jolly; 'प्रदुष्टस्त्री इति दण्डविवेकपाठः (१५८)

4. 'क्लीबस्य क्षयिकस्य च' इति मु. ना. स्मृ., १८०.

5. क्लीबाक्षमयोर्दाराणामेवेच्छयोपगच्छन्न–उ.

याज्ञवल्क्यः [२, २८५]

स्त्री निषेधे शतं दण्ड्यो द्विशतं तु दमं पुमान् ।
प्रतिषेधे तयोर्दण्डो यथा संग्रहणे तथा ॥

अस्यार्थः—स्त्री पतिपित्रादिभिः संभाषणादिनिषेधे कृते सति प्रवर्तते यदि, तदा पणशतं दण्ड्या । पुरुषः पुनरेवं निषिद्धे प्रवर्तमानो द्विशतं दण्ड्यः । द्वयोस्तु स्त्रीपुंसयोः प्रतिषिद्धे प्रवर्तमानयोः संभाषणे वर्णानुसारेण यो दण्डः स एव दण्ड इति ।[1]

मनुः [८, ३६२-३]

नैष चारणदारेषु विधि[2]र्नात्मोपजीविषु ।
सज्जयन्ति हि ते नारीर्निगूढाश्चारयन्ति च ॥[3]
[4]किञ्चिदेव तु दाप्यः स्यात्संभाषां ताभिराचरन् ।
प्रैष्यासु चैकभक्तासु रहः प्रव्रजितासु च ॥[5]

शङ्खलिखितौ

सर्वेषां स्वदारनियमः स्वकर्मप्रतिपत्तिश्च धर्मः । येन येनाङ्गेनापराधं कुर्यात् तदेवास्य च्छेत्तव्यम् । अष्टसहस्रं वा दण्डः । अन्यत्र ब्राह्मणात् । अदण्ड्यो हि ब्राह्मणः ॥

1. cf. मिताक्षरा—"पतिपित्रादिभिः येन सह संभाषणं निषिद्धं तत्र प्रवर्तमाना स्त्री शतपणं दण्डं दद्यात् । पुरुषः पुनरेवं निषिद्धे प्रवर्तमानो द्विशतं दद्यात् । द्वयोस्तु स्त्रीपुंसयोः प्रतिषिद्धे प्रवर्तमानयोः सङ्ग्रहणे संभोगे वर्णानुसारेण यो दण्डो वक्ष्यते स एव विज्ञेयः ।" This is followed by *Manu*, VIII, 362–3.

2. नाम्योपजीविषु–उ, ज, द, स and A. S. B.; नात्मोपजीविषु–B. J.

3. 'चारणाः' नटगायनाद्याः प्रेक्षणकारिणः । 'आत्मोपजीविषु' वेषेण जीवत्सु ये दाराः तां य उपजीवन्ति उपपतिक्षमकाः । 'निगूढं' प्रच्छन्नम् । 'चारयन्ति च' ता मैथुनं प्रवर्तयन्ति । (मेधातिथिः) ।

4. 'प्रैष्यासु' दासीषु । 'एकभक्तासु' एकपुरुषमात्रावरुद्धासु । 'प्रव्रजितासु' बौद्धादि-ब्रह्मचारिणीषु । (त्रि. र., ३८७)

5. A. S. B. and ज add here, as part of the text the following commentary—'चारणो' नटः । 'भार्यापुत्रस्त्रिकातनुः' इति स्मरणात् इह आत्मा भार्या । It is identical with the comment in विवादचिन्तामणि, १७५.

<u>मनुः</u> [८, ३५२-३५३; ३५९]

परदाराभिमर्शेषु [1]प्रवृत्तान्नॄन्महीपतिः ।
उद्वेजनकरैर्दण्डैश्छिन्नयित्वा प्रवासयेत् ॥[2]

तत्समुत्थो हि लोकस्य जायते वर्णसंकरः ।
येन मूलहरोऽधर्मः सर्वनाशाय कल्पते ॥[3]

अब्राह्मणः संग्रहणे प्राणान्तं दण्डमर्हति ।
चतुर्णामपि वर्णानां दारा रक्ष्यतमाः स्मृताः ॥

'अब्राह्मणः संग्रहणे' इत्यत्र ब्राह्मण्या इति शेषः ।[4]

1. 'प्रवृत्तांस्त्रीन् महीपतिः' इति विवादचिन्तामणिपाठः । 'त्रीन्' ब्राह्मणेतरानिति व्याख्यातं च । (वि. चि., १७४)

2. 'अभिमर्शः' संभोगः, आलिङ्गनादिः । 'उद्वेजनकरैः' तीक्ष्णाग्रैः शक्तिशूलादिभिः । (मेधातिथिः)

3. समुत्थानमुत्पत्तिः । ततः परदारागमनात् 'संकरो'ऽवान्तरवर्णरूपो जायते । येन जातेन अधर्मो 'मूलस्य' लोकस्य दिवः पतिता वृष्टिः तां हरत्यधर्मः । धर्मे हि सति 'आदित्याज्जायते वृष्टिः' । न च संकरे सत्यपि कारीरीयागो, नापि पात्रे दानं, अतो दान-याग-होमानां सस्योत्पत्ति-हेतुभूतानामभावात् सर्वजगन्नाशसमर्थो भवति । तस्मात् पारदारिकान् 'अधर्ममूलं वर्णसंकरः स्यादिति' सस्यादिनिष्पत्तिमूलां वा वृष्टिं रक्षन् प्रवासयेत् ॥ (मेधातिथिः)

4. Medhātithi contends that the rule applies to *all* cases of adultery by an अब्राह्मण, whether *anuloma* or *pratiloma*, because for social security wives should be protected from taint, even more than life and property irrespective of caste: 'अब्राह्मणः' क्षत्रियादिः, संग्रहणे कृते, 'चतुर्णामपि वर्णानां' हीनोत्तमजातिभेदमनवेक्ष्य 'प्राणान्तं' प्राणत्याजने मारणे पर्यवसितं दण्डमर्हति । कथं पुनर्ब्राह्मण्यां शूद्रायां च संगृहीतस्य समो दण्डः? अत्र हेतुरूपमर्थमाह 'दारा रक्ष्यतमा सदा' । सर्वस्य कस्यचिद्राज्ञा दारा धनशरीरेभ्योऽतिशयेन रक्ष्याः ॥ Lakṣmīdhara, Caṇḍeśvara (p. 387) and Vācaspati (वि. चि., १७४) restrict the rule to प्रतिलोमसंग्रह. Kullūka misses the differentiation, and restricts the term अब्राह्मण to शूद्र.

## ७२ (क) अथाभिगमनदण्डाः

तत्र बृहस्पतिः [२४, १३]

[1]सहसा कामयेद्यस्तु धनं तस्याखिलं हरेत् ।
उत्कृत्य लिङ्गवृषणौ भ्रामयेद्गर्दभेन तु[2] ॥

आपस्तम्बः [२, २६, २०]

सन्निपाते वृत्ते शिश्नच्छेदनं सवृषणस्य ।

कात्यायनः [८३०]

स्त्रीषु [3]वृत्तोपभोगः स्यात् प्रसह्य पुरुषो यदा ।
वधस्तत्र प्रवर्तेत कार्यातिक्रमणं हि तत् ॥[4]

बृहस्पतिः [२४, १४-१५]

छद्मना कामयेद्यस्तु तस्य सर्वहरो दमः ।
अङ्कयित्वा भगाङ्केन पुरान्निर्वासयेत्ततः ॥

[5]दमोऽन्तिमः समायां तु [6]हीनायामधिकस्ततः ।[7]
पुंसः कार्योऽधिकायां तु गमने संप्रमापणम् ॥

1. सहसा यः कामयते-इति अपरार्कपाठः (८५७)

2. च for तु–द.

3. प्रवृत्तो योगस्य–ज.

4. 'स्त्रीषु' उत्कृष्टजातीयासु । 'वृत्तोपयोगः' जाताभिगमः । 'प्रसह्य' हठेन । (वि. र., ३८९)

5. 'दमो नेयः समायां यो हीनायामर्धिकस्ततः' इति व्यवहारमयूखपाठः (ed. Kane, २४५)–'अयं च दण्डः समायाम् । हीनायामेतदर्धम् । उत्तमायां वधः' इति च व्याख्यातम् । Kane (p. 426) prefers the reading of the text.

6. 'हीनायामर्धिकस्ततः' इति वि. र. पाठः (३८८); हीनायामधिकस्य तु–उ.

7. यस्तु बलच्छले विहाय दूतादिप्रेषणद्वारा समानजातीयां परस्त्रियं गच्छति, तस्यान्तिम उत्तमो दण्डः । हीनायान्तु बलच्छले विहाय गच्छतो मध्यमो दण्डः । उत्कृष्टजातीयान्तु दूतादिप्रेषणद्वारा बलच्छलाभ्यां वा गच्छतो मारणमेवेत्यर्थः ॥ (वि. र., ३८८)

याज्ञवल्क्यः [२, २८६]

सजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः ।
प्रातिलोम्ये वधः पुंसो नार्याः कर्णादिकर्तनम् ॥

विष्णुः [५, ४०-४३]

पारजायी सवर्णागमने तूत्तमसाहसं दण्ड्यः । हीनवर्णागमने मध्यमम् । गोगमने च । अन्त्यागमने च वध्यः । उत्तमागमने च[1] ।

शङ्खलिखितौ

अनिवेदितप्रवेशे स्त्रीगृहेषु[2] तत्रोत्तममुत्तमायाम् । विपर्यये मध्यमसाहसम् । प्रतिलोमैकान्तरावस्कन्दने[3] सर्वस्वं वधो वा । [4]विपर्यये सन्निरोधः सर्वस्वं वा ॥

अस्यार्थः—अनिवेद्य स्त्रीगृहं प्रविश्य उत्तमां ब्राह्मणादिस्त्रियमभिगच्छतो ब्राह्मणस्योत्तमसाहसो दण्डः । 'विपर्यये' तु ब्राह्मणस्य क्षत्रियादिस्त्रीगमने मध्यमसाहसो दण्डः । प्रतिलोमस्य शूद्रादेरेकान्तरितद्विजातिस्त्रीगमने वधः सर्वस्वापहारसहितो दण्डः । 'वा'शब्दः समुच्चये । "आर्यस्त्र्यभिगमने लिङ्गोद्धारः स्वहरणं च । गोप्ता[5] चेद्वधोऽधिकः" इति गौतमवचनात्[6] [गौ. ध. सू., १२, २-३] । 'विपर्यये सन्निरोधः', ब्राह्मणस्यागुप्तपत्नीगमने वैश्यस्य संवत्सरं बन्धनागारे तिरोहितस्य सर्वस्वापहारो दण्डः—'वैश्यः सर्वस्वदण्डः स्यात् संवत्सरनिरोधतः' इति मनुवचनात् [८, ३७५] इति ॥[7]

1. Sūtra omitted by printed edition.
2. अनिवेदितस्त्रीप्रवेशे स्त्रीगृहेषु–स; अनिवेदितप्रवेशे स्त्री स्त्रीगृहेषु–उ.
3. प्रतिलोम एकावस्कन्दने सर्वस्वं वा–उ. 4. Sūtra omitted by उ.
5. 'गुप्ता' इति वि. र., ३९०. 6. गौतमवचनादिभिः विपर्ययस्याविरोधः–स.
7. After quoting the above comment ['इति मनुवचनादिति लक्ष्मीधरेण व्याख्यातम्'] Caṇḍeśvara continues—

'हलायुधस्तु यो हीनजातिरुत्तमजातीयस्त्रीगृहमनिवेद्य प्रविशति, तदासौ दुष्टत्वमुन्नीय [पाठान्तरं–'सर्वस्वमुपनीय'] उत्तमसाहसं दण्ड्यः । यदि तूत्तमजातीय एव हीनजातीयायाः पूर्ववद्गृहं प्रविशति, तदासौ मध्यमसाहसं दण्ड्यः । यदि तु प्रतिलोमो हीन एकान्तरितां उत्तमजातीयां स्त्रियमभिगच्छति, यथा ब्राह्मणो वैश्यां, क्षत्रियः शूद्रां, तदा तस्य सन्निरोधे बन्धनं सर्वस्वहरणं वा, अपराधमहत्वामहत्वाभ्यां व्यवस्था कार्या । संवत्सरनिरोधितस्य सर्वस्वापहरणं दण्डो वैश्ये । 'वैश्ये सर्वस्वदण्डः स्या'दिति मनुवचनात् ॥ [विवादरत्नाकरः, ३९०–३९१]

[1]दर्पाधिकारे मनुः [८, ३७२]

पुमांसं दाहयेत्पापं शयने तप्त आयसे ।
अभ्यादध्युश्च काष्ठानि तत्र दह्येत पापकृत् ॥[2]

नारदः [१५, ७३-७५]

[3]माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा ।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥

दुहिताऽऽचार्यभार्या च सगोत्रा शरणागता ।
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ॥

आसामन्यतमां गत्वा गुरुतल्पग उच्यते ।
शिश्नस्योत्कर्तनं[4] तत्र नान्यो दण्डो विधीयते ॥

याज्ञवल्क्यः [३, २३२-२३३]

पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ।
मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ॥[5]

आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ।
छित्वा लिङ्गं वधस्तस्य सकामायाः स्त्रियास्तथा[6] ॥

1. 'दर्पगमनाधिकारे मनुः' इति वि. र. पाठः (३९१); 'धर्माधिकारे मनुः' इति स; 'दर्पविकारे मनुः' इति ज, द.

2. योऽसौ पत्न्याः जारः स 'आयसे' लोहशयने, 'तप्ते' अग्निसमे कृते दाहयितव्यः । अत्र च शयनस्थितस्य काष्ठानि वध्यघातिनोऽभ्यादध्युरुपरि क्षिपेयुः । यावत्काष्ठप्रहारैः अग्निज्वालाभिः शयनतापेन च मृतः । (मेधातिथिः); 'अभ्यादध्युः' परितः क्षिपेयुः–वि. र., ३९१.

3. माताऽत्र जननीव्यतिरिक्ता पितृपत्नी । (वि. र., ३९१)

4. कर्तनात्तत्र–वि. र., ३९१.

5. मातुः सपत्नीति चासवर्णाभिप्रेता । इतरासु तु गुरुतल्पसमत्वं मुख्यमेव यतः (विश्वरूपः); 'च'शब्दाद्राज्ञीप्रव्रजितादीनां ग्रहणम् (मिताक्षरा)

6. स्त्रिया अपि–इति मिताक्षरापाठः; स्त्रियस्तथा–स; 'सकामायाश्च योषितः' इति विश्वरूपपाठः

व्यासः

गुप्तायाः संग्रहे दण्डो यथोक्तः [1]समुदाहृतः ।
इच्छन्त्यामागतायां तु गच्छतोऽर्धं दमः स्मृतः ॥

मनुः [८, ३७८-३७९; ७, ३८२-३]

[2]सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां[3] बलाद्व्रजन् ।
शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह सङ्गतः ॥

मौण्ड्यं प्राणान्तिको[4] दण्डो ब्राह्मणस्य विधीयते ।
इतरेषां तु वर्णानां दण्डः प्राणान्तिको[4] भवेत् ॥

वैश्यश्चेत् क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो [5]व्रजन् ।
यो ब्राह्मण्यामगुप्तायां तत्समं[6] दण्डमर्हतः ॥

सहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते तु ते व्रजन् ।
शूद्रायां क्षत्रियविशोः साहस्रो वै भवेद्दमः ॥[7]

आपस्तम्बः [२, २७, ८]

नाश्य आर्यः शूद्रायाम् ॥

'आर्यो' ब्राह्मणादिः, 'शूद्रायां' अनन्यपूर्वायां रेतः सिक्त्वा, 'नाश्यो' विषयान्निर्वास्य इत्यर्थः ॥

1. स उदाहृतः–स.
2. सर्वस्वं–A. S. B., ज, द.
3. विप्रो–स.
4. प्राणान्तको–मेधातिथिपाठः
5. व्रजेत्–उ, बि, स.
6. तावुभौ–मेधातिथिः; 'न तु तौ–S. B. (a)
7. 'गुप्ता' भ्रष्टशीलाऽपि यदि केनचिद्रक्ष्यते पित्रा भ्रात्रा बन्धुभिर्वा तां हठाद्गच्छ-सहस्रं ब्राह्मणो दाप्यः । गुप्ता शीलवती चेत् प्रवासनाङ्कनेऽधिके—मेधातिथिः

<u>मनुः</u> [८, ३८५; ८, ३७३]

अगुप्ते क्षत्रियावैश्ये शूद्रां वा ब्राह्मणो व्रजन् ।
शतानि पञ्च दण्ड्यः स्यात् सहस्रं त्वन्त्यजस्त्रियम् ॥

संवत्सराभिशस्तस्य दुष्टस्य द्विगुणो दमः ।
व्रात्यया सह संवासे चाण्डाल्या तावदेव तु ॥

'संवत्सराभिशस्तस्य दुष्टस्य' इति—संवत्सरमनेनोपभुक्ता परस्त्रीति यस्याभिशापः 'संवत्सराभिशस्तः', तस्य संवत्सरमुपभुक्तायां यो दण्ड उक्तः स द्विगुणः स्यादित्यर्थः । 'व्रात्या' अत्यन्तदुराचारा वधबन्धोपजीविप्रभृतयः सप्तविधाः । 'व्रात्यप्रतिपादकनिन्दितकर्माचारा निन्दिता' इत्यादि<u>हारीतवच</u>नानुसारात् ॥[1]

<u>याज्ञवल्क्यः</u> [२, २९४]

अन्त्याभिगमने त्वङ्क्यः कबन्धेन[2] प्रवासयेत् ।
शूद्रस्तथान्त्य एव स्यादन्त्यस्यार्यागमे वधः ॥[3]

'अङ्क्यः कबन्धेन' अशिरःस्कन्धनरशरीराकारेणाङ्कयित्वा ।

1. धर्मभ्रष्टाचारा अवसन्नकर्मधर्माश्च व्रात्या इति हारीतोक्तेः । हलायुधस्तु व्रात्या अतिक्रान्तविवाहाकालकन्या इत्याह । (वि. र., ३९३) ॥ मेधातिथिस्तु—'व्रातः' पूगः संघः तेन चरन्ती पुंश्चली । अथवा व्रातमर्हतीति व्रात्या । याऽनेकपुरुषोपभोग्या पुंश्चली सा हि पुरुषव्रातमर्हति । अथवाऽनेकपुरुषस्वामिका ग्रामस्य दास्यश्च 'व्रात्याः' । ये तु उद्वाहहीनां व्रात्यां मन्यन्ते तेषां मते न मुख्यः शब्दार्थः । अयं हि व्रात्यशब्दः स्मृतिकारैः सावित्रीपतितेषु प्रयुक्तः । न च स्त्रीणां तत्संभवः । अथ स्त्रीणां विवाहस्य तदापत्तिवचनादुपनयनं तद्धीनपुरुषवत् व्रात्या—गौणस्तर्हि न मुख्यः । ...न विवाहकालः स्त्रीणां नियतो यत्कालाद्भ्रष्टाः व्रात्याः स्युः । यदपि प्रागृतोः विवाह्याः तदपि स्वयंवरस्य ऋतुमत्या विना तत्परेणानुज्ञात एव काममामरणं तिष्ठेद्गृहे कन्या ॥ (मेधातिथिः)

2. 'कबन्धेन' इति विश्वरूपपाठः; 'कुबन्धेन' (कुत्सितबन्धेन भगाकारेणाङ्कयित्वा स्वराष्ट्रान्निर्वासयेत् ) इति मिताक्षरा; 'कुवर्णेन' (कुत्सितवर्णेन भगाकारेण) इति व्यवहारप्रकाशः ।

3. अन्त्यशब्दो शूद्राभिकृष्टापशदः । तामन्त्यापशदस्त्रियं गच्छन् त्रैवर्णिकः कबन्धेनाङ्कयित्वा स्वराष्ट्राद्बहिष्कार्यः । शूद्रस्तथाङ्क एव स्यान्न बहिष्कार्यः । शूद्रस्य अप्रवासनं दासत्वज्ञापनार्थम् । (विश्वरूपः)

बौधायनः [२-४, ५३; ५, १-३]

शूद्रं कटाग्निना दहेत् । अथाऽप्युदाहरन्ति । अब्राह्मणस्य शारीरो दण्डः ।

> अब्राह्मणस्य शारीरो दण्डः संग्रहणे भवेत् ।
> सर्वेषामेव वर्णानां दारा रक्ष्यतमा धनात् ॥
>
> न तु चारणदारेषु न रङ्गावतरे वधः ।
> संसर्जयन्ति ता ह्येतान्निगुप्तांश्चालयन्त्यपि ॥[1]

शूद्रस्यानुवृत्तौ गौतमः [१२, २-३]

आर्यस्त्र्यभिगमने लिङ्गोद्धारः सर्वस्वहरणञ्च । गोप्ता चेद्वधोऽधिकः ॥

आपस्तम्बः [२, २७, ९-१०]

बध्यः शूद्र आर्यायाम् । [2]दारं चास्य कर्शयेत् ॥

'ब्राह्मणी वृषलं सेवेत' इत्यनुवृत्तौ यमः

> शूद्रं तु घातयेद्राजा शयने तप्त आयसे ।
> दहेत्पापकृतं तत्र काष्ठैः पर्णैस्तृणैस्तथा ॥

मनुः [८, ३७४-३७७]

> शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावसन्[3] ।
> अगुप्तमङ्गसर्वस्वी गुप्ते सर्वेण हीयते ॥

1. A. S. B., B. J. and ज bring here the *similar* śloka of Manu (VIII, 362) already cited on p. 583 *supra*, with the introduction—तथा च मनुराह.

2. 'दारांश्चास्य चाकर्षयेत्' इति वि. र. पाठः (३९४) एतच्च योऽन्तःपुरादिष्वधिकृतो रक्षकः सन् स्वयमेव गच्छति तस्य भवति । अस्य शूद्रस्य या दारभूता तेन भुक्ता त्रैवर्णिका स्त्री तां कर्शयेत् व्रतनियमोपवासैः । या प्रजाता न भवति तद्विषयमेतत् ॥ (हरदत्तः)

3. आविशेत्-ज, द.

वैश्यः सर्वस्वदण्ड्यः स्यात्संवत्सरनिरोधतः[1] ।
सहस्रं क्षत्रियो दण्ड्यो मौण्ड्यं मूत्रेण चार्हति ॥

ब्राह्मणीं यद्यगुप्तां तु [2]सेवेयातामिति स्थितिः ।
[3]वैश्यं पञ्चशतं कुर्यात् क्षत्रियं तु सहस्रिणम् ॥

उभावपि तु तावेव ब्राह्मण्या गुप्तया सह ।
विप्लुतौ[4] शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना ॥

'द्वैजातं वर्णमावसन्' द्विजातिस्त्रियमभिगच्छन्नित्यर्थः । 'अगुप्तं' अरक्षितम् । 'अङ्गसर्वस्वी' अङ्गसर्वस्वसहितः, 'हीयते' तेनाङ्गेन येनाङ्गेनापराद्धं, सर्वस्वेन च हीयत इत्यर्थः । रक्षितां तु व्रजन् 'सर्वेण' अङ्गेन हीयत इत्यर्थः ।

तथा [८, ३८४]

क्षत्रियायामगुप्तायां वैश्ये पञ्चशतो दमः ।
मूत्रेण मौण्ड्यमिच्छेत्तु क्षत्रियो दण्डमेव[5] वा ॥

हारीतः

श्रेयसः शयनशायिनं राजा बध्वा श्वभिः खादयेत् । काष्ठैश्चैनां दाहयेत् ।

'श्रेयसः' ब्राह्मणादेस्तूत्तमस्य । 'शयनशायिनं' स्त्रीगामिनम् । 'एनां' उत्तमस्त्रियम् ।

गौतमः [२३, १४-१६]

श्वभिः खादयेद्राजा निहीनवर्णगमने स्त्रियं प्रकाशम् । पुमांसं घातयेत् । यथोक्तं वा ॥

1. निरोधितः–वि. र. पाठः (३९५)

2. सेवेयातामिति स्थितिः इति वि. र. पाठः; 'गच्छेतां वैश्यपार्थिवौ' इति मुद्रित-मनुकोशेषु ।

3. This line and the next are missing in उ, बि, ज.

4. गुप्तां चेत्–ख.

5. 'दण्डमेव वा' इति वि. र., ३९५; मु. म. स्मृ; मौण्ड्यमेव वा–उ.

<u>वसिष्ठः</u> [२१, १-५]

शूद्रश्चेद्ब्राह्मणीमभिगच्छेद्वीरणपत्रैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येत[1]। ब्राह्मण्याः शिरसि वापनं कृत्वा[2] सर्पिषाभ्युक्ष्य[3] नग्नां खरमारोप्य[4] महापथमनुव्राजयेत्[5]। पूता भवतीति विज्ञायते। वैश्यश्चेद्ब्राह्मणीमभिगच्छेल्लोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येत[6]। ब्राह्मण्याः शिरसि वापनं कृत्वा[7] सर्पिषाभ्युक्ष्य[8] नग्नां खर[9]-मारोप्य महापथमनुव्राजयेत्[10]। पूता भवतीति विज्ञायते। राजन्यश्चेद्ब्राह्मणीमभिगच्छेच्छरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येत[11]। ब्राह्मण्याः शिरसि वापनं कृत्वा[12] सर्पिषाऽभ्युक्ष्य[13] नग्नां खरमारोप्य[14] महापथमनुव्राजयेत्[15]। पूता भवतीति विज्ञायते। एवं वैश्यो राजन्यायां मैथुनमाचरन्[16]। शूद्रस्तु[17] राजन्यावैश्ययोः।

अथ <u>यमः</u>

वृषलं सेवते या तु ब्राह्मणी मदमोहिता।
तां श्वभिः खादयेद्राजा संस्थाने वध्यघातिनाम्॥

1. प्रास्येत् for प्रास्येत–मु. वा. स्मृ.; स.
2. वपनं कारयित्वा–मु. वा. स्मृ.
3. सर्पिषाभ्यज्य–ज, स, B. J.; सर्पिषा समभ्यज्य–मु. वा. स्मृ.
4. नग्नां कृष्णखरमारोप्य–मु. वा. स्मृ.
5. अनुसंव्राजयेत्–मु. वा. स्मृ.
6. प्रास्येत्–मु. वा. स्मृ.
7. वपनं कारयित्वा–*Ibid.*
8. सर्पिषा समभ्यज्य–*Ibid.*
9. गौरखर for खर–*Ibid.*
10. अनुसंव्राजयेत्–*Ibid.*
11. प्रास्येत्–मु. वा. स्मृ. च
12. वपनं कारयित्वा–मु. वा. स्मृ.
13. अभ्यज्य–B. J.; स; समभ्यज्य–*Ibid.*
14. श्वेतखरमारोप्य–*Ibid.*
15. अनुसंव्राजयेत्–*Ibid.*
16. Omits मैथुनमाचरन्–*Ibid.*
17. शूद्रश्च–*Ibid.*; स

वैश्यं वा क्षत्रियं वाऽपि ब्राह्मणी सेवते तु या ।
शिरसो मुण्डनं तस्याः प्रयाणं गर्दभेन तु ॥

'संस्थाने वध्यघातिनाम्', वध्यान् ये घातयन्ति चण्डालादयस्तेषां स्थाने ।[1]

<u>बृहस्पतिः</u> [२४, १६-१७]

गृहमागत्य या नारी प्रलोभ्य स्पर्शनादिना ।
कामयेत्तत्र सा दण्ड्या नरस्यार्धदमः स्मृतः ॥

छिन्ननासौष्ठकर्णां तु परिभ्राम्याप्सु मज्जयेत् ।
खादयेद्वा सारमेयैः संस्थाने बहुसंस्थिते ॥

[2]'बहुसंस्थिते' बहवः संस्थिता यत्र चत्वरादौ ।

<u>मनुः</u> [८, ३७१]

भर्तारं लङ्घयेद्या तु स्त्री ज्ञातिगुणदर्पिता ।
तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते[3] ॥

हन्यादित्यनुवृत्तौ <u>विष्णुः</u> [५ ,१८]

[4]'स्त्रियमसक्तभर्तृकां तदतिक्रमणीं च[5] ।

<u>याज्ञवल्क्यः</u> [२, २३३]

लिङ्गं छित्वा वधस्तत्र सकामायाः स्त्रियास्तथा ॥

1. B. J.-तैरधिष्ठिते देशे after चण्डालादयः

2. 'संस्थाने' देशे-omitted by उ; बहवः संस्थिता यत्र जनाश्चत्वरादौ (मेधातिथिः)

3. 'लङ्घनं' भर्तारमतिक्रम्यान्यत्र गमनम् । तच्चेत् स्त्री करोति । 'दर्पेण' बहवो मे ज्ञातयो बलिनो द्रविणसंपन्नाः । 'स्त्रीगुणो' रूपसौभाग्यातिशयसंपत् । (मेधातिथिः)

4. 'स्त्रियं अवशक्तभर्तृकाम्' इति वि. र. पाठः । 'अनुपभुक्तभर्तृका'मिति व्याख्यातः' (२९९); 'अशक्तभर्तृका'मिति मुद्रित वि. स्मृ., स च, 'मुक्तभर्तृका'मिति-उ.

5. भरणादिसमर्थोऽप्यशक्तो निरोद्धुमन्येभ्यो यस्यास्तां । तमतिक्रमितुं परपुरुषोपभोगलम्पटाया शीलमस्यास्तां च स्त्रियं हन्यात् । (वैजयन्ती)

बृहस्पतिः [२४, १८-१९]

अनिच्छन्ती तु या भुक्ता गुप्तां तां वासयेद्गृहे ।
मलिनाङ्गीमधःशय्यां पिण्डमात्रोपजीविनीम् ॥

कारयेन्निष्कृतिं कृच्छ्रं पराकं वा समे गताम् ।
हीनवर्णोपभुक्ता[1] या त्याज्या वध्याथवा भवेत् ॥

'समे गतां' [2]सवर्णपुरुषे सङ्गताम् ।

कात्यायनः [४८८-४८९]

नास्वतन्त्राः स्त्रियो ग्राह्याः पुमांस्तत्रापराध्यति ।
प्रभुणा शासनीयास्ता राजा तु पुरुषं नयेत् ॥

प्रोषितस्वामिका नारी प्रापिता यद्यभिग्रहे ।
तावत्सा बन्धने स्थाप्या यावत्प्रत्यागतः प्रभुः ॥

'पुरुषं नयेत्' स्त्रीस्वामिनं पुरुषं प्रापयेदित्यर्थः ।

मत्स्यपुराणे [२२७, १२७-१२९]

बलात्संदूषयेद्यस्तु परभार्यां नरः क्वचित् ।
वधदण्डो भवेत्तस्य नापराधो भवेत् स्त्रियाः ॥

अदृश्यां मृतपत्नीं[3] तु संगृह्यन्नापराध्नुयात् ।
[4]स तां परिगृह्णानस्तु सर्वस्वं दण्डमर्हति ॥

कृत्यकल्पतरौ व्यवहारकाण्डे
[अभिगमनदण्डः]

1. भुक्ता वा त्याज्या वध्याथ वा–स.
2. समवर्णेषु पुरुषेषु संगताम्–स.
3. मृगपत्नीं तु–उ.
4. 'अदृश्यां तां समुद्दीता दण्डं तु क्षिप्रमर्हति' इति मत्स्यपुराणे (आनन्दाश्रमकोशे)

## ७२ (ख) अथ कन्यादूषणम्

तत्र मनुः [८, ३६४]

योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति ।

सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः ॥[1]

मत्स्यपुराणे [२२७, १२४-१२५]

योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति ।

सकामां दूषयानस्तु [2]प्राप्तः परमसाहसम् ॥[3]

'सन्निपाते वृत्ते' इत्यनुवृत्तौ आपस्तम्बः [२, २६, २१]

कुमार्यां तु स्वान्यादाय नाश्यः[4] ।

मनुः [८, ३६६]

उत्तमां सेवमानस्तु जघन्यो वधमर्हति ।

शुल्कं दद्यात्सेवमानः [5]समामिच्छेत् पिता यदि ॥[6]

1. 'तुल्यः' समानजातीयः (मेधातिथिः)

2. 'प्राप्नुयात् द्विशतं दमम्' इति आनन्दाश्रमपुस्तकपाठः

3. अत्रापि तुल्यमेव विवक्षितम् । उत्तमजातीयायां सकामायामपि हीनस्य वधविधानात् । (वि. र., ४०१)

4. Added comments: सर्वस्वं गृहीत्वा निर्वास्यः–बि, स; सर्वस्वान्यादाय नाश्यः–स; स्वानि धनानि आदाय नाश्यो निर्वास्यः । एतच्च हीनायामकामायाम्–वि. र., ४०१.

5. समागच्छेत्समामपि–इति वि. र. (४०१) पाठः

6. अकामायाः कन्याया दूषणे ब्राह्मणवर्जविशेषेण हीनोत्तमानां वध एव दण्ड इत्युक्तम् । सकामाया दूषणे त्विदमाहुः । 'उत्तमां' रूपयौवनसंपन्नजात्यादिभिः । 'जघन्यो'ऽत्यन्तनिकृष्टः । नातिसाम्येऽपि गुणैर्वध्यः । 'समां तु' गच्छन् सकामां स 'शुल्कं' आसुरविवाह इव पित्रे 'दद्यात्' । न चेदिच्छति पिता तदा राज्ञे दण्डं दद्यात् । 'ननु च गान्धर्वोऽयं विवाहः— 'इच्छयाऽन्योन्यसंसर्गं' इति । तत्र न युक्तो दण्डः ।' केनोक्तं गान्धर्वे नास्ति दण्डः ? अत एव नायं सतीधर्मः, नायं विवाहः अग्निसंस्काराभावात् । यदपि शाकुन्तले व्यासवचनममन्त्रकम-नग्निकमिति तद्दुष्यन्तेन कामपीडितेनैवं कृतम् । न चेच्छासंयोगमात्रं विवाहः । स्वीकरणो-पायभेदादष्टौ विवाहाः, न पुनर्विवाहभेदात् । वृत्तवरणे तत्र पुनः कर्तव्यमेवमिति । अथवा ऋतु[illegible]लं गान्धर्वः । प्राप्ततोः शुल्को दण्डो वा । 'अथ कन्यायाः का प्रतिपत्तिः ?' तस्मा एव देया । निवृत्ताभिलाषा चेत् काममन्यस्य प्रतिपाद्या । शुल्कग्रहणं चात्रापि तत्कृतुपभोग-निष्कृत्यर्थमस्त्येव । वरश्चेत् निवृत्ताभिलाषो हठाद् ग्राहयितव्यः ॥ (मेधातिथिः)

नारदः [१५, ७१-७२]

कन्यायामसकामायां द्व्यङ्गुलस्यावकर्तनम् ।
उत्तमायां वधस्त्वेव सर्वस्वहरणं[1] तथा ॥

सकामायां तु कन्यायां सवर्णे[2] नास्त्यतिक्रमः ।
किंत्वलङ्कृत्य सत्कृत्य स एवैनां समुद्वहेत्[3] ॥

अथ शङ्खलिखितौ

कन्यायामसकामायां द्व्यङ्गुलच्छेदो दण्डश्च । उत्तमायां तु वधो जघन्यस्य । समानायां[4] शुल्कमाभरणं द्विगुणं च स्त्रीधनं दत्त्वा प्रतिपद्येत [5]कन्याम् ॥[6]

याज्ञवल्क्यः [२, २८७-२८८]

अलङ्कृतां हरन्कन्यामुत्तमां त्वन्यथाधमम् ।
दण्डं दद्यात्सवर्णासु प्रातिलोम्ये वधः स्मृतः ॥

सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः ।

1. सर्वस्वहरणम्–मु. ना. स्मृ., १८२.

2. संगमे–मु. ना. स्मृ., १८२.

3. अङ्गुलीसाध्यमैथुनमेतत् । येन येनाङ्गेनापराध्नुयात्तदेवास्य छिन्द्यादिति सामान्यप्राप्तत्वादिति पारिजातः । (वि. र., ४०२)

4. समायामिति वि. र. पाठः

5. स्वकन्याम्–स; प्रपद्येत (ताम्)–वि. र., ४०२.

6. सकामायां दण्डो षट्शतरूपो मनूक्तो द्व्यङ्गुलच्छेदसहकारी आसुरविवाहोक्तदानवत् । द्विगुणं स्त्रीधनं शुल्कं च कन्यायै तद्बन्धुभ्यश्च दत्त्वा तां गृह्णीयात् । 'समायां' इच्छन्तीमिति शेषः । इदमप्यङ्गुलीसाधनमैथुनविषयम् । हरिहरस्तु द्व्यङ्गुलीपरिमाणलिङ्गच्छेदः इत्याह ॥ (वि. र., ४०२)

दूषणे तु करच्छेद उत्तमायां वधस्तथा ॥[1]

'उत्तमं' उत्तमसाहसम् । 'अधमं' अधमसाहसम् ।

<u>मनुः</u> [८, ३६७-३७०; ३६५]

अभिषज्य तु यः कन्यां कुर्याद्दर्पेण मानवः ।
तस्याशु कर्त्ये[2] अङ्गुल्यौ दण्डं चार्हति षट्शतम् ॥

सकामां दूषयानस्तु[3] नाङ्गुलीच्छेदमाप्नुयात्[4] ।
द्विशतं तु दमं दाप्यः प्रसङ्गविनिवृत्तये ॥

कन्यैव कन्यां या कुर्यात्तस्याः स्याद्द्विशतो दमः ।
शुल्कं च त्रिगुणं[5] दद्याच्छिफाश्च प्राप्नुयाद्दश ॥

या तु कन्यां प्रकुर्यात्स्त्री[6] सा सद्यो मौण्ड्यमर्हति ।
अङ्गुल्योरेव वा छेदं खरेणोद्वहनं तथा ॥

कन्यां भजन्तीमुत्कृष्टं न किंचिदपि दापयेत् ।
जघन्यं सेवमानां तु संयतां वासयेद्गृहे ॥

'अभिषज्य' अभिभूय । 'कुर्यात्' विकुर्यात्, दूषयेदिति यावत् ।

'कर्त्ये' छेद्ये । 'शिफा'ऽत्र जटारज्ज्वादिप्रहारः[7] ।

1. 'अलङ्कृता' उपकृत[illegible] । इच्छन्तीषु कन्यासु सवर्णासु अनुलोमासु वा प्रकृष्यापहृतासु न दोषः, गान्धर्वविवाहविषयत्वात् । (*contra* मेधातिथिः) यस्तु अनलङ्कृतापहरणेऽधमो दण्डः, सोऽन्यथा निष्कामास्वित्यर्थः । दूषणे तु कन्याभिगमने करच्छेदः, अनिच्छायामेव । अन्यथा तु अङ्गुलीविच्छेदः स्मृत्यन्तरानुसारात् । प्रातिलोम्येन तु कन्यादूषणे वध एव । 'तथा' शब्दः स्मृत्यन्तरोक्तशूलारोहणादिप्रकारार्थः । (विश्वरूपः)

2. तस्याशु कर्त्ये–वि. र., ४०२. 'तस्याशु कर्त्यौ अङ्गुल्यो' इति मेधातिथिपाठः; तस्याशु कर्त्ये–इति कुल्लूकः

3. दूषयंस्तुल्यो (मेधातिथिपाठः)

4. च्छेदमर्हति–ख

5. द्विगुणं दद्याच्छिफाश्चैवाप्नुयाद्दश–इति मेधातिथिपाठः; ख; वि. र., ४०२

6. 'या कन्यां विप्रकुर्यात्स्त्री' इति वि. र. पाठः 'स्त्री' कन्यातिरिक्तयोषित् (वि. र., ४०२)

7. 'शिफा' रज्जुलताप्रहाराः (मेधातिथिः)

## ७२ (ग) अथ बन्धक्यभिगमनम्

तत्र[1] यमः

परदारे[2] सवर्णासु दण्ड्याः स्युः पञ्च कृष्णलाः ।
असवर्णास्वानुलोम्ये दण्डो द्वादशको मतः ॥

व्यासः

बहुभिर्भुक्तपूर्वां या गच्छेद्यस्तां नराधमः ।
तस्य वेश्यावदिच्छन्ति [3]दण्डनं न तु दारवत् ॥

कात्यायनः [८३१]

कामार्ता स्वैरिणी या तु स्वयमेव प्रकामयेत् ।
राजादेशेन भोक्तव्या [4]विख्याप्य जनसंनिधौ ॥

नारदः [१५, ७८-७९]

स्वैरिण्यब्राह्मणी वेश्या दासी निष्कासिनी च या ।
गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः ॥

आस्वेव तु भुजिष्यासु दोषः स्यात्परदारवत् ।
गम्या अपि हि नोपेया यतस्ताः[5] सपरिग्रहाः ॥[6]

याज्ञवल्क्यः [२, २९०]

अवरुद्धासु दासीषु भुजिष्यासु तथैव च ।
गम्यास्वपि पुमान् दाप्यः पञ्चाशत्पणिकं दमम् ॥

1. तत्र बन्धक्यधिकारे यमः–ज, द, स, वि. र., ४०५.
2. 'परदारे' परदारगमने । (वि. र., ४०५)
3. दमनं न तु दारवत्–ज, द.
4. विख्याता–ज, द.
5. यत्ताः परपरिग्रहाः–मु. ना. स्मृ., १८३
6. 'स्वैरिणी' स्ववशा पुंश्चली । 'दासी' 'स्वीया कर्मकरी । 'निष्कासिनी' कुटुम्बनिर्गता पुंश्चली । 'भुजिष्यासु' अन्येनावरुध्य भुज्यमानासु । 'सपरिग्रहाः' परेणावरुद्धाः । (वि. र., ४०६) ॥ 'निष्कासिनी' स्वाम्यनवरुद्धा दासी । (मिताक्षरा) ॥ 'भुजिष्याः' कर्मकारिण्यो दास्यः । (विश्वरूपः)

व्यासः

परोपरुद्धागमने पञ्चाशत्पणिको दमः ।
प्रसह्य वेश्यागमने दण्डो दशपणः स्मृतः ॥

याज्ञवल्क्यः [२, २९१]

प्रसह्य दास्या गमने दण्डो दशपणः स्मृतः ।
बहूनां यद्यकामासौ चतुर्विंशतिकः पृथक् ॥

तथा [२, २९३]

अयोनौ गच्छतो योषां पुरुषं वापि मेहतः ।
चत्वारिंशत्पणो दण्डस्तथा [1]प्रव्रजितागमे ॥

तथा [ २, २८९]

पशून् गच्छन् शतं दाप्यो हीनां गां चैव मध्यमम्[2] ।

नारदः [१५, ७६]

पशुयोनावतिक्रामन्[3] विनेयः स दमं शतम् ।
मध्यमं साहसं गोषु तदेवान्त्यावसायिषु ॥

मत्स्यपुराणे [२२७, १४३-१४४]

तिर्यग्योनौ तु गोवर्जं मैथुनं यो निषेवते ।
[4]स पणं प्राप्नुयाद्दण्डं तस्याश्च यवसोदकम् ॥

1. व्यभिचारिणीत्वाद् ज्ञातिभिस्त्यक्ता स्त्री 'प्रव्रजिता' (विश्वरूपः) । 'प्रव्रजिता' शाक्यादिस्त्री (वि. र., ४०७) । 'प्रव्रजिता' तापसी (विवादचिन्तामणिः, १८८)

2. 'पशून् गच्छन् शतं दाप्यो हीनस्त्रीं गां च मध्यमम्' इति विश्वरूप-मिताक्षरा-पाठः । 'पशून् गच्छन् शतं दण्ड्यो हीनाङ्गीश्चैव मध्यमम्' ('हीनाङ्गीं' छिन्ननासादिकाम्') इति विवादरत्नाकरः, (४०७) ॥ 'हीनां स्त्रियं' अन्त्यावसायिनीम् (मिताक्षरा)

3. 'अतिक्रामन्' मैथुनं कुर्वन् (विवादचिन्तामणिः, १८८)

4. वपनम्-मु पु. (आनन्दाश्रम)

सुवर्णं तु भवेद्दण्डो गां व्रजन् मनुजोत्तमः ।
वेश्यागामी द्विजो दण्ड्यो वेश्याशुल्कसमं पणम्[1] ॥

नारदः [१५, ७७]

अगम्यागामिनः शास्ति दण्डो राज्ञा प्रकीर्तितः[2] ।
प्रायश्चित्तविधानं तु पापानां स्याद्विशोधनम् ॥

मनुः [८, ३८६-३८७]

यस्य स्तेनः पुरे नास्ति नान्यस्त्रीगो न दुष्टवाक्[3] ।
न साहसिकदण्डघ्नौ स राजा शक्रलोकभाक् ॥

एतेषां निग्रहो राज्ञः पञ्चानां विषये स्वके ।
साम्राज्यकृत्सजात्येषु[4] लोके चैव यशस्करः ॥

यमः

दुष्टाः साहसिकाश्चण्डाः कितवा [5]वञ्चकास्तथा ।
यस्य राष्ट्रे न सन्तीह[6] स राजा शक्रलोकभाक् ॥

इति स्त्रीसङ्ग्रहपर्व ॥[7]

---

1. दमम्-वि. र. पाठः (४०८)
2. प्रचोदितः-मु. ना. स्मृ., १८३; स.
3. दुष्टभाक्-इति उ; 'दुष्टवाक्' त्रिविधस्याक्रोशस्य कर्ता-इति मेधातिथिः ॥
4. सजातेषु-उ.
5. वधकाः-A. S. B.; बन्धकाः-स; बाधकाः-वि. र., ४०८.
6. न सीदन्ति-स.
7. इति महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेवमहासान्धिविग्रहिकेण भट्टहृदयधरात्मजेन भट्टश्रीलक्ष्मीधरेण विरचिते कृत्यकल्पतरौ व्यव ारकाण्डे स्त्रीसङ्ग्रहणपर्व ॥ (S. B. (b), स.)

# ७३

# अथ स्त्रीपुंयोगः[1]

तत्र बृहस्पतिः [२५, १]

एतत्सङ्ग्रहणस्योक्तं विधानं विनयं तथा ।
स्त्रीपुंसवर्तनोपायः श्रूयतां गदतो [2]मम ॥[3]

नारदः [१५, २]

विवाहादिविधिः स्त्रीणां यत्र पुंसां च कीर्त्यते ।
स्त्रीपुंसयोग इत्येतद्विवादपदमुच्यते ॥

तत्र विवाहविधिः [4]विवाहकाण्डे वर्णितः ॥

## अथ स्त्रीपुंसधर्माः

तत्र 'पुरुषस्य स्त्रियां वृत्तिः' इत्यत्र—

मनुः [९, १-२]

पुरुषस्य स्त्रियाश्चैव धर्म्ये वर्त्मनि तिष्ठतोः ।
संयोगे विप्रयोगे च धर्मान् वक्ष्यामि [5]शाश्वतान् ॥

अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम् ।
विषयेषु च सज्जन्त्यः संस्थाप्या आत्मनो वशे ॥

1. स्त्रीपुंसयोगः–ज, द; स्त्रीपुंसंयोगः–स.
2. मया–उ.
3. यद्यपि स्त्रीपुंसयोः अन्योन्यमर्थिभावेन राजसभायां व्यवहारो निषिद्धः, तथापि प्रत्यक्षेण कर्णाकर्णिकयाऽपि ज्ञाते परस्परविहितवृत्तिव्यतिक्रमे दण्डादिना जायापती निजधर्ममात्रे राज्ञा स्थापनीयौ, अन्यथा दण्डनीयौ, इति विबोधयितुं व्यवहाराधिकरणे स्त्रीपुंधर्मः प्रदर्श्यते । (वि. र., ४०९)
4. A reference to गृहस्थकाण्ड, २ [पृ. ७०–१०१], G.O.S., No. CI., 1944.
5. 'शाश्वतान्' अवश्यकार्यान् (वि. र.); 'शाश्वतग्रहणं' स्तुतिः–मेधातिथिः

नारदः [१६, ३०]

स्वातन्त्र्याद्विप्रणश्यन्ति कुले जाता अपि स्त्रियः ।
अस्वातन्त्र्यमतस्तासां प्रजापतिरकल्पयत् ॥

मनुः [९, ३]

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रास्तु स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥[1]

याज्ञवल्क्यः [१, ८५]

रक्षेत्कन्यां पिता विन्नां[2] पतिः पुत्रास्तु वार्धके ।
अभावे ज्ञातयस्तेषां स्वातन्त्र्यं न क्वचित् स्त्रियाः ॥

हारीतः

एकव्रतस्कन्नभावात् परेन्द्रियोपहतत्वाच्च दुष्टाः कुलसङ्करकारिण्यो भवन्ति । जीवति जारजः कुण्डो मृते भर्तरि गोलकः । तस्माद्व्रतोपघाताज्जायां रक्षेत् । जायानाशे कुलनाशः । कुलनाशे तन्तुनाशः । तन्तुनाशे देवपितृयज्ञनाशः । धर्मनाशे आत्मनाशः । आत्मनाशे सर्वनाशः ॥

'एकव्रतस्कन्नभावा'दिति—एक एव पतिरिति योऽयं व्रतनियमः ततः स्खलनादित्यर्थः । 'तन्तुः' पुत्रपौत्रादिसन्ततिः ॥

1. 'रक्षा'नाम अनर्थप्रतिघातः । अनर्थस्तु अनाचारवृत्तातिक्रमेणाप्रवृत्तिपरेण च अन्यायतो धनहरणादिना परिभवः । तस्य प्रतिघातो निवारणम् । तत् पित्रादिभिः कर्तव्यम् । जीवत्यपि भर्तरि पितुः पुत्रस्य चाधिकारः । सर्वं एते सर्वदा तत्संरक्षणं कुर्युः...अस्यदेव अस्वातन्त्र्यं अन्या एव रक्षा । तत्र (५, १४७) च अस्वातन्त्र्यं उपदिष्टं, इह तु रक्षोच्यते । अस्यतन्त्राया अपि शक्योऽनर्थः प्रतिहन्तुम् । 'न स्त्री स्वातन्त्र्यमर्हति'—नानेन सर्वक्रियाविषयमस्वातन्त्र्यं विधीयते, किं तर्हि. नास्वतन्त्राऽन्यमनस्का स्वात्मसंरक्षणाय प्रभवति शक्तिविकलत्वात्स्वतः । पञ्चमे तु [५, १४७] वचनमस्वातन्त्र्यार्थम् अर्थान्तरस्य तत्रोक्तत्वात् ॥ (मेधातिथिः)

2. 'विन्नाम्' विवाहिताम् (वि. र., ४१०)

मनुः [९, ५-७]

सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्याः प्रयत्नतः ।[1]
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥

इमं हि सर्ववर्णानां पश्यन्तो धर्ममुत्तमम् ।
यतन्ते रक्षितुं भार्यां भर्तारो दुर्बला अपि ॥

[2]स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च ।
स्वधर्मं हि प्रयत्नेन जायां रक्षन् हि रक्षति ॥

वर्णसङ्करानन्तरं पैठीनसिः[3]

तस्माद्रक्षेत् भार्यां सर्वतः । मा स्म सङ्करो भवत्वित्याह ।

अप्रमत्ता रक्षत तन्तुमेनं
मा वः क्षेत्रे परबीजान्यवाप्सुः ।
भार्यां रक्षत कौमारीं बिभ्यतः पररेतसः ॥

बृहस्पतिः [२५, २]

सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यो निवार्या स्त्री स्वबन्धुभिः ।
श्वश्र्वादिभिर्गुरुस्त्रीभिः पालनीया दिवानिशम् ॥

नारदः [१६, २८-२९]

मृते भर्तर्यपुत्रायाः पतिपक्षः प्रभुः स्त्रियाः ।
विनियोगात्मरक्षासु भरणे तु स ईश्वरः ॥

1. 'प्रसङ्गः' कुसंपर्कः । 'रक्ष्याः' निवारणीयाः

2. न केवलं शास्त्रोपदेशादेव स्त्रीरक्षा कर्तव्या, यावदिमानि बहूनि प्रयोजनानि । 'प्रसूतिः' अपत्यम् पुत्रदुहितृलक्षणम् । संकरो म भवतीत्यर्थः । 'चरित्रं' शिष्टसमाचारः । 'कुलं' पूर्वोक्तम् । कस्यापि सत्कुलस्य भ्रष्टशीलायां भार्यायां दोषः सर्वकुलमुपतिष्ठतीति—'न साध्व्यः स्त्रियः एतेषाम्' इति । अथवा पितृपितामहादीनां संततिशुद्ध्यभावात् और्ध्वदैहिकस्यानिवृत्ते रक्षा स्यात् । 'आत्मानं'—प्रसिद्धं उपपतिनाऽवश्यं हन्यते भार्ययैव वा विषादिना । 'स्वं च धर्मं'—व्यभिचारिण्या धर्मानधिकारात् । अतो 'जायां' रक्षिता सर्वमेतद्रक्षति ॥ (मेधातिथिः)

3. तस्माद्रक्षेत भार्यां मा स्म वर्णसङ्कराभिभवोऽस्त्वित्याह । अप्रमत्तो रक्ष तन्तुमेव न वाद्ये क्षेत्रे परबीजानवाप्सुः भार्यां रक्षन्ति कौमारीं परचेतसः ॥ इति विवा[illegible]रत्नाकरे [४११]

परिक्षीणे पतिकुले निर्मनुष्ये निराश्रये ।
तत्सपिण्डेषु चासत्सु पितृपक्षः प्रभुः स्त्रियाः ॥

[1]पक्षद्वयावसाने तु राजा भर्ता स्मृतः स्त्रियाः ।
स तस्या रक्षणं कुर्यान्निगृह्णीयात्पथश्च्युताम् ॥

मनुः [९, ४]

कालेऽदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः ।
मृते भर्तरि पुत्रस्तु वाच्यो मातुररक्षिता ॥

बृहस्पतिः [२५, ५]

अप्रयच्छन् पिता काले पतिश्चानुपगन्मृतौ ।
पुत्रश्चाभक्तदो मातुर्गर्ह्या दण्ड्याश्च धर्मतः ॥

मनुः [९, १४-१५; ९, १७-२१; ९, १६]

नैता रूपं परीक्षन्ते नासां वयसि निश्चयः[2] ।
विरूपं रूपवन्तं वा[3] पुमानित्येव भुञ्जते ॥

पौंश्चल्याच्चलचित्तत्वान्नैस्नेह्याच्च स्वभावतः ।
रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्वते ॥

[4]शय्यासनमलङ्कारं कामं क्रोधमनार्जवम्[5] ।
द्रोहभावं[6] कुचर्यां[7] च स्त्रीभ्यो मनुरकल्पयत् ॥

1. नारदीयमनुसंहिता–१४, २९.

2. संस्थितिः–मेधातिथिपाठः; स. ज, B. J.; संस्थिते–क.

3. 'सुरूपं वा विरूपं वा–इति मेधातिथिपाठः

4. 'शय्या' शयनं, स्वप्नशीलत्वम् । 'आसनं' अनभ्युत्थानशीलता । 'अनार्यता' स्निग्धेऽपि द्वेषो, द्विष्टेऽपि स्नेहः (मेधातिथिः) ।

5. अनार्यताम्–इति मेधातिथिपाठः, स.

6. 'द्रोग्धृभावम्'–इति मेधातिथिः, द्रोग्धृत्वं भर्तृपित्रादेः ।

7. कुचर्या–नीचपुरुषसेवनम् (मेधातिथिः)

नास्ति स्त्रीणां क्रिया मन्त्रैरिति धर्मो व्यवस्थितः ।
निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः ॥[1]

तथाहि श्रुतयो बह्वयो निगीता निगमेष्वपि ।
[2]स्वालक्षण्यपरीक्षार्थं तासां शृणुत निष्कृतिम्[3] ॥

यन्मे माता प्रलुलुभे विचरन्त्यपतिव्रता ।
तन्मे रेतः पिता [4]वृङ्क्ता मित्यस्यैतन्निदर्शनम् ॥[5]

ध्यायत्यनिष्टं यत्किञ्चित्पाणिग्राहस्य चेतसा ।
तस्यैष व्यभिचारस्य निह्नवः सम्यगुच्यते ॥

एवं स्वभावं ज्ञात्वाऽऽसां [6]प्रजापतिनिसर्गजम् ।
परमं यत्नमातिष्ठेत्पुरुषो रक्षणं प्रति ॥

1. cf. बौधायनधर्मसूत्र, २, ३, ४७—'निरिन्द्रिया ह्यदायाश्च स्त्रियो मता इति श्रुतिः'। अत्र 'निरिन्द्रियाः' निर्गतरसाः इति गोविन्दस्वामिना व्याख्यातम् (पृ. १३५). See Varadarāja's *Vyavahāranirṇaya*, (पृ. ४५५) wherein the Vedic passage 'तस्मात् स्त्रियो निरिन्द्रिया अदायादाः' इन्द्रिय is interpreted as सोम, from the 'इन्द्रियं वै सोमपीथः' and this interpretation is also given by Mādhava (व्यवहारमाधवीय, पृ. ५३८). Medhātithi explains it as devoid of *indriyāh* (organs), organ here standing for strength, and explains that courage, patience, intelligence, energy are held as absent in women. He rejects the view that a sinning woman can, by repeating Vedic texts of expiation overcome the sin, as the rule prohibits women to deal with Vedic texts. See *Manusmṛti*, II, 66, which ordains that the sacramental rites for women should be done without Vedic texts.

2. स्त्रीलक्षणं परीक्षण्य- B. J.

3. 'निष्कृतीः'–इति मेधातिथिपाठः

4. 'वृक्ताम्' इति वि. र. पाठः (४१३)

5. पितृबीजप्रभावेन मातृदोषोऽपह्नूयतामित्यर्थः । 'अस्य' व्यभिचारात्मकस्य एत 'न्निदर्शनं' दृष्टान्तः । चातुर्मास्येष्वयं मन्त्रो विनियुक्तः (आपस्तम्बश्रौत, १, ९९) पायानुमन्त्रणे च श्राद्धे (शाङ्खायन गृह्य. ३, १३, ५) ॥ (मेधातिथिः)

6. 'प्रजापतिः' ब्रह्मा (वि. र., ४१३)

'निरिन्द्रिया' निर्वीर्या धैर्यप्रज्ञाबलादिरहिता इत्यर्थः । 'स्त्रियोऽनृत'मिति प्रायशोऽनृतवदनशीलत्वादुच्यते । 'श्रुतयः' श्रुतिवाक्यानि । 'निगमेषु' वेदेषु । 'स्वालक्षण्यं' [1]स्वरूपम् । तासामित्यादि—तासां श्रुतीनां मध्ये या निष्कृतिरूपा [मानस]व्यभिचारप्रायश्चित्तभूताः, ताः श्रुतीः 'शृणुत' स्त्रीस्वभावज्ञानार्थमित्यर्थः । 'तन्मे रेतः पिता वृङ्क्ता'मिति, तन्माता परपुरुषलोभजनितं पापं पितुः रेतोऽपनुदतु इति । 'पिते'ति षष्ठ्यर्थे प्रथमा । 'प्रजापतिनिसर्गजं' प्रजापतिर्हिरण्यगर्भः, तदीयनिसर्गे सृष्टिकाले जातम् ।[2]

दक्षः

जलौकवत्स्त्रियः सर्वा भूषणाच्छादनाशनैः ।
[3]सुभृतापि कृता नित्यं पुरुषं ह्यपकर्षति ॥

जलौका रक्तमादत्ते केवलं सा तपस्विनी ।
इतरा तु धनं वित्तं[4] मांसं वीर्यं बलं सुखम् ॥

साशङ्का बालभावे तु यौवनेऽभिमुखी भवेत् ।
तृणवन्मन्यते नारी वृद्धभावे स्वकं पतिम् ॥

[5]स्वाकाम्ये वर्तमाना सा स्नेहान्न च निवारिता ।
[6]अपथ्या तु भवेत्पश्चाद्यथा व्याधिरुपेक्षितः ॥

'स्वाकाम्ये' स्वेच्छायाम् ।

1. 'स्त्रीलक्षणं' स्त्रीस्वरूपं–B. J.

2. Comments reproduced *verbatim* by व्यवहारप्रकाश, ५१६–५१७; विवादरत्नाकर, (४१३)—repeats the comments, with slight variations.

3. सम्भृताश्चाहता–B. J., वि. र., ४१३.

4. चित्तं–स.

5. 'स्वकाम्ये' इति वि. र. पाठः, 'स्वेच्छायाम्' इति व्याख्यातम् । 'अपथ्या' अत्यन्ताहितहेतुः (वि. र.)

6. अपत्याभिभवे पश्चात्–वि. र., ४१४.

मनुः [९, ९]

यादृशं भजते हि स्त्री सूतेऽपत्यं तथाविधम् ।
तस्मात्प्रजाविशुद्ध्यर्थं स्त्रियो रक्षेत्प्रयत्नतः ॥

शङ्खलिखितौ

यस्मिन् भावोऽर्पितः[1] स्त्रीणामार्तवे [2]तादृशं पुत्रं जनयन्ति । यथा नीलवृषेण नीलवत्सप्रसवः । श्वेतेन श्वेत एव जायते । एवं योनिरेव बलवती । यस्माद्वर्णाः[3] संकीर्यन्ते ।

रामायणे

नैवाङ्गनानां दयितो नापि द्वेष्योऽस्ति कश्चन ।
सर्वमेवावलम्बन्ते लता गहनजा इव ॥

महाभारते

कुलीना रूपवत्यश्च नाथवत्यश्च योषितः ।
[4]न मर्यादासु तिष्ठन्ति स दोषः स्त्रीषु नारद ॥

अनर्थित्वान्मनुष्याणां भयात्परिजनस्य च ।
मर्यादायाममर्यादाः स्त्रियस्तिष्ठन्ति भर्तृषु ॥

यौवने वर्तमानानां मृष्टाभरणवाससाम् ।
नारीणां स्वैरवृत्तीनां स्पृहयन्ति कुलस्त्रियः ॥

यदि पुंसां गतिर्ब्रह्मन् कथञ्चिन्नोपपद्यते ।
अप्यन्योन्यं प्रवर्तन्ते न च तिष्ठन्ति भर्तृषु ॥

1. यस्मिन्नेवाऽर्पितः- बि.
2. तच्छीलं-स, द.
3. यस्माद्वर्णाः-स; यस्मिन् वर्णाः-ड.
4. मर्यादासु न तिष्ठन्ति-स, वि. र., ४१४.

अलाभात्पुरुषाणां हि भयात्परिजनस्य च ।
वधबन्धभयाच्चैव स्वयं गुप्ता भवन्ति ताः ॥

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचना[1] ॥

कामानामपि दातारं दातारं मानसान्त्वयोः ।
रक्षितारं न मृष्यन्ति यत्नतस्ताः स्त्रियः सदा ॥

## ७३ (क) अथ रक्षाविधिः

तत्र मनुः [९, १०-१२]

न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम् ।
एतैरुपाययोगैस्तु शक्यास्ताः [2]परिरक्षितुम् ॥

अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् ।
शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्य चेक्षणे ॥

अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः ।
आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः ॥

'पारिणाह्यं' कुण्डलकटकादि[3] ।

बृहस्पतिः [२५, ६]

[4]आयव्ययेऽर्थसंस्कारे गृहोपस्करक्षणे ।
शौचाग्निकार्ये संयोज्या [5]रक्षा [6]स्त्रीणामियं स्मृता ॥

1. नाः–ज.
2. परिवर्तितुम्–स.
3. कन्दुकगृहादि–वि; कुण्डकटाहादि–स.
4. आयव्ययेऽन्नसंस्कारे–स्मृ. चं., p. 566; स.
5. स्त्रीणां शुद्धिरियं स्मृता–स्मृ. चं., p. 566.
6. स्त्रीणामुदा ता–स.

मनुः [९, २२-२४; २६-२८; ८]

यादृग्गुणेन[1] भर्त्रा स्त्री संयुज्येत यथाविधि ।
तादृग्गुणा सा भवति समुद्रेणेव निम्नगा ॥[2]

अक्षमाला वसिष्ठेन संयुक्ताऽधमयोनिजा ।
शारङ्गी मन्दपालेन जगामाभ्यर्हणीयताम् ॥

एताश्चान्याश्च लोकेऽस्मिन्नपकृष्टप्रसूतयः ।
उत्कर्षं योषितश्चाप्ताः[3] स्वैः स्वैर्भर्तृगुणैः शुभैः ॥

प्रजनार्थं[4] महाभागा पूजार्हा गृहदीप्तयः ।
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥[5]

उत्पादनमपत्यस्य जातस्य परिपालनम् ।
प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्रीनिबन्धनम् ॥

अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा ।
दाराधीनस्तथा स्वर्गः पितृणामात्मनश्च ह ॥

पतिर्भार्यां संप्रविश्य गर्भो भूत्वेह जायते ।
जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ॥

1. गुणे च–वि.

2. भार्यारक्षणकामेन दौःशील्यादात्मा रक्षितव्यः । नाप्येतयैव केवलया । यतो दुःशीलस्य भार्याऽपि तथाविधैव भवति, गुणवतः शीलवती । यथा समुद्रेण 'निम्नगा' नदी संयुज्यमाना क्षारोदका भवति मधुररसापि सती ॥ (मेधातिथिः)

3. योषितः प्राप्ताः–वि. र., ४१७.

4. प्रजननार्थम्–इति मेधातिथिपाठः

5. शक्यप्रतिविधानत्वाद्दोषाणां 'पूजार्हाः' । यदेतद्दोषप्रपञ्चनं तन्नावज्ञानार्थं परिवर्जनार्थं वाऽभिशस्तपतितादिवत् । किं तर्हि रक्षार्थं दोषाणाम् । न हि भिक्षुकाः सन्तीति स्थाली नाधिश्रियते । न च मृगाः सन्तीति यवा नोप्यन्त इति । 'गृहे दीप्तय' इव–न हि गृहे सेवा स्त्रीभिर्विना काचिदस्तीति सुप्रसिद्धमेतत् । सत्यपि श्रीविभवे भार्यायामसत्यां सुहृत्स्वजनादिष्वागतेषु न गृहस्थाः प्रतिपुरुषं भोजनादिभिः आवर्जयितुं समर्थाः । यथा दरिद्रे न भवति शक्तिः, अतः 'स्त्रियः श्रियश्च न विशेषो गेहेषु' इति ॥ (मेधातिथिः)

महाभारते [आनु., ८१, १५]

श्रिय एताः स्त्रियो नाम सत्कार्या भूतिमिच्छता ।
लालिता निगृहीता च स्त्री श्रीर्भवति भारत ॥

मनुः [३, ५६-५९]

यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ।
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥

[1]शोचन्ति जामयो यत्र विनश्यत्याशु तत्कुलम् ।
न शोचन्ति तु यत्रैता वर्धते[2] तद्धि सर्वदा ॥

जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः[3] ।
तानि कृत्याहतानीव विनश्यन्ति समन्ततः ॥

तस्मादेताः सदाभ्यर्च्या भूषणाच्छादनाशनैः ।
भूतिकामैर्नरैर्नित्यं सत्कारेणोत्सवेषु च ॥

'जामयः' [4]'कुलस्त्रियः भगिनीस्नुषाद्याः ।

याज्ञवल्क्यः [१, ८२]

भर्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः ।
बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः ॥[5]

तथा [३, ७९]

[6]दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ।
वैरूप्यं मरणं वापि तस्मात्कार्यं प्रियं स्त्रियाः ॥

1. These three ślokas are omitted by Medhātithi.
2. वर्तते-ज, बि etc.; वर्धते इति स, कुल्लूकः
3. जामया यानि गेहानि शपन्त्या प्रतिपूजिताः–A. S. B.
4. स्वकुलस्त्रियः–ज, द, स.
5. सर्वोपकारकत्वात्, सन्तानस्य स्त्रीणां च तत्कारणत्वात्, सर्वैः पूज्या इति । न मूलान्तरपाठः । ज्ञातिशब्दो मातुलाद्यर्थः । चशब्दः सख्याद्यर्थः ।—(विश्वरूपः)
6. दोहदस्य–विश्वरूप–मिताक्षरापाठः

मनुः [९, ७४; ९, ९५-९६]

विधाय वृत्तिं भार्यायाः प्रवसेत्कार्यवान्नरः ।
अवृत्तिकर्षिता हि स्त्री प्रदुष्येत् स्थितिमत्यपि ॥

देवदत्तां पतिर्भार्यां विन्दते नेच्छयात्मनः ।
तां साध्वीं बिभृयान्नित्यं देवानां प्रियमाचरन् ॥

प्रजननार्थं स्त्रियः सृष्टाः सन्तानार्थं च मानवाः ।
तस्मात्साधारणो धर्मः श्रुतौ पत्न्या सहोदितः ॥

'स्थितिमती' कुलाचारसंपत्तियुक्ता । 'प्रजननं' गर्भसंग्रहणम् । 'सन्तानो' गर्भाधानम् ।

तथा [मनुः, ९, ८५-८७]

यदि स्वाः [1]स्वावराश्चैव विन्देरन् योषितो द्विजाः ।
तासां वर्णक्रमेणैव ज्यैष्ठ्यं पूजा च वेश्म च ॥[2]

भर्तुः शरीरशुश्रूषां धर्मकार्यं च नैत्यकम् ।
स्वा चैव कुर्यात्सर्वेषां नान्यजातिः कथंचन ॥[3]

यस्तु तत्कारयेन्मोहात्स्वजात्या स्थितयाऽन्यथा ।
यथा ब्राह्मणचण्डालः पूर्वदृष्टस्तथैव [4]सः ॥

1. स्वाश्चापराश्चैव–इति मेधातिथिपाठः

2. कामतः प्रवृत्ता यदि समानजातीया असमानजातीयाश्च 'विन्देरन्' विवाहयेयुः, तासां 'वर्णक्रमेण' जात्यनुरूपं 'ज्यैष्ठ्यम्' न वयस्तो न च विवाहक्रमतः। फले हि दाननिमित्ते 'पूजा' । प्रथमं ब्राह्मण्याः ततः क्षत्रियावैश्ययोः इत्येष वर्णक्रमः । 'वेश्म' प्रधानं गृहम्, तद्ब्राह्मण्याः । सवर्णानां विवाहक्रमो निश्चायकः स्मृतः ॥ (मेधातिथिः) नन्दन alone reads the three ślokas continuously. The others number the three as 74, 95 and 96.

3. अस्या निन्दार्थवादमाह–['यस्तु तत्कारयेत्' इत्यादिना]–मेधातिथिः; स्वस्यैव–गोविन्दराजः; नासजातिः–मेधा, गोवि; नास्यजातिः–कुल्लू.

4. च–ड.

याज्ञवल्क्यः [१, ८८]

सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत् ।
सवर्णासु विधौ धर्मे ज्येष्ठया न विनेतरा ॥[1]

विष्णुः [२७, १-४]

सवर्णासु बहुषु भार्यासु विद्यमानासु ज्येष्ठयैव सह धर्मकार्यं कुर्यात् । मिश्रासु कनिष्ठयाऽपि समानवर्णया । अभावे त्वनन्तरयैवापदि । न त्वेव च द्विजः शूद्रायाः ॥

छन्दोगपरिशिष्टे कात्यायनः[2]

अग्निशिष्टां हि शुश्रूषां बहुभार्यः सवर्णया ।
कारयेत्तद्बहुत्वं चेज्ज्येष्ठया गर्हिता न चेत् ॥

या वा स्याद्वीरसूरासामाज्ञासंपादिनी च या[3] ।
दक्षा प्रियंवदा शुद्धा तामत्र विनियोजयेत् ॥

दिनक्रमेण वा कर्म यथाज्यैष्ठ्यं[4] स्वशक्तितः ।
विभज्य सह वा कुर्युर्यथाज्ञानमशाठ्यवत् ॥

स्त्रीणां सौभाग्यतो ज्यैष्ठ्यं विद्ययैव द्विजन्मनाम् ।
न हि स्वल्पेन तपसा भर्ता तुष्यति योषिताम् ॥

1. सत्यां सवर्णायां अन्यां धर्मकार्यं न कारयेदिति संबन्धः । सवर्णास्वपि ज्येष्ठया विना नेतरां कनिष्ठाम् । तासामपि यथाज्यैष्ठ्यम् । विधौ अग्निहोत्रादिकर्मणि । धर्म्ये आज्यावेक्षणादौ क्रत्वर्थ इति यावत्-(विश्वरूपः)

2. कात्यायनस्मृतिः (अष्टादशस्मृतयः, पृ. १८३), ख. १९, ४-७ = गोभिलस्मृतिः (स्मृतीनां समुच्चयः, पृ. ६३), प्र. २, १५९-१६२. The first śloka not traced.

3. प्रिया-मु. कोशे

4. ज्येष्ठं-मु. कोशे

भर्तुरादेशवर्तिन्या योषया[1] बहुभिर्व्रतैः ।
अग्निः [2]शुश्रूषितो यत्र सा स्त्री सौभाग्यमाप्नुयात् ॥[3]

<u>दक्षः</u>

प्रथमा धर्मपत्नी तु द्वितीया रतिवर्धिनी ।
दृष्टमेव फलं तत्र नादृष्टमुपपद्यते ॥

धर्मपत्नी समाख्याता निर्दोषा यदि सा भवेत् ।
दोषे सति न दोषः स्यादन्या कार्या गुणान्विता ॥

'शूद्रा' इत्यनुवृत्तौ म. विष्णू[4]

दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु ।
[5]नाश्नन्ति पितृदेवास्तन्न च स्वर्गं स गच्छति ॥

<u>मनुः</u> [३, ६०-६२; ९, १०१-१०२]

सन्तुष्टो भार्यया भर्ता भर्त्रा भार्या तथैव च ।
यस्मिन्नेतत्कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥

यदि हि स्त्री न रोचेत पुमांसं न प्रमोदयेत् ।
अप्रमोदात्पुनः पुंसः प्रजनं न प्रवर्तते ॥

स्त्रियां तु रोचमानायां सर्वं तद्रोचते कुलम् ।
तस्यामरोचमानायां सर्वमेव न रोचते ॥

अन्योन्यस्याऽव्यभीचारो भवेदामरणान्तिकः ।
एष धर्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः ॥

1. यथोमा–मु. कोशे　　　　2. अग्निश्च तोषितोऽमुत्र–मु. कोशे

3. तद्बहुत्वे चेदगर्हिता यदि ज्येष्ठा तदा तया धर्मकार्यं कारयेत् । यदि तु ज्येष्ठा गर्हिता, तदानेकासु सवर्णासु अनध्यवसाये या स्याद्वीरसूरित्यादिनाऽध्यवसायः कार्य इत्यर्थः । (वि. र., ४२१)

4. मनुस्मृतिः, ३, १८; विष्णुस्मृतिः, २६, ७. 'पितृदेवाः' बहुवचनादतिथयश्च (वैजयन्ती)

5. नादन्ति–मेधा. नाश्नन्ति–कुल्लूकः.

तथा नित्यं यतेयातां स्त्रीपुंसौ तु कृतक्रियौ ।
यथा नातिचरेतां तौ वियुक्ताावितरेतरम् ॥[1]

याज्ञवल्क्यः [१, ७४]

यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्धते ।[2]

दक्षः

गृहवासः सुखार्थो हि पत्नीमूलं च तत्सुखम् ।
सा पत्नी या विजानाति [3]चित्तज्ञा वशवर्तिनी ॥

अनुकूला त्ववाग्दुष्टा दक्षा साध्वी प्रजावती ।
एभिरेव गुणैर्युक्ता श्रीरेव स्त्री न संशयः ॥

[4]प्रहृष्टमानसा नित्यं स्थानमानविचक्षणा ।
भर्तुः प्रीतिकरी या तु सा भार्या इतरा [5]जरा ॥

व्यासः

पूर्वोत्थानपरा दक्षा जघन्यासनशायिनी ।
अवाग्दुष्टानुकूला स्त्री भवेद्वै पुण्यकर्मणः ॥

अथ दक्षः

दुःखासिका [6]कलिर्भेदश्छिद्रं पीडा परस्परम् ।
प्रतिकूलकलत्रस्य द्विदारस्य न संशयः ॥

1. अविशेषेण वचनक्रिया सर्वक्रियासु 'अव्यभीचारः' (मेधातिथिः)

2. यत्रानुकूल्यमैकमत्यं जायापत्योः 'त्रिवर्गो' धर्मार्थकामलक्षणस्तत्र वृद्धिमुपैति । अन्यथा तु विपर्ययः स्यात्-(विश्वरूपः)

3. 'तथाज्ञावशवर्तिनी' इति विवादरत्नाकरे (४२२) ।

4. प्रकृष्टमानसा-द, वि. र., ४२२, foot-note.

5. जना (?)-उ.

6. कलिर्दोषश्छिद्रं-B. J., वि. र., ४२३; कुनिर्वेदः-ज.

मनुः [९, ७७-७९]

संवत्सरमुदीक्षेत द्विषन्तीं[1] योषितं पतिः ।
ऊर्ध्वं संवत्सरादेनां दायं [2]हृत्वा न संवसेत् ॥[3]

[4]अतिक्रामेत्प्रमत्तं या मत्तं रोगार्तमेव वा ।
सा त्रीन्मासान्परित्याज्या विभूषणपरिच्छदा ॥

उन्मत्तं पतितं क्लीबमबीजं पापरोगिणम् ।
न च द्विषन्त्यास्त्यागोऽस्ति न च दायापवर्तनम्[5] ॥

अथ नारदः [१५, ९५]

अनुकूलामवाग्दुष्टां दक्षां साध्वीं प्रजावतीम् ।
त्यजन्भार्यामवस्थाप्यो राज्ञा दण्डेन भूयसा ॥

'चौरवच्छास्य' इत्यनुवृत्तौ विष्णुः [५, १६२-१६३]

निर्दोषं परित्यजन्पत्नीं च ।[6]

याज्ञवल्क्यः [१, ७६]

आज्ञासंपादिनीं दक्षां वीरसूं प्रियवादिनीम् ।
त्यजन्दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः ॥[7]

1. 'द्विषाणां' इति मेधातिथिपाठः

2. हृत्वा इति मेधातिथिपाठः; 'कृत्वा' इति वि. र.

3. द्वेष्यः पतिः यस्यास्तां 'द्विषाणाम्' । एतेन तु न निष्कासनं कुर्यात् । संपूर्वस्य वसेरेनामिति च द्वितीयानुपपत्तेः । 'वासयेत्' इति निर्भर्त्सयेत् । पातकेऽपि तस्या निष्कासनं नास्ति 'निरुन्ध्यादेकवेश्मनि' इति वचनात् । प्रायश्चित्तेऽप्यस्मिन् निमित्ते विनयाधानार्थोऽपहार इष्यते । न सर्वेण सर्वं आत्यन्तिक आच्छेदः । (मेधातिथिः)

4. 'अतिक्रमः' तदुपचर्यावज्ञानं पथ्यौषधादिष्वतत्परता, न पुरुषान्तरसंचारः (मेधातिथिः) ।

5. 'अपवर्तनं' अपहारः । प्रोषितप्रतिषिद्धानादयः स्मृत्यन्तरनिषिद्धाः । (मेधातिथिः)

6. 'निर्दोषां परित्यजन् । पत्नीं च ।' इति वैजयन्त्यादृतपाठः । 'निर्दोषां' त्यागहेतुभूतदोषरहिताम् (व्यव. प्रकाश, ५२०)

7. Omitted by विश्वरूप । 'वीरसूं' पुत्रवतीम् । यस्त्यजति अधिविन्दति च राज्ञा सधनस्य तृतीयांशं दाप्यः । निर्धनस्तु भरणं ग्रासाच्छादनादि दाप्यः । (मिताक्षरा)

देवलः

स्वदारांस्त्यजतो मोहान्नरस्यान्यायमोचिनः ।
धर्मवंशपरित्यक्तुर्निष्कृतिर्न विधीयते ॥[1]

कुष्ठिनीं[2] पतितां वन्ध्यामुन्मत्तां विगतार्तवाम् ।
अदुष्टां लभते त्यक्तुं तीर्थान्न त्वेव कर्मणः ॥

'अन्यायमोचिनः' अन्यायेन मोक्तुः । 'तीर्थाद्' योनितः[3] । 'कर्मणः' पापकर्मादितः[4] ।

नारदः [१५, ९०; ९२-९४]

अन्योन्यं त्यजतोरागः स्यादन्योन्यविरुद्धयोः[5] ।
स्त्रीपुंसयोर्निगूढाया व्यभिचाराद्दते स्त्रियाः ॥

स्त्रीधनभ्रष्टसर्वस्वां गर्भविस्रंसिनीं[6] तथा ।
भर्तुश्च वधमिच्छन्तीं स्त्रियं निर्वासयेद्गृहात् ॥

अनर्थशीलां सततं तथैवाप्रियवादिनीम् ।
पूर्वाशिनी च या भर्तुस्तां स्त्रीं निर्वासयेद्गृहात् ॥

वन्ध्यां स्त्रीजननीं [7]निन्द्यां प्रतिकूलां च सर्वदा ।
कामतो नाभिनन्देत कुर्वन्नेवं न दोषभाक् ॥

1. शास्त्रोक्तत्यागहेतून् विनैव यो मोहादिना स्वस्त्रियं त्यजति तस्यान्यायेन स्वादारमोचिनः तन्मोचनद्वारेण तया सह विहितश्रौतस्मार्तादिधर्मस्य तस्यां उत्पाद्यमानसन्तानस्य च त्यक्तुर्निष्कृतिर्नास्तीत्यर्थः । इह लोके तस्य राज्ञा चोरवद्दण्डनं कार्यम् ॥ (स्मृतिचन्द्रिका, p. 576.)

2. कुष्ठितां–उ.

3. 'तीर्थात्' संभोगत इत्यर्थः (स्मृ. चं.)

4. 'कर्मणः' या यत्कर्मार्हति ततः–स.

5. विशुद्धयोः–बि.

6. गर्भविश्रंथिनीम्–B. J., चि. र.

7. नित्यप्रतिकूलाश्च–चि. र., ४२५.

'आगः' पापम् । 'निगूढा' रक्षिता । 'स्त्रीधनभ्रष्टसर्वस्वा' स्त्रीधनत्वेन भ्रष्टं भ्रंशितं सर्वस्वं यया सा तथोक्ता । 'भ्रष्ट'मत्रान्तर्भावितण्यर्थम् ॥[1]

यमः[2]

ऋतुस्नाता तु या नारी भर्तारं नोपगच्छति ।
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं तु विवासयेत् ॥

भर्तुः प्रतिनिवेशेन या वृथा गमयेदृतून् ।
तां तु विख्याप्य बन्धूनां भ्रूणघ्नीं तु विवासयेत् ॥[3]

'प्रतिनिवेशेन' अतिद्वेषेण ।

बौधायनः[4]

अशुश्रूषाकरीं वन्ध्यां बन्धकीं परिहिंसकीम् ।
त्यजन्ति पुरुषाः प्राज्ञाः क्षिप्रमप्रियवादिनीम् ॥[5]

अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत् ।
प्रेतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम् ॥[6]

वसिष्ठः [२१, ९-१०]

व्यवाये तीर्थगमने धर्मेभ्यश्च निवर्तते ॥

1. 'स्त्रीधनभ्रष्टसर्वस्वां' स्त्रीधनेन भ्रष्टं सर्वस्वं यस्याः सा तथा। स्त्रीधनेन भ्रष्टं भ्रंशितं सर्वस्वं यया सा तथा वा भ्रष्टमन्तर्भावितण्यर्थमिति कल्पतरुः (वि. र., ४२४)

2. Wrongly ascribed to Manu by वि. र., ४२५.

3. 'प्रतिनिवेशेन' द्वेषेण । एवञ्चैतत्पूर्ववाक्ये द्वेषातिरिक्तं असमञ्जसकारणं विवक्षितमित्यर्थभेदः । उत्तरवाक्यं बहुऋतुपरं वा । (वि. र., ४२५); identical with बौधायनस्मृ. ४, १-२५.

4. Not traced in बौ. ध. सू.

5. त्यागश्च वधप्रतिनिधित्वेन कार्यः । (व्यवहारमाधवीय, ४७७)

6. बौधायन, ध. सू., २, ४, ६ । 'अधिवेदनमत्र विवक्षितम्, न त्यागः' (गोविन्दस्वामी, ११८)

[1]चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या ।
पतिघ्नी च विशेषेण जुङ्गितोपगता[2] च या ॥

याज्ञवल्क्यः [१, ७२][3]

व्यभिचाराद्दतौ शुद्धिर्गर्भे त्यागो विधीयते ।
[4]गर्भभर्तृवधे तासां तथा महति पातके ॥[5]

हारीतः

गर्भघ्नीमधोवर्णगां शिष्यसुतगामिनीं च । पानव्यसनसंसक्तां च । [6]धनधान्यक्षयकरीं च वर्जयेत् ॥

यमः

स्वच्छन्दगा च या नारी तस्यास्त्यागो विधीयते ।
न चैव स्त्रीवधं कुर्यान्न चैवाङ्गविकर्तनम् ॥

स्वच्छन्दव्यभिचारिण्यां [7]विवस्वांस्त्यागमब्रवीत् ।
न बन्धनं न वैरूप्यं[8] वधं स्त्रीणां विवर्जयेत् ॥

1. Ascribed to व्यास by मिताक्षरा (१, ७२)

2. शुङ्कितोपगता–उ; 'जुङ्गितः' प्रतिलोमजः चर्मकारादिः इति मिताक्षरा (१, ७२)

3. Wrongly ascribed by वि. र., ४२५ to वसिष्ठ.

4. Printed text reads: गर्भभर्तृवधादौ च; B. J. reads यथा for तथा.

5. एतच्च मानसव्यभिचारे। यदाह मनुः 'रजसा स्त्री मनोदुष्टा' इति। व्यभिचारे सति यदि रजोदर्शनात्मकऋतुप्रवृत्त्या गर्भाभावनिश्चये 'शुद्धिः' शुद्धिहेतुः प्रायश्चित्तक्रिया कार्या। गर्भे तु व्यभिचारिण्यास्त्याग एव, न प्रायश्चित्तम्। महापातकेषु स्त्रीपुरुषसाधारणेषु सत्सु संभोगसंस्पर्शसंभाषसहाधिकारविषयस्त्यागः, न पुनर्गृहान्निर्वासनरूपः॥ (अपरार्कः)

6. धनधान्यहरीं च–स.

7. विवस्वान् त्यागं अब्रवीत्–द, स, B. J.

8. न बन्धं न च वैरूप्यं–स.

अथ याज्ञवल्क्यः [१, ७०]

हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ।
परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम् ॥

नारदः [१५, ९१]

व्यभिचारे स्त्रियो मौण्ड्यमधःशयनमेव च ।
कदन्नं च कुवासश्च कर्म चावस्करोज्झनम्[1] ॥

## ७३ (ख) अथ स्त्रीधर्माः

तत्र मनुः [५, १४७-१४९]

बालया वा युवत्या वा वृद्धया वापि योषिता ।
न स्वातन्त्र्येण कर्तव्यं किञ्चित्कार्यं गृहेष्वपि ॥

बाल्ये पितुर्वशे तिष्ठेत्पाणिग्राहस्य यौवने ।
पुत्राणां भर्तरि प्रेते न भजेत्सा स्वतन्त्रताम् ॥

पित्रा भर्त्रा सुतैर्वापि नेच्छेद्विरहमात्मनः ।
एषां हि विरहेण स्त्री गर्ह्ये कुर्यादुभे कुले ॥

बृहस्पतिः [२५, ९]

भर्त्रा पित्रा सुतैर्न स्त्री वियुक्तान्य[गृहे] वसेत् ।
असत्सङ्गे विशेषेण गर्ह्यतामेति सा ध्रुवम् ॥

याज्ञवल्क्यः [१, ८६]

पितृमातृसुतभ्रातृ[2] श्वश्रूश्वशुरमातुलैः ।
हीना न स्याद्विना भर्त्रा गर्हणीयाऽन्यथा भवेत् ॥

1. चावस्करोर्ज्झनम्–उ.

2. भर्तृशब्दोऽयं रक्षकमात्रे वर्तते । मात्रादिवचनादन्यामपि स्त्रियं वृद्धां काञ्चिदुपासीत । न तु स्वतन्त्रा स्यात् । (विश्वरूपः) ॥ भर्तृरहिता पित्रादिरहिता वा न स्यात्, यस्माद्रहिता 'गर्हणीया' निन्द्या भवेत् । एतच्च ब्रह्मचर्यपक्षे । 'भर्तरि प्रेते ब्रह्मचर्यं तदन्वारोहणं वा' इति विष्णुस्मरणात् । अन्वारोहणे महानभ्युदयः । (मिताक्षरा)

मनुः [५, १५०]

सदा प्रहृष्टया भाव्यं गृहकार्ये च दक्षया ।
सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥[1]

याज्ञवल्क्यः [१, ८३]

संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी ।
कुर्याच्छ्वशुरयोः पादवन्दनं भर्तृतत्परा ॥

बृहस्पतिः [२५, १०]

पूर्वोत्थानं गुरोरर्वाक् [2]भोजनाभ्यञ्जनक्रिया ।
जघन्यासनशायित्वं कर्म स्त्रीणामुदाहृतम् ॥

देवलः

[3]अस्वातन्त्र्यं पतिशुश्रूषा सहधर्मचर्या तत्पूज्यपूजनं [4]तद्द्वेष्यद्वेषणमदुष्टभावता नित्यानुकूल्यं तत्कार्यपरत्वमिति स्त्रीधर्मः ॥

विष्णुः [२५, २-८]

भर्तुः समानचारित्वम्[5] । [श्वश्रू][6]श्वशुरगुरुदेवतातिथीनां पूजनम् । सुसंस्कृतोपस्करता । अमुक्तहस्तता । सुगुप्तभाण्डता । मूलक्रियास्वनभिरतिः । मङ्गलाचारातत्परता ॥[7]

1. 'सुसंस्कृतोपस्करया' 'उपस्करं' गृहोपयोगि भाण्डं कुण्डघटिकादि तत् सुसंस्कृतं सुसंमृष्टं शोभावत् कर्तव्यम् । व्यये च मितशात्यातिथ्यभोजनार्थे धने अमुक्तहस्तया उदारया न भवितव्यम् । न बहु व्ययितव्यम्—(मेधातिथिः)

2. भोजनव्यञ्जनक्रिया–स.

3. अस्वातन्त्र्यं च शुश्रूषा–स.

4. तद्द्वेष्यमाणद्वेषणम्–वि. र. पाठः (४२८); स.

5. समानव्रतचारित्वम्–स, वि. र., ४२८.

6. श्वश्रूश्वशुर–इति मु. वि. स्मृ., ७६.

7. विवादरत्नाकर (४२८) continues the quotation further thus: भर्तरि प्रोषिते [प्रवासिते]ऽप्रतिकर्मक्रिया । परगृहेष्वनभिगमनम् । द्वारदेशगवाक्षेष्वनवस्थानम् । सर्वकर्मास्वतन्त्रता । बाल्ययौवनवार्धक्येषु [ष्वपि] पितृभर्तृपुत्रपराधीनता ॥ (वि. स्मृ. २५, ९–१३)

महाभारते

यदैव भर्ता जानीयान्मन्त्रमूलपरां स्त्रियम् ।
उद्विजेत तदैवास्याः सर्पाद्वेश्मगतादिव ॥

पृथिवीं प्रति लक्ष्मीवाक्ये—विष्णुः [९९, २१-२२]

नारीषु नित्यं शुचिभूषितासु
पतिव्रतासु प्रियवादिनीषु ।
अमुक्तहस्तासु प्रजान्वितासु
सुगुप्तभाण्डासु बलिप्रियासु ॥
[1]सुश्लिष्टवेश्मासु जितेन्द्रियासु
कलिव्यपेतासु विलोलुपासु[2] ।
धर्मव्यपेक्षासु दयान्वितासु
स्थिता सदाऽहं जगतां विधात्री ॥[3]

शङ्खलिखितौ

श्वः श्वः पचनभाण्डानामुपलेपनं सुसंमृष्टगृहद्वारोपलेपनं कृतशौचानुकूल्यदध्यक्षतदूर्वाप्रवालपुष्पकृतबलिकर्मे [4]श्वश्रूश्वशुराभिवादनानन्तरं गृहावश्यकानि कुर्यात् । न देवभृत्यातिथिभ्यो[5]ऽग्रेऽश्नीयात् । न भर्तुरन्यत्र प्रतीकारौषधात् ॥

'श्वः श्वः पचनभाण्डाना'मिति, 'पचनभाण्डानां' स्थाल्यादीनां आगाम्यागामिदिने उपलेपनं कर्तव्यमित्यर्थः ॥[6]

1. Printed text and ख read 'संसृष्टवेश्मासु'
2. *Ibid.*, पथि स्थितासु
3. *Ibid.*, मधुसूदने तु
4. श्वश्रूश्वशुराद्यभिवादनान्तरं-वि. र. पाठः (४२९)
5. न देवभूतपतिभ्यो-*Ibid.*
6. 'अन्यत्र प्रतीकारौषधात्' रोगप्रतीकरणमौषधं तु भर्तुरग्रेऽभीयादित्यर्थः । (वि. र., ४२९)

ऋष्यशृङ्गः

गृहमेधा भवेन्नित्यं भूषणानि च पूजयेत् ।
नित्यस्नानकृतां [1]वेणीमर्चयेत्पुण्यवाससा[2] ॥
पूर्वमेव [3]रहो गच्छेद्यावन्नान्यः प्रबुध्यते ।
देवताराधनं कुर्याद्धूपपुष्पबलिं हरेत् ॥[4]

'गृहमेधा' गृहकृत्यतत्परा । 'भूषणानि च पूजयेत्' भूषणानि मार्जनादिना संस्कुर्यात् ।

शङ्खलिखितौ

स्त्री नानुक्ता बहिर्निष्क्रामेत् । नानन्तरीया परिधावेत् । नानुत्सवे गन्धमाल्याभरणानि विकृतानि वासांसि बिभृयात् । न परपुरुषमभिभाषेत । अन्यत्र वणिक्प्रव्रजितवृद्धेभ्यः । न नाभिं दर्शयेत् । कुलवधूरागुल्फाभ्यां वासः परिदध्यात् । न स्तनौ विवृतौ कुर्यात् । न हसेतानावृतम् । न महाजने ॥

'अनावृतं' हस्ताभ्यां मुखमनाच्छाद्य[5] ।

व्यासः

द्वारोपसेवनं नित्यं गवाक्षेण निरीक्षणम् ।
असत्प्रलापो हास्यं च दूषणं कुलयोषिताम् ॥

मनुः [९, १३]

पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् ।

1. वाणीम्–उ.
2. पुष्पवाससा–ज, द, स, वि. र., ४३०.
3. बहिर्गच्छेत्–वि. र., ४३०.
4. 'गृहमेधा' गृहकृत्यपरा । 'नित्यस्नानकृतां' नित्यस्नानाम्बरकृताम् । (वि. र., ४३०)
5. अनावृतं मुखमनाच्छाद्य न महाजनव्यवहितमपि हसेदित्यर्थः । (वि. र., ४३०). 'श्वशुरादिश्रेष्ठानां मध्ये न गाहेत स्वमनाच्छाद्य'–A. S. B., ज.

स्वप्नोऽ[1]न्यगेहवासश्च [2]नारीसंदूषणानि षट् ॥[3]

<u>बृहस्पतिः</u> [२५, ११]

पानाटनदिवास्वप्नमक्रिया दूषणं स्त्रियः ।

'अक्रिया' गृहकृत्याननुष्ठानम् ।[4]

<u>शङ्खलिखितौ</u>

न गणिकाधूर्तचारिणी[5]प्रव्रजितेक्षणिकामायाविनीकुहकशीलाविप्लुताभिः सहैव तिष्ठेत् । संसर्गेण हि चारित्र्यं दुष्येत् । न भर्तुः प्रतिकूलमाचरेत् । न प्रकीर्णभाण्डभाजनोपस्करद्रव्या नोत्थानखट्वासनपादुका स्यात् ॥

'ईक्षणिका' दैवज्ञा ।[6]

<u>हारीतः</u>

अथ पत्न्याचारमनुक्रमिष्यामो गृहं पत्नी न ह्यपत्नीकं विद्यात् । तस्मात्पत्नी गृहाचारपरा[7] स्यात् । सुसंमृष्टोत्पादितसंस्कारा सूपलिप्तार्चितवेश्मानि

1. ऽन्यगृहे वासश्च–वि; वि. र.

2. वासश्च नारीणां दूषणानि–स.

3. 'अटनं' आपणभूमिषु अन्नशाकादिक्रयार्थम्, देवतायतनेषु च । ज्ञातिकुले बहूनि दिनानि अवस्थानं 'अन्यगेहवासः' । 'नारीसन्दूषणानि' स्त्रीणामेते चित्तसंक्षोभहेतवः । एता हि श्वशुरादिभयं जनापवादभयं च त्यजन्ति ॥ (मेधातिथिः)

4. 'अक्रिया'ऽत्र गृहक्रियानाचरणम् । (वि. र., ४३२)

5. 'प्रव्रजिता' missing in वि. र., ४३१, and स्मृ. चं., p. 586.

6. 'गणिका' वेश्या । 'ईक्षणिका' दैवज्ञा । सा चात्र परचारित्र्यखण्डनानुकूलाभिसंधियुक्ता । 'मायाविनी' संमोहिका सापि तथा धूर्तचारिणीतोऽस्या भेदविवक्षया उपादानम् । 'कुहकशीला' चारित्र्यखण्डनोच्छेदकारिणी सा चोक्ताभ्योऽन्यथा विवक्षिता । 'विप्लुता' पातित्यादिदोषवती ॥ (वि. र., ४३१)—'कुहकशीला' शठस्वभावा । 'विप्लुता' जारादिभिर्नष्टा । एकतः स्थितिनिषेधोऽयं पुनः पुनः क्रियमाणविषय इति हेत्वभिधानादवगम्यते । न हि सकृदेकत्रस्थित्या कुलवधूनां चारित्र्यं दुष्यति ॥ (स्मृतिचन्द्रिका, ed. Mysore, p. 586.)

7. 'गृहपरा'–वि. र., ४३१.

पतितानि प्रतिकुर्यात् । अगुप्तं गोपयेत् । [1]अन्यपुरुषेक्षणं दुष्टकथादिभाषणं[2] दुष्टप्रव्रजितस्त्रीसंसर्गं च वर्जयेत् । परगृहरथ्याचत्वरवीथीप्रव्रजितालयांश्च नाभिगच्छेत् । कूपपथस्थानं सन्धिवेलासंचरणं[3] च वर्जयेत् । परशयनासन-वस्त्राभरणानि[4] मनसाऽपि नाध्यवस्येदापुनःसंस्कारात् । तथैकपात्र्यं मद्यमांसानि । उच्छिष्टनिर्माल्यं च । अन्यत्र गुरुभर्तृसुतेभ्यः । अनन्यपुरुषलोलुपा-नर्थान् वर्जयेत् । तथा प्रत्युद्गमनमालस्यवैक्लव्यनौल्यादि[5] । नोच्छिष्टा देवागारं प्रविशेत् । नाप्रोक्ष्याविमृश्यापर्यग्निकृत्य श्रापयेत् । नाप्रक्षालितपाणि-र्यावकोत्पवनगोरसधाना[6] गृह्णीयात् । स्थाल्यपिधानदर्वीः प्रक्षाल्योपकरणानि [7]गुप्ते निधापयेत् । श्वोभूते प्रतिप्रक्षाल्य [8]पचनार्थान्कुर्यात् । गोरसधान्यानि चास्य निर्देशे गृह्णीयात् । शृते प्रक्षाल्योपलिप्य परिमृज्य तैजसानि वेश्मावमार्जनं प्रत्युपलेपनानि कृत्वा वैश्वदेवकाल इति प्रचोदनं स्नानहेतोः । स्नाता[9] शुक्ले वाससी परिधाय पाणिपादं प्रक्षाल्योत्क्रम्याचम्य देवागारं प्रविश्य नमस्कृत्यायतनेऽग्निमुपसमाधाय समिद्दर्भपुष्पबलिशान्तिपात्राण्याहृत्या-ज्यमभिघार्य[10] यच्चान्यदाह्निकं स्यात् । हुते देवेभ्य उद्वाहाग्नौ देवपत्नीभ्यो बलिं हरेद्भर्तृनिर्देशे । कृते देवातिथ्ये यथास्वं गृहिणस्तर्पयित्वा शिष्यान्

1. अन्यपुरुषेण सहेक्षणाभिभाषणम्-वि. र.
2. कथाभिभाषणं-स.
3. संचरं च-वि. र.
4. A. S. B. adds परस्त्रीभूषणानि
5. भोज्यानि-उ.
6. दधि-वि. र., ४३२; धान्यानि, B. J., ज.
7. गुप्ता निधाय वसेत्-स.
8. पचनार्थानि कुर्यात्-स.
9. स्नात्वा-वि. र., ४३३.
10. भक्तमाज्येनाभिघार्य-वि. र., ४३३.

सुहृदः पतिं च तदनुज्ञातावशेषं[1] पत्नी गृहे भुक्त्वा प्रतिस्वाभिरुपस्पृश्य शेषं भाण्डानि[2] निर्णिज्य प्रक्षाल्य च [3]बहिरुत्तरपूर्वस्यां दिशि वास्तुभूतपशुपतये रुद्राय नम इति निर्णीय । एवं सायं शृतादि । यथार्थे सुविशिष्टेषु[4] नमो भगवते रुद्राय भस्मसदे भस्मना रक्षां करोमीति भस्मना द्वारमपिधाय स्वामिसुतादीनात्मानं चालभेत् । यच्चान्यद्रक्ष्यं स्यात् । नाप्रक्षालितपाणिपादा संविशेत् । न नग्ना । नोच्छिष्टा । नानमनीया । नानमस्यभर्तृपादा । [5]नाविदितोत्थाना । पूर्वोत्थायिनी । अनुपस्थायोदकधाना[6] । अनुसरणवेश्मार्चनी । प्रदक्षिणा । प्रशान्ता । सौम्याहिता । भर्तुः प्रियवादिनी । नोपरिष्टात् स्थिता[7] आसीत । नोच्चैर्न वितर्कस्थाने नाऽभीक्ष्णमीक्षेत । परिवृज्य संवाहयित्वा उपासीत । व्यजनेनोष्णे वर्षे घर्माम्भांस्यस्य गात्रेभ्यः परिमृज्यात् । शिरसश्चानवस्थितस्य[8] समाधानम् । ग्रामान्तराहृतभारातिक्रान्तमायान्तमुपगच्छेत हृष्टमना[9] अर्घ्येणार्घयेत्[10] । व्रतधारणं देवकार्यं स्नानं [11]वानुज्ञातया कार्यम् ॥

'कूपपथस्थानं' कूपानुयायिवर्त्मावस्थानम् । 'ऐकपात्र्यं' सहभोजनम् । 'गुरवः' श्वशुरादयः । 'लोलुपा' स्पृहा । 'अनर्थः' निष्प्रयोजनोऽर्थव्ययः । 'प्रत्युद्वदनं' प्रतिकूलाभिधानम् । 'तौल्यं' स्वकुलाद्यनुचितवेषभाषादीति

1. तदनुज्ञाता शेषम्-वि. र. पाठः (४३३)
2. भाण्डं निर्णिज्य-*Ibid.*, स.
3. बहिरुत्तरपूर्वस्यमदिशि-*Ibid.*
4. अवशिष्टेषु-*Ibid.*
5. नाविरतोत्थाना, नानुसूर्योत्थायिनी-*Ibid.*, ४३४.
6. अनुपदस्थोदक-स; अनुपस्थायोदकधाना-वि. र., ४३४.
7. नोपविष्टा स्थिता-स.
8. शिरसश्चावस्थितस्य-वि. र., ४३४.
9. अदुष्टमना-वि. र. पाठः
10. अर्चयेत्-वि. र., ४३४.
11. Omitted by वि. र.

[1]जयस्वामी । 'अविमृश्य' केशकीटादिकमविचार्य । 'यावकः' पिष्टकादिः[2] । 'उत्पवनं' चालनी[3] । 'अस्य निर्देशे' भर्तुरनुज्ञाने । 'स्नानहेतोः' पत्युरिति शेषः । 'यच्चान्यत्' इति, अन्यन्मण्डकादि[4] । 'आह्निकं' तदहर्भोज्यम्, तच्चाभिघार्य भर्तुर्निर्देशे तिष्ठेदिति शेषः । 'शेषम्' आह्निकशेषं अशिष्टमपि । 'प्रतिस्वाभिः' आत्मार्थोपकल्पिताभिरद्भिः । 'उपस्पृश्य' आचम्य । 'निर्णिज्य' अन्नमलापकर्षणं कृत्वा । 'भूतादि' भूते प्रक्षाल्योपलिप्येत्यादि रुद्रबलिपर्यन्तम् । 'आलभेत' भस्मोपलिप्तेन हस्तेन स्पृशेत् । 'अनुपस्थायोदकधाना'[5] अरिक्तोदकपात्रा । 'प्रदक्षिणा' सोत्साहा । क्रमेषा वीक्ष्यत इति यत्र लोकस्य विचारणा भवति तद् 'वितर्कस्थानम्' । 'परिमृज्य' पादयो रजः । 'संवाहयित्वा' अङ्गमर्दनं कृत्वा । 'व्यजनेनोष्णे' व्यजनेन उष्णकाले उपासीत । 'अनवस्थितस्य' आकुलितचेतसः ॥[6]

छान्दोग्यपरिशिष्टे कात्यायनः[7]

[8]पत्युरप्यभियोगिन्या शुश्रूष्योऽग्निर्विनीतया ।
सौभाग्यवदवैधव्यकामया भर्तृभक्तया ॥

1. वि. र., ४३४ and B. J. read प्रियस्वामी. In Raghunandana's मलमासतत्त्व (७८२) जयस्वामी is cited in an explanation of a passage of कठशाखाश्वलायनब्राह्मणम् ('अस्यार्थो जयस्वामिना व्याख्यातः'). See P. V. Kane—*History of Dharmaśāstra*, I, p. 699.

2. 'यावकं यज्ञोपयुक्तचमसादि' ((वि. र., ४३५)

3. 'उत्पवनं' चालनीस्थालीत्यादि । स्थाल्यादीनि द्रव्याणि भाविदिनपाकार्थं प्रक्षाल्य गुप्ते निधापयेत् । (वि. र., ४३५)

4. अन्यमण्डकादि (अन्यमण्डलङ्कारादि)–वि. र.

5. अनुपस्तोदकधाना–स; 'अनुपस्तोदधाना' इति इतरे

6. The text of हारीत and the commentary of Lakṣmīdhara thereon are reproduced (the latter with slight modifications) by वि. र., ४३२–४३५.

7. कात्यायनस्मृतिः, १९, ३ (अष्टादशस्मृतयः, १८२) १, १५८ (स्मृतीनां समुच्चयः, ६३)

8. पत्न्या चाप्यवियोगिन्या–मु. पाठः

'पत्युरप्यभियोगिन्या' पत्युरप्याधिक्येन सततमग्निनाऽभियुक्तया सत्याऽग्निः शुश्रूष्यः ।

शङ्खलिखितौ

न भर्तारं द्विष्याद्यद्यप्यष्ठीवळः स्यात् । पतितोऽङ्गहीनो व्याधितो वा । पतिर्हि दैवतं स्त्रीणाम् । न व्रतोपवासनियमेज्यादानधर्मो वाऽनुग्राहकः[1] स्त्रीणामन्यत्र पतिशुश्रूषायाः । कामं[2] भर्तुरनुज्ञाताया व्रतोपवासनियमेज्यादीनामभ्यासः स्त्रीधर्मः ॥

पैठीनसिः

स्त्रियो गृहदेवताः । तासां न शौचं न व्रतं नोपवासः । पतिशुश्रूषया गच्छन्ति परमां गतिम् ॥

मनुः [५, १५२-१५४]

अनृतावृतुकाले तु [3]मन्त्रसंस्कारकृत्पतिः ।
सुखस्य नित्यं दातेह परलोके च योषितः ॥

विशीलः कामवृत्तो[4] वा गुणैर्वा परिवर्जितः ।
उपचर्यः स्त्रिया साध्व्या सततं देववत्पतिः ॥

मनु-विष्णू [मनु., ५, १५५; वि. २५, १५]

नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं [5]नाप्युपोषणम् ।
पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥

1. वाऽनुग्रहकरः–स.
2. कर्मकर्तुः–स.
3. 'मन्त्रसंस्कारो' विवाहविधिः, तस्य कर्ता 'मन्त्रसंस्कारकृत्' (मेधातिथिः)
4. विशीलः कामवृत्तो वा–स; विशीलको वा हतो वा–A. S. B.
5. नाप्युपोषितम्–स.

विष्णुः [२५, १६]

पत्यौ जीवति या योषिदुपवासव्रतं चरेत् ।
[1]आयुर्हरति सा भर्तुर्नरकं चैव गच्छति ॥

याज्ञवल्क्यः [१, ७७]

स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः [2]स्थितः ।
आशुद्धेः संप्रतीक्ष्यो[3] हि महापातकदूषितः ॥

गौतमः [१८, १-३]

अस्वतन्त्रा धर्मे स्त्री । नातिचरेद्भर्तारम् । वाक्चक्षुःकर्मसंयुता ।

हारीतः

शुच्याचारा भर्तृमनाः साध्वी भवति । एवं ह्याह—

यस्य भार्या [4]वशा साध्वी सततं प्रियवादिनी ।
शुच्याचारा भर्तृमनाः सा देवी [5]परिकीर्त्यते ॥

मनुः [५, १५१; १५६]

यस्मै दद्यात्पिता त्वेनां भ्राता वानुमते[6] पितुः ।
तं शुश्रूषेत जीवन्तं संस्थितं न च लङ्घयेत् ॥

पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा ।
पतिलोकमभीप्सन्ती नाचरेत्किंचिदप्रियम् ॥

'संस्थितं' मृतम् ।

1. आयुस्सा हरते भर्तुः–इति मु. वि.

2. 'स्त्रियाः' इति विश्वेश्वर–मिताक्षरापाठः

3. प्रागपि शुद्धः न त्याज्यः । शंशब्दाच्च ब्रह्मचारिण्या तत्परया च प्रतीक्षितव्यः । (विश्वरूपः)

4. भवेत् साध्वी–स.

5. परिकीर्तिता–ज, द.

6. वानुमतः पितुः–ब.

याज्ञवल्क्यः [१, ७५; ८७]

मृते जीवति वा पत्यौ या नान्यमुपगच्छति ।
सेह कीर्तिमवाप्नोति मोदते चोमया सह ॥

पतिप्रियहिते युक्ता [1]स्वाचारा विजितेन्द्रिया ।
इह कीर्तिमवाप्नोति [2]प्रेत्य चानुत्तमां गतिम् ॥

मनुः [५, १५४ (अ), १६५, १६६]

दानप्रभृति या तु स्याद्यावदायुः पतिव्रता ।
भर्तृलोकं[3] न त्यजति यथा वारुन्धती तथा ॥[4]

पतिं या नाभिचरति मनोवाग्देहसंयता[5] ।
सा भर्तृलोकमाप्नोति सद्भिः साध्वीति चोच्यते ॥

अनेन नारीवृत्तेन मनोवाग्देहसंयता ।
इह कीर्तिमवाप्नोति [6]पतिलोकं परत्र च ॥

'पतिलोको'ऽत्र पत्या सहाधिकारेण यज्ञादिभिर्यो लोक उपार्जितः ।

छान्दोग्यपरिशिष्टे कात्यायनः[7]

पतिशुश्रूषयैव स्त्री सर्वान् लोकान् समश्नुते ।
दिवः पुनरिहायाता सुखानां सावधिर्भवेत् ॥

1. 'स्वाचारा संयतेन्द्रिया' इति विश्वरूपः; 'स्वाचारा विजितेन्द्रिया' इति मिताक्षरापाठः, ख; स्वाचाराधिजितेन्द्रिया–उ.

2. परत्र च शुभां गतिम्–ख.

3. सूर्यलोकम्–A. S. B.

4. Not commented on by Medhātithi and Kullūka; printed after ५, १५४ in the Chowkamba edition.

5. संहिता–ख.

6. भर्तृलोकम्–ख.

7. कात्यायनस्मृतिः (अष्टादशस्मृतयः, १८४), १९, १२; गोभिलस्मृतिः (स्मृतीनां समुच्चयः, ६४), २, १६७.

बृहस्पतिः [२५, १२]

आर्तार्ते मुदिते[1] हृष्टा प्रोषिते मलिना कृशा ।
मृते म्रियेत [2]या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥

वसिष्ठः [२१, १४]

पतिव्रतानां गृहमेधिनीनां
सत्यव्रतानां च शुचिव्रतानाम् ।
तासां तु लोकाः पतिभिः समाना
गोमायुलोका व्यभिचारिणीनाम् ॥

मनुः [९, ३०]

व्यभिचारात्तु भर्तुः स्त्री लोके प्राप्नोति निन्द्यताम् ।
शृगालयोनिं प्राप्नोति पापरोगैश्च पीड्यते ॥

छन्दोगपरिशिष्टे कात्यायनः[3]

पतिमुल्लङ्घ्य मोहात्स्त्री कं कं न नरकं व्रजेत् ।
कृच्छ्रान्मानुषतां प्राप्य किं किं दुःखं न पश्यति ॥

शङ्खलिखितौ

सुरालशुनपलाण्डुगृञ्जनकवकादीन्यभक्ष्याणि च वर्जयेत् । आहारमयं शरीरम् । तन्मयत्वाद्ब्राह्मणः संकीर्यते । मातुरशितपीताद्धि गर्भः सम्भवति ।

मनुः [९, १८४]

प्रतिषिद्धा पिबेद्या तु मद्यमभ्युदयेष्वपि ।
प्रेक्षासमाजे गच्छेद्वा सा दण्ड्या कृष्णलानि षट् ॥

1. हृषिते हृष्टा-स.
2. या नारी सा विज्ञेया पतिव्रता-स.
3. कात्यायनस्मृतिः, १९, ११ = गोभिलस्मृतिः, २, १६६.

वसिष्ठः [२१, ११]

> [1]या ब्राह्मणी स्यादिह वै सुरापी
> न तां देवाः पतिलोकं नयन्ति ।
> इहैव सा चरति क्षीणपुण्या
> शुनीभूता गर्दभी सूकरी च[2] ॥

अथ प्रोषितभर्तृकायाः

तत्र मनुः [९, ७५]

> विधाय प्रोषिते वृत्तिं जीवेन्नियममास्थिता ।
> प्रोषिते त्वविधायैव जीवेच्छिल्पैरगर्हितैः[3] ॥

याज्ञवल्क्यः [१, ७४]

> क्रीडाशरीरसंस्कारसमाजोत्सवदर्शनम् ।
> हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका ॥

बृहस्पतिः [२५, १३]

> प्रसाधनं नृत्यगीतसमाजोत्सवदर्शनम् ।
> मांसमद्याभियोगं च न कुर्यात्प्रोषिते पतौ ॥

1. A. S. B., B. J., S. B. (b), ज and **वि. र.**, ४३९ conclude the sub-section with the following two ślokas—

**याज्ञवल्क्यः** [३, १५६]

> पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत् ।
> इहैव सा शुनी गृध्री शूकरी चैव जायते ॥

**यमः**

> या ब्राह्मणी स्यादिह वै सुरापी न तां देवाः पतिलोकं नयन्ति ।
> इहैव सा तिष्ठति हीनपुण्या शुनी भूत्वा गर्दभी शूकरी च ॥

2. 'मृता जलौका भवत्यथ शुक्तिका वा'-B. J., S. B. (b); 'अप्सु लुग्भवति शुक्तिका वा' (Führer's edn.)

3. 'नियमो' यथा सन्निहिते भर्तरि परगृहप्रयाणादिनिषेधः । अकृत्वा तु वृत्तिं प्रोषिते शिल्पैर्जीवेत् इति, कर्तनजालिकाकरणादिना । गर्हितानि वस्तूनि विजनादीनि । एवमेव विधवादीनां निजभमजन्यो वृत्युपायः । (मेधातिथिः)

विष्णुः [२५, ९-११]

भर्तरि प्रोषितेऽप्रतिकर्मक्रिया[1] । परगृहेष्वनभिगमनम् । द्वारदेशगवाक्षकेष्वनवस्थानम् ।[2]

शङ्खलिखितौ

सर्वासां प्रोषिते भर्तरि ब्राह्मणी चारित्रं रक्षेत् । इतरासां मातापितरावनन्तरं राजन्यो वा । [3]प्रेङ्खाताण्डवविहारचित्रदर्शनाङ्गरागोद्यानयानविवृतशयनोत्कृष्टपानभोजनकन्दुकक्रीडाधूपगन्धमाल्यालङ्कारदन्तधावनाञ्जनादर्शनप्रसाधनादीनामस्वतन्त्राणां प्रोषितभर्तृकाणां कुलस्त्रीणामनारम्भः ॥

'सर्वासा'मित्यादि, सर्वासां प्रोषितभर्तृकाणां मध्ये ब्राह्मणी आत्मना चारित्रं रक्षेत् । इतरासां तु प्रोषितभर्तृणां मातापितरौ रक्षेते । अनन्तरं च तयोरसतो [4]राजन्यो रक्षेत् । एकभर्तृकाणां चैतदुच्यते । 'प्रेङ्खा' दोला ।

हारीतः

न प्रोषिते त्वलंकुर्यात् । न वेणीं प्रमुञ्चेत ।

अथ मृतभर्तृकायाः

तत्र अङ्गिराः

मृते भर्तरि या नारी समारोहेद्धुताशनम् ।
साऽरुन्धतीसमाचारा स्वर्गे लोके महीयते ॥
[5]त्रिंशत्कोट्योऽर्धकोटी च यानि लोमानि मानवे ।
[6]तावन्त्यब्दानि सा स्वर्गे भर्तारं याऽनुगच्छति ॥

1. 'अप्रतिकर्म' प्रसाधनानाचरणम् (त्रि. र., ४३९)

2. 'प्रतिकर्म' अलङ्करणम् । 'क्रिया' क्रीडादिः । भर्तरि प्रवसिते परेषां पितृश्वशुरभ्रातृमातुलादिव्यतिरिक्तानां गृहेष्वनभिरुच्या गमनाभावः ॥ (वैजयन्ती)

3. प्रेंखाताडन–बि; प्रेंखालीढविहार–ज. 4. राजन्यो चारित्रं रक्षेत्–ब.

5. तिस्रस्कोट्या–A. S. B., B. J., S. B. (b); तिस्रः कोट्योऽर्धकोटी च–ब, द, स.

6. तावद्वर्षाणि–बि.

व्यालग्राही यथा व्यालं बिलादुद्धरते बलात् ।
तद्वद्भर्तारमादाय[1] तेनैव सह गच्छति[2] ॥

मातृकं [3]पैतृकं चैव यत्र कन्या प्रदीयते ।
पुनाति त्रिकुलं नारी भर्तारं याऽनुगच्छति ॥

तत्र सा भर्तृपरमा परा परमलालसा ।
क्रीडते पतिना सार्धं यावदिन्द्राश्चतुर्दश ॥

[4]ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वाऽपि यो नरः ।
तं वै पुनाति सा नारी इत्याङ्गिरसभाषितम् ॥

साध्वीनामेव नारीणामग्निप्रपतनादृते[5] ।
नान्यो [6]धर्मोऽत्र विज्ञेयो मृते भर्तरि कर्हिचित् ॥

यावन्नाग्नौ दहेद्देहं मृते पत्यौ पतिव्रता ।
तावन्न मुच्यते नारी स्त्रीशरीरात्कथञ्चन ॥

सद्वृत्तभावार्पितभर्तृकाणां
स्त्रीणां वियोगक्षतकातराणाम् ।
तासां प्रभावस्तमिते गते कं
नाग्निप्रवेशादपरोऽस्ति मार्गः[7] ॥

'सद्वृत्ते'ति । 'वृत्त'माचारः । 'भावो'ऽभिप्रायः । तौ शोभनावर्पितौ याभिस्तास्तथा । 'वियोगक्षतकातराणां' वियोग एव 'क्षतं' प्ररोही व्रणः तत्र कातराणाम् । 'प्रभौ' भर्तरि । 'कं' स्वर्गम् ।

1. भर्तारमासाद्य–ज.
2. सह मोदते–ज, द.
3. पितृकं चैव-ज.
4. ब्रह्महापि-ज, द; ब्रह्महा वा–स.
5. हृते–ज.
6. धर्मो हि–स.
7. धर्मः–B. J., S. B. (b)

व्यासः

दयितं याऽन्यदेशस्थं मृतं श्रुत्वा पतिव्रता ।
समारोहति शीघ्रेऽग्नौ तस्याः शक्तिं निबोधत ॥

यदि प्रविष्टो नरकं बद्धः पाशैः सुदारुणैः ।
संप्राप्तो यातनास्थानं गृहीतो यमकिङ्करैः ॥

तिष्ठते विवशो दीनो वेष्ट्यमानः स्वकर्मभिः ।
व्यालग्राही यथा सर्पं बलादुद्धरते बिलात् ॥

तद्वद्भर्तारमादाय दिवं याति तपोबलात् ।
तत्र सा भर्तृपरमा स्तूयमानाऽप्सरोगणैः ॥

क्रीडते पतिना सार्धं यावदिन्द्राश्चतुर्दश ।

ब्रह्मपुराणे

मृते भर्तरि [1]सत्स्त्रीणां न चान्या विद्यते गतिः ।
[2]नान्यद्भर्तृवियोगाग्निदाहस्य शमनं [3]क्वचित् ॥

देशान्तरमृते तस्मिन् साध्वी तत्पादुकाद्वयम् ।
निधायोरसि संशुद्धा प्रविशेज्जातवेदसम् ॥

[4]ऋग्वेदवादात् साध्वी स्त्री न भवेदात्मघातिनी ।
त्र्यहाशौचे निवृत्ते तु [5]श्राद्धं प्राप्नोति शाश्वतम् ॥

1. सा स्त्रीणां न चान्यो विद्यते पतिः—ज; सा स्त्रीणां न चान्या विद्यते गतिः—द.

2. नान्यभर्तृवियोगाग्नौ दाहस्य शमनं भवेत्—ज.

3. भवेत्—स, वि. र., ४४३.

4. ज omits this *śloka* and the commentary which follows it.

5. शुद्धिम्—ज.

'ऋग्वेदवादात्'—'इमा नारीरविधवा' इत्यादिमन्त्रात्[1] । एवं च सकलवचनपर्यालोचनया ब्राह्मणादिसर्वभार्याणां स्वगतभर्तृगतफलविशेषार्थिनीनां गर्भवतीबालापत्यादिव्यतिरिक्तानां सहमरणानुमरणयोरधिकार इति ॥[2]

बृहस्पतिः

शरीरार्धं स्मृता नारी[3] पुण्यापुण्यफले समा ।
अन्वारूढा जीवन्ती वा साध्वी भर्तृहिताय सा ॥

विष्णुः [२५, १४]

मृते भर्तरि ब्रह्मचर्यं तदन्वारोहणं वा[4] ।

हारीतः

आहिताग्निश्चेत् प्रमीयेत, औपासनावक्षाणाग्निं परिगृह्य[5] सर्पिराज्ञीभिः

1. ऋग्वेदसंहिता, ७-६-२७ (७) [१०-२-१८-७]—
इमा नारीरविधवाः सुपत्नीराञ्जनेन सर्पिषा संविशन्तु ।
अनश्रवोऽनमीवाः सुरत्ना आरोहन्तु जनयो योनिमग्रे ॥ ७ ॥
उदीर्ष्व नार्यभिजीवलोकं गतासुमेतमुप शेष एहि ।
हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभिसंबभूथ ॥ ८ ॥

2. Lakṣmīdhara thus endorses the recommendation of *sati* cremation with the husband's corpse or afterwards except for pregnant women and women with infants. Caṇḍeśvara (वि. र., ४४३) merely repeats Lakṣmīdhara's comment. See MM. P. V. Kane's *History of Dharmaśāstra*, II, pp. 617–619, for the interpretation and application of the two ṛks and similar passages in *Atharva-veda* (XII, 2, 31 and XVIII, 3, 57) and *Taittirīya Āraṇyaka*, VI, 10 and VI, 1.

3. जाया–A. S. B., S. B. (a), ज, द, स; वि. र., ४४३.

4. रोहणं च यत्–द. MM. P. V. Kane—"None of the Dharmasūtras except Viṣṇu contain any reference to *sati*." (*History of Dharmaśāstra*, II, p. 626.)

5. परिमृज्य–वि. र., ४४४.

सूतसवनमिष्ट्वा [1]नावसेत् । अनाहिताग्निश्चेदन्यमादध्यात् । जनाग्निं वा परिगृह्य भर्तुः पितुः स्वजनगृहवर्जं जितजिह्वाहस्तपादेन्द्रिया स्वाचारवती दिवारात्रं भर्तारमनुशोचन्ती व्रतोपवासैः क्षान्तायुषोऽन्ते पतिलोकं जयति [2]न भूयः पतिवियोगमाप्नोतीति । एवं ह्याह—

पतिव्रता तु या साध्वी निष्ठां याति प्रभौ मृते ।
सा हित्वा सर्वपापानि पतिलोकमवाप्नुयात् ॥[3]

'अवक्षाणं' अर्धदग्धदारुमुल्मुखम् । 'आयं गौः' इति तिस्र ऋचः[4] सर्पिराज्ञ्यः । 'अन्यं' गृह्यमाधानविधिना गृह्णीयात् । 'जनाग्निः' सभ्यः ॥

बृहस्पतिः [२५, १५]

[5]व्रतोपवासनिरता ब्रह्मचर्ये व्यवस्थिता ।
दमदानरता नित्यमपुत्राऽपि दिवं व्रजेत् ॥

मनुः [५, १५७-१६२]

कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः ।
न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु ॥

1. वसेत् (Omitting ना) is the स्मृतिचन्द्रिकापाठः (p. 594)

2. सा भूयः पतिसालोक्यमाप्नोति–वि. र., ४४४; स्मृ. चं., p. 595, also reads 'न भूयः पतिवियोगमाप्नोति'

3. उल्मुखावस्थमौपासनाग्निं परिगृह्य 'भूमिर्भूम्ना' इति चतसृभिरनुसवनमिष्वाना श्वशुरादिगृहे वसेदिति । एवमेवानाहिताग्नेर्मृतस्य भार्या वसेत् । इयांस्तु विशेषः—औपासनाग्नेः स्वगृह्योक्तविधिना पुनः संधानं लौकिकाग्नेर्वा परिग्रहं कुर्यात् । (स्मृतिचन्द्रिका, p. 594.)

4. ऋग्वेदसंहिता (८-८-४७)—

आयं गौः पृश्निरक्रमीदसदन् मातरं पुरः । पितरं च प्रयन्त्स्वः ॥ १ ॥
अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्यन्महिषो दिवम् ॥ २ ॥
त्रिंशद्धाम वि राजति वाक्पतङ्गाय धीयते । प्रति वस्तोरह द्युभिः ॥ ३ ॥

5. जपोपवास–A. S. B.

[1]आसीतामरणात् क्षान्ता नियता ब्रह्मचारिणी ।
यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥[2]

अनेकानि सहस्राणि कुमारब्रह्मचारिणाम् ।
दिवं गतानि विप्राणामकृत्वा कुलसंततिम् ॥

मृते भर्तरि साध्वी स्त्री [3]ब्रह्मचर्ये व्यवस्थिता ।
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥

अपत्यलोभाद्या तु स्त्री भर्तारमतिवर्तते ।
सेह निन्दामवाप्नोति पतिलोकाच्च हीयते ॥

नान्योत्पन्ना प्रजास्तीह न चाप्यन्यपरिग्रहे ।
न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यते ॥

1. अतिथी मरणात्क्षान्ता–उ, etc; आसीतामरणात्क्षान्ता–द; आसीनामरणात्क्षान्ता–ब, B. J.

2. पुंवत् स्त्रीणां प्रतिषिद्धः आत्मत्यागः । यदप्याङ्गिरसे 'पतिमनुम्रियेरन्' इत्युक्तं तदपि नित्यवदवश्यं कर्तव्यम् । फलस्तुतिस्तत्रास्ति । फलकामायाश्चाधिकारे श्येनतुल्यता । एवमिहाप्यतिप्रवृद्धफलाभिलाषायाः सत्यपि प्रतिषेधे तदतिक्रमेण मरणे प्रवृत्त्युपपत्तेर्न शास्त्रीयत्वम् । अतोऽस्त्येव पतिमनुमरणेऽपि स्त्रियाः प्रतिषेधः । किंच 'तस्मादिह न पुरुषायुषः प्रेयात्' इति प्रत्यक्षश्रुतिविरोधे स्मृतिरपि एषा अन्यार्था शक्यते । अतो मृतपतिकाया अनपत्याया असति भर्तृधनादौ दायिके च, कर्तनादिना च केनचिदुपायेन जीवन्त्या जीवस्यातिप्रियत्वादुपेक्षणस्याशास्त्रत्वात् प्रतिषिद्धत्वादापदि सर्वव्यभिचाराणां 'विश्वामित्रः श्वजाघनीम्' इत्यादिनाऽनुज्ञातत्वाद्व्यभिचारोपजीवितापाप्ताविदमुच्यते । काममस्यामवस्थायां शरीरं क्षपयेत् क्षयं नयेत् पुष्पमूलफलैर्यथोपपादं वृत्तिं विदधीत, न तु नामापि गृह्णीयात् 'पतिर्मे त्वमद्य' इत्यन्यस्य । यत्तु

"नष्टे मृते प्रव्रजिते क्लीबेऽथ पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥"

इति—तत्र पालनात् पतिमन्यमाश्रयेत्, सैरन्ध्रकर्मादिनाऽऽत्मवृत्त्यर्थम् । प्रोषितभर्तृकायाश्च सा विधिः ॥ (मेधातिथिः)

3. ब्रह्मचर्यव्रते स्थिता–ब.

नियोगानन्तरं यमः

यावज्जीवं सदासीत नियता ब्रह्मचारिणी ।
यो धर्म एकपत्नीनां तं धर्ममभिकाङ्क्षती ॥

स्त्रियाः श्रुतौ वा शास्त्रे वा प्रव्रज्या न विधीयते ।
प्रजा हि तस्या स्वो धर्मः सवर्णादिति धारणा ॥

अष्टाशीतिसहस्राणि मुनीनामूर्ध्वरेतसाम् ।
दिवं [1]गतानि विप्राणामकृत्वा कुलसन्ततिम् ॥

तथैव कन्या व्यावृत्ता ब्रह्मचर्ये व्यवस्थिता ।
अपुत्रा प्राप्नुयात्स्वर्गं यथा ते ब्रह्मचारिणः ॥

अपुत्रा जातपुत्रा वा कन्या पतिमनुव्रता ।
प्राप्नुयात्स्वर्गमेवेति मनुः स्वायम्भुवोऽब्रवीत् ॥

'एकपत्नीनां' एकपतिकानाम् । 'कन्या'ऽत्र ऊढा ॥

कात्यायनः [८३७]

अनेकदोषदुष्टेऽपि मृते भर्तरि वा सदा ।[2]
साध्वाचारा च तिष्ठेत गुरुशुश्रूषणे रता ।[3]

मृते भर्तरि [4]या साध्वी ब्रह्मचर्ये व्यवस्थिता ।
साऽरुन्धतीसमाचारा ब्रह्मलोके महीयते ॥

1. यातानि-ज.

2. अनेकदोषदुष्टापि मृते भर्तरि या सदा-ज.

3. Not included in Kane's collection; वि. र., ४४१ wrongly ascribes both ślokas to यम.

4. साध्वी या-ज.

## ७३ (ग) अथ नियोगः

तत्र मनुः [९, ५९]

देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया ।
[1]प्रजेप्सयाऽधिगन्तव्या सन्तानस्य [2]परिक्षये ॥[3]

नारदः [१५, ८०-८२; ८६-८८]

नियुक्ता गुरुभिर्गच्छेत् देवरं पुत्रकाम्यया ।
स च तां प्रतिपद्येत तथैवाऽऽपुत्रजन्मनः ॥

पुत्रे जाते निवर्तेत विप्लवः स्यादतोऽन्यथा ।
घृतेनाभ्यज्य[4] गात्राणि तैलेनाविकृतेन वा ॥

मुखान्मुखं परिहरन् [5]गात्रैर्गात्राणि चास्पृशन् ।
कुले [6]तदवशेषे च सन्तानार्थं न कामतः ॥

1. प्रजेप्सिता-मेधातिथिः, रत्नाकरः, B. J.

2. परिक्षयात्-ख.

3. This should be read as a continuation of the śloka which precedes it in *Manusmṛti*, IX, 58: ज्येष्ठो यवीयसो भार्यां यवीयान्वाऽग्रजस्त्रियम् । पतितौ भवतो गत्वा नियुक्तावप्यनापदि ॥ सर्वविशेषणविशिष्टोऽनेन नियोगो विधीयते । संतानस्य परिक्षये नियोक्तव्या देवरादिभिः सम्यक् प्रजोत्पादयितव्या इति । यदुक्तं [मनु, ९, ५६] 'योषितां धर्ममापदि' इति सेयमापत् 'संतानस्य परिक्षयः' । संतानशब्देन पुत्र उच्यते, दुहिता च पुत्रिका । सा हि पितुर्वंशं संतनोति नान्या । तस्य 'परिक्षयो' अनुत्पत्तिरुत्पन्ननाशो वा पुत्र्याश्चाकरणम् । नियोक्ता उत्पादयेत् । अनुज्ञाता गुरुभिः । गुरवश्च श्वश्रूश्वशुरदेवरादयः भर्तृसगोत्रा द्रष्टव्याः, न पित्रादयः । भ्रातृपुत्रे सति न नियोगः कर्तव्यः । 'देवरः' पतिभ्राता । 'सपिण्डः' पत्यन्वयः । 'सम्यगिति' घृताक्तादिनियमं अनुवदति । ईप्सितशब्देन कार्यक्षमतामाह । ततो दुहितर्यन्धबधिरादौ च जाते पुनर्नियोगोऽनुष्ठेयः ॥ (मेधातिथिः)

4. घृतनाभ्युक्ष्य वाङ्गानि-ज; घृतेनाभ्युक्ष्य चाङ्गानि-द.

5. गात्राण्यसंस्पृशन्-ख.

6. तदवशेषेण-ज; तद्विशेषेण-द.

नियुक्तो गुरुभिर्गच्छेद्भ्रातृभार्यां यवीयसः ।
अविद्यमाने [1]तु गुरौ राज्ञो वाच्यः कुलक्षयः ॥

ततस्तद्वचनाद्गच्छेदनुशिष्यात्[2] स्त्रियं[3] च सः ।
पूर्वोक्तेन विधानेन [4]स्नातां पुंसवने शुचिः[5] ॥

सकृदागर्भधानात्तु वृत्ते गर्भे तथैव [6]सा ।
अतोऽन्यथा वर्तमानः पुमान् स्त्री वापि कामतः[7] ॥

विनेयौ सुभृशं[8] राज्ञा विप्लवः स्यादतोऽन्यथा ।

यमः

ऋतौ[9] तु तस्यां स्नातायां वाग्यतस्तामसे [10]निशि ।
[11]स्वश्मश्रुनखरोमाणां गन्धस्पर्शाववेदयन् ॥

एकवासा घृताक्ताङ्गो दुर्गन्धः शोकदुर्मनाः ।
मुखान्मुखं परिहरन् गात्रैर्गात्राणि [12]वास्पृशन् ॥

यतात्मा[13] गर्भमादध्याद्वृते गर्भे त्वपव्रजेत् ।
जातापत्यां नाधिगच्छेज्जाते पुत्रे तथैव च ॥

1. श्वशुरे राज्ञो-ज, द.
2. दनुमान्य-A. S. B., ज.
3. प्रियं for स्त्रियम्-स, S. B. (b)
4. स्नुषां-मु. नार., १८४; स्नातां-द, वि. र., ४४७.
5. पुंसवनेषु च-द.
6. तथैव च-द.
7. वापि नश्यति-ज.
8. सदृशं-ज; सुभृशं-स; सदृशौ-उ.
9. ऋतौ स्नातायां-वि. र. पाठः (४४८)
10. 'निशि' प्रदीपाद्यालोकनिवृत्त्यर्थमेतत्, वचनान्तरेण दिवोपगमनप्रतिषेधात्। [मेधातिथिः, ९, ६०]
11. सुश्मश्रु-इति वि. र. पाठः
12. चास्पृशन्-ज, वि. र.; गोत्राण्यस्पृशन्-स.
13. पूतात्मा-ज.

सीमन्तोन्नयनादीनि सर्वकर्माणि कारयेत् ।
[1]भ्रातृसन्तानमिच्छद्भिः पितॄणामूर्ध्वदेहिनाम् ॥[2]

याज्ञवल्क्यः [१, ६८-६९]

अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया ।
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ॥

आगर्भसम्भवाद्गच्छेत्पतितस्त्वन्यथा भवेत् ।
अनेन विधिना जातः क्षेत्रजोऽस्य भवेत्सुतः ॥

देवलः

नष्टः प्रव्रजितः क्लीबः पतितो राजकिल्बिषी ।
लोकान्तरगतो वापि परित्याज्यः [3]पतिः स्त्रियाः ॥[4]

मृते भर्तरि जीवे वा स्त्री विन्देतापरं पतिम् ।
सन्तत्यनाशार्थतया न स्वातन्त्र्येण योषितः ॥

नारदः [१५, ९८-१०२][5]

अष्टौ वर्षाण्युदीक्षेत ब्राह्मणी प्रोषितं पतिम् ।
अप्रसूता तु चत्वारि परतोऽन्यं [6]समाचरेत् ॥

1. भ्रातुः सन्तान-ज.

2. भ्रातृभिः द्वारभूतैः राजा सीमन्तोन्नयानि कारयेत् इत्यर्थः । (वि. र., ४४८)

3. On the meaning of पति, according to Medhātithi, see footnote to मनु, ५, १५८, on p. 637 *supra*.

4. Compare नारदस्मृति, १५, ९७—

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥

'नष्टो'ऽशास्त्रीयव्यापारेण त्यक्तपरिकरसङ्गः । 'प्रव्रजितः'अशास्त्रविषयप्रव्रज्याशाली वृथा मौण्ड्यादि । 'राजकिल्बिषी' राजरोगाक्रान्तः । (वि. र., ४४९). By citing it under *Niyoga*, Lakṣmīdhara rejects its application to remarriage (पुनरुद्वाह).

5. नारदीयमनुसंहिता, १३, १००-१०४.

6. समाश्रयेत्-ना. स्मृ., १८६; ना. सं., १४४; वि. र., ४४९.

क्षत्रिया षट्समास्तिष्ठेदप्रसूता समात्रयम् ।
वैश्या प्रसूता चत्वारि [1]द्वे समे त्वप्रसूतिका ॥

न शूद्रायाः स्मृतः कालो [2]न च धर्मव्यतिक्रमः ।
[3]विशेषतोऽप्रसूतायाः संवत्सरपरा स्थितिः ॥

[4]अप्रवृत्तौ स्मृतः काल एष प्रोषितयोषिताम् ।
जीवति श्रूयमाणे च स्यादेष द्विगुणो विधिः ॥

प्रजाप्रवृत्तौ नारीणां वृत्तिरेषा प्रजापतेः ।
अतोऽन्यगमने स्त्रीणां एष[5] दोषो न विद्यते ॥

अथ देवरसपिण्डाधिकारे मनुः [९, ६४-६७]

नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः ।
अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥

नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् ।
न विवाहविधावुक्तं विधवावेदनं पुनः ॥

अयं [6]द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः ।
मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ॥

स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा ।
वर्णानां संकरं चक्रे कामोपहतचेतनः ॥

1. द्वे समे अप्रजा वसेत्–ना. संहि., १४५; द्वे वर्षे त्वितरा वसेत्–ना. स्मृ., १८९.

2. एष प्रोषितयोषिताम्–ना. स्मृ., १८६.

3. Half-verse missing in ना. स्मृ., and in its place—जीवति श्रूयमाणे तु स्यादेष द्विगुणो विधिः ॥

4. ना. स्मृ., १८७ reads-अप्रवृत्तौ तु भूतानां दृष्टिरेषा प्रजापतेः । अतोऽन्यगमने स्त्रीणामेष दोषो न विद्यते ॥ १०१.

5. एवं for एष–ना. संहि., १४५. Lakṣmīdhara follows here the text of नारदीयमनुसंहिता.

6. द्विजैरविद्वद्भिः–इति मेधातिथिपाठः

[1]तदा प्रभृति यो मोहात्प्रमीतपतिकां स्त्रियम् ।
नियोजयत्यपत्यार्थं तं विगर्हन्ति साधवः ॥[2]

मृतपत्न्यधिकारे वासिष्ठः [१७, ६४-६६]

स्याच्चेन्नियोगिनोः[3] । रिक्थलोभान्नास्ति[4] नियोगः । प्रायश्चित्तं वाप्युपदिश्य नियुञ्ज्यादित्येके ।

कात्यायनः

नियोगात्पातनं कुर्याद्यथोक्तं तद्विशुद्धये ।
द्विजस्य स्त्रीषु धर्मोऽयं शूद्रस्यैके सदाश्रयः[5] ॥

बृहस्पतिः [संस्कार, २६७-२६९]

उक्तो[6] नियोगो मनुना निषिद्धः स्वयमेव तु ।
युगह्रासादशक्योऽयं [7]कर्तुं मर्त्यैर्विधानतः ॥

तपोज्ञानसमायुक्ताः कृते त्रेतायुगे नराः ।
द्वापरे च कलौ नृणां शक्तिहानिर्विनिर्मिता[8] ॥

1. ततः प्रभृति–इति मेधातिथिपाठः

2. पूर्वेण विहितस्य नियोगस्य प्रतिषेधोऽयम् । अस्य प्रवृत्तौ प्रतिषेधातिक्रमेण श्येनतुल्यता । 'आवेदनं' गमनम् । 'द्विजैः अविद्वद्भिः'–ये अविद्वांसः तैरयं पशुधर्मः अत्यन्तगर्हितो मनुष्याणामपि प्रोक्तः । अन्यैः 'विद्वद्भिः' इति पठितम् । (मेधातिथिः) ॥ 'अन्यस्मिन्' देवरसपिण्डाभ्यामन्यस्मिन् । एतच्चानयोरन्यतरस्यापि सद्भावे, एतदभावे सगोत्रस्यापि याज्ञवल्क्येन [१, ५८, 'सपिण्डो वा सगोत्रो वा'] बोधितत्वात् ॥ (वि. र., ४५०)

3. सा चेन्नियोगमिच्छेत्–उ, बि, स, etc.

4. अर्थलोभान्नास्ति नियोगः–द; अर्थलाभान्नास्ति–उ, बि, ज.

5. शूद्रस्यैकं सदाश्रयेत्–स; शूद्रस्यैके तदाश्रयः–वि. र., ४५१.

6. 'उक्त्वा' इति अपरार्कपाठः (९७)

7. कर्तुं सर्वैः–(अपरार्क, ९७); कर्तुमन्यैः–इति विद्वन्मनोहरापाठः (p. 38).

8. 'विजायते' इति मित्रमिश्रपाठः (याज्ञ. वीरमित्रोदय, १३२)

अनेकधा कृताः पुत्रा ऋषिभिर्ये पुरातनैः ।
[1]न शक्यतेऽधुना कर्तुं शक्तिहीनैरिदन्तनैः ॥

## ७३ (घ) अथ परपूर्वाः

तत्र नारदः [१५, ४५-५३][2]

परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम् ।
पुनर्भूस्त्रिविधा तासां स्वैरिणी च चतुर्विधा ॥

कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता ।
पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्मणा[3] ॥

कौमारं पतिमुत्सृज्य [4]या त्वन्यं पुरुषं श्रिता ।
पुनः पत्युर्गृहमियात् सा द्वितीया प्रकीर्तिता ॥

[5]असत्सु देवरेषु स्त्री बान्धवैर्वा प्रदीयते ।
[6]सवर्णाय सपिण्डाय सा तृतीया प्रकीर्तिता ॥

1. 'न शक्यास्तेऽधुना कर्तुं शक्तिहीनतया नरैः' इति अपरार्कः (९७); 'तच्छक्यं नाऽधुना कर्तुम्' इति वि. र. पाठः (४५१)

2. नारदीयमनुसंहिता, १२; ४५-४६; ५०; ४८-४९; ५१; ४७; ५३. परपूर्वाः । सप्त । पुनर्भूस्त्रिप्रकारा । स्वैरिणी चतुष्प्रकारा (ना. भाष्ये, १३४). The three *Punarbhvaḥ* are described in the second, eighth and fourth ślokas; the four *Svairiṇyaḥ* are described in the fifth, third, sixth and seventh ślokas. *Nāradasamhitā* arranges the ślokas in the order of the three *Punarbhvaḥ* and four *Svairiṇyaḥ*; *Nāradasmṛti*, which is followed by the text, violates the orderly sequence.

3. संस्कारमर्हति–मु. ना. स्मृ.

4. या त्वन्यपुरुषाश्रिता–ना. म. संहि. पाठः

5. This śloka, which is necessary, is provided only by A. S. B., S. B. (b), B. J., ज, द, and वि. र., ४५२.

6. सवर्णायासपिण्डाय–ना. म. सं. पाठः

[1]स्त्री प्रसूताऽप्रसूता वा पत्यौ चैव च जीवति ।
कामात्समाश्रयेदन्यं [2]स्वैरिणी प्रथमा तु सा ॥

[3]मृते भर्तरि या तु स्त्री देवरादीनपास्य तु ।
[4]कामतस्तु भजेदेनं द्वितीया सा प्रकीर्तिता ॥

[5]देशापहृतविक्रीता क्षुत्तृष्णाव्यसनार्दिता ।
तवाहमित्युपगता सा तृतीया प्रकीर्तिता ॥

[6]देशधर्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते ।
[7]उत्पन्नसाहसाऽन्यस्मै साऽन्तिमा[8] स्वैरिणी स्मृता ॥

पुनर्भुवां विधिस्त्वेष[9] स्वैरिणीनां प्रकीर्तितः ।
पूर्वा पूर्वा जघन्यासां श्रेयसी तूत्तरोत्तरा ॥

<u>मनुः</u>

पतिं हित्वा निकृष्टं[10] स्वमुत्कृष्टं या निषेवते ।
निन्द्यैव लोके भवति परपूर्वेति चोच्यते ॥

1. 'प्रसूता वाप्रसूता वा पत्यावेव'–ना. म. सं., पाठः
2. प्रथमा स्वैरिणी तु सा–ना. स्मृ. पाठः
3. मृते भर्तरि संप्राप्तान् अपास्य या–ना. स्मृ. पाठः
4. उपगच्छेत्परं कामात् सा द्वितीया प्रकीर्तिता–ना. स्मृ.; सा तृतीया प्रकीर्तिता–ना. म. संहि., १३५.
5. प्राप्ता देशाद्धनक्रीता–ना. स्मृ.; ना. म. सं.
6. देशधर्मानपेक्ष्य–ना. स्मृ. पाठः
7. 'उत्पन्नसाहसा' व्यभिचारिणी (ना. भाष्य, १३५); उत्पन्नव्यभिचारा इति मिताक्षरा (२, ५१); उत्पन्नसाहसाऽक्षतयोनिः प्रौढेति यावत्–(स्मृतिचन्द्रिका)
8. साम्या वा–सा; अम्या सा, ना. स्मृ. पाठः; सा द्वितीया प्रकीर्तिता इति ना. म. संहि. पाठः
9. पुनर्भुवामेष विधिः–ना. म. संहि., १३५.
10. 'अवकृष्टं' इति मेधातिथिपाठः, ज, द, स; 'अपकृष्टं' इति वि. र., ४९३.

'तिस्रः पुनर्भ्वश्चतस्रः[1] स्वैरिण्य' इत्यभिधाय शङ्खलिखितौ तत्र पूर्वा पूर्वा जघन्याः । तासामपत्यानामृक्थपिण्डोदकयज्ञेषु यो विकल्पः स मातुरेव गुणवत्तया व्याख्यातः ॥

याज्ञवल्क्यः [१, ६७]

अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः ।
स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत् ॥[2]

हारीतः

स्वैरिणी च पुनर्भूश्च रेतोधाः कामचारिणी ।
सर्वभक्ष्या च विज्ञेयाः पञ्चैता शूद्रयोनयः ॥

एतासां यान्यपत्यानि उत्पद्यन्ते कदाचन ।
न तान्पङ्क्तिषु युञ्जीत न ते पङ्क्त्यर्हकाः स्मृताः ॥

'रेतोधाः' कुण्डमाता । 'कामचारिणी'[3] चतुर्भ्य ऊर्ध्वमन्यपुरुषगामिनी । 'सर्वभक्ष्या' सुरापी ।

कात्यायनः[4]

सुखार्थं या प्रवृत्ता स्त्री न भर्तुः सुतकाम्यया ।
[5]पुत्रं तु जनयेदेव निन्द्या पापा तु सा स्मृता ॥

भर्तृगोत्रं समुत्सृज्य नारी यद्यन्यमाश्रिता ।
निन्द्यैव सा स्मृता लोके परपूर्वेति चोच्यते ॥

1. पुनर्भूः–उ.

2. पुनर्भूः स्वैरिणीति संज्ञा दोषद्वयज्ञापनार्था । जीवन्तं मृतं वा या भर्तारं त्यक्त्वा स्वातन्त्र्यात् सवर्णं उत्कृष्टवर्णं वा समाश्रयेत् सापि स्वैरिणी । (विश्वरूपः)

3. 'कामचारिणी' चतुष्पुरुषगमनान्तरं अपरपुरुषगामिनी । (वि. र., ४५४)

4. Not found in Kane's collection.

5. पुत्रं तु जनयेदेव निन्द्या सा तु सदा स्मृता–ज; पुत्रं तु जनयत्येव निन्द्या माता तु सा स्मृता–ख.

परपूर्वाश्रिता यत्र तत्र स्याश्माश्रितः प्रभुः ।
क्रमाहृते तु धर्मोऽयं लब्धा वा स्वामिनो भवेत् ॥

निरोद्धव्या च ताड्या च परपूर्वापराधतः ।
[1]अक्षमां वाऽनवेक्षन्तीं ताडयन्दण्डमर्हति ॥

चौरहस्तान्नदीवेगाद्दुर्भिक्षाद्देशविप्लवात् ।
निस्तार्य वासकान्ताराल्लब्ध्वा त्यक्त्वा क्रमागता ॥

आसां भोगे न दोषः स्यादिति शास्त्रविनिश्चयः ।
स्वामिदत्तां तु गृह्णीयादेषा चेन्न ततोऽन्यथा ॥

दीयमानामथात्मानं या नारी नानुमोदते ।
न सा देया न च ग्राह्या विधिरेष स्मृतो [2]भृगुः ॥

न चोत्तमां न चाकामां तथा पुत्रवतीं न च ।
ईदृशीं त्वनुरूपेण निष्क्रयेण प्रमीलयेत् ॥

इति महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेवमहासान्धिविग्रहिकेण
भट्टश्रीहृदयधरात्मजेन भट्टश्रीमल्लक्ष्मीधरेण विरचिते
कृत्यकल्पतरौ व्यवहारकाण्डे
स्त्रीपुंयोगपर्व ॥[3]

---

1. अक्षमां चानवेक्षन्तीम्–ज, द.
2. गुरुः–वि. र., ४५५; B. J., स.
3. A. S. B., S. B. (b), B. J., ज, द, स.

## ७४

# अथ दायविभागः

तत्र नारदः [२६, २]

> विभागोऽर्थस्य पित्र्यस्य[1] पुत्रैर्यत्र प्रकल्प्यते[2] ।
> दायभाग इति प्रोक्तं तद्विवादपदं[3] बुधैः ॥

मनुः [९, १०४]

> ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम् ।
> भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः ॥[4]

देवलः

> पितर्युपरते पुत्रा विभजेरन् पितुर्धनम् ।
> [5]अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते ॥

'निर्दोषे' पातित्यादिरहिते ।

1. पित्र्यादेः–मदनरत्ने.
2. प्रकल्पयेत्–उ; प्रकल्प्येत–वि. र., ४५६.
3. व्यवहारपदं–ना. म. सं.
4. न च नियमः संभवति 'एवं सह वसेयुर्वा पृथग्वा धर्मकाम्यया' इति (मनु, ९, १११) मनुविरोधात् दृष्टार्थत्वाच्च विभागस्य तन्नियमः कालनियमो वा संभवति (दायभागः, १८) ॥ अत्र 'ऊर्ध्वं पितुश्च' इति पितृधनविभागकाल उक्तः । 'मातुश्च' इति मातृधनविभागकालः । तेन मातरि जीवन्त्यपि पितृधनविभागः कार्यः । तथा मातुरूर्ध्वं पितरि जीवत्यपि मातृधनविभागः कार्य एव । (स्मृतिचन्द्रिका, पृ. २५५) हलायुध–पारिजाताभ्यां 'समं' इत्येतत्स्थाने 'सह' इति पठितं, व्याख्यातं च पारिजातेन 'सह' परस्परम् । 'पैतृकं' इत्यत्र मातृधनस्यापि ग्रहणमिति हलायुधः । पैतृकमित्युपादानेऽपि पैतामहादिधनमपि विवक्षितम् । मातृधने दुहितृतदन्वयाभावे पुत्रभागान्वयः ॥ (वि. र., ४५७)
5. 'अस्वाम्यं' अस्वातन्त्र्यम् (अपरार्कः) ।

नारदः [१६, २]

पितर्यूर्ध्वं गते पुत्रा विभजेयुर्धनं पितुः[1] ।
मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः ॥[2]

शङ्खलिखितौ

अत ऊर्ध्वं रिक्थभागः । न जीवति पितरि रिक्थं विभजेरन् । यद्यपि स्यात्पश्चादधिगतं तैरनर्हा एव पुत्राः । अर्थधर्मयोरस्वातन्त्र्यात् ॥[3]

'यद्यपि पश्चादधिगतं' पितृधनव्यापारनिरपेक्षैः पुत्रैः पश्चात् समर्थैर्विद्यादिभिरुपात्तम् ॥[4]

मनुः [९, १०५-११०]

ज्येष्ठ एव तु गृह्णीयात्पित्र्यं धनमशेषतः ।
शेषास्तमुपजीवेयुर्यथैव पितरं तथा ॥

1. विभजेरन् धनं क्रमात् (ed. Jolly); विभजेयुः धनं पितुः (ना. म. सं.)

2. पुत्रग्रहणं क्षेत्रजादीनामप्यवबोधार्थम् । ततश्च द्वादशपुत्राणामन्यतरस्मिन्नपि विद्यमाने नान्यस्य धनभाक्त्वम् । 'पितु'रिति वचनं भ्रातॄणां मध्ये यद्येकस्य विद्याधनादि विभजेत्, तदा तस्य विभागो नास्तीति बोधनार्थम । 'दुहितुः' सान्निध्यात् 'तत्' पदेन तस्या एव ['अन्वयाः'] । लक्ष्मीधरस्वरसोऽप्येवम् । प्रकाश-पारिजातौ तु 'तदन्वयो' दुहित्रन्वयः पुत्रपौत्रादि इत्याहुः ।

3. The commentary, which follows, is printed as part of शङ्खलिखितवाक्य by वि. र., ४५८, with the prefatory expression 'पितरि निर्दोषे', which is taken by Gangānāth Jhā [*Hindu Law in its Sources*, vol. 2, p. 21] as part of the श. लि. dictum! The correct text is cited by व्यवहारमयूख (ed. Kane,) पृ. ९०. वर्णितं च कल्पतरौ–यद्यपि पश्चादधिगतं पितृधनं व्यापारनिरपेक्षैः पुत्रैः विद्यादिभिरुपात्ते धने स्वाम्यं, तथापि तत्राप्यस्वाम्यं जीवति पितरि किमुत पितृधने, अर्थधर्मयोः तेषां पितरि जीवति अस्वातन्त्र्यात् ॥ (व्यवहारप्रकाश, ed. Chowkhamba, ४१५).

4. "अर्थधर्मयोरस्वातन्त्र्यात्पितरि निर्दोषे पश्चादधिगतं पितृनिरपेक्षैः पुत्रैः समर्थैः विद्यादिभिः मिलित्वा अर्जितम्" । (रत्नाकरः, ४५८). This comment, taken from Lakṣmīdhara is printed in the *Ratnākara* as part of the dictum of *Śaṅkha-Likhitau*!

ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः ।
पितॄणामनृणश्चैव स तस्मात्सर्वमर्हति ॥

यस्मिन्नृणं सन्नयति येन चानन्त्यमश्नुते ।
[1]स एव धर्मजः पुत्रः कामजानितरान् विदुः ॥[2]

पितेव पालयेत्पुत्रान् ज्येष्ठो भ्रातॄन् यवीयसः ।
पुत्रवच्चापि वर्तेरन् ज्येष्ठे भ्रातरि धर्मतः ॥

ज्येष्ठः कुलं वर्धयति विनाशयति वा पुनः ।
[3]ज्येष्ठः पूज्यतमो लोके ज्येष्ठः सद्भिरगर्हितः ॥

यो ज्येष्ठो [4]ज्येष्ठवृत्तिः स्यान्मातेव च पितेव च ।
अज्येष्ठवृत्तिर्यस्तु स्यात्स संपूज्यस्तु [5]बन्धुवत् ॥

तथा [९, २१४]

न चादत्वा कनिष्ठेभ्यो ज्येष्ठः कुर्वीत[6] यौतुकम् ॥

'यौतुकं' पृथग्भूतं द्रव्यं गवादि ।[7]

नारदः [१६, ५]

बिभृयाद्वेच्छतः सर्वान् ज्येष्ठो भ्राता यथा पिता ।
भ्राता शक्तः कनिष्ठो वा शक्त्यपेक्षा कुले[8] स्थितिः ॥

1. स एष-मेधातिथिः

2. सकलज्येष्ठगुणवान् ज्येष्ठो विभाज्यधने पितृवत्स्वतन्त्रः स्यात् । 'तमुपजीवेयुः' तत्कृतवृत्त्या वर्तेरन् । 'सन्नयति' सङ्क्रमयति । 'कामजान्' इति अर्थवादमात्रम् ॥ (रत्नाकरः)

3. स एवंगुणो ज्येष्ठः संवर्धयति कुलम् । अयमेव निर्गुणः तत्कुलं विनाशयति । (मेधातिथिः)

4. ज्येष्ठवर्ती-उ; ज्येष्ठवृत्तिरिति मेधातिथि-चण्डेश्वराहृतपाठः.

5. 'बन्धुवत्' प्रत्युत्थानाभिवादनैः (मेधातिथिः)

6. कुर्वति-उ.

7. हलायुधस्तु 'यौतकं' भार्यालङ्कारादीत्याह । (वि. र., ४१०)

8. 'कुले श्रियः' इति मु. ना. स्मृ. १९०; 'कुले क्रिया' इति ना. म. सं.

शङ्खलिखितौ

कामं वसेयुरेकतः संहता वृद्धिमाचक्षीरन् ॥[1]

मनुः [९, १११]

एवं सह वसेयुर्वा पृथग्वा धर्मकाम्यया ।
पृथग्विवर्धते धर्मस्तस्माद्धर्म्या पृथक्क्रिया ॥[2]

बृहस्पतिः [व्य. २६, ५]

एकपाकेन वसतां पितृदेवद्विजार्चनम् ।
एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे ॥[3]

हारीतः

जीवति पितरि पुत्राणामर्थादानविसर्गाक्षेपेषु न स्वातन्त्र्यं, कामदाने प्रोषिते चार्ति गते वा ज्येष्ठ एवार्थांश्चिन्तयेत् ॥[4]

शङ्खलिखितौ

पितर्यशक्ते कुटुम्बव्यवहारं ज्येष्ठः कुर्यादनन्तरो वा कार्यज्ञस्तदनुमतेन । न त्वकामे पितरि ऋक्थविभागः । वृद्धे विपरीतचेतसि दीर्घरोगिणि वा ज्येष्ठ एव पितृवदर्थान् पालयेदितरेषाम् । ऋक्थमूलं हि कुटुम्बम् । अस्वतन्त्राः पितृमन्तः । मातर्यप्येवम् स्थितायाम् ॥

1. 'संहता' अन्योन्यालम्बनतया; 'वृद्धिमाचक्षीरन्' वृद्धिं स्फुटां कुर्वीरन् वृद्धियुक्ता भवन्तीति यावत् । (वि. र., ४६०)

2. एतद्वचनमेको धर्म इति श्राद्धपूर्तान्नादिमात्रं विज्ञेयम् । (मेधातिथिः)

एवमविभक्ता भ्रातरः सह संवसेयुः । यदि वा धर्मकामनया कृतविभागाः पृथग्वसेयुः यस्मात् पृथगवस्थाने सति पृथक् पृथक् पञ्चयज्ञाद्यनुष्ठानधर्मस्तेषां वर्धते, तस्माद्विभागक्रिया धर्म्या ॥ (कुल्लूक)

3. एकपाकेनेत्यत्राविभागे सतीति विवक्षितम् । (वि. र., ४६१)

4. 'अर्थादानं' पितुर्नैरपेक्ष्यया साधारणधनग्रहणम् । 'अर्थार्जनं' इति पारिजातः । 'विसर्गो' दानम् । 'आक्षेपः' ऋणिकहस्तात् तद्धनग्रहणम् । 'कामदाने' काममात्रादेवार्थदातरि । प्रकाशाकारेण तु 'कामं दीने' इति पठित्वा काममिति सन्निहितपित्रनुज्ञामाह । 'दीने' विचित्ते इति विवक्षितम् । (वि. र., ४६२)

'अनन्तरः' अनुजः । 'तदनुमतेन' ज्येष्ठानुमतेन । 'अस्वतन्त्राः' पुत्रा इति सम्बन्धः ॥[1]

अथ जीवत्पितृकविभागः

तत्र मनुः विष्णू [मनु, ९, २०९; वि. १८, ४३]

पैतृकान्तु पितृद्रव्यमनवाप्यं यदाप्नुयात् ।[2]
न तत्पुत्रैर्भजेत्सार्धमकामः[3] स्वयमार्जितम् ॥[4]

'अनवाप्यं' अशक्त्यादिना पित्रा यदुपेक्षितं[5] तदन्येनाप्तुमशक्यम् ॥

याज्ञवल्क्यः [२, १२१]

भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा ।
तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः[6] ॥

'निबन्धः' आकरादौ राजादिदत्तं नियतं लभ्यम् ।

बृहस्पतिः [२६, १४, ५८, ५९]

द्रव्ये पितामहोपात्ते स्थावरे जङ्गमे तथा ।
सममंशित्वमाख्यातं पितुः पुत्रस्य चैव हि ॥

पैतामहं हृतं[7] पित्रा स्वशक्त्या यदुपार्जितम् ।
विद्याशौर्यादिनावाप्तं तत्र स्वाम्यं पितुः स्मृतम् ॥

1. 'ऋक्थमूलं' धनमूलम् । 'कुटुम्बं' कुटुम्बभरणम् । 'अस्वतन्त्राः' दानाद्यनधिकारिणः । 'मातर्यप्येवं' गुणवत्यां जीवन्त्यामस्वतन्त्राः पुत्रा इत्यन्वयः । (वि. र., ४६२)

2. 'पैतृकन्तु पिता द्रव्यमनवाप्तं यदाप्नुयात्' इति वि, ज, द, स, B. J. and मेधातिथिः । 'पैतृकन्तु पितृद्रव्यं' इति मुद्रितविष्णुस्मृतिः ।

3. सर्वमकामः–स.

4. 'पैतृकं' पितृक्रमागतम्; 'अनवाप्यं' पित्रा आप्तुमशक्यम् । 'न तत्पुत्रैः' सममनिच्छन् विभजेत् स्वयमर्जितत्वात् ॥ (वि. र., ४६३)

5. यदपेक्षितं–स; यदुपेक्ष्याङ्कितं यदन्येना–उ.

6. 'पुत्रस्य चोभयोः' इति विश्वरूपापरार्कौ; 'पुत्रस्य चैव हि' इति विज्ञानेश्वरः

7. पैतामहकृतं–स.

प्रदानं स्वेच्छया कुर्याद्भागं चैव ततो धनात् ।
तदभावे तु तनयाः समांशाः परिकीर्तिताः ॥[1]

'अथ पुत्रा विभजेरन्' इत्यधिकारे नारदः [१६, ३]

मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च ।
निवृत्ते चापि रमणे पितर्युपरतस्पृहे ॥[2]

'निवृत्ते रमणे' रतिशक्तौ निवृत्तायाम् ।

बृहस्पतिः [२६, ९]

पित्रोरभावे भ्रातृणां विभागः संप्रदर्शितः ।
मातुर्निवृत्ते रजसि जीवतोरपि शस्यते ॥

शङ्खलिखितौ

जीवति वा पितरि रिक्थविभागोऽनुमतः । प्रकाशं वा मिथो वा धर्मतः ॥[3]

हारीतः

जीवन्नेव वा प्रविभज्य वनमाश्रयेत् । वृद्धाश्रमं वा गच्छेत् । स्वल्पेन वा संविभज्य भूयिष्ठमादाय वसेत । स[4] यद्युपदस्येत् पुनस्तेभ्यो गृह्णीयात् । क्षीणांश्च विभजेत् ॥[5]

1. 'हृतं' परैरपहृतं, यदशक्त्या पितामहेन नोद्धृतं, 'स्वशक्त्या' च पित्रोद्धृतं, तद्विद्याशौर्यादिना प्राप्तं च कुर्यादित्यर्थः । (वि. र., ४६४)

2. 'प्रत्तासु' विवाहितासु । प्रकाशे तु 'निरपेक्षे च रमण', 'निरस्ते चापि रमणे' इति पाठद्वयं वाक्यभेदपुरस्कारेण लिखितम् । तदपि तदीयार्थव्याख्यानेनाविरुद्धम् । हलायुधस्तु 'रमणात्' इति पठितवान् तत्रापि फलाविशेष एव । (वि. र., ४६४) ॥ 'निरिष्टे वाप्यमरणे' इति नारदमनुसंहितापाठः (पृ. १४९). 'निरिष्टे' व्याप्त्यभावे निरिन्द्रिये, ['अमरणे'] जीवत्यपि पितरि इति भवस्वामिभाष्ये ।

3. 'अनुमतः' पित्रनुमतः; 'प्रकाशं' मध्यस्थसमक्षम्; 'मिथः' तदसमक्षम् । (वि. र., ४६५)

4. 'स' वि. रत्नाकरे नास्ति.

5. 'वनमाश्रयेत्' आश्रमान्तरं परिगृह्णीयात् । वेदसंन्यासित्वेन पुत्रैश्वर्ये वासो 'वृद्धाश्रम' इति प्रकाशकारः । 'वृद्धाश्रमः' चतुर्थाश्रम इति हलायुधपारिजातौ । तन्मते 'वनमाश्रयेत्' इत्यनेन वानप्रस्थाश्रममाश्रयेदिति विवक्षितम् । ......वेदसंन्यासी गृहस्थाश्रममेव, स्वातन्त्र्येण वाञ्छति, तं प्रति 'स्वल्पेन' इत्यादि बोद्धव्यम् । (वि. र., ४६५-४६६)

'उपदश्येत्' उपक्षीयेत ।

विष्णुः [१७, १]

पिता चेत्पुत्रान्विभजेत्तस्य स्वेच्छा स्वयमुपात्तेऽर्थे ॥

याज्ञवल्क्यः [२, ११४-११५]

विभागं चेत्पिता कुर्यात्स्वेच्छया विभजेत्सुतान् ।
ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः ॥

[1]यदि कुर्यात्समानांशान् [2]पत्न्यः कार्याः समांशिकाः ।
न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा ॥[3]

नारदः [१६, १२]

द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता ॥[4]

पित्रधिकारे शङ्खलिखितौ

स यद्येकपुत्रः[5] स्याद्द्वौ भागावात्मनः कुर्याद्द्विपदचतुष्पदेषु रूपमधिकम् । वृषभो ज्येष्ठाय । गृहं यवीयसे । अन्यत्र पितुरवस्थानात् ॥[6]

बौधायनः [२, ३, ६-७]

दशानां चैकमुद्धरेज्ज्येष्ठः । सममितरे विभजेरन् ॥

'दशानां' गवाश्वादिरूपाणाम् ।

1. 'यदि दद्यात्' इति विश्वरूपपाठः; 'यदि कुर्यात्' इति अपरार्क-विज्ञानेश्वरौ.

2. 'कार्याः पत्न्यः समांशिकाः' इति विश्वरूपः

3. अत्र पत्नीनामपुत्राणामपीति हलायुधः । दत्ते स्त्रीधने अर्धं वक्ष्यतीति प्रकाशः । (वि. र., ४६७)

4. 'प्रतिपद्येत' लभेत; 'विभजन्' विभागं कुर्वाणः (वि. र., ४६७) । एतदपि स्वार्जितविषयमिति मिताक्षरा.

5. 'एकपुत्रः' ज्येष्ठपुत्र इति हलायुधः (वि. र., ४६८)

6. भाष्यकारस्तु पुत्रशब्दं न पठितवान् 'यद्येकाकी स्या'दिति पठितवान् । 'यद्येकाकी' पत्नीरहितोऽपि स्यात्तदाप्यंशद्वयं गृह्णीयात् । सपत्नीकश्चेत् तामपि अपरेणांशेन तोषयेत् । याज्ञवल्क्योक्तसमांशित्वं च सर्वेषां गुणवत्त्वेन । उत्कर्षाभावे पितुरिच्छया समांशित्वं न्यूनाधिकांशित्वं च इत्यविरोध इत्याह । 'अन्यत्र' पितृवासगृहवर्जम् । (वि. र., ४६९)

आपस्तम्बः [२, १३, १२; २, १४, १]

एकधनेन ज्येष्ठं तोषयित्वा । [1]जीवन्पुत्रेभ्यो विभजेत्समं क्लीबमुन्मत्तं पतितं परिहाप्य ॥

'एकधनेन' एकेन धनेन गवादिना ।

मनुः [९, २१५]

भ्रातॄणामविभक्तानां यद्युत्थानं[2] भवेत्सह ।
न तत्र विषमं भागं पिता दद्यात्कथञ्चन ॥

नारदः [१६, १५]

पित्रैव तु विभक्ता ये [3]समन्यूनाधिकैर्धनैः ।
तेषां स एव धर्मः[4] स्यात् सर्वस्यैव पिता प्रभुः ॥

बृहस्पतिः [व्यव., २६, १५]

समन्यूनाधिका भागाः पित्रा येषां प्रकल्पिताः ।
तथैव ते पालनीया विनेयास्ते स्युरन्यथा ॥

## अथ प्रमीतपितृकविभागः

### तत्रोद्धारः

तत्र मनुः [९, ११२-११४]

[5]ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् ।
ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः ॥

1. 'जीवन्' जीवन्नेव यः प्रजोत्पत्तावसमर्थ इत्यर्थः (वि. र., ४६९)

2. 'उत्थानं' धनार्जनानुकूलव्यापारः (वि र., ४७०) 'सह उत्थानं' सर्वं एव धनमर्जयन्तीत्यर्थः (मेधातिथिः)

3. 'हीनाधिकसमैर्धनैः' इति मुद्रितनारदीये (पृ. १९३); 'सर्वस्य हि पिता प्रभुः' इति तत्रैव पाठः

4. 'स एव भागः स्यात्' इति नारदीयसंहितापाठः

5. ज्येष्ठः समुद्धरेदंशं सर्वद्रव्याच्च यद्वरम् । ततोऽर्धं मध्यमस्य स्यात् तृतीयं तु यवीयसः ॥ इति गोविन्दराजः पठति.

ज्येष्ठश्चैव कनिष्ठश्च[1] संहरेतां यथोदितम् ।
येऽन्ये ज्येष्ठकनिष्ठाभ्यां तेषां स्यान्मध्यमं धनम् ॥

सर्वेषां [2]धनजातानामाददीताग्र्यमग्रजः[3] ।
यच्च सातिशयं किञ्चिद्दशतः[4] प्राप्नुयाद्वरम् ॥[5]

'ज्येष्ठस्य विंश उद्धार' इत्यादि—मध्यमाद्धनाद्विंशतितमो भागो ज्येष्ठस्योद्धृतो अधिको ग्राह्यः स्यात् । अर्धतुरीयभागौ च विंशतितमभागापेक्षयैव । तेन मध्यमाद्धनात् चत्वारिंशत्तमो भागो मध्यमस्योद्धृतोऽधिको ग्राह्यः । कनिष्ठस्याशीतितम इत्युक्तं भवति । गुणवज्ज्येष्ठादिविषयश्चायमुद्धारः ॥

गौतमः [२८, ५-८]

विंशतिभागो ज्येष्ठस्य मिथुनमुभयतोदद्युक्तो रथो गोवृषः । काणखोरकूटवण्डा मध्यमस्यानेकाश्चेत् । अविर्धान्यायसी गृहमनोयुक्तं चतुष्पदां चैककं यवीयसः । समधेतरत्सर्वम् ॥[6]

'कूटः' शृङ्गविकलः । 'वण्डो' वालाग्ररहितः । 'अनः' शकटम् ।

1. ज्येष्ठश्चैव कनिष्ठश्च—स.
2. धनजातीनां (कुल्लूकपाठः)
3. 'आददीताग्र्यमग्रजः' इति मेधातिथिपाठः
4. 'दशतः प्राप्नुयाद्धनम्' इति मेधातिथिः च; 'विंशतेश्चाप्नुयाद्धनम्' इति ज. द; 'दशतः प्राप्नुयाद्वरमिति B. J., A. S. B., Bik., and S. B. (b)
5. ज्येष्ठस्य सर्वद्रव्याद्विंशतितमो भाग उद्धृत्य दातव्य एव । मध्यमस्य तदर्धं चत्वारिंशत्तमो भागः । एवं कनिष्ठस्य तुरीये ज्येष्ठापेक्षयाऽशीतितमो भागः । एवमुद्धृते परिशिष्टं त्रिधा कर्तव्यम् । तत्र सर्वेभ्यो द्रव्येभ्यो 'यद्वरं' श्रेष्ठं तज्ज्येष्ठस्यैव ॥ (मेधातिथिः) गुणवज्ज्येष्ठादिविषयोऽयमुद्धारः (वि. र., ४७१)
6. 'मिथुनं' गोमिथुनम् । 'उभयतोदतः' अश्वाश्वतरगर्दभाः । तेषां यथासम्भवमन्यतमाभ्यां युक्तो 'रथः' । 'खोरो' वृद्धः । (मस्करी)

हारीतः

विभजिष्यमाणे गवां समूहे वृषभमेकधनं वरिष्ठधनं वा ज्येष्ठाय दद्युः । देवतागृहं च । इतरे निष्क्रम्य कुर्युः । एकस्मिन्नेव वा दक्षिणं ज्येष्ठायानुपूर्व्य-मितरेषाम् ॥

'एकधनं' उत्कृष्टधनम् । 'देवताः' पूज्यविष्ण्वादिप्रतिमाः । 'गृहं' पैतृकम् । 'निष्क्रम्य कुर्युः' इति, आत्मवासार्थं गृहान्तराणीति शेषः । 'एकस्मिन्नेवे'त्यादे-रयमर्थः—यदा निष्क्रम्य गृहान्तरकरणासंभवस्तदा 'दक्षिणं' प्रधानं श्रेष्ठं [1]'ज्येष्ठाय' ज्येष्ठार्थं भवेदित्यर्थः ॥[2]

आपस्तम्बः [२, १४, ७-८]

देशविशेषे सुवर्णं कृष्णा गावः कृष्णं भौमं ज्येष्ठस्य । रथः[3] पितुः परिभाण्डं च ॥

'भौमं' भूमौ जातं तिलमाषादि । 'परिभाण्डं' भोजनपात्रादि ।

बौधायनः [२, २, ९]

[4]असति पितरि चतुर्णां वर्णानां गोऽश्वाऽजावयो ज्येष्ठांशः ॥

देवलः

पुत्राणां मध्यमो दायः समानानामपीष्यते ।
ज्येष्ठस्य दशमं भागं न्यायवृत्तस्य निर्दिशेत् ॥[5]

'मध्यमो दायः' मध्यमं धनं विंशतितमो भागः ।

1. ज्येष्ठाय ज्येष्ठार्थं सम्भवेदिति शेषः–स.

2. 'आनुपूर्व्यं' अनुपूर्वता, तेन मध्यमाय मध्यमं, कनिष्ठाय ततोऽपि हीनमित्यर्थः । हरिहरस्तु 'देवतागृह'पदेन दुर्गादिपूजामण्डपं व्याख्याय तज्ज्येष्ठाय दत्वा अन्ये मण्डपान्तरं कुर्युरित्याह । (वि. र, ४७३)

3. 'मिथः' इति वि. र. पाठः (४७४)

4. असति पितरि कृष्णवर्णा गौश्च वयोज्येष्ठस्य । नारदः—'पुत्राणां मध्यमो दाय' इत्यादि–ज.

5. मध्यमो भागः मध्यमं धनं विंशोऽशः, एतच्च ज्येष्ठे वेदसमन्विते, अन्येषु निर्गुणेषु मन्तव्यमिति हलायुधपारिजातौ । अन्ये तु यदा ज्येष्ठोऽग्निवेदसंपन्नोऽन्येऽपि गुणवन्तस्तदा ज्येष्ठस्य दशमो भागः, अन्येषां पुत्राणां मध्यमो भागः मध्यमं धनं विंशो भागः प्रत्येकमिति प्रथमखण्डार्थः । यदाग्निवेदवान् ज्येष्ठोऽन्येऽपि निर्गुणाः, तदा ज्येष्ठस्य दशमो भागो निर्गुण-भ्रातृणां तु पूर्ववत् चत्वारिंशत्तमो भाग एव विभज्य दातव्य इति द्वितीयखण्डार्थः ॥ (वि. र., ४७४)

## अनेकमातृकभ्रातृविभागः

अथ मनुः [९, १२२-१२४]

पुत्रः कनिष्ठो ज्येष्ठायां कनिष्ठायां च पूर्वजः ।
कथं तत्र विभागः स्यादिति चेत्संशयो भवेत् ॥

एकं वृषभमुद्धारं संहरेत स पूर्वजः ।
ततोऽपरेऽज्येष्ठवृषास्तदूनानां स्वमातृतः ॥[1]

[2]ज्येष्ठस्तु जातो ज्येष्ठायां हरेद्वृषभषोडशाः[3] ।
ततः [4]स्वमातृतः शेषा भजेरन्निति धारणा ॥

'सः' पूर्वस्यां जातः । 'पूर्वजो' ज्यैष्ठिनेयः कनीयानुच्यते । 'ततोऽपर' इति, ततः श्रेष्ठवृषाद्येऽपरेऽश्रेष्ठवृषास्ते स्वमातृत ऊनानां वयसा ज्येष्ठानां भवन्तीत्यर्थः । 'वृषभषोडशाः' वृषभाः षोडश यासां तास्तथा । 'शेषा' गावः' ॥

1. 'ज्येष्ठा' प्रथमोढा । पश्चादूढा 'कनिष्ठा' । तयोर्जातानां किं मातुरुद्वाहक्रमेण 'ज्येष्ठ्यं' स्यात् स्वजन्मक्रमेण वेति संशयमुपन्यस्योत्तरत्र निर्णेष्यते संप्रतिपत्तुम् । पूर्वस्यां जातः 'पूर्वजः' । कनीयान् वृषभस्योक्तभागवान् । 'ततो' वृषादन्ये ये वृषभा 'अज्येष्ठाः' ते बहूनामेकशः कृत्वा देयाः । 'तदूनानां' तस्मात्पूर्वजादूनानाम् । 'स्वमातृतः' पुनर्मख्यतोढत्वात् तेनात्र मातृज्यैष्ठ्यमाश्रितं भवति न जन्मतः ॥ (मेधातिथिः)

2. श्लोकद्वयस्यार्थवादत्वान्न विवेके यत्नः । उपक्रममात्रमेतत् । सिद्धान्तस्त्वयमुच्यते (९, १२५):—

सदृशस्त्रीषु जातानां पुत्राणामविशेषतः ।
न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते ॥ (मेधातिथिः)

एतच्च परमतमुक्तं मनुना । स्वमतन्तु 'सदृशस्त्रीषु' इत्यादिना जन्मतो ज्यैष्ठ्यमस्तीति दर्शितमिति प्रकाशकारः (वि. र., ४७६) । "यत् कैश्चिदुक्तं तदूनानां स्वमातृत इति 'ज्येष्ठस्तु जातो ज्येष्ठायाम्' (९, १२४) इति पूर्वपक्षमुक्त्वा 'सदृशस्त्रीषु' (९, १२५) इत्यादिना सिद्धान्तितम् । अन्यथा विरोधादिति तदपहसितम् । गुणाचारादिति विशेषेण व्यवस्थायाः प्रतिपादितत्वादिति, युक्तश्चैतदिति सिद्धान्तत्वे पूर्वपक्षितत्त्वस्य व्यवस्थापनानर्हत्वात् । लक्ष्मीधरेण ज्येष्ठापुत्रस्य कनीयस एव ज्येष्ठत्वप्रयुक्तोद्धारव्यवस्थापनाच्च पारिजातस्याप्येवं परिग्रहाच्च ॥ (वि. र., ४७९)

3. वृषभषोडशम्-इति मेधातिथिपाठः

4. समातृतः-ख; समावृतः-ड.

गौतमः [२८, १४-१६]

ऋषभोऽधिको ज्येष्ठस्य । ऋषभषोडशा ज्यैष्ठिनेयस्य । समधा वाऽज्यैष्ठिनेयेन यवीयसाम् ॥[1]

'समधा' समप्रकारेण ।

शङ्खलिखितौ

ऋषभोऽधिको ज्येष्ठाय । गृहं यवीयसे । अन्यत्र पितुरवस्थानात् ॥[2]

बृहस्पतिः [२६, २४-२५]

यद्येकजाता बहवः समाना जातिसंख्यया ।
[3]सापत्न्यास्तैर्विभक्तव्यं मातृभागेन[4] धर्मतः ॥
सवर्णा भिन्नसंख्या ये पुंभागस्तेषु [5]शस्यते ।

मनुः [९, ११५]

उद्धारो न दशस्वस्ति संपन्नानां स्वकर्मसु ।
यत्किञ्चिदेव देयं स्याज्ज्यायसे [6]मानवर्धनम् ॥

'दशसु' गवादिषु इति शेषः ।

1. कनीयस्याः पुत्रस्य ज्येष्ठस्य ऋषभ उद्धारः । सममन्यत् ॥ ज्येष्ठायां जातो 'ज्यैष्ठिनेयः,' तस्य पञ्चदश गावः वृषभश्चैक उद्धारः । सममितरत् ॥ सम एवायं विभागो भवति अज्यैष्ठिनेयेन कनिष्ठायां जातेन ज्येष्ठेन सह यवीयसः ज्येष्ठायाः पुत्रस्य कनीयसः । एकतः मातृतो ज्यैष्ठ्यं अन्यस्य जन्मतः । अयमपि गुणवद्विषयो द्रष्टव्यः ॥ (मस्करी)

2. अत्रापि ज्येष्ठो मन्वनुसारात्कनीयसीपुत्र एव द्रष्टव्यः । (वि. र., ४७७)

3. 'स्वधनैस्तैर्विभक्तव्यं' इति माधवादृतपाठः

4. मातृभोगेन–ख.

5. विद्यते–वि. र. पाठः

6. 'मानवर्धनं' पूजाकरम् (मेधातिथिः)

<u>तथा</u> [९, १२५-१२६]

सदृशस्त्रीषु जातानां पुत्राणामविशेषतः ।
न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते ॥

जन्मज्येष्ठेन चाह्वानं [1]सुब्रह्मण्यास्वपि स्मृतम् ।
यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता स्मृता ॥

'सुब्रह्मण्या' नाम मन्त्रविशेषो ज्योतिष्टोमे छन्दोगैर्गीयते 'इन्द्र आगच्छ' इत्यादि ॥[2]

<u>देवलः</u>

बहिर्वर्णेषु चारित्र्याद्यमयोः पूर्वजन्मतः ।
यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम् ॥

सन्तानः पितरश्चैव तस्मिन् ज्यैष्ठ्यं प्रतिष्ठितम् ।

<u>मनुः</u> [९, २१३]

यो ज्येष्ठो विनिकुर्वीत लोभाद्भ्रातॄन्यवीयसः ।
सोऽज्येष्ठः स्यादभागी च नियन्तव्यश्च राजभिः ॥

'विनिकुर्वीत' वञ्चयेत् ।

<u>मनुः</u> [९, ११६-११७]

[3]एवं समुद्धृतोद्धारे समानंशान्प्रकल्पयेत् ।
उद्धारेऽनुद्धृते [4]त्वेषामियं स्यादंशकल्पना ॥

1. 'सुब्रह्मण्या'–गोविन्दराजः । 'स्वब्राह्मण्यास्वपि' इति चण्डेश्वरः

2. 'स्वब्राह्मण्या' नाम मन्त्रविशेषो ज्योतिष्टोमे छन्दोगैः निगद्यते । प्रथमपुत्रेण पितरं व्यपदिश्याहूयते । अमुकस्य पिता अमुकस्य पितामहो यजत इति । तच्च जन्मज्येष्ठतया विहितं नाटसूत्रे, 'यथाज्येष्ठं स्त्रीपुंसां ये जीवेयु'रिति वचनात् । (वि. र., ४७९)

3. 'समुद्धृते' पृथक्कृते, 'उद्धारे'ऽधिके भागेऽवशिष्टे धने समानंशान् प्रकल्पयेत् (मेधातिथिः)

4. 'तेषां'–मेधातिथि-गोविन्दराजौ; 'त्वेषां' कुल्लूकः.

एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्धं ततोऽनुजः ।
अंशमंशं यवीयांस इति धर्मो व्यवस्थितः ॥

गौतमः [२८, ९-१३]

द्व्यंशं[1] वा पूर्वजस्य स्यात् । एकैकमितरेषाम् । एकैकं वा धनरूपं काम्यं पूर्वः पूर्वो लभेत । [2]दशतः पशूनाम् । नैकशफद्विपदानाम् ॥

'दशतः' पशूनामिति । दशपशून् लभत इत्यर्थः ।

वसिष्ठः [१७, ४०, ४२-४५]

अथ भ्रातॄणां दाय[वि]भागः । द्व्यंशं हरेज्ज्येष्ठः । गवाश्वस्य चानुदशमम् । अजावयो गृहं च कनिष्ठस्य । कार्ष्णायसं गृहोपकरणानि च मध्यमस्य ॥[3]

'गवाश्वस्य चानुदशम'मिति—गवाश्वानां दशानामेकैकमुद्धृत्य ज्येष्ठो गृह्णीयात् इत्यर्थः ।

नारदः [१६, १३-१४]

[4]ज्येष्ठायांशोऽधिको देयः[5] कनिष्ठायावरः स्मृतः ।
समांशभागाः[6] शेषाः स्युरप्रत्ता भगिनी तथा ॥
क्षेत्रजेषु च[7] पुत्रेषु तद्वज्जातेषु धर्मतः ।

'क्षेत्रजेषु' धर्मतो जातेषु । 'तद्वत्' औरसवद्भागकल्पना कर्तव्येत्यर्थः ॥

1. 'द्व्यंशी' इति मस्करिपाठः

2. 'दशकं पशूनां' इति हरदत्तपाठः

3. इदं च वसिष्ठवचनं ज्येष्ठस्य सातिशयगुणवत्त्वे, इतरयोश्च गुणवत्त्वे (वि. र., ४८१)

4. प्रकाशकारेण तु 'कनिष्ठायावर' इति स्थाने 'श्रेष्ठाय तु वर' इति पठितं व्याख्यातञ्च—अग्रे प्रथमोत्पन्नस्यांशद्वयं 'श्रेष्ठः' कुटुम्बकर्मण्युपयुक्तः, तस्य 'वरं' श्रेष्ठं किञ्चिद्देयमिति । (वि. र., ४८१)

5. 'शेषः' इति मु. ना. स्मृ. पृ. १९२.

6. 'समांशभाजः' इति मु. ना. स्मृ.

7. 'क्षेत्रजेष्वपि' इति मु. ना. स्मृ. पृ. १९३.

बृहस्पतिः [व्यव., २६, २१]

जन्मविद्यागुणज्येष्ठो द्व्यंशं दायमवाप्नुयात् ।
समांशभागिनस्त्वन्ये तेषां पितृसमस्तु सः ॥

उशना

वर्णानामनुलोमानां विभागोऽयं प्रकीर्तितः[1] ।
समत्वेनैकजातानां विभागस्तु विधीयते ॥

याज्ञवल्क्यः [२, ११७]

विभजेरन् सुताः पित्रोरूर्ध्वमृक्थमृणं समम् ।[2]

तथा [२, १२०]

सामान्यार्थसमुत्थाने विभागस्तु समः कृतः ।
अनेकपितृकाणां तु पितृतो भागकल्पना ॥

'सामान्यार्थसमुत्थान' इति । यदा सामान्यस्यार्थस्य कृष्यादिना सम्यगुत्थाने वर्धनं भवति, तदा समो विभागः । न तत्र बहुतरमनेनोपात्तमित्यपेक्षा कर्तव्य इत्यर्थः । 'अनेकपितृकाणां' इति । अनेकभ्रातॄणां ये पुत्राः तेषां समविषमसंख्याकानामपि पैतामहे धने विभज्यमाने तत्पितॄणां यो ऽंशः स एव तेषां, न पुनः प्रत्येकमंशकल्पनेत्यर्थः ॥[3]

बृहस्पतिः [२६, १८]

[4]समवेतैस्तु यत्प्राप्तं सर्वे तत्र समांशिनः ।
तत्पुत्रा विषमसमाः पितृभागहराः स्मृताः ॥

1. प्रदर्शितः–वि. र. पाठः (पृ. ४८२)

2. ऋणमपनीय अवशिष्टं विभजेयुः पुत्राः पित्रोरूर्ध्वं रिक्थम् । सुतग्रहणं औरसप्रतिपत्त्यर्थम् । माता च पिता च पितरौ । तयोः पित्रोरूर्ध्वं मृतयोः इत्यर्थः । पितुरूर्ध्वं पैतृकं, मातुरूर्ध्वं मातृकम् । रिक्थाभावेप्यृणमंशांशतो दद्युः ॥ (विश्वरूपः) 'विभजेयुः सुता' इति तेनादृतपाठः ।

3. Reproduced by वि. र., ४८३.

4. समेतैस्तु–उ; समवेतैस्तु–वि, द, स, वि. र.

कात्यायनः [८५५-८५६]

अविभक्ते निजे प्रेते[1] तत्सुतं रिक्थभागिनम् ।
कुर्वीत जीवनं येन लब्धं नैव पितामहात् ॥

लभेतांशं स पित्र्यं तु[2] पितृव्यात्तस्य वा सुतात् ।
स एवांशस्तु सर्वेषां भ्रातॄणां न्यायतो भवेत् ॥

लभेत तत्सुतो वाऽपि निवृत्तिः परतो भवेत् ।

देवलः

[3]अविभक्तविभक्तानां कुल्यानां वसतां सह ।
भूयो दायविभागः स्यादाचतुर्थादिति स्थितिः ॥

तावत्कुल्याः सपिण्डाः स्युः पिण्डभेदस्त्वनन्तरम् ।
सममिच्छन्ति पिण्डानां दायार्थस्य विभाजनम् ॥

विधिरेष सवर्णानां बहूनां समुदाहृतः ।
एक एव सवर्णः स्याद्दायोऽत्र न विभज्यते ॥

'अविभक्तविभक्तानां' अविभक्तानां विभक्तानां च ।

वसिष्ठः [१७, ४०-४१]

अथ भ्रातॄणां दायविभागः । याश्चानपत्याः स्त्रियस्तासां चापुत्रलाभात् ॥

'स्त्रियो'ऽत्र भ्रातृभार्याः । 'आपुत्रलाभा'दिति—ताश्च यदि संभावितपुत्रलाभास्तदा तासामपि भागो देयः । यदि तु पुत्रो नोत्पद्यते तदाऽसौ भागो भ्रातॄणाम् । तासां तु भरणमात्रम् ॥[4]

1. 'अविभक्ते मृते पुत्रे', 'अविभक्तेऽनुजे प्रेते' इति वि. र. पाठौ (४८४).

2. 'पितृव्या तस्य वा सुता'–उ; 'पितृव्यात्तस्य वा सुतात्'-वि. द. स and वि. र.

3. अयमर्थः । अविभक्तानामेव वा विभक्तानां सह वसतां संसृष्टानां वा पुनर्विभागो भ्रातृ-तत्सुत-तत्सुतपर्यन्तमेव, तत्सुतात् चतुर्थात् निवर्तत इति । (वि. र., ४८४)

4. ता यदि शङ्कितपुत्रास्तदा तासामपि भागो दातव्यः । पुत्रानुत्पत्तौ भागो भ्रातॄणामेव । तासां च भरणमात्रं कार्यम् । (वि. र., ४८५)

याज्ञवल्क्यः [२, १२३]

पितुरूर्ध्वं विभजतां माताऽप्यंशं समं हरेत् ॥[1]

पितेत्यनुवृत्तौ बृहस्पतिः [२६]

तदभावे तु जननी तनयानां समांशिनी ।

तथा

समांशा मातरस्तेषां तुरीयांशा च कन्यका ॥

'तुरीयांशः' सजातीयस्य भ्रातुर्यावानंशस्तदपेक्षया चतुर्थो भागः संस्कारार्थं पितृधने कल्पनीयः । यत्तु विष्णुवचनम् [१८, ३४-३५] "मातरः पुत्रभागानुसारेण[2] भागहारिण्यो अनूढाश्च दुहितर" इति, तदप्येतद्वचनानुसारात् दुहितॄणां [3]चतुर्थभागपरम् ॥

व्यासः

असुतास्तु पितुः पत्न्यः समानांशा प्रकीर्तिताः ।
पितामह्यश्च ताः सर्वा मातृतुल्या प्रकीर्तिताः ॥

अथ बृहस्पतिः [२६, १९]

पितृ-ऋक्थहराः पुत्राः सर्व एव यथांशतः ।
विद्याकर्मयुतस्तेषामधिकं लब्धुमर्हति ॥

विद्याविज्ञानशौर्यार्थज्ञानदानक्रियासु च ।
यस्येह प्रथिता कीर्तिः पितरस्तेन पुत्रिणः ॥

1. अविद्यमानस्त्रीधना माताऽपि विभागं पुत्रसमं आप्नुयात् । मातृशब्दश्चायं पितृसम्बन्धाविशेषात् तद्भार्यामात्रवचनो द्रष्टव्यः (विश्वरूपः) । 'अंशं समाप्नुयात्' इति तेन पठितं च.

2. भागानुसारं भागम्-ख.

3. चतुर्थपरम्-ख.

नारदः [१६, ३५]

[1]कुटुम्बार्थेषु यो युक्तस्तत्कार्यं कुरुते तु यः ।
स भ्रातृभिर्बृंहणीयो ग्रासाच्छादनवाहनैः ॥

मनुः [९, २०७]

भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्मणा ।
स निर्भाज्यः[2] स्वकादंशात्किञ्चिद्दत्त्वोपजीवनम् ॥

आपस्तम्बः [२, १४, १४-१५]

सर्वे हि धर्मयुक्ता भागिनः । यस्त्वधर्मेण द्रव्याणि प्रतिपादयति ज्येष्ठोऽपि तमभागं कुर्वीत ॥

'अधर्मेण' द्यूतादिना । 'प्रतिपादयति' विनियुङ्क्ते ।

## अथ विभागानर्हाः

तत्र गौतमः [२८, ४१]

सवर्णापुत्रोऽप्यन्यायवृत्तो न लभेतैकेषाम् ॥[3]

1. अत्र हलायुधेन तु यः स्वयोग्यतया भागं न गृह्णाति, तस्यापि किञ्चिद्दत्वा तत्पुत्राणां विवादनिवृत्त्यर्थं विभागः कर्तव्य इत्यस्यार्थं व्याख्याय तदेवाहेति कृत्वा 'भ्रातॄणां यस्तु नेहेत' इति मनुवाक्यमवतारितम् । प्रकाशकारस्तु अस्यार्थाधिक्यमादायाह । ये भ्रातरः सह वसन्तो विद्यमानपितृधनाः कृष्यादिना चाधिकं धनमार्जयन्ति, तेषां यद्येको नार्जयेत्, स निर्भाज्यापसारयितव्यः स्वकादंशात् यावदधिकं तदीयधनव्यवहारेणोत्पन्नं तत्तस्य न दातव्यं, न तु मूलस्य निषेधः । तत्रापि सर्वथा न निर्भाज्यः । किञ्चित् दत्त्वोपजीवनं क्लेशफलमात्मनो गृहीत्वा शेषमस्मै दातव्यम् । 'ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः' इति पक्षद्वयेऽप्यपवादमाह ॥ वि. र., ४८६–४८७.

2. निर्वास्यः—स; 'निर्भाज्यः' पृथक्कार्यः सह वस्तुं न देयम् । (मेधातिथिः)

3. समानवर्णापुत्रोपि 'अपि'शब्दाज्ज्येष्ठोऽपि दुर्वृत्तः पतित इति यावत् । न लभेत इत्येके मन्यन्ते । लभेत इति आचार्याः । शक्यविनेयत्वापेक्षया विकल्पः (मस्करी) । 'अपि'-शब्दात् किमुत विजातीयपुत्रा इत्याचार्यः । (वि. र., ४८८)

मनुः [९, २१४]

सर्वे एव विकर्मस्था[1] नार्हन्ति भ्रातरो धनम् ॥

शङ्खलिखितौ

[2]अपपात्रितस्य रिक्थपिण्डोदकानि व्यावर्त्यन्ते ॥

बृहस्पतिः [२६, ३४-३७]

सवर्णजोऽप्यगुणवान्नार्हः स्यात् पैतृके धने ।
तत्पिण्डदाः[3] श्रोत्रिया ये तेषां तदभिधीयते ॥

उत्तमर्णाधमर्णेभ्यः पितरं त्रायते सुतः ।
अतस्तद्विपरीतेन नास्ति तेन प्रयोजनम् ॥

तया गवा किं क्रियते या न धेनुर्न [4]गर्भिणी ।
कोऽर्थस्तेन तु पुत्रेण यो न विद्वान्न धार्मिकः ॥

[5]शास्त्रशौर्यार्थरहितस्तपोज्ञानविवर्जितः ।
आचारहीनः पुत्रस्तु मूत्रोच्चारसमस्तु सः ॥

मनुः [९, २०१-२०३]

अनंशौ[6] क्लीबपतितौ जात्यन्धबधिरौ तथा ।
उन्मत्तजडमूकास्तु ये च केचिन्निरिन्द्रियाः ॥

सर्वेषामपि तन्न्याय्यं[7] दातुं शक्त्या मनीषिणा ।
ग्रासाच्छादनमत्यन्तं[8] पतितो[9] ह्यददद्भवेत् ॥

1. 'विकर्मस्थाः' प्रतिषिद्धाचरणाः (मेधातिथिः)
2. 'अपपात्रितस्य' नृपहिंसादिदोषात् बान्धवैः कृतघटापवर्जनस्य । वि. र., ४८९.
3. 'तत्पिण्डदाः' अगुणवद्ग्रासाच्छादनदातारः । (वि. र., ४८९)
4. गुर्विणी-ज.
5. शास्त्रशौर्यार्थरहितः- ज, स, B. J. and वि. र.; शास्त्रशौर्याद्विरहितः-उ.
6. 'निरंशौ' इति वि. र. पाठान्तरः (पृ. ४८९)
7. 'च न्याय्यं' इति मेधातिथिः
8. 'अत्यन्तं'-इति मेधातिथि-गोविन्दराज-कुल्लूकाः; अत्यल्पं-उ.
9. 'पतिताः स्युरदित्सवः' इति वि. र. मुद्रितपाठः

यद्यर्थिता तु दारैः स्यात्क्लीबादीनां कथञ्चन ।
तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति ॥

'निरिन्द्रियाः' पङ्ग्वादयः । 'क्लीबादीनां' इत्यतद्गुणसंविज्ञानो बहुव्रीहिः ।[1]

याज्ञवल्क्यः [२, १४०-१४२]

[2]पतितस्तत्सुतः क्लीबः पङ्गुरुन्मत्तको जडः ।
अन्धोऽचिकित्स्यरोगाद्या[3] भर्तव्यास्तु[4] निरंशकाः ॥
औरसाः क्षेत्रजास्तेषां निर्दोषा भागहारिणः ।
सुताश्चैषां[5] प्रभर्तव्या यावद्वै[6] भर्तृसात्कृताः[7] ॥

1. 'जात्यन्धे'त्यत्र जातिग्रहणेनान्धत्वस्याप्रतिसमाधेयतामाह नोत्पत्तिकत्वम् । 'जडः' आत्मपरविवेकशून्यः । 'निरिन्द्रिय'ग्रहणेन पङ्ग्वादयः श्रौतस्मार्तक्रियानधिकारिणो गृह्यन्ते । 'अत्यन्तं' यावज्जीवम् । 'क्लीबादीनां' इत्यतद्गुणसंविज्ञानो बहुव्रीहिः क्लीबस्यापत्योत्पादनायोग्यत्वात् । प्रकाशकारस्तु क्लीबत्वमग्रेऽपनेयदोषप्रयुक्तमपत्योत्पादनाशक्तत्वं विवक्षितं, अतो नातद्गुणसंविज्ञानं मन्यन्ते । 'तन्तुः' अपत्यम् ॥ (वि. र., ४९०). शरीरधारणार्थत्वात् ग्रासाच्छादनस्य, भृत्यादेः तदुपयोगिनः परिचारकस्यापि वेतनदानं विधेयम् । न ह्यन्धादेः परिचारकमन्तरेण जीवनसंभवः । येषां दारकरणं मतं तेषां सभार्याणां भरणं दातव्यम् । 'शक्त्या' इति धनानुरूपेण भोजनवस्त्रादि देयम् । 'पतित' इत्यर्थवादः । 'अर्थिता' संप्रयोगेच्छा रतिनिमित्तम् । तस्यां सत्यां विवहेत् । वान्तरेतास्तु यः क्लीबः तस्य भवत्येव मैथुनेच्छा । कुतः पुनस्तस्य तन्तूत्पत्तिः? उक्तं च तस्य 'यस्तल्पजः प्रमीतस्य क्लीबस्य पतितस्य च' (९, १६७) इति ॥ (मेधातिथिः)

2. 'क्लीबोऽथ पतितस्तज्जः पङ्गु' इति अपरार्क-विज्ञानेश्वरौ.

3. 'रोगी च' इति विश्वरूपः.

4. 'भर्तव्याः स्युः' इति विज्ञानेश्वरः.

5. 'सुतास्त्वेषां' इति वि. र., ४९१.

6. 'यावन्न' इति मु. वि. र., ४९१.

7. 'भ्रातृसत्कृता' इति मूलमातृकायाम्.

अपुत्रा योषितश्चैव[1] भर्तव्याः साधुवृत्तयः ।
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ॥[2]

नारदः [१६, २१]

पितृद्विट् पतितः षण्डो यश्च स्यादपपात्रितः ।
औरसा अपि नैतेऽशं लभेरन् क्षेत्रजाः कुतः ॥

'अपपात्रितः' राजवधादिना दोषेण बान्धवैर्यस्य घटापवर्जनं कृतम् ।[3]

देवलः

मृते न पितरि क्लीबकुष्ठ्युन्मत्तजडान्धकाः ।
पतितः पतितापत्यं लिङ्गी[4] दायांशभागिनः ॥

तेषां पतितवर्जेभ्यो भक्तवस्त्रं प्रदीयते ।
तत्पुत्राः पितृदायांशं लभेरन् दोषवर्जिताः ॥

'मृते न पितरि' इति । मृते पितरि क्लीबादयो नांशभागिन इति संबन्धः ।

विष्णुः [१५, ३२-३९]

पतितक्लीबाचिकित्स्यरोगविकलास्त्वभागहारिणः । रिक्थग्राहिभिस्ते भर्तव्याः । तेषां चौरसाः पुत्रा[5] भागहारिणः । न तु पतितस्य । पतनीये कृते

1. 'योषितश्चैषां' इति विश्वरूप-अपरार्क-विज्ञानेश्वर-चण्डेश्वराः.

2. 'तत्सुतः' पातित्याद्यनन्तरोत्पन्नः । 'प्रतिकूला' इत्यत्र प्रातिकूल्यं विषप्रयोगादिकारित्वं विवक्षितं न तु कलहमात्रकारित्वम् ॥ (वि. र., ४९०-१). 'पतितो' ब्रह्महादिः । 'आद्य' शब्देन आश्रमान्तरगत-पितृद्वेष्युपपातकि-बधिर-मूक-निरिन्द्रियाणां ग्रहणम् । पतितानान्तु पुंलिङ्गमविवक्षितम् । अतश्च पत्नी-दुहितृ-मात्रादीनामपि उक्तदोषदुष्टानां अनंशित्वं वेदितव्यम् । 'निर्दोषा' अंशग्रहणविरोधिक्लैब्यादिदोषरहिताः । औरस-क्षेत्रजयोर्ग्रहणमितरपुत्रव्युदासनार्थम् ॥ (मिताक्षरा)

3. प्रकाशकृता तु 'औपपातकी' इति पठित्वा उपपातकैर्युक्त इति विवृतम् । (वि. र., ४९१)

4. 'लिङ्गी' अतिशयेन कपटव्रतचारी (वि. र., ४९२)

5. पुत्राः पैतामहेऽप्यर्थे रिक्थग्राहिणस्ते भागहारिणः-ज.

...न्तरोत्पन्नाः । प्रतिलोमासु स्त्रीषु चोत्पन्नाश्चाभागिनः । तत्पुत्राः पैतामहेऽप्यर्थे । अंशग्राहिभिस्ते [1]भरणीयाः ॥

गौतमः [२८, ४४-४६]

जडक्लीबौ भर्तव्यौ । अपत्यं जडस्य भागार्हम् । शूद्रापुत्रवत्प्रतिलोमासु ॥

'शूद्रापुत्रवत्प्रतिलोमा'स्विति, शूद्रापुत्रोऽप्यनपत्यशुश्रूषुश्चेल्लभेत वृत्तिमन्तेवासिविधिना तत्पुत्रोक्तप्रकारेण । यथा शूद्रापुत्रो जीवनमात्रं लभत एवं प्रतिलोमासुतोऽपीति ॥

कात्यायनः [८६२-८६५]

अक्रमोढासुतश्चैव सगोत्राद्यश्च जायते ।
प्रव्रज्यावसितश्चैव न रिक्थं तेषु[2] कर्हिचित् ॥

अक्रमोढासुतस्त्वृक्थी सवर्णश्च यदा पितुः ।
असवर्णप्रसूतश्च क्रमोढायां [3]तु यद्भवेत् ॥

प्रतिलोमप्रसूता या तस्याः पुत्रो न रिक्थभाक् ।
ग्रासाच्छादनमत्यन्तं[4] देयं तद्बन्धुभिः [5]स्मृतम् ॥

बन्धूनामप्यलाभे[6] तु पित्र्यं द्रव्यं तदाप्नुयात् ।
अपित्र्यं तद्धनं प्राप्तं दापनीया न बान्धवैः[7] ॥

'अक्रमोढासुतो'ऽत्र अक्रमोढायामसवर्णायां जातः सोऽरिक्थी । एवं क्रमोढायां सवर्णेन जातः ऋक्थभागिति । 'सगोत्राद्यश्च जायत' इति—

1. भर्तव्याः—उ.
2. तेषु चार्हति—वि. र. ४९३.
3. च यो भवेत्—वि. र.
4. अत्यर्थं—वि. र.
5. मतम्—वि. र.
6. प्यभावे—वि. र.
7. बान्धवाः—वि. र., ४९३.

सगोत्रायां विवाहितायां सगोत्राद्यो जायतेऽसौ [न] ऋक्थभागित्यर्थः। 'दापनीया न बान्धवैः' ग्रासाच्छादनमपि न दापयितव्या इत्यन्वयः ॥[1]

## अथासंस्कृतसंस्करणम्

तत्र नारदः [१६, ३३-३४]

येषां च[2] न कृताः पित्रा संस्कारविधयः क्रमात् ।
कर्तव्या भ्रातृभिस्तेषां पैतृकादेव तद्धनात् ॥

अविद्यमाने पित्र्येऽर्थे[3] स्वांशादुद्धृत्य वा पुनः ।
अवश्यकार्याः संस्कारा [4]भ्रातॄणां पूर्वसंस्कृतैः ॥[5]

देवलः

कन्याभ्यश्च पितृद्रव्यं देयं वैवाहिकं वसु ।
अपुत्रकस्य कन्या स्वा[6] धर्मजा पुत्रवद्धरेत् ॥

1. 'अक्रमोढासुतो' अत्र नानावर्णानां कन्यानां विवाहे यः क्रमः शास्त्रीयस्तदुल्लङ्घनेन विवाहितायामसवर्णायामुत्पन्नः, अग्रे अनेनैवाक्रमोढासुते सवर्णाजाते 'अक्रमोढासुतस्त्वृक्थी' इत्यनेन भागग्राहिकत्वविधेः। 'सगोत्राद्यश्च जायते'—सगोत्रायां परिणीतायां यो जायते। 'प्रव्रज्यावसितः' प्रव्रज्यां गृहीत्वा तत्र भ्रष्टः। 'अक्रमोढासुतस्तु' इति—अक्रमोढासुतोऽपि सवर्ण एव स्यात् तदा ऋक्थी भागग्राहक एव। 'प्रतिलोमप्रसूता या' इति—अपकृष्टवर्णेन उत्कृष्टवर्णा या परिणीता तत्पुत्रो न ऋक्थभाक्। 'ग्रासाच्छादनं' इति—तस्यैव यदि बान्धवास्सन्ति तदा तैर्ग्रासाच्छादनमत्यर्थं देयम्। 'बन्धूनामभावे' तु स्वयमेव तद्धनं गृह्णीयात्। यदा तु बान्धवैरपि 'अपित्र्यमेव' धनं 'प्राप्तं', तदा ग्रासाच्छादनमपि न ते तस्य दापयितव्या इति ॥ (वि. र., ४९४)

2. तु-मु. ना. स्मृ.; वि. र., ४९५.

3. पित्र्यर्थे-वि. र.

4. भ्रातृभिः पूर्वसंस्कृतैः-ज, A. S. B., वि. र., *v. l.*, ४९५.

5. अत्र संस्कारविधयो जातकर्माद्युपनयनान्ताः-वि. र. ४९५.

6. स्वं-वि. र., ज, B. J.

याज्ञवल्क्यः [२, १२४]

असंस्कृता तु[1] संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।
भगिन्यश्च निजादंशादंशं[2] कृत्वा तुरीयकम् ॥[3]

विष्णुः [१५, ३१]

अनूढायाः कन्यायाः स्ववित्तानुसारेण संस्कारं कुर्यात् ।[4]

मनुः [९, ११८]

[5]स्वेभ्यः स्वेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक् ।
स्वात्स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सवः ॥

कात्यायनः [८५८]

कन्यकानां त्वदत्तानां चतुर्थो भाग इष्यते ।
पुत्राणां च त्रयो भागाः साम्यं स्वल्पे धने स्मृतम् ॥

शङ्खलिखितौ

विभज्यमाने दायार्थे[6] कन्यालङ्कारं वैवाहिकं स्त्रीधनं कन्या लभेत् ॥

बौधायनः [२, ३, ४४]

मातुरलङ्कारं दुहितरः सांप्रदायिकं लभेरन्नन्यद्वा ॥

1. असंस्कृताश्च-अपरार्क-विज्ञानेश्वरौ.

2. दत्वांशं तु तुरीयकम् इति विश्वरूप-अपरार्क-विज्ञानेश्वराः; also वि. र., ज, B. J., A. S. B., and S. B. (b).

3. संस्कारः परिणयनम् । तत् पूर्वसंस्कृतैरसंस्कृतानां भ्रातृणां कार्यम् । तादर्थ्येन वा द्रव्यमपनीयावशिष्टं विभजनीयम् । ...अतः साधारणादेव भ्रातरः संस्कार्या भगिन्यश्च । यदि स्वल्पं द्रव्यं वा न स्यात्, ततो निजादंशात् चतुर्थमंशं भगिन्यर्थमपनीयान्यत् समं विभजनीयम् ॥ विश्वरूपः, पृ. १४६)

4. 'अनूढानां च कन्यानां स्ववित्तानुरूपेण संस्कारं कुर्यात्' इति ज, द, स, B. J., A. S. B., and S. B. (a); also वि. र., ४९५.

5. 'स्वाम्यः स्वाम्यः' इति मेधातिथिः

6. दायाद्ये-A. S. B.; दायेभ्यः-B. J., S. B. (b).

'न दायमर्हति स्त्री' इत्यनुवृत्तौ पुनर्बौधायनः

'निरिन्द्रिया अदायाश्च स्त्रियो मता'[1] इति श्रुतिः ॥

## अथ विभाज्यम्

तत्र कात्यायनः [८४०, ८५०]

पैतामहं च पित्र्यं च यच्चान्यत्स्वयमर्जितम् ।
दायादानां विभागे तु सर्वमेतद्विभज्यते ॥

ऋक्थं प्रीतिप्रदत्तं तु दत्वा शेषं विभाजयेत् ।
आचतुर्थात्तु[2] तद्ग्राह्यं क्रमेणैव हि तत्सुतैः ॥

'आचतुर्थात्' पुरुषात् ।

नारदः [१६, ३२]

यच्छिष्टं पितृदायेभ्यो[3] दत्वर्णं पैतृकं च यत् ।
भ्रातृभिस्तद्विभक्तव्यमृणी[4] स्यादन्यथा पिता ॥[5]

कात्यायनः [८४६, ८४७, ८४९, ८४८, ८४९, ८४१, ८४२]

भ्राता पितृव्यमातृभ्यां कुटुम्बार्थमृणं कृतम् ।
विभागकाले [6]दातव्यमृणिभिः[7] सर्वमेव तु ॥

1. 'तस्मात् स्त्रियो निरिन्द्रिया अदायादीः'—तैत्तिरीयसंहिता, ६, ५, ८, २.
'निरिन्द्रिया' निःसत्वा इति प्रकाशः । 'अदाया' अनंशाः । एतच्च विहितांशस्त्री-व्यतिरिक्तविषयम् । (वि. र., ४९७).

2. आचतुर्थादिति—'त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्तते' इति वचनात् [मनु, ९, १८६] यो यस्य पिण्डदानेनोपकरोति, स तस्य विभज्य धनं गृह्णीयादित्यर्थः । हलायुधस्तु यस्मै प्रतिश्रुतं तमारभ्य चतुर्थत्वं विवक्षितं इत्याह । (वि. र., ४९८)

3. 'पितृदायेभ्यो'ऽत्र पित्राऽन्यस्मै प्रतिश्रुतं धनम् । प्रकाशकारस्तु 'पितृदानेभ्यः' इति पाठं पुरस्कृतवान् । (वि. र., ४९८)

4. 'ऋणी न स्याद्यथा पिता'–मु. ना. स्मृ.; ना. सं.; वि. र. पाठः

5. इदं च नारदवचनं पित्रृणशोधनावश्यंभावार्थं, न विभागकालार्थम् । (जीमूतवाहन, दा. भा., २५) एवं च पैतृकधनं नवश्राद्धपैतृकर्णापकरणार्थधनादभ्यधिकं चेत् नारदोक्तेन कार्यम् । नो चेत् याज्ञवल्क्योक्तमेव इत्यवगन्तव्यम् । (स्मृतिचन्द्रिका, व्यव.)

6. देयं तत्–द, ज, स, B. J., A. S. B., S. B. (b), and वि. र.

7. ऋक्थिभिः–द, ज, स, B. J. and वि. र.

तदृणं धनिने देयं नान्यथैव प्रदापयेत् ।
भावितं चेत्प्रमाणेन [1]विरोधात्परतो यदा ॥

पित्र्यं पित्र्यर्णसंबद्धमात्मीयं[2] चात्मना कृतम् ।
ऋणमेवंविधं शोध्यं विभागे बन्धुभिः सह ॥

धर्मार्थे प्रीतिदत्तं च यदृणं स्वानियोजितम् ।
तद्दृश्यमानं विभजेन्न दानं पैतृकाद्धनात् ॥

दृश्यमानं विभज्येत गृहं क्षेत्रं चतुष्पदम् ।
गूढद्रव्याभिशङ्कायां प्रत्ययस्त्वत्र कीर्तितः ॥

गृहोपस्करवाह्यास्तु दोह्याभरणकर्मिणः ।
दृश्यमाना विभज्यन्ते कोशं गूढेऽब्रवीद्भृगुः[3] ॥

'तदृणं धनिने देयं' इत्यादेरर्थः—विभागकाले, 'विरोधात्' परस्पर-विप्रतिपत्तौ, यच्च दत्तं 'तदृणं', 'परतः' उत्तरकालं, यदा देयं भवति तदा 'प्रमाणेन चेत् विभावितं' भवति ततो देयं नाऽपरत इति । 'पित्र्यर्णसंबद्धं' पित्र्यर्णपरिशोधनार्थे यत् 'कृतं' आत्मीयं कुटुम्बार्थे परकृतमपि 'आत्मना कृत'मपि कुटुम्बार्थमेव । [4]"धर्मार्थे प्रीतिदत्त'मिति—स्वयमसाधारण्येन साधरणधनं 'धर्मार्थे' दत्तं, प्रीत्या च यद्दत्तं, 'ऋणं यत्' स्वयमुत्तमर्णत्वे-नान्यस्मै दत्तं तत् ज्ञायमानं विभक्तव्यम् । यतोऽविभक्तात् पैतृकाद्धनाद-साधारण्येन दानं नोचितमिति ॥

1. विशेषात्–B. J.
2. आत्मार्थे–Bik. Ms.
3. मनुः–उ.
4. Cited by वि. र., ४९९, which adds:—

प्रकाश-पारिजातौ तु यदृणमेकेन साधारणं असाधारणधर्मार्थे कृतं, यदृणं कृत्वाऽन्यस्मै प्रीत्या दत्तं, यच्च 'स्वनियोजितं' स्वभोगार्थे कृतं, तत्त्रयमपि तथा निश्चीयमानमपि विभजेत् पृथक्कुर्याद्येन कृतं तेनैव तद्देयं न पैतृकाद्धनात्, सर्वैर्देयमित्यर्थं इत्याहतुः । (वि. र., ४९९-५००)

मनुः [९, ११९]

अजाविकं चैकशफं न जातु विषमं भजेत् ।
अजाविकं तु विषमं ज्येष्ठस्यैव विधीयते ॥[1]

## अथाविभाज्यम्

तत्र मनुः [९, २०६]

विद्याधनं तु यद्यस्य तत्तस्यैव धनं भवेत् ।
[2]मैत्रमौद्वाहिकं चैव माधुपर्किकमेव च ॥

'माधुपर्किकं' मधुपर्ककाले पूज्यतया यल्लब्धम् ।

याज्ञवल्क्यः [२, ११९]

क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः ।
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥[3]

1. 'एकशफं' अश्वाश्वतरगर्दभादयः विभागकाले समसंख्यया यद्विमुक्तं 'अजाविकं', न शक्यते ज्येष्ठस्यैव स्यात् न तदन्यद्रव्यांशपातेन समतां नयेत्, विक्रीतं वा ततस्तन्मूल्यं दापयेत् । (मेधातिथिः) विषमाणामजाविकैकशफनां न मूल्यादिना समो विभागः करणीयः, किं तु ज्येष्ठेनैव ते ग्राह्याः । (वि. र. ५००)

2. 'मैत्रं' मित्राल्लब्धम् (वि. र., ५०१); पैत्रं-स.

3. पित्रादिक्रमागतं द्रव्यं विभागकाले विच्छिन्नभोगविभक्तः सन्नितरदायादानुमतः स्वशक्त्या 'यदभ्युद्धरेत्' स्वीकुर्यात् स तत् विभक्तजदायादेभ्यः पुनर्विभागकाले न दद्यात् । (विश्वरूपः) । क्रमादभ्यागतं पितृक्रमादागतं यत्किंचिदन्यैः हृतं, असामर्थ्यादिना पूर्वपुरुषेणानुद्धृतं यो द्रव्यं अंशिनां मध्ये एक एवोद्धरति, तदंशयन्तरेभ्यो न दद्यात् । तत्र चांशयन्तराणामनुशयेति मिताक्षराकारः । यच्च संहितायां हारीतः—

पूर्वनष्टान्तु यो भूमिमेक एवोद्धरेच्छ्रमात् ।
यथाभागं लभन्तेऽन्ये दत्वांशन्तु तुरीयकम् ॥

इति वाक्यं लिखति स्म । तच्च स्मृतिमहार्णव-कामधेनु-कल्पतरु-पारिजातप्रभृत्यलिखनादयुक्तमेव ॥ (वि. र., ५०१)

व्यासः

विद्याप्राप्तं शौर्यधनं यच्च सौदायिकं भवेत् ।
विभागकाले तत्तस्य नान्वेष्टव्यं [1]स्वरिक्थिभिः ।

'सौदायिकं' इत्थं कात्यायनेन लक्षितम्—[९७१]

ऊढया कन्यया वापि पत्युः पितृगृहादपि ।
भ्रातुः सकाशात्पित्रोर्यल्लब्धं सौदायिकं स्मृतम् ॥

गौतमः [२८-३१]

[2]स्वयमर्जितमवैद्येभ्यो वैद्यः कामं न दद्यात् ॥
'वैद्यो' विद्वान् ।

कात्यायनः [८७५]

नाविद्यानां तु वैद्येन देयं विद्याधनात्कचित् ।
समविद्याधिकानां तु देयं वैद्येन तद्धनम् ॥

नारदः [१६, ११]

वैद्योऽवैद्याय [3]नाकामो दद्यादंशं स्वतो[4] धनात् ।
पित्र्यं द्रव्यं समाश्रित्य न चेत्तेन तदाहृतम् ॥[5]

1. तद्रिक्थिभिः—वि. र., B. J., A. S. B., S. B. (b)
2. स्वकर्मार्जितं–ज, A. S. B.; स्वधर्मार्जितं–S. B. (b); स्वयमर्जितं–वि. र., ५०२.
3. नांशम्तु–B. J., वि. र.
4. सतो–ज.
5. अत्र चेदमभिप्रेतं, यदा साधारणधनेनैव ग्रासाच्छादनाद्युपयोगं कृत्वा समधिगतविद्यः साधारणधनाश्रयेण विद्यया धनं प्राप्नोति, तदा अविद्याय न देयं, साधारणधनाश्रयेण तु विद्यार्जितमविद्यायापि देयम् । यदा तु विद्यार्जनकाले साधारणधनोपयोगेऽपि विदुषा न कस्यचिद्देयं, किं तु विदुष एव तद्धनं, पितृद्रव्यानुश्लेषार्जितस्याविभाज्यत्वमुक्त्वा पृथग्विद्यालब्धस्यापि व्यासेन अविभाज्यत्वप्रतिपादनात् । अत एव पुनरग्रे विद्याधनस्य यदविभाज्यत्वं वक्ष्यते तदसाधारणधनोपश्लेषेणैव उपात्तविद्यया धनार्जनकालेऽपि साधारणधनोपयोगो द्रष्टव्यमिति । हलायुधमिश्रोऽप्येवमेव ॥ (वि. र., ५०२–५०३)

विभजेदित्यनुवृत्तौ पुनर्नारदः [१६, ५-७]

शौर्यभार्याधने हित्वा यत्तु विद्याधनं भवेत् ।
त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृकः ॥

माता च स्वधनं दत्तं यस्मै स्यात्प्रीतिपूर्वकम् ।
तस्याप्येषो विधिर्दृष्टो माताऽपीष्टे यथा पिता ॥

व्यासः

पितामहेन यद्दत्तं पित्रा वा प्रीतिपूर्वकम् ।
तस्य तन्नापहर्तव्यं मात्रा दत्तं च यद्भवेत् ॥

याज्ञवल्क्यः [२, ११५]

पितृद्रव्याविनाशेन[1] यदन्यत्स्वयमार्जितम् ।
मैत्रमौद्वाहिकं चैव दायादानां न तद्भवेत् ॥

मनु-विष्णू [मनु, ९, २०८ ; विष्णु, १८, ४२]

अनुपघ्नन्[2] पितृद्रव्यं श्रमेण[3] यदुपार्जयेत्[4] ।
स्वयमीहितलब्धं च नाकामो दातुमर्हति ॥

व्यासः

अनाश्रित्य पितृद्रव्यं स्वशक्त्याप्नोति यद्धनम् ।
दायादेभ्यो न तद्दद्याद्विद्यालब्धं च यद्भवेत् ॥

1. पितृद्रव्याविरोधेन–ज, व्यवहारप्रकाश, पृ. ७०७, अपरार्क, विज्ञानेश्वर and A. S. B. ; 'द्रव्याविनाशेन' इति विश्वरूपः पठति.

2. 'अनुपघ्नन्' अनुपयुज्य (वैजयन्ती)

3. 'श्रमेण' सेवायुद्धादिना (मिताक्षरा, २, ११८)

4. यदुपार्जितम्–वि. र., ५०४.

कात्यायनः [८६७, ८७०, ८७३, ८७१, ८७२, ८७६, ८७८, ८७९, ८८०]

परभक्तप्रदानेन प्राप्तविद्यो यदाऽन्यतः ।
तया प्राप्तं च विधिना[1] विद्याप्राप्तं तदुच्यते ॥

उपन्यस्ते च[2] यल्लब्धं लब्धं प्राध्ययनाच्च यत् ।
विद्याधनं तु तत्प्राहुः[3] सामान्यं यदतोऽन्यथा ॥

[4]शिष्यादार्त्विज्यतः प्रश्नात् संदिग्धप्रश्ननिर्णयात् ।
स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च यत् ॥

विद्याधनं तु तत्प्राहुर्विभागे न विभज्यते ।
शिल्पिष्वपि हि धर्मोऽयं मूल्याद्यच्चाधिकं भवेत् ॥

[5]विद्यापणकृतं चैव याज्यतः शिष्यतस्तथा ।
एतद्विद्याधनं प्राहुः सामान्यं यदतोऽन्यथा ॥

परं निरस्य यल्लब्धं विद्यया पणपूर्वकम् ।
विद्याधनं तु तद्विद्यान्न विभाज्यं बृहस्पतिः ॥

विद्याप्रतिज्ञया लब्धं शिष्यादाप्तं च यद्भवेत् ।
ऋत्विङ्न्यायेन यल्लब्धमेतद्विद्याधनं भृगुः[6] ॥

1. यद्वित्तं–वि. र. ५०४.

2. उपन्यस्तेन–ज.

3. तद्विद्यात् विभागेन न युज्यते–ज; विभागेन प्रयुज्यते–ब, वि. र., ५०४.

4. The next three ślokas are supplied by B. J., A. S. B., S. B. (b) and वि. र., ५०४.

5. विद्याबलकृतं—स्मृ. चं.

6. भृगुः–ज, द, ब, and वि. र., ५०५; 'विदुः' इतरे.

[1]आरुह्य संशयं यत्र प्रसभं कर्म कुर्वते ।
तस्मिन् कर्मणि तुष्टेन प्रसादः स्वामिना कृतः ॥

तत्र लब्धं तु यत्किञ्चित् धनं शौर्येण तद्भवेत् ।
ध्वजाहृतं भवेद्यत्तु विभाज्यं नैव तत्स्मृतम् ॥

संग्रामादाहृतं यत्तु विद्राव्य द्विषतां बलम् ।
स्वाम्यर्थे जीवितं त्यक्त्वा तद्ध्वजाहृतमुच्यते ॥

यल्लब्धं लाभकाले तु स्वजात्या कन्यया सह ।
कन्यागतं तु तद्वित्तं शुल्कं वृद्धिकरं स्मृतम् ॥

वैवाहिकं तु तद्विद्याद्भार्यया यत्समाहृतम् ।
धनमेवंविधं सर्वं विज्ञेयं कर्मसाधकम् ॥

<u>शङ्खलिखितौ</u>

न वास्तुविभागो नोदपानालङ्कारानुयुक्तस्त्रीवाससामपां प्रचारवर्त्मनां विभागश्चेति <u>प्रजापतिः</u> ॥[2]

<u>मनु-विष्णू</u> [मनु., ९, २१९ ; विष्णु., १८, ४४]

वस्त्रं पत्रमलङ्कारः कृतान्नमुदकं स्त्रियः ।[3]
योगक्षेमप्रचारं च न विभाज्यं प्रचक्षते ॥

1. आरम्य-उ.

2. 'वास्तु' गृहम् । 'उदपानं' लौहवारिभाजनम् । 'अलङ्कारो'ऽङ्गन्यस्त एव । 'अनुयुक्तं' उपभुक्तं, तेन एकोपभोगविषय'स्त्रीवाससां' न विभाग इति प्राप्यते । अपां 'प्रचारवर्त्मनां' जलप्रचरणमार्गाणाम् ॥ (वि. र., ५०६)

3. हलायुधस्तु 'पत्रं' वाहनमित्याह । 'कृतान्नं' सक्त्वादि, तण्डुलादीति हलायुधः । (वि. र. ५०६)

'वस्त्रं' समूल्यमलङ्कृतम् । 'पत्र'शब्दोऽत्र लेख्यनिविष्टधनपरः । 'धनपत्र-विशिष्टं तु' इति कात्यायनवचनानुसारात् । 'स्त्रियः' संयुक्ताः, 'अविभागः स्त्रीषु संयुक्तासु' [२८, ४८] इति गौतमवचनात् । 'योगक्षेमं' मन्त्रिपुरोहितादि योगक्षेमहेतुत्वात्[1] । 'प्रचारः' गवादीनां प्रचारणमार्गः ॥

व्यासः

अविभाज्यं सगोत्राणामासहस्रकुलादपि ।
याज्यं क्षेत्रं च पात्रं च कृतान्नमुदकं स्त्रियः ॥

'क्षेत्रं' वास्तुक्षेत्रम् ।

1. 'योगक्षेमं' पितृक्रमेण राजकुलादौ उपजीव्यमिति प्रकाशः । हलायुधस्तु 'योगो' योगहेतुः नौकादिः, 'क्षेमः' क्षेमहेतुः दुर्गादिः इत्याह ॥ (वि. र. ५०६) "योगक्षेमशब्देन योगक्षेमकारिणो राजमन्त्रिपुरोहितादयः उच्यन्ते इति केचित् ।" इति विज्ञानेश्वरः [२, ११९]. Is this a reference to Lakṣmīdhara? Medhātithi in commenting on *Manusmṛti*, IX, 219—says: 'योगक्षेमं' यथा योगे क्षेमो भवति मन्त्रिपुरोहितामात्यवृद्धाः वास्तुचारादिभ्यः यतो रक्षा भवति ।

Vijñānesvara's reference cannot be to Medhātithi, as he would not refer to him as "इति केचित्," as it would be a derogatory way of alluding to a *bhāṣyakara*, whom he included among "venerated teachers" (ācaryāḥ) in the only passage in which he names the great commentator on *Manusmṛti*, (*Mitākṣarā*, III, 23):—"तथा—

यत्र त्रिरात्रं विप्राणां आशौचं संप्रदृश्यते ।
तत्र शूद्रे द्वादशाहः षण्णव क्षत्रवैश्ययोः ॥

इति अध्यग्न्यादिवचनानि विगीतत्वबुद्ध्या अनाद्रियमाणैः धारेश्वर-विश्वरूप-मेधातिथिप्रभृतिभिः आचार्यैः अयमेव साधारणः पक्षोऽङ्गीकृतः" See also my *Ancient Indian Economic Thought*, Benares, 1934, p. 134, note 2.

<u>कात्यायनः</u> [८८२-८८४]

धनं पत्रनिविष्टं तु धर्मार्थं यन्निरूपितम् ।
उदकं चैव [1]दाराश्च निबन्धो यः क्रमागतः ॥

धृतं वस्त्रमलङ्कारो [2]वानुरूपं च यद्भवेत् ।
यथाकालोपयुक्तानि तथा योज्यानि बन्धुभिः ॥

गोप्रचारश्च रथ्या च वस्त्रं यच्चाङ्गयोजितम् ।
प्रयोज्यं[3] न विभज्येत [4]शिल्पार्थं च <u>बृहस्पतिः</u> ॥

देशस्य जातेः सङ्घस्य धर्मो ग्रामस्य यो भृगुः ।
उदितः स्यात् स तेनैव [5]दायधर्मं प्रकल्पयेत् ॥[6]

<u>बृहस्पतिः</u> [२६-४७, ५०, ५१, ३, २, ५२]

वस्त्रादयोऽविभाज्या यैरुक्तं तैर्न विचारितम् ।
धनं भवेत्समृद्धानां [7]पत्रालङ्कारसंसृतम् ॥

मध्यस्थितमनाजीव्यं दातुं नैकस्य शक्यते ।
युक्त्या विभजनीयं तदन्यथानर्थकं भवेत् ॥

1. Kane reads दासश्च, but notes that Aparārka [p. 726] and Caṇḍeśvara [p. 507] read (as above) दाराश्च.

2. नानुरूपं तु-ज, स, वि. र., ५०७; "नानुरूपं च यद्भवेत्-यत्र साक्षाद्भागो न संभवी" इति चण्डेश्वरेण व्याख्यातम्.

3. प्रायोज्यं-स.

4. So, *Dayābhāga*; but वि. र., ५०७ reads धर्मार्थं

5. दायभागं-B. J.; वि. र., ५०७.

6. 'धृतं वस्त्रं' बहुमूल्यं, 'अङ्गयोजितं' अबहुमूल्यं विवक्षितम् । 'धर्मार्थं यन्निरूपितं' सर्वसाधारणधर्मार्थं यद्व्यवस्थापितं देवाराधनाय घण्टादि । 'प्रयोज्यं' प्रयुक्तमृणमिति हलायुधः । 'प्रयोज्यं' प्रयोगार्हं, पुस्तकादि, तन्न विभज्यते मूर्खादिभिः इति हलायुधः । 'शिल्पार्थं' तूलिकादि ॥ (वि. र., ५०७)

7. वस्त्रालङ्कारसंस्थितम्-ज, A. S. B.; वि. र., and स read संभृतम्; यात्रालङ्करणसंस्थितम्—द.

[1]विक्रीय वस्त्राभरणमृणमुद्ग्राह्य लेखितम् ।
कृतान्नं चाकृतान्नेन परिवर्त्य विभज्यते ॥

[2]उद्धृत्य कूपवाप्यम्भस्त्वनुसारेण गृह्यते ।
यथाभागानुसारेण सेतुः क्षेत्रे विभज्यते ॥

एकां स्त्रीं कारयेत् कर्म यथांशेन गृहे गृहे ।
बह्वयः समांशतो देया दासानामप्ययं विधिः ॥

योगक्षेमवतो लाभः समत्वेन विभज्यते ।
प्रचारश्च यथांशेन कर्तव्य ऋणिभिः सह ॥

'योगक्षेमवतः' योगक्षेमहेतोः । अत्र च वस्त्रादीनां प्रकारविशेषेण विभाज्यत्वमुक्तम् । अतो मन्वादीनां वस्त्राद्यविभाज्यवचनानि स्वरूपतो विभाज्यतानिषेधपराणीत्यविरोधः ॥[3]

कात्यायनः [८७४]

कुले विनीतविद्यानां[4] भ्रातॄणां पितृतोऽपि [5]वा ।
शौर्यप्राप्तं तु यद्वित्तं विभाज्यं [6]तद्बृहस्पतिः ॥

1. विक्रीय वस्त्राभरणं त्वनुसारेण गृह्यते-ज.

2. उद्धृत्य कूपवाप्यपः क्रमेण परिगृह्यते-ज.

3. 'मध्यस्थितमनाजीव्यं' मध्यगं सदनुपयुक्तं 'दातुं नैकस्य शक्यते' एकस्मै दातुमशक्यम् । ...प्रकाशकारस्तु स्वल्पमूल्यमङ्गसंयुक्तं यत्, तन्न विभजनीयं, समृद्धन्तु धनं पत्रालङ्कारहस्त्यादि संश्रितं यत् तत् विभजनीयं, तस्य विभागप्रकारोऽप्युक्तो 'मध्यस्थितमनाजीव्यं' इत्यादिनेत्याह ॥ (वि. र., ५०८)

4. स्वकुले प्राप्तविद्यानां-द, B. J.; कुले शिक्षितविद्यानां-ज.

5. हि-ज.

6. तु बृहस्पतिः-ज.

अस्यार्थः—['कुले'] स्वकुले पितामहपितृव्यादिभ्यः पितृत एव वा शिक्षितविद्यानां भ्रातृणां यत्तु विद्याशौर्यप्राप्तं धनं तद्विभागकाले विभक्तव्यमेवेति ॥

नारदः [१६, १०]

कुटुम्बं बिभृयाद्भ्रातुर्यो विद्यामधिगच्छतः[1] ।
भागं विद्याधनस्तस्मात्स लभेताश्रुतोऽपि सन् ॥

'अश्रुतो'ऽत्र अविद्यः ।

मनुः [९, २०४--२०५]

यत्किंचित्पितरि प्रेते धनं ज्येष्ठोऽधिगच्छति ।
भागो यवीयसां तत्र यदि विद्यानुपालिनः ॥

अविद्यानां तु सर्वेषामीहातश्चेद्धनं भवेत् ।
समस्तत्र विभागः स्यादपित्र्य इति धारणा ॥

'यत्किञ्चिदि'त्यादि, पितृद्रव्याविरोधेनापि [2]यतो ज्येष्ठो धनमर्जयति तत्र कनिष्ठानामपि विभागो भवति यदि ते विद्याभ्यासरता भवन्ति । 'ईहातः' कृष्यादिचेष्टातः ॥

वसिष्ठः [१७, ५१]

येन चैषां स्वयमुत्पादितं [3]स्याद्द्व्यंशमाहरेत् ।[4]

1. विद्यामधिगच्छति–ना. म. सं.

2. यज्ज्येष्ठो विद्यादिना धनमर्जयति–स.

3. स्याद्द्व्यंशेन–स. ; स्यात्तद्द्व्यंशेन–ज.

4. यदा बहूनां मध्ये साधारणधनमाश्रित्य एक एव कृष्यादिनाऽर्जयति, तदा तस्मै द्व्यंशौ, शेषाणामेकैकः । (वि. र., ५१०)

व्यासः

साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधम्[1] ।
शौर्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः ॥

तस्य भागद्वयं कार्यं शेषास्तु समभागिनः[2] ।

## अथ स्त्रीधनकृत्यम्

तत्र मनुः [९, १९९]

न निर्हारं स्त्रियः कुर्युः कुटुम्बाद्बहुमध्यगात् ।
स्वकादपि च वित्ताद्धि स्वस्य भर्तुरनाज्ञया ॥

'निर्हारं' निष्कृष्य हरणम् । 'कुटुम्ब'पदेन कुटुम्बधनं तत्साहचर्यादिहोच्यते । 'स्वकात्' स्वभर्तुरसाधारणात् ।

म.·विष्णू [मनु, ९, २०० विष्णु, १७, २२]

पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत् ।
न तं भजेरन् दायादा भजमानाः पतन्ति ते ॥[3]

1. वाहनादिकम्–ड; वाहनायुधम्–म, वि. र., ५१०.

2. एतत्परिभाषितविद्याशौर्यादिधनव्यतिरिक्तविद्याशौर्यादिधनाभिप्रायेण द्रष्टव्यमिति । (वि. र., ५१०). शौर्यादिप्राप्तमविभक्तमित्युक्तम् । तत्रापवादमाह व्यासः (मदनपारिजात, ६८८). शौर्यादिना असाधारणोपायेनापि चेत् साधारणधनश्लेषणमर्जयति तदाऽर्जको द्व्यंशभागीत्यर्थः (२०१) । 'आदि' पदस्य प्रकारवाचितया बहुव्रीहेश्चास्य तद्गुणसंविज्ञानतया असाधारण्योपायविद्यापरिग्रहः । ननु साधारणधनाश्रयणेनापि विद्याशौर्यादिना यदर्जितं तदविभाज्यमिति प्रागुक्तमनेन विरुद्ध्यत इति चेत्, न । तस्य कात्यायनादि विद्यादिशौर्यादिपरत्वादस्य तु तदितरप्रकारविद्योपष्टम्भमात्रपरत्वात् ॥ (विवादचिन्तामणिः, २१३–२१४)

3. पत्यनुज्ञातेनाप्यदत्तोऽप्यलङ्कारो यो मण्डनार्थे धृतः सोऽपि दायादैः न हर्तव्य इति मेधातिथिरिति प्रकाशः । [The commentary of Medhātithi on this śloka, which is now lost was apparently unavailable even to Caṇḍeśvara]

<u>आपस्तम्बः</u> [२, १४, ९]

अलङ्कारो [1]भार्याया ज्ञातिधनं चेत्येके ॥[2]

<u>नारदः</u> [४, २८ ; ना. म. सं., २, २४]

भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत् ।
सा यथाकाममश्नीयात् दद्याद्वा स्थावरादृते ॥[3]

<u>व्यासः</u>

द्विसहस्रपणो दायः स्त्रियं देयो धनस्य तु ।
यच्च भर्त्रा धनं दत्तं सा यथाकाममाप्नुयात् ॥

<u>कात्यायनः</u> [९०१, ९०५-९०७, ९२१]

ऊढया कन्यया वाऽपि पत्युः पितृगृहेऽपि वा ।
भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥

सौदायिकं धनं [4]स्त्रीणां प्राप्य स्वातन्त्र्यमिष्यते ।
यस्मात्तदानृशंस्यार्थं तैर्दत्तं[5] तत्प्रजीवनम् ॥

सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्तितम् ।
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥

1. भार्याज्ञातिधनं-स

2. ज्ञातिधनञ्चेति विवाहे यद्धनं यौतकाख्यं लब्धं, तदपि भार्याया एवेत्यर्थः । (वि. र. ५११).

3. एवं च भर्तृदत्ते जङ्गमे परं स्त्रिया दानादौ स्वातन्त्र्यं न तु स्थावरेऽपि इति । एवं सौदायिके व्यवस्था सिद्धा । (विवादचिन्तामणिः २१८)

4. प्राप्य स्त्रीणां-द, स.

5. तैः दत्तमुपजीवनं-ज, A. S. B. and Kane. तैः दत्तं तत्प्रजीवनं-वि. र., ५१२ ; स, S. B. (b)

भर्तृदायं मृते पत्यौ [1]विन्यसेत्स्त्री यथेष्टतः ।
विद्यमाने तु संरक्षेत्क्षपयेत्तत्कुलेऽन्यथा ॥

अपुत्रा शयनं भर्तुः पालयन्ती गुरौ स्थिता ।
भुञ्जीतामरणात्क्षान्ता दायादा ऊर्ध्वमाप्नुयुः ॥

'पत्युर्गृहे' इति सम्बन्धः । 'भ्रातुः पित्रोर्वा' इत्युपलक्षणम्, तेनाऽन्येभ्योऽपि । स्वमातापितृकुलेभ्यो यल्लब्धं धनं तत् 'सौदायिकम्' । तत्र च 'स्थावरे'ऽपि स्त्रियाः दानादिषु स्वातन्त्र्यम् । भर्तृदत्तेषु तु स्थावरातिरिक्तेष्वेव यथेष्टं दानादिष्वधिकारः ॥[2]

राजा ऋक्थं पालयेदित्यनुवृत्तौ मनुः [८, २८-२९]

वशाऽपुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च ।
पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च ॥

जीवन्तीनां तु तासां ये तद्धरेयुः स्वबान्धवाः ।
ताञ्छिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः ॥

'वशा' वन्ध्या । 'अपुत्रा' मृतपुत्रा । 'निष्कुला' प्रनष्टमातापितृकुला ।

देवलः

वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत् ।
भोक्त्री च स्वयमेवेदं पतिर्नार्हत्यनापदि ॥

1. विन्यस्येत्–उ ; विन्यसेत्–वि. र., B. J., A. S. B., and S. B. (b).

2. ऊढया अनूढया वा पतिगृहे पितृगृहे वा स्वमातुः स्वपितुर्वा तत्कुल्येभ्यो यल्लब्धं तत् 'सौदायिकम्' । सौदायिके धने स्थावरसाधारणं स्त्रीणां स्वातन्त्र्यं, भर्तृदत्ते तु स्थावरादन्यस्मिन् स्थितम् ॥ वि. र., ५१३.

मृषा[1] मोक्षे च [2]भोगे च स्त्रियै दद्यात्सवृद्धिकाम् ।
पुत्रार्तिहरणे[3] चापि स्त्रीधनं भोक्तुमर्हति ॥[4]

**कात्यायनः** [९११-९१४]

न भर्ता नैव च सुतो न पिता भ्रातरो न च ।
आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः ॥

यदि ह्येकतरस्तेषां स्त्रीधनं हरते बलात् ।
सवृद्धिं प्रतिदाप्यः स्याद्दण्डश्चैव समाप्नुयात् ॥

तदेव यद्यनुज्ञाप्य भक्षयेत्प्रीतिपूर्वकम् ।
मूलमेव[5] स दाप्यः स्याद्यदा स धनवान् भवेत् ॥

व्याधितं व्यसनस्थं[6] च धनिकैश्चोपपीडितम् ।
[7]ज्ञात्वा निसृष्टं यत्प्रीत्या दद्यादात्मेच्छया च[8] सः ॥

1. वि. र., (५१४), B. J., A. S. B., S. B. (b)–वृथा

2. भागे च–उ ; भोगे च–वि. र., स. B. J., S. B. (b), Bik. Ms ; वृथा दाने च– A. S. B.

3. पुत्रार्तिहरणे–वि. र. B. J., A. S. B., S. B. (b) and ज.

4. 'वृत्तिः' वृत्यर्थं दत्तधनम् । 'लाभो' बन्धुभ्यो लब्धम् । 'शुल्कं' विवाहार्थितया कन्यायै दत्तं धनम् । 'वृथा मोक्षे च' इति–यदावश्यककार्यादिना धनमादाय वृथा दानभोगौ करोति तदा सवृद्धिकं धनं दद्यात् । पुत्रार्तिहरणार्थन्तु स्त्रीधनं विनापि स्त्रीसम्मत्या गृहीतव्यम् ॥ (वि. र., ५१५)

5. मूलमेव स दाप्यः स्यात्–वि. र., A. S. B., B. J., द, ज, and S. B. (b). ; मूलमेव तदा दाप्यः स–उ.

6. व्यसनार्त्तं च–स.

7. दृष्ट्वा–वि. र., ५१५

8. हि सः–वि. र.

याज्ञवल्क्यः [२, १४७]

दुर्भिक्षे धर्मकार्यार्थे व्याधौ सम्प्रतिरोधके ।
गृहीतं स्त्रीधनं भर्ता न स्त्रियै दातुमर्हति ॥[1]

कात्यायनः [९०८-९१०]

यदि चेत्स द्विभार्यः स्यान्न च तां भजते पुनः ।
प्रीत्या विसृष्टमपि चेत् प्रतिदाप्यः स [2]तद्बलात् ॥

ग्रासाच्छादनवासानामाच्छेदो यत्र योषितः ।
तत्र स्वमाददीत स्त्री विभागं[3] रिक्थिनां तथा ॥

लिखितस्येति धर्मोऽयं प्राप्ते भर्तृकुले वसेत् ।
व्याधिना प्रेतकाले तु गच्छेद्बन्धुकुलं ततः ॥

अपकारक्रियायुक्ता निर्लज्जा चार्थनाशिका ।
व्यभिचाररता या च स्त्रीधनं न च साऽर्हति ॥

[4]यज्ञार्थं द्रव्यमुत्पन्नं तस्माद्द्रव्यं[5] नियोजयेत् ।
स्थानेषु धर्मजुष्टेषु न स्त्रीमूर्खविधर्मिषु ॥

1. भर्तृवचनादन्यो भ्रात्रादिर्दुर्भिक्षादिगृहीतमपि दद्यादिति गम्यते । संप्रत्येवादत्वा, मा दास्यसीत्येवं रोधाहरणं 'संप्रतिरोधकम्' । नगरोपरोध इत्यन्ये ॥ (विश्वरूपः) 'संप्रतिरोधके' बन्दिग्रहणनिग्रहादौ (मिताक्षरा) ; 'संप्रतिरोधो' निगडादिबन्धः (अपरार्कः).

2. तद्धनम्–B. J., वि. र., ५१६.

3. विभागं ऋक्थिनस्तथा–वि. र.

4. द्रव्यं तु कल्पयेत्–च.

5. धर्मयुक्तेषु–वि. र. Not found in Kane's collection.

भर्त्रा प्रतिश्रुतं देयमृणवत्स्त्रीधनं[1] सुतैः ।
तिष्ठेद्भर्तृगृहे[2] [3]या तु न सा पितृकुले वसेत् ॥

## अथ स्त्रीधनविभागः

तत्र मनुः [९, १९२, १९३, १९५]

जनन्यां संस्थितायां तु [4]समं सर्वे सहोदराः ।
भजेरन् मातृकं रिक्थं भगिन्यश्च सनाभयः ॥

यास्तासां स्युर्दुहितरस्तासामपि [5]यथार्हतः ।
मातामह्या धनात्किञ्चित्प्रदेयं प्रीतिपूर्वकम् ॥

[6]अन्वाधेयं च यद्दत्तं पत्या प्रीतेन चैव यत् ।
पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनं भवेत् ॥

'सनाभयो'ऽत्र सोदर्याः । 'यथार्हतः' द्रव्याल्पत्वबहुत्वादियोग्यताद्यनुसारेण । 'अन्वाधेयं' विवाहोत्तरकालं भर्तृकुले पितृकुले च यल्लब्धं धनम् ।

बृहस्पतिः [२६, ३१]

स्त्रीधनं स्यादपत्यानां दुहिता च तदंशिनी ।
[7]अपुत्रा चेत्समूढा तु लभते मानमात्रकम् ॥[8]

1. ऋणमस्त्रीधनं सुतैः-मूलमातृका ; reading adopted is that of वि. र.
2. भर्तृकुले-वि. र.
3. जातु-वि. र.
4. सर्वे पुत्राः सहोदराः-ज, द. । 'समं' ज्येष्ठोद्धारादिशून्यम् (वि. र., ५१८)
5. यथा कृतः-स.
6. एतच्च वचनं वृत्तायां जीवत्यपि पत्यौ एवंविधधनद्वये पतिसंबन्धनिराकरणार्थं आरब्धमिति हलायुधः । (वि. र., ५१८)
7. अप्रत्ता-B. J., S. B. (b), वि. र. ; 'अनूढा' इति व्याख्यातम्.
8. एतद्वाक्यबलात् मनुवाक्येपि अनूढानामेव भ्रातृभिः सह समांशित्वमिति बोद्धव्यम् । ऊढानान्तु मानानुसारेण किञ्चिद्देयम् ॥ (वि. र., ५१९)

<u>मनुः</u> [९, १३१]

मातुस्तु यौतकं यत्स्यात्कुमारीभाग एव सः ॥

'यौतकं' विवाहकाले पित्रादिभिः स्त्रियै यद्दत्तं धनम् ।

<u>गौतमः</u> [२८, २५]

स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च ॥

'अप्रतिष्ठिताः' विवाहिता अपि निर्धनभर्तृका दुर्भगा अनपत्याश्च ।[1]

<u>वसिष्ठः</u> [१७, ४६]

मातुः पारिणाह्यं स्त्रियो विभजेरन् ॥

'पारिणाह्यं[2] परिच्छद आदर्शकङ्कणादिः ।

विभजेरन्नूर्ध्वमित्यनुवृत्तौ <u>याज्ञवल्क्यः</u> [२, ११७]

मातुर्दुहितरश्शेषमृणात्ताभ्य[3] ऋतेऽन्वयः ॥

'अन्वयः' तत्पुत्रपौत्रादिः ।

विवाहार्हेष्वित्यनुवृत्तौ <u>विष्णुः</u> [१७, २०]

सर्वेष्वेव प्रसूतानां तद्धनं दुहितृगामि ।

<u>मनुः</u> [९, १९८]

स्त्रियास्तु[4] यद्भवेद्वित्तं पित्रा दत्तं कथञ्चन ।

ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत् ॥[5]

1. अनपत्या निर्धनभर्तृका दुर्भगाश्च–स, ज.

2. पारीणाह्यं–ज, द. ; पारीणेयं–ed. Führer.

3. ऋणादिभ्यः–उ.

4. 'स्त्रियां तु' इति मेधातिथिपाठः

5. यदा भर्ता स्वापत्यानि च न सन्ति, सपत्न्यश्च नानाजातीयाः तद्दुहितरश्च सन्ति, तदा ब्राह्मणी कन्या पितृदत्तं मातृसपत्नीधनमर्हति, तदभावे तदपत्यं चेत्यर्थः । 'पित्रा दत्तं' इति स्त्रीधनमात्रोपलक्षणमिति असहाय-मेधातिथि-प्रकाशकाराः ॥ (वि. र., ५२०)

अस्यार्थः—स्त्रीणामभर्तृकाणामनपत्यानां च पित्रा दत्तं सपत्नीदुहिता ब्राह्मणी या कन्या सा हरेत् तदपत्यं चेति ।

कात्यायनः [९१८-९१७]

दुहितॄणामभावे तु ऋक्थं पुत्रेषु तद्भवेत् ।
बन्धुदत्तं तु बन्धूनामभावे भर्तृगामि तत् ॥

भगिन्यो बान्धवैः सार्धं विभजेरन् सभर्तृकाः ।
स्त्रीधनस्येति धर्मोऽयं विभागस्तु प्रकल्पितः ॥[1]

अथाप्रजायाः

तत्र मनुः [९, १९६-१९७]

ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्धनम् ।
अतीतायामप्रजसि[2] भर्तुरेव तदिष्यते ॥

यत्त्वस्याः स्याद्धनं दत्तं विवाहेष्वासुरादिषु ।
अतीतायामप्रजसि[3] मातापित्रोस्तदिष्यते ॥[4]

1. 'सभर्तृकाः' इति विशेषणं विधवानिवृत्त्यर्थम् । (स्मृतिचन्द्रिका) । 'दुहितॄणामभावे तु' इति अष्टविधविवाहविषयम् । 'बन्धुदत्तं' इत्यादि आसुरविवाहविषयम् । (व्यवहारनिर्णय, ४६७)

2, 3. अप्रजायामतीतायां–मेधातिथि–गोविन्दराजौ.

4. 'विवाहेषु यद्धनं' दत्तमिति सम्बन्धात् वैवाहिकधनमात्रप्रतीतेर्न यावद्धनविषयम् (दायभागः, ८८) । तत्र गान्धर्वविवाहोढाया धनस्य भर्तृभागतया विकल्पः, यतः स एवाह 'विवाहेष्वासुरादिषु' (अपरार्कः, ७६३) । 'गान्धर्वविवाहे भर्तृपित्रोः समो भागः । (याज्ञवल्क्यवीरमित्रोदयव्याख्या, ६२२)

देवलः

सामान्यं पुत्रकन्यानां मृतायां स्त्रीधनं स्त्रियाम् ।
अप्रजायां हरेद्भर्ता माता भ्राता पिताऽपि च ॥[1]

गौतमः [२८, २६-२७]

भगिनीशुल्कं सोदर्याणामूर्ध्वं मातुः । पूर्वं चैके ॥

'भगिनीशुल्कः' आसुरादिविवाहोढाया भगिन्याः धनम् । 'ऊर्ध्वं मातुः' मातरि मृतायामित्यर्थः ।[2]

याज्ञवल्क्यः [२, १४४]

बन्धुदत्तं तथा शुल्कमन्वाधेयकमेव च ।
अप्रजायामतीतायां बान्धवास्तदवाप्नुयुः ॥[3]

मनुः [९, १३५]

अपुत्रायां मृतायां तु पुत्रिकायां कथञ्चन ।
धनं तत्पुत्रिकाभर्ता हरेतैवाविचारयन् ॥[4]

पैठीनसिः

प्रेतायां पुत्रिकायां न भर्ता तद्द्रव्यमर्हत्यपुत्रायां कुमार्यां स्वस्रा वा तद्ग्राह्यम् ॥

1. 'हरेद्भर्ता' ब्राह्मादिषु, मातेत्यासुरादिषु । (वि. र., ५२३)

2. आसुरविवाहकन्याशुल्कभाक्त्वं सोदरभ्रातृणां, तदभावे मातुः, यदाह गौतमः 'भगिनीशुल्कं' (इत्यादि)—अपरार्कः, ७५४ । 'दुहित्रादिषु पौत्रपर्यन्तेषु विद्यमानेष्वपि भगिनीशुल्कं सोदरा एव हरेयुरित्यर्थः' (मदनपारिजातः, ६६८) । ऊर्ध्वमिति–मातृमरणादनन्तरमित्यर्थः । कल्पतरुरप्येवम् । माता चात्र भगिन्येव (बालम्भट्टी, २-१४८)

3. इदमप्यासुरादिविवाहविषयम्-वि. र., ५२३.

4. अस्वामिन्याश्च पुत्रिकाया भर्तुरप्राप्तधनसम्बन्ध उच्यते (मेधातिथिः)

याज्ञवल्क्यः [२, १४६]

दत्वा कन्यां हरन्दण्ड्यो व्ययं [1]दद्याच्च सोदयम् ।
[2]मृतायां सर्वमादद्यात् परिशोध्योभयव्ययम् ॥

अस्यार्थः—[3]स्वयमेव वाचा दत्वा, 'हरन्' कारणमन्तरेण कन्यामपहरन्, दण्ड्यो भवति । यच्च वरेण दत्तं हिरण्यादिकं तत्र समवृद्धिकं दद्यादिति कन्यादातुरुपदेशः । अथ कथञ्चिद्वाग्दत्ता मृता, तस्यां 'मृतायां सर्वमादद्यात्' । यत्पूर्वं दत्तमुभयोरपि व्ययं शोधयित्वा यत्कन्यापित्रा सम्बन्धिनामुपचारार्थं पण्यादिकं दत्तं, यच्च सम्बन्धिनां मङ्गलार्थं दत्तमङ्गुलीयादिकं, उभयं परिगणय्याऽवशिष्टमादद्यात् ॥[4]

अर्हतीत्यनुवृत्तौ शङ्खः

स्वयं शुल्कं वोढा ॥

बौधायनः[5]

ऋक्थं मृतायाः कन्याया[6] गृह्णीयुः सोदराः स्वयम् ।
तदभावे भवेन्मातुस्तदभावे पितुर्भवेत् ॥

1. दद्यात्तु–उ ; दद्यात्सहोदयम–अपरार्कः

2. Lacuna in S. B. (b) begins here.

3. वराय वाचा–A. S. B.

4. कन्यां वाचा दत्वा विना दोषमपहरन् राज्ञा दण्ड्यः । व्ययश्च सवृद्धिकं वरस्य दापयितव्यः । कारणे त्वपहारो न दोषाय (वि. र., ५२४) ।

5. Not found in the printed 'Baudhāyana' but cited also by the *Mitākṣarā*, *Dāyabhāga*, *Smṛticandrikā* and other digests.

6. अत्र कन्यानूढाऽभिप्रेता–वि. र., ५२५.

बृहस्पतिः [व्यव., २६, ३२-३३]

मातृष्वसा मातुलानी पितृव्यस्त्री पितुःस्वसा ।
श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्तिताः ॥

यदासामौरसो न स्यात् सुतो दौहित्र एव वा ।
तत्सुतो वा धनं तासां स्वस्रीयाद्याः समाप्नुयुः ॥

अथ स्त्रीधनलक्षणम्

तत्र मनुकात्यायनौ [मनु., ९, १९४ ; कात्या., ८९४]

अध्यग्न्यध्याहवनिकं[1] दत्तं च प्रीतितः स्त्रियै ।
भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥

नारदः [१६, ८]

अध्यग्न्यध्याहवनिकं भर्तृदायस्तथैव च ।
भ्रातृदत्तं पितृभ्यां च षड्विधं स्त्रीधनं स्मृतम् ॥

विष्णुः [१७, १८]

पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतमाधिवेदनिकं बन्धुदत्तं शुल्कमन्वाधेयकमिति स्त्रीधनम् ॥

देवलः

वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत् ॥

1. 'अध्यग्नि' होमविवाहकाले लब्धं यतः कुतश्चित् । तथा व्यावहारिकं पतिगृहनयनसमये लब्धम् । प्रीतिकर्मणि रतिकाले पत्या दत्तम् (सर्वज्ञनारायणः) । भर्तृगृहाद्यदा पितृगृहं वाह्यते तदा श्वशुरादिभिर्दत्तं अध्यावाहनिकमिति मेधातिथिः, तदपि ग्राह्यं न्यायसाम्यात् । दत्तं च प्रीतितः शीलधर्मनैपुण्यादिषु उत्पन्नप्रीतिना श्वशुरादिना दत्तं च । 'षड्विधमिति' न्यूनसंख्याव्यवच्छेदार्थं न तु अधिकव्यवच्छेदार्थं, आधिवेदनिकस्यापि स्त्रीधनस्याधिकस्य याज्ञवल्क्येन [२, १४८] अभिधानात् ॥ (वि. र., ५२६).

कात्यायनः [९०४]

प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः ।
भर्तुः स्वाम्यं सदा तत्र शेषं तु स्त्रीधनं भवेत् ॥[1]

[का. ८९५-८९७]

विवाहकाले यत्स्त्रीभ्यो दीयते ह्यग्निसन्निधौ ।
तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्तितम् ॥

यत्पुनर्लभते नारी नीयमाना हि पैतृकात्[2] ।
अध्याह्वनिकं नाम[3] तत्स्त्रीधनमुदाहृतम्[4] ॥

प्रीत्या प्रदत्तं यत्किञ्चित् श्वश्र्वा वा श्वशुरेण वा ।
पादवन्दनिकं यत्तल्लावण्यार्जितमुच्यते ॥[5]

[का. ९९-९००]

विवाहात्परतो[6] यत्तु लब्धं भर्तृकुलात्स्त्रिया ।
अन्वाधेयं तदुक्तं तु लब्धं यत्स्वकुलात्तया ॥

ऊर्ध्वं लब्धं तु यत्किञ्चित् संस्कारात् प्रीतितः स्त्रिया ।
भर्तुः पित्रोः सकाशाद्वा अन्वाधेयं तु तद्भृगुः ॥

1. उक्तप्रकारातिरिक्तं यत्स्त्रीधनं स्त्रियाऽर्जितं तत्र भर्तुरेव स्वाम्यम् । (वि. र., ५२७).
2. Kane reads (p. 110) पितुर्गृहात्.
3. *Ibid*, चैव.
4. स्त्रीधनं तदुदाहृतम्–A. S. B.
5. Kane reads–पादवन्दनिकं चैव प्रीतिदत्तं तदुच्यते ।
6. विवाहानन्तरं यत्तु–ज.

[का॰ ८९८]

गृहोपस्करवाह्यानां दोह्याभरणकर्मणाम् ।
मूल्यं लब्धं तु यत्किंचित् शुल्कं तत्परिकीर्तितम् ॥[1]

## अथावलुप्तविभागः

तत्र मनुः [९, २१८]

ऋणे धने च सर्वस्मिन् प्रविभक्ते यथाविधि ।
पश्चात् दृश्येत यत्किंचित्तत्सर्वं समतां नयेत् ॥[2]

कात्यायनः [८८५-८८८]

प्रच्छादितं तु यद्येन पुनरागत्य यत्समम् ।[3]
भजेरन्भ्रातृभिः सार्धमभावे हि पितुः सुताः ॥

अन्योन्यापहृतं द्रव्यं दुर्विभक्तं च यद्भवेत् ।
[4]यथाप्राप्तं विभज्येत समभागेन तद्भृगुः ॥

विभक्तेनैव यत्प्राप्तं धनं तस्यैव तद्भवेत् ।
हृतं नष्टं च यल्लब्धं प्रागुक्तं च पुनर्भवेत्[5] ॥

1. गृहादिकर्मिभिः तत्कर्मकरणाय प्रकरणार्थं यद्धनं स्त्रियै उत्कोचरूपतया दत्तं तच्छुल्कम् । (वि. र., ५२८).

2. अविज्ञानात् न्यूनमधिकं वा विभक्तं, परतो ज्ञातं, समांशीकर्तव्यम् । किञ्च विभागोत्तरकालं लब्धे नास्ति ज्येष्ठोद्धारः । (मेधातिथिः).

3. 'प्रच्छादितं यदि धनं पुनरासाद्य तत्समम्' इति अपरार्कः पठति [७२५].

4. पश्चात्प्राप्तं-द, ज, B. J., A. S, B., वि. र., ५२९.

5. पुनर्भजेत्-द, ज, A. S. B., वि. र., ५२९.

बन्धुवर्गहृतं[1] द्रव्यं बलान्नैव प्रदापयेत् ।
बन्धूनामविभक्तानां भोगं नैव प्रवर्तयेत्[2] ॥

[3]बृहस्पतिः [व्यव॰ २६, १४१-१४२]

साधारणऋणन्याससनिह्नवे छद्मना क्रियाम् ।
पार्श्वहानिकरीं कृत्वा [4]पश्चाच्छेषं प्रदापयेत् ॥

मायाविनो [5]धूतधनाः क्रूरा लुब्धाश्च ये नराः ।
संप्रीत्या साधनीयास्ते स्वार्थहान्या छलेन वा ॥

अथ नानावर्णसमवायविभागः[6]

तत्र मनुः [९, १४८-१५४]

एतद्विभागं विज्ञेयं [7]विभागस्यैकयोनिषु ।
बह्वीषु चैकजातानां नानास्त्रीषु निबोधयेत् ॥

ब्राह्मणस्यानुपूर्वेण चतस्रस्तु यदि स्त्रियः ।
तासां पुत्रेषु जातेषु विभागोऽयं विधिः स्मृतः ॥

1. बन्धुनापहृतं–द, ज, A. S. B., वि. र., ५३०.

2. प्रदापयेत्–द, B. J., वि. र., ५३०.

3. Name omitted but supplied by द, ज, B. J., A. S. B.

4. बलान्नैव—B. J., वि. र., ५३०.

5. वृत्तवन्तः–ज ; वृतधनाः–द.

6. समुदायविभागः–ज, A. S. B., 'नानावर्णानां विभागो' इति वि. र., ५३१. Gap in S. B. (b) ends here.

7. विभागस्यैव योनिषु–ज.

कीनाशो गोवृषो यानमलङ्काराश्च[1] वेश्म च[2] ।
[3]विप्रस्योद्धारकं देयमेकांशश्च प्रधानतः ॥[4]

त्र्यंशं दायाद्धरेद्विप्रो द्वावंशौ क्षत्रियासुतः ।
वैश्याजोऽध्यर्धमेवांशमंशं शूद्रासुतो हरेत् ॥

सर्वं वा रिक्थजातं तु दशधा प्रविभज्य तु ।
धर्म्यं विभागं कुर्वीत विधिनाऽनेन धर्मवित् ॥

चतुरोंऽशान् हरेद्विप्रस्त्रीनंशान् क्षत्रियासुतः ।
वैश्यापुत्रो हरेद्‌द्व्यंशमंशं शूद्रासुतो हरेत् ॥[5]

'एकयोनिषु' एकजातीयासु स्त्रीषु जातानामित्यर्थः । 'नानास्त्रीषु' नानाजातीयासु[6] स्त्रीषु । 'एकांशश्च प्रधानतः' ये ब्राह्मणस्य त्रयोंऽशास्तत्रैकांशः प्रधानतः सारद्रव्यात्कर्तव्यः ॥

नारदः [१६, १४]

वर्णानुरेष्वंशहानिरूढाजाते[7]ष्वनुक्रमात् ॥

1. अलङ्कारश्च–वि. र., ५३० ; मेधातिथिश्च.

2. वेश्मनि–द ; ये स्मृताः–ज.

3. विप्रस्योद्धारकं–मेधातिथिः ; प्रविश्योद्धारिकं–वि. र., ५३१.

4. 'कीनाशो' वाहः । 'यानं' गवादिः । 'अलङ्कारः' पितृधृताङ्गुलीयकादिः । 'वेश्म' प्रधानम् । 'एकांशश्च' यावन्तोंऽशास्तत एकः प्रधानभूतस्तस्य दातव्यः ॥ (मेधातिथिः).

5. यदि सत्पुत्रो विद्यमानसवर्णापुत्रो यदि वा अपुत्रो अविद्यमानसवर्णापुत्रो भवेत् । यत्तु प्राक् चतुस्त्रिद्व्येकभागित्वं योगीश्वरादिभिरुक्तम् । तदतिसद्‌वृत्तशूद्रापुत्रविषयं वेदितव्यं, अन्यथा मानव [९, १५१] विरोधात् । (व्यवहारप्रकाशः, ४८७)

6. नानाजातीयस्त्रीषु–स.

7. हानिर्गूढाजातेषु–ना. म. सं.

महाभारते [अनुशासनपर्व, ४२, ४८-५६]

भीष्म उवाच—

क्षत्रियस्यापि भार्ये द्वे विहिते कुरुनन्दन ।
तृतीया वा भवेच्छूद्रा न तु दृष्टान्ततः स्मृता ॥

अष्टधा तु भवेत्कार्यं क्षत्रियस्वं[1] युधिष्ठिर ।[2]
क्षत्रियाया हरेत्पुत्रश्चतुरोंऽशान् पितुर्धनात् ॥

युद्धौपचारिकं यत्तु पितुरासीद्धरेच्च तत् ।
वैश्यापुत्रस्तु भागांस्त्रीन् शूद्रापुत्रस्तथाऽष्टमम्

सोऽपि वित्तं हरेत्पित्रोर्नादत्तं हर्तुमर्हति ।
एकैव हि भवेद्भार्या वैश्यस्य कुरुनन्दन ॥

द्वितीया वा भवेच्छूद्रा न तु दृष्टान्ततः स्मृता ।
पञ्चधा वा भवेत्कार्यं वैश्यस्वं भरतर्षभ ॥

तयोरपत्ययोर्वक्ष्ये विभागं च नराधिप ।
वैश्यापुत्रेण हर्तव्याश्चत्वारोंऽशाः पितुर्धनात् ॥

पञ्चमस्तु भवेद्भागः शूद्रापुत्राय भारत ।
सोऽपि दत्तं हरेत् पित्रा नादत्तं हर्तुमर्हति ॥

1. क्षत्रियस्य—उ
2. Extra line in printed *Mahābhārata* follows here:—
एष एव क्रमो हि स्यात् क्षत्रियाणां युधिष्ठिर ।

'दृष्टान्तो'ऽत्र वेदः[1] । 'युद्धौपचारिकं' युद्धोपकरणम्[2] ।

विष्णुः [१८, १-२७]

ब्राह्मणस्य चतुर्षु वर्णेषु [चेत्] पुत्रा भवेयुस्ते पैतृकमृक्थं दशधा विभजेयुः । तत्र च ब्राह्मणीसुत[3]श्चतुरोंऽशानादद्यात् । क्षत्रियापुत्रस्त्रीन् । द्वावंशौ वैश्यासुतः[4] । शूद्रापुत्रस्त्वेकम् । अथ चेच्छूद्रापुत्रवर्जं ब्राह्मणस्य पुत्रत्रयं भवेत् तदा नवधा धनं[5] विभजेयुः । वर्णक्रमेण[6] चतुस्त्रिद्विभागीकृतानंशानादद्युः । वैश्यवर्जमष्टधा कृत्वा[7] चतुरस्त्रीनेकं च समादद्युः[8] । क्षत्रियवर्जं सप्तधा कृत्वा[9] चतुरो द्वावेकं च । ब्राह्मणवर्जं षड्धा कृत्वा त्रीन् द्वावेकं च । क्षत्रियस्य क्षत्रियावैश्याशूद्रापुत्रेष्वयमेव विभागः । अथ ब्राह्मणस्य ब्राह्मणक्षत्रियौ पुत्रौ स्यातां, तदा सप्तधा कृताद्धनात् ब्राह्मणश्चतुरोंऽशानादद्यात् । त्रीन् राजन्यः । अथ ब्राह्मणस्य ब्राह्मणवैश्यौ चेत् पुत्रौ स्यातां[10] तदा तद्धनात्[11] षड्धा विभक्तात्[12] चतुरोंऽशान् ब्राह्मणस्त्वादद्यात् । द्वौ[13] वैश्यः । अथ ब्राह्मणस्य ब्राह्मणशूद्रौ पुत्रौ स्यातां तदा तद्धनं पञ्चधा

1. तेन वेदेनाकथिताऽपि रागतस्तृतीया शूद्रा क्षत्रियेण विवाहिता यदि स्यात् तदा तु तत्पुत्रस्यैवांश इत्यर्थः । (वि. र., ५३३).

2. युद्धोपकरणं खड्गादि–(वि. र., ५३३)

3, 4. पुत्र इति मु. वि., वि. र., स.

5. तद्धनं–मु. वि. ४८.

6. वर्णानुक्रमेण–मु. वि.

7. कृतं–मु. वि.

8. चादद्युः–मु. वि.

9. कृत्वा missing in मु. वि.

10. चेत्पुत्रौ स्यातां missing in मु. वि.

11. तदा तद्धनं–मु. वि.

12. विभक्तस्य–मु. वि.

13. द्वावंशौ–मु. वि.

विभजेयाताम् । चतुरोंऽशान् ब्राह्मणस्त्वादद्यात् । एकं शूद्रः । अथ ब्राह्मणस्य क्षत्रियस्य वा क्षत्रियवैश्यौ द्वौ पुत्रौ[1] स्यातां तदा तद्धनं पञ्चधा विभजेयाताम् । त्रीनंशान् क्षत्रियस्त्वादद्यात् । द्वावंशौ वैश्यः । अथ ब्राह्मणस्य क्षत्रियस्य वा क्षत्रियशूद्रौ पुत्रौ स्यातां तदा तद्धनं चतुर्धा विभजेयाताम् । त्रीनंशान् क्षत्रियस्त्वादद्यात् । एकं शूद्रः । अथ ब्राह्मणस्य क्षत्रियवैश्ययोर्वा [वैश्यशूद्रौ[2]] पुत्रौ स्यातां तदा तद्धनं त्रिधा विभजेयाताम् । द्वावंशौ वैश्यस्त्वादद्यात् । एकं शूद्रः ॥

अथ शङ्खलिखितौ

अन्यवर्णस्त्रीजातानां दायादर्धार्धहानिर्वर्णक्रमेण ॥

विष्णुः [१८, ३८-४०]

यदि द्वौ ब्राह्मणीपुत्रौ स्यातामेकः शूद्रापुत्रस्तदा नवधा विभक्तस्यार्थस्य ब्राह्मणीपुत्रावष्टौ भागानाद्द्यातामेकं शूद्रापुत्रः । अथ शूद्रापुत्रावुभौ स्यातामेको ब्राह्मणीपुत्रस्तदा षड्धा विभक्तस्य धनस्य चतुरोंऽशान् ब्राह्मणस्त्वादद्याद्द्वावंशौ शूद्रापुत्रौ । अनेन क्रमेणान्यत्राप्यंशकल्पना भवति ॥

पुनर्विष्णुः [१८, २८-३१]

अथैकपुत्रा ब्राह्मणस्य [ब्राह्मण] क्षत्रियवैश्याः सर्वहराः । क्षत्रियवैश्यौ राजन्यस्य । वैश्यस्य वैश्यः । शूद्रस्य शूद्रः ॥

वसिष्ठः [१७, ४७, ५०]

यदि ब्राह्मणस्य ब्राह्मणीक्षत्रियावैश्यासु पुत्राः स्युस्तदा त्र्यंशं ब्राह्मण्याः पुत्रो हरेत् । द्वावंशौ राजन्यायाः पुत्रः । सममितरे विभजेरन् ॥

1. 'द्वौ पुत्रौ' missing in मु. वि.

2. Addition in printed *Viṣṇusmṛti.*

मनुः [९, १५६-१५७]

समवर्णासु वा जाताः सर्वे पुत्रा द्विजन्मनाम् ।
उद्धारं ज्यायसे दत्वा भजेरन्नितरे समम् ॥

शूद्रस्य तु सवर्णैव नान्या भार्या विधीयते ।
तत्र जाताः समांशाः स्युर्यदि पुत्रशतं भवेत् ॥

बौधायनः [२, ३, १२-१३]

सवर्णापुत्रानन्तरापुत्रयोरनन्तरापुत्रश्चेद्गुणवान् स ज्येष्ठांशं हरेत् । गुणवानशेषाणां भर्ता भवेत् ॥

बृहस्पतिः [व्यव. [२६, १२०]

विप्रेण क्षत्रियाजातो जन्मज्येष्ठो गुणान्वितः ।
भवेत्समांशो विप्रेण वैश्याजातस्तथैव च ॥

गौतमः [२८, ३६-३९]

ब्राह्मणस्य राजन्यापुत्रो ज्येष्ठो गुणसम्पन्नस्तुल्यभाक् । ज्येष्ठांशहीनमन्यत् । राजन्यावैश्यापुत्रसमवाये यथा[1] स ब्राह्मणीपुत्रेण । क्षत्रियाचेत्तुल्यभाक् ॥

'ब्राह्मणीपुत्रेण' कनीयसेति शेषः । 'ज्येष्ठांशहीनमन्यत्' ज्येष्ठस्य उद्धाररूपो विंशतितमो योऽशस्तद्रहितं 'अन्यत्' द्रव्यं समं विभक्तव्यमित्यर्थः । 'यथा स ब्राह्मणीपुत्रेण' इति—यथा स क्षत्रियापुत्रो ज्येष्ठो ब्राह्मणीपुत्रेण कनीयसा तुल्यांशः । एवं [2]वैश्यापुत्रोऽपि ब्राह्मणज एव

1. यथांशं–उ, बि.
2. वैश्यापुत्रो ब्राह्मणजात एव–स.

क्षत्रियापुत्रेण कनीयसा तुल्यांशः । 'क्षत्रियाचेत्' इति, क्षत्रियाचेद्राजन्या-वैश्यापुत्रौ भवतः, तदाऽपि वैश्यापुत्रो ज्येष्ठः क्षत्रियापुत्रेण कनीयसा तुल्यांश इत्यर्थः ॥[1]

बृहस्पतिः [व्यव., २६, १२१]

न प्रतिग्रहभूर्देया क्षत्रियाय सुताय वै ।
यद्यप्यस्य पिता दद्यान्मृते विप्रासुतो हरेत् ॥

वृद्धमनुः

ब्रह्मदायागतां भूमिं हरेयुर्ब्राह्मणीसुताः ।
गृहं द्विजातयः सर्वे यथा क्षेत्रं क्रमागतम्[2] ॥

'ब्रह्मदायागतां' प्रतिग्रहयाजनादिना लब्धाम्[3] ।

बृहस्पतिः [व्यव., २६, १२२]

शूद्र्यां द्विजातिभिर्जातो न भूमेर्भागमर्हति ।

देवलः[4] [बृहस्पतिः, व्यव., २६, १२३-१२४]

सजातावाप्नुयात्सर्वमिति धर्मो व्यवस्थितः ॥

निषाद एकपुत्रस्तु विप्रस्वस्य तृतीयभाक् ।
द्वौ सपिण्डः सकुल्यो वा स्वधादाताऽथ संहरेत् ॥

1. एवं बौधायनस्यैवंविधे विषये ज्येष्ठांशहारित्वाभिधानं सवर्णपुत्रे निर्गुणे कनीयसि । सगुणे तु कनीयसि तुल्यांशत्वमिति अविरोधः । (वि. र., ५३७)

2. समागतम्-स.

3. प्रतिलब्धामिति पारिजातः (वि. र., ५३८).

4. The two ślokas that follow are ascribed by *Vivādaratnākara* to Bṛhaspati (p. 538).

कुल्याभावे स्वधादाता आचार्यः शिष्य एव वा ।
सर्वास्वापत्सु तान् वर्णान्[1] स्वगोत्रान् प्रतिपादयेत्[2] ॥

'निषादः' शूद्रायां ब्राह्मणाज्जातः । 'द्वौ' अंशाविति शेषः । 'स्वधादाता' पिण्डदः । 'सर्वास्वापत्सु' सर्वेषां सपिण्डादीनामभावे । 'तान् वर्णान्' निषादपितृसवर्णान् ॥[3]

विष्णुः [१८, ३२-३३]

द्विजातीनां शूद्रस्त्वेकः पुत्रोऽर्धहरः[4] । अपुत्ररिक्थस्य[5] या गतिः सात्रार्धस्य द्वितीयस्य ॥

'द्विजातीनां' ब्राह्मणव्यतिरिक्तानां क्षत्रियवैश्यानां ब्राह्मणजाते[6] शूद्रापुत्रे देवलेन तृतीयांशभागित्वस्योक्तत्वात्[7] ।

[मनुः] [९, १५४-१५५]

यद्यपि स्यात्तु [8]सत्पुत्रोऽप्यसत्पुत्रोऽपि वा भवेत् ।
नाधिकं दशमाद्दद्याच्छूद्रापुत्राय धर्मतः ॥

1. सर्वान्–द.
2. क्रमात् संप्रतिपादयेत्–ज, A. S. B. ; तथैव for स्वगोत्रान्–B. J., S. B. (b)
3. सगुणनिषादविषयमेतदिति पारिजातः (वि. र., ५३९)
4. अर्धहरः—B. J., S. B., (b), वि. र., ५३९ ; अर्थहरः—उ, A. S. B.
5. अपुत्रस्य रिक्तस्य–वि. र., ५३९.
6. जाते पुत्रे देवलेन–ज ; ब्राह्मणजे–वि. र.,
7. भागित्युक्तत्वात्–उ.
8. सपुत्रो वा यद्यपुत्रोऽथवा भवेत्–वि. र., ५३९ ; ज.

'सत्पुत्रः' वर्तमानद्विजादिपुत्रः । 'अपुत्रः' तद्रहितः (वि. र.) अत्र लक्ष्मीधरः—यदा पिता प्रसन्नः शूद्रापुत्राय ददाति, तदा दशमांशमेव दद्यादिति । तेन तन्मते 'शूद्रापुत्रो न ऋक्थभाक्' न पित्रा दत्तऋक्थभागिति नेयम् । हलायुध-पारिजाताभ्यां च प्रथमं वाक्यं अत्यन्तनिर्गुणोढशूद्रापुत्रपरतया, द्वितीयं च निर्गुणानूढशूद्रापुत्रपरतया भागनिषेधकमेव वर्णितम् (वि. र., ५३९-५४०)

ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक् ।
यदेवास्य पिता दद्यात्तदेवास्य धनं भवेत् ॥

यदा पिता प्रसन्नः शूद्रापुत्राय ददाति, तदा दशममेवांशं दद्यादित्यर्थः ।

<u>बृहस्पतिः</u> [व्यव., २६, १२५]

अनपत्यस्य शुश्रूषुर्गुणवान् शूद्रयोनिजः ।
लभेताजीवनं शेषं सपिण्डाः समवाप्नुयुः ॥[1]

<u>गौतमः</u> [२८, ४०]

शूद्रापुत्रोऽप्यनपत्यस्य शुश्रूषुश्चेल्लभेत वृत्तिमूलमन्तेवासिविधिना ॥

अनूढापुत्रविषयमेतत्, अपरिगृहीतासु' इत्यधिकारात् ।

<u>शङ्खलिखितौ</u>

न शूद्रापुत्रोऽर्थभागी । यदेवास्य पिता दद्यात्तदेवास्य भागः । तस्य गोमिथुनं चापरं वा दद्यात् । कृष्णायसं कृष्णधान्यं तिलवर्जम् ॥

<u>गौतमः</u> [२८, ४६]

शूद्रापुत्रवत्प्रतिलोमासु ॥

<u>मनुः</u> [९, १७९]

दास्यां[2] वा दासदास्यां वा यः शूद्रस्य सुतो भवेत् ।
सोऽनुज्ञातो हरेदंशमिति धर्मो व्यवस्थितः ॥

'दासदासी' परिचारकदासी ।

1. अनूढापुत्रविषयमेतत् (वि. र., ५४०) । इदं चाऽनूढशूद्रापुत्रपरमपरिगृहीत-
स्त्रीत्यधिकारात् । (विवादचिन्तामणिः, २२६).

2. अनूढायां दास्यां-वि. र., ५४१.

याज्ञवल्क्यः [२, १३३-१३४]

जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत् ।
मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिकम्[1] ॥

अभ्रातृको हरेत्सर्वं दुहितॄणां सुतादृते ।[2]

## अथ विभक्तजविभागः

तत्र मनु-नारदौ [मनु, ९, २१६ ; ना., १६, ४४]

ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव धनं हरेत् ।
संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह ॥

बृहस्पतिः [व्यव., २६, ५४-५५]

पित्रा सह विभक्ता ये सापत्ना वा सहोदराः ।
जघन्यजाश्च ये तेषां[3] पितृभागहरास्तु ते ॥

अनीशः पूर्वजः पित्र्ये भ्रातृभागे विभक्तजः ॥

तथा [व्यव., २६, ५६-५७]

पुत्रैः सह विभक्तेन पित्रा यत्स्वयमार्जितम् ।
विभक्तजस्य तत्सर्वमनीशाः पूर्वजाः स्मृताः ॥

1. अर्धभागिनम्-इति विश्वरूपः

2. अभ्रातृकस्तु दुहितृतत्सुताभावे सर्वभाक् स्यात् । अस्मादेव च दौहित्राभाववचनात् द्विजातीनामपि पुत्राभावे दौहित्रा धनभाज इति । अत एव मातामहश्राद्धनियमोपपत्तिः । (विश्वरूपः)

3. जघन्यजाश्च ते येषां-स.

यथा धने तथर्णेऽपि दानाधानक्रयेषु च ।
परस्परमनीशास्ते मुक्त्वा शौचोदकक्रियाः ॥

याज्ञवल्क्यः [२, १२२]

[1]विभक्तेषु सुतो जातः सवर्णायां विभागभाक् ।
दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात् ॥

अस्यायमर्थः—यो विभागकाले गर्भस्थो न ज्ञातः[2] पश्चाज्जातः स सर्वेभ्योऽशहरेभ्यः सकाशात् स्वांशं तदंशसमं लभेत। यदाह विष्णुः [१७, ३]

'पितृविभक्ता विभागानन्तरोत्पन्नस्य भागं[3] दद्युः' इति ।[4]

विभागानन्तरकालं च यस्य गर्भाधानं स पित्र्यमेवांशं लभेत[5] न तु पूर्वजादंशादपि । "अनीशः पूर्वजः पित्र्ये भ्रातृभागे विभक्तजः" इति बृहस्पति [व्यव., २६, ५५] वचनात् । पितृविभागकालप्राप्तमायव्ययशोधितं[6] यावद्विद्यमानं धनमुपलभ्यते ततो वा धनात् स्वांशं लभत इति ॥

1. अनिवृत्तरजस्कायां मातरि विभजतां विभागोत्तरकाले यदि पुत्रो जायेत तस्यापि द्रव्यसंबन्धोऽस्त्येव । .........विभक्तजोऽपि पितुः निर्धनत्वे भ्रातृद्रव्यादेव दृश्यमानात् तस्य विभक्तजस्य विभागः स्यात् । अयं तु विशेषः-आयव्ययविवर्जितात् । यत्स्वयमार्जितं स 'आयः' । यत्तस्माद्द्रव्यादुपक्षीणं स 'व्ययः' ॥ (विश्वरूपः)

2. न विज्ञातः-स.

3. विभागं-स.

4. जीवति तु पितरि मातरि सपत्न्यां वाऽविस्पष्टगर्भायां विभक्तैर्विभागानन्तरोत्पन्नोऽयं स्वस्वभागादाकृष्य स्वभागसमभागभाक् कार्यः (व्यवहारप्रकाशः, ४६२).

5. लभेत-स.

6. व्ययविशोधितं-स.

## अथ विभक्तागतविभागः

तत्र बृहस्पतिः [व्यव., २६, ६३-६७ ; ३९]

कृतेऽकृते विभागे वा रिक्थी यत्र प्रवर्तते ।
सामान्यं चद्भावयति तत्र भागहरस्तु सः ॥

ऋणं लेख्यं गृहं क्षेत्रं यस्य पैतामहं भवेत् ।
चिरकालप्रोषितोऽपि भागभागागतस्तु सः ॥

गोत्रसाधारणं त्यक्त्वा योऽन्यदेशं समाश्रितः ।
[1]तद्वंशस्यागतस्यांशः प्रदातव्यो न संशयः[2] ॥

तृतीयः पञ्चमश्चैव सप्तमो वापि यो भवेत्[3] ।
जन्मनामपरिज्ञाने[4] लभेतांशं क्रमागतम्[5] ॥[6]

यं परम्परया मौलाः सामन्ताः स्वामिनं विदुः ।
तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही ॥

[7]जाता जनिष्यमाणाश्च गर्भस्था ये च मानवाः ।
सर्वे काङ्क्षन्ति तां वृत्तिमनाच्छेद्या ततस्तु सा ॥

1. 'अर्धतस्त्वागतस्यांशः' इति स्मृ. च. पाठः
2. प्रोषितो वनमाश्रितः–ज, A. S. B.
3. भावयेत्–उ ; यो भवेत्–ज, द, स, बि., B. J., A. S. B., S. B., (b)
4. परिज्ञानं–स्मृ. च. p. 712.
5. क्रमागते–स्मृ. च.
6. यस्तु 'आचतुर्थादविभक्तानां' इत्यादिदेवलोक्तनियमः । स सहवासादौ, अयं तु दूरदुर्गमवासादौ इत्यविरोधः (बि. र., ५४४).
7. 'जाता जनिष्यद्गर्भस्थाः पितृस्था ये च मानवाः'–स, उ, बि., व्यवहारनिर्णयः ४१२.

## अथ पुत्रान्तरविभागः[1]

तत्र मनुः [९, १३०]

पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते ।
समस्तत्र विभागः [2]स्याज्ज्येष्ठता नास्ति हि स्त्रियाः ॥

'अनुजायते' पश्चादुत्पद्यते ।

बृहस्पतिः [व्यव., २६, ७०]

एक एवौरसः पुत्रः पित्र्ये स्वामी प्रकीर्तितः ।
[3]तत्तुल्या पुत्रिका प्रोक्ता भर्तव्यास्त्वपरे स्मृताः ॥

मनुः [९, १६३]

एक एवौरसः पुत्रो पित्र्यस्य वसुनः प्रभुः ।
[4]शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम्[5] ॥

[तथा] [९, १२०-१२१]

यवीयाञ्ज्येष्ठभार्यायां पुत्रमुत्पादयेद्यदि ।
समस्तत्र विभागः स्यादिति धर्मो व्यवस्थितः[6] ॥

1. अथ पुत्रान्तरैः विभागः-द. वि. र., ५४५.

2. 'ज्येष्ठता नास्ति हि स्त्रियाः' रिक्थभाग एव ज्येष्ठता निषिद्ध्यते न त्वस्यां गुरुवृत्तौ। (मेधातिथिः)

3. 'तत्तुल्यः पुत्रिकापुत्रो' इति गौतम-मिताक्षरापाठः पृ, २३१.

4. 'शेषाणां' ये तत्र भागित्वेन निषिद्धाः तेषां । 'आनृशंस्यं' दया । 'प्रजीवनं' भरणम् । (वि. र., ५४५) 'आनृशंस्यं' अपापम (मेधातिथिः)

5. प्रवासनम्-स.

6. ज्येष्ठस्याविभक्तस्यापुत्रस्य भार्यायां कनिष्ठेन नियुक्तेनोत्पादितः पुत्रो, मृते पितरि, उत्पादकेन पितृव्येन सह विभज्यमानः सममंशं लभते । न तु पितृज्येष्ठताप्रयुक्तं उद्धारिकमस्य ॥ (वि. र., ५४६)

उपसर्जनं प्रधानस्य धर्मतो नोपपद्यते ।
पिता प्रधानं प्रजने तस्माद्धर्मेण तं भजेत् ॥[1]

[तथा] [९, १४६]

धनं यो बिभृयाद्भ्रातुर्मृतस्य स्त्रियमेव च ।
सोऽपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनम् ॥[2]

[तथा] [९, १६२]

यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ[3] सुतौ ।
यद्यस्य पैतृकं रिक्थं स तद्गृह्णीत नेतरः ॥

'वसुनः' वित्तस्य । 'शेषाणां' क्षेत्रजव्यतिरिक्तानाम् । 'उपसर्जनं' अत्र उपसर्जनत्वम् । 'क्षेत्रजः' अत्रानियुक्तायामुत्पन्नः ॥

विष्णुः [१७, २३]

अनेकपितृकाणां तु पितृतोऽशप्रकल्पना ।
यस्य यत्पैतृकं रिक्थं स तद्गृह्णीत नेतरः ॥

'अनेकपितृकाणां' [एकस्यां योषिति] बहुभिः सङ्गतायां जातानाम् ।

1. 'उपसर्जनं' अप्रधानं क्षेत्रजः । 'प्रधानस्य' औरसस्य, तुल्य इत्येतदध्याहृत्य । 'धर्मतः' शास्त्रतो न युज्यते । औरसः किल पितृवत् ज्येष्ठांशं लभते । अयं तु क्षेत्रजोऽप्रधानम् । (मेधातिथिः)

2. 'सोऽपत्यं भ्रातुरुत्पाद्य' नियोगधर्मेण इति व्याख्येयम् । 'दद्यात्तस्यैव' न तदीयायै च मात्रे । 'तस्य' विभक्तधनस्य 'धनं' दद्यादिति । (मेधातिथिः)

3. क्षेत्रजोऽत्रानियुक्तादुत्पन्नः । 'पैतृकं धनं' पित्रा तस्मात्ते पुत्रसम्धानार्थं समर्पितम् । (वि. र., ५४६.)

**मनुः** [९, १६४-१६५]

षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात् ।
औरसो विभजन्दायं पित्र्यं पञ्चममेव वा ॥

औरसक्षेत्रजौ पुत्रौ पितृरिक्थस्य भागिनौ ।
दशापरे तु क्रमशो गोत्ररिक्थांशभागिनः ॥

षष्ठपञ्चमविभागविकल्पो गुणवत्त्वागुणवत्त्वेन व्यवस्थितः । 'दशापरे' दत्तकादयः । 'क्रमशः' पूर्वपूर्वाभावे परः पर इत्यनेन क्रमेण । 'गोत्ररिक्थांश-भागिनः' गोत्रभाजः रिक्थभाजश्च भवन्तीत्यर्थः ॥

'पुत्रं प्रतिगृहीष्यन्[1]' इत्यनुवृत्तौ **वसिष्ठः** [१५, ९-१०]

तस्मिंश्चेत्प्रतिगृहीत औरसः पुत्र उत्पद्यते[2] स चतुर्थभागभागी स्यात् । यदि नाभ्युदयिकेषु प्रयुक्तं स्यात् ॥[3]

**कात्यायनः** [८५७]

उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः[4] स्मृताः ।
सवर्णास्त्वसवर्णास्तु ग्रासाच्छादनभागिनः ॥

1. प्रतिगृहीष्यन्तीत्यनुवृत्तौ-उ, स, बि.

2. उत्पद्येत-स.

3. 'तस्मिन्' औरसे पुत्रे । 'स' प्रतिगृहीतपुत्रः । 'स्यात्' यदि प्रभूतं धनमिति शेषः । यदि यज्ञादिषु न विनियुक्तम् । (वि. र., ५४८)

4. 'इदं तृतीयांशहरत्वं क्षेत्रजस्य' (चि. चि. २३४) । पूर्वपरिगृहीतपुत्रे चतुर्थांश उक्तः, अनेन तु तृतीयांशभागित्वम् । तदिदं अगुणत्वसगुणत्वाभ्यां व्यवस्थाप्यम् । (वि. र., ५४८) 'सवर्णाः' दत्तकक्षेत्रजादयः । ते सत्यौरसे चतुर्थांशहराः । 'असवर्णाः' कानीनगूढोत्पन्नसहोढजपौनर्भवाः । ते त्वौरसे सति न चतुर्थांशहराः, किंतु ग्रासाच्छादनभाजिनः (मिताक्षरा, २, १३२) । तत्र 'तृतीयांशहरा' इति कल्पतरुपाठो यदि साकरस्तर्हि दत्तकादीनामौरसापेक्षया तृतीयांशहरत्वमिति व्याख्येयः (व्यवहारप्रकाशः, ४८३) । जीमूतवाहनापरार्कमाधवास्तु 'चतुर्थांशहराः' इति पठन्ति ॥

<u>बृहस्पतिः</u> [व्यव., २६, ७१]

क्षेत्रजाद्या सुताश्चान्ये पञ्चषट्सप्तभागिनः ॥

<u>हारीतः</u>

विभजिष्यमाणमेकविंशं कानीनाय दद्यात् । विंशं पौनर्भवाय । एकोनविंशं द्व्यामुष्यायणाय । अष्टादशं क्षेत्रजाय । सप्तदशं पुत्रिकापुत्राय । इतरानौरसाय पुत्राय दद्युः ॥

<u>ब्रह्मपुराणे</u>

समग्रधनभोक्ता स्यादौरसोऽपि जघन्यजः ।
त्रिभागं क्षेत्रजो भुङ्क्ते चतुर्थं पुत्रिकासुतः ॥

कृत्रिमः पञ्चभागं तु षड्भागं गूढसंभवः ।
सप्तांशं चापविद्धस्तु कानीनश्चाष्टमांशकम् ॥

नवभागं सहोढश्च क्रीतो दशममश्नुते ।
पौनर्भवस्तु परतो द्वादशं स्वयमागतः ॥

त्रयोदशं स्वभागं तु शूद्रो भुङ्क्ते पितुर्धनात् ।
तद्गोत्रजो वा धर्मिष्ठो ब्रह्मचार्यथवा पुनः ॥[1]

'परतः' दशमात्परमेकादशमं समश्नुत इत्यर्थः ।

1. 'समग्र' इत्यादि प्रथमश्लोकस्य पूर्वमेव विषयव्यवस्थोक्ता । अन्येषामपि गुणतारतम्येन देशाचारानुसारेण वा यथायथं व्यवस्था द्रष्टव्या ॥ (व्यवहारप्रकाशः ४८४)

शङ्खलिखितौ

षड्दायादेषु[1] विकल्पः । औरसः क्षेत्रजः पुत्रिकासुतः पौनर्भवः कानीनो गूढोत्पन्नश्चेति । षड्विधा[2] बन्धुदायादाः । पितृपितामहानामेकगोत्रा रिक्थ-पिण्डोदकसामान्यात्[3] । तेषामर्थं दशभागान्[4] कुर्यात् । द्वौ भागौ पितुर्द्वावौर-सस्य । त्रीन् क्षेत्रजपुत्रिकासुतयोः[5] । एकैकमितरेषाम् ॥

पुनः शङ्खलिखितौ

[6]ऋषभोऽधिको ज्येष्ठस्य । तस्याभावे क्षेत्रजपुत्रिकापुत्रसुतयोः । तयो-रप्यभावे त्रयाणामितरेषाम् । तेषामप्यभावे षण्णामदायादानाम्[7] । अपविद्धः सहोढो दत्तः क्रीतकः शूद्रापुत्रः उपनतश्च स्वयमित्यदायादाः षडेव पुत्राः । तेषां सारानुसारतोऽर्थमपेक्ष्य देयमेतेभ्यः प्रजीवनम् ॥

गौतमः [२५,३३]

पुत्रा औरस-क्षेत्रज-दत्त-कृत्रिम-गूढोत्पन्नापविद्धा रिक्थभाजः । कानीन-सहोढ-पौनर्भव-पुत्रिकापुत्र-स्वयंदत्त-क्रीता गोत्रभाजश्चतुर्थांशिन[8] औरसा-भावे ॥

1. षट्सु दायादेषु (वि. र, ५५१.)
2. षट्पुत्रा-(वि. र.)
3. रिक्थपिण्डौ सापिण्ड्यञ्च (वि. र., ५५१.)
4. दशधा कुर्यात् (वि. र.)
5. पुत्रिकयोः (वि. र.)
6. रासभोऽधिको (वि. र., ५५०.)
7. अदायादानां सर्वऋक्थग्रहणम् (वि. र., ५५०.)
8. एतच्चतुर्थांशभागित्वमेषां प्रशस्तगुणत्वे, ब्रह्मपुराणं चामीषां मन्दगुणत्वे इत्यविरोधः (वि. र., ५५२)

'गोत्रभाजः' गोत्रं भजन्ते पिण्डोदकदानादिक्रियाभिः पुत्रकार्यं कुर्वन्तीति तथोच्यन्ते। एतच्च कानीनादीनां गोत्रभाक्त्ववचनमौरसादीनामृक्थभाजामेकतरस्यापि सद्भावेंऽशहरत्वनिषेधार्थम् ॥[1]

औरस-क्षेत्रज-पुत्रिकापुत्र-पौनर्भव-कानीन-गूढोत्पन्नानभिधाय वसिष्ठः [१७, २५-२६]

इत्येते दायादा बान्धवास्त्रातारो महतो भयादित्याहुः। अथादायादबन्धूनां सहोढ एव प्रथमः ॥

इदं च पौनर्भव-कानीनयोरंशहरत्वाभिधानं पितृवर्णपौनर्भवकानीनविषयम्। गौतमीयं चैतयोरंशहरत्वनिषेधनमसवर्णाविषयम्।

उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः सुताः।
सवर्णास्त्वसवर्णास्तु ग्रासाच्छादनभागिनः ॥

इति कात्यायन [८५७] वचनात्। सहोढ-दत्त-क्रीत-स्वयमुपगतापविद्ध-शूद्रापुत्रानभिधाय, औरसादीन् परामृश्य—

पुनर्वसिष्ठः [१७,३९]

यस्य पूर्वेषां षण्णां न कश्चिद्दायादः स्यादेते तस्य दायं हरेयुः ॥

हारीतः

षड्बन्धुदायादाः षडबन्धुदायादाः। [2]साध्व्यां स्वयमुत्पादितः क्षेत्रजः पौनर्भवः कानीनः पुत्रिकापुत्रो गृहे गूढोत्पन्न इति बन्धुदायादाः। दत्तः क्रीतोऽपविद्धः सहोढः स्वयमुपागतः सहसा दृष्टश्चेत्यबन्धुदायादाः ॥

1. शङ्खलिखितवाक्ये पौनर्भवकानीनयोरंशहारित्वाभिधानं गौतमीयं च तन्निषेधनं सवर्णासवर्णविषयत्वेन व्यवस्थाप्यम्। (वि. र., ५५२)

2. ख omits 'साध्व्यां'; वि. र. includes it.

'साध्व्यां' विवाहसंस्कृतायां 'स्वयमुत्पादितः' पुत्र[1] औरस इत्यर्थः। 'सहसा दृष्टः' यो मातापित्रादिहीनोऽकस्माद्दृष्टः केनचिदप्रेरितेन[2] "मम त्वं पुत्र" इत्युक्तः "तथा" इति प्रतिपद्यते। 'अबन्धुदायादाः' बन्धुदाया-न्नाददते[3] ये तथोक्ताः ॥[4]

यमः

पुत्रास्तु द्वादश प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः।
तेषां षड्बन्धुदायादाः [5]षडदायादबान्धवाः ॥

स्वयमुत्पादितश्चैको द्वितीयः क्षेत्रजः स्मृतः।
तृतीयः पुत्रिकापुत्र इति धर्मविदो विदुः ॥

पौनर्भवश्चतुर्थस्तु कानीनश्चैव पञ्चमः।
गृहे च गूढ उत्पन्नः षडेते पिण्डदाः सुताः ॥

अपविद्धः सहोढश्च दत्तः कृत्रिम एव च।
पञ्चमः क्रीतकः[6] पुत्रो यश्चोपनयते स्वयम् ॥

इत्येते संकरोत्पन्नाः षडदायादबान्धवाः।

1. ख omits पुत्रः

2. केनचित् परितोषेण–उ, स.

3. बन्धुदायान्नाददते ये ते तत्तथोक्ताः–स.

4. गोत्रमात्रत्वेन बन्धुत्वं दायादत्वं च। लक्ष्मीधरस्तु 'बन्धुदायानाददते इति बन्धु-दायादा' इत्याह। तात्पर्यं च पूर्वषट्कोत्तरषट्कयोः प्राधान्याप्राधान्ययोः समानम्। (वि. र., ५५३).

5. षड्दायादाः प्रकीर्तिताः–वि.

6. पञ्चमः पुत्रिकापुत्रो–ख.

मनुः [९, १५८--१६०]

पुत्रान्द्वादश यानाह मनुः स्वायंभुवो नृणाम्[1] ।
तेषां षड्बन्धुदायादाः षडदायादबान्धवाः ॥

औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥

कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।
स्वयंदत्तश्च [2]शौद्रश्च षडदायादबान्धवाः ॥

बौधायनः [२, ३, ३-१२]

औरसं पुत्रिकापुत्रं क्षेत्रजं दत्तकृत्रिमौ ।
गूढजं चापविद्धं च रिक्थभाजः प्रचक्षते ॥

कानीनं च सहोढं च क्रीतं पौनर्भवं तथा ।
स्वयंदत्तं निषादं च गोत्रभाजः प्रचक्षते ॥

औरस - पुत्रिकापुत्र - क्षेत्रज-कानीन - गूढोत्पन्ना -पविद्ध-सहोढ-पौनर्भव-दत्तक-स्वयमुपागत-कृत्रिम-क्रीतानभिधाय—देवलः

एते द्वादशपुत्रास्तु सन्तत्यर्थमुदाहृताः ।
आत्मजाः परजाश्चैव लब्धा यादृच्छिकास्तथा ॥

तेषां षड्बन्धुदायादाः पूर्वेऽन्ये पितुरेव षट् ।
विशेषश्चापि पुत्राणामानुपूर्व्याद्विशिष्यते ॥

1. 'नृणां स्वायंभुवो मनुः' इति मेधातिथिः
2. 'शूद्रश्च' इति गोविन्दराजः

सर्वे ह्यनौरसस्यैते पुत्रा दायहराः स्मृताः ।
औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न तिष्ठति ॥

तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिनः ।
हीनास्तमुपजीवेयुर्ग्रासाच्छादनसंभृताः ॥

औरस - क्षेत्रज-पुत्रिकापुत्र - पौनर्भव-कानीन-गूढोत्पन्न-सहोढ-दत्त-क्रीत-स्वयमुपागतापविद्ध-यत्रक्वचनोत्पादितानभिधाय[1]—विष्णुः [१५, १८-३०]

एतेषां पूर्वः पूर्वः श्रेयान् । स एव दायहरः । स चान्यान्बिभृयात् ॥

औरस-पुत्रिकासुत-क्षेत्रज-कानीन-पौनर्भव-दत्तक-क्रीत-स्वयंदत्त-सहोढा-ऽपविद्धानभिधाय याज्ञवल्क्यः [२, १३२]

पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः ॥[2]

नारदः [१६, ४५-४७, ४९]

औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एव च ।
कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च ॥

पौनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा ।
स्वयं चोपागतः पुत्रा द्वादशैते प्रकीर्तिताः ॥

1. उ omits the introduction upto this.

2. 'यत्तु क्रमान्यत्ववचनं तत् पितुरेवेच्छाविकल्पतया द्रष्टव्यम् । तदभावे तु आचार्योक्तिरेव क्रमः ॥' इति विश्वरूपः । यापि यथापूर्वश्रेष्ठत्वज्ञापनार्थं द्वादशानामनुक्रमणे पौर्वापर्यवैकल्पिकोक्तिः सा पूर्वोक्तस्य सगुणत्वे पश्चादुक्तस्य निर्गुणत्वे ज्ञेया ॥ (वि. र., ५५५)

तेषां षड्बन्धुदायादाः षडदायादबान्धवाः ।
पूर्वः पूर्वः स्मृतः श्रेष्ठो[1] जघन्यो यो य उत्तरः ॥

क्रमादेते प्रवर्तन्ते मृते पितरि तद्धने ।
ज्यायसो ज्यायसोऽभावे जघन्यो यस्तदाप्नुयात् ॥

मनुः [९, १८५]

न भ्रातरो न पितरः पुत्रा ऋक्थहराः स्मृताः ॥

तथा [९, १८४]

श्रेयसः श्रेयसोऽलाभे[2] पापीयानृक्थमर्हति ।
बहवश्चेत्तु सदृशाः सर्वे ऋक्थस्य भागिनः ॥

शङ्खलिखितौ

श्रेयसः श्रेयसोऽलाभे पापीयानृक्थमर्हति ॥

बृहस्पतिः [व्यव., २६, ७२-७३]

दत्तोऽपविद्धः क्रीतश्च कृतः शौद्रस्तथैव च ।
जातिशुद्धाः [3]कर्मशुद्धा मध्यमास्ते सुता मताः ॥

क्षेत्रजो गर्हितः सद्भिस्तथा पौनर्भवः सुतः ।
कानीनश्च सहोढश्च [4]गूढोत्पन्नस्तथैव च ॥

1. ज्येष्ठो इति मु. ना. स्मृ.
2. अभावे इति वि. र., पाठः
3. 'मध्यमास्ते सर्वे रिक्थसुताः स्मृताः' इति व्यव. प्र., ४२१ (ed. Jivananda.)
4. गूढजः पुत्रिकासुतः–शु. वि., २२.

हारीतः [बृहस्पतिः, व्यव., २६, ७४-७५]

शूद्रापुत्राः स्वयंदत्ता ये चैते क्रीतकाः स्मृताः ।
सर्वे ते गोत्रिणः प्रोक्ताः काण्डपृष्ठा न संशयः ॥

स्वकुलं पृष्ठतः कृत्वा यो वै परकुलं व्रजेत् ।
तेन दुश्चरितेनासौ काण्डपृष्ठो न संशयः ॥

यमः

आपद्गतोऽभ्युपगतो यश्च स्याद्वैष्णवीसुतः ।
सर्वे ते मनुना प्रोक्ता काण्डपृष्ठास्त्रयस्तथा ॥[1]

कुलं काण्डमिति ख्यातं यस्मात्पूर्वाणि ते जहुः ।
तत्र ज्येष्ठतरो यः स्यात्तं वै काण्डेति निर्दिशेत् ॥

स्वकुलं पृष्ठतः कृत्वा यो वै परकुलं व्रजेत् ।
तेन दुश्चरितेनासौ काण्डपृष्ठ इति स्मृतः ॥

'वैष्णवी' शूद्रा ।

## अथ पुत्रलक्षणम्

### औरसः

तत्र वसिष्ठः [१७, १२-१३]

द्वादश इत्येव पुत्राः पुराणदृष्टाः । स्वयमुत्पादितः स्वक्षेत्रे[2] संस्कृतायामौरसः[3] ॥

1. Ascribed to Hārīta by वि. र., p. 556 ; to यम by व्य. प्र., ६२१ ; 'व्यवहारकल्पतरौ क्रमेण बृहस्पतिः, विवादरत्नाकरे तु हारीतः' (धर्मकोश, १३५२) ; but not included in my *Bṛhaspatismṛti*, except the last śloka, which may be found in व्यव., ७, १९.

2. स्वे क्षेत्रे-ज, and other Mss ; द्वादश एव पुत्राः-द, ब.

3. संस्कृतायां प्रथमः-Printed editions.

विष्णुः [१५, १-२]

अथ द्वादश पुत्रा भवन्ति । स्वे क्षेत्रे[1] संस्कृतायामुत्पादितः स्वयमौरसः प्रथमः ॥

मनुः [९, १६६]

[2]स्वे क्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धि यम् ।
तमौरसं विजानीयात् पुत्रं प्राथमकल्पिकम् ॥

देवलः

संस्कृतायां च भार्यायां स्वयमुत्पादितो हि यः ।
औरसो नाम पुत्रः स प्रधानः पितृवंशधृक् ॥

याज्ञवल्क्यः [२, १२८]

औरसो धर्मपत्नीजः[3] ।

आपस्तम्बः [२, १३, १-२]

सवर्णामपूर्वां शास्त्रविहितां [4]यथर्तु गच्छतः पुत्रास्तेषां कर्मभिः संबन्धः । दायेनाव्यतिक्रमश्चोभयोः ॥[5]

1. स्वक्षेत्रे इति पाठान्तरः (वि. र., ५५७)

2. 'स्वे क्षेत्रे संस्कृतायां तु स्वयमुत्पादयेत् हि यम्' (Jolly's reading following Kullūka) so ज, स ; स्वयमुत्पादयेद्द्विजम्–उ ; A. S. B. wrongly ascribes this *śloka* to Nārada.

3. सवर्णा ब्राह्मादिविवाहसंस्कृता धर्मपत्नी (विश्वरूपः)

4. प्रथममनुगच्छतः–स

5. 'अपूर्वां' न पूर्वपतिः यस्याः । 'वाग्दत्ता' वा न भवतीति प्रकाशकारः । 'कर्मभिः' अग्निहोत्रादिभिः ॥ (वि. र., ५५८.)

<u>बौधायनः</u> [२, ३, १४, १६]

सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसं पुत्रं विद्यात् । अथाप्युदाहरन्ति—

> अङ्गादङ्गात्संभवसि हृदयादभिजायसे ।
> आत्मा वै पुत्रनामासि सञ्जीव शरदः शतम्[1] ॥

<u>शङ्खलिखितौ</u>

ब्राह्मणस्तु सवर्णायाः पाणिं गृह्णीयात् । तस्यां हि पितामहानां तनवोऽनुसूयन्ते । पुत्रोपचारेणात्मानमनुमन्त्रयते । एवं ह्याह—

> अङ्गादङ्गात्संभवसि हृदयादभिजायसे ।
> आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥

> आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् ।
> यथेह पुरुषस्यात्मा तस्मात् त्वमिह जायसे ॥

> आत्मा पुत्र इति प्रोक्तः पितुर्मातुरनुग्रहात् ।
> [2]पुन्नाम्नस्त्रायते[3] यस्तत्पुत्रस्तेनासि संज्ञितः ॥

<u>अथ क्षेत्रजः</u>

तत्रौरसानन्तरं <u>वसिष्ठः</u> [१७, १८]

> तदलाभे[4] नियुक्तायां क्षेत्रजो द्वितीयः ॥

1. Gap in द upto 'आधत्त पितरो' ; जीव त्वं शरदां शतम्-स
2. पितरं त्रायसे-वि
3. त्रायसे यस्मात्-द, ब
4. तदभावे-ज, A. S. B. and S. B. (b).

विष्णुः [१५, २]

नियुक्तायां [1]सपिण्डेनोत्तमवर्णेन वोत्पादितः क्षेत्रजो द्वितीयः ॥

मनुः [९, १६७]

यस्तल्पजः प्रमीतस्य क्लीबस्य [2]व्याधितस्य वा ।
स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः ॥

याज्ञवल्क्यः [२, १२८]

क्षेत्रजः क्षेत्रजातस्तु [3]समोत्रेणेतरेण वा ॥[4]

बौधायनः [२, ३, १७-१८]

मृतस्य[5] प्रसूतो यः क्लीबस्य व्याधितस्य वाऽन्येनानुमतः स्वक्षेत्रे[6] स क्षेत्रजः । स एष द्विपिता द्विगोत्रश्च द्वयोरपि स्वधारिक्थभाग्भवति ॥

याज्ञवल्क्यः [२, १२७]

अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।
उभयोरप्यसौ रिक्थी[7] पिण्डदाता च धर्मतः[8] ॥

1. स्वभर्त्रा सवर्णेन चोत्पादितः–ज.
2. 'व्याधितस्य' अप्रतीकारराजयक्ष्मादिव्याधितस्य ( मेधातिथिः ) ।
3. स्वगोत्रेण–ज, द.
4. क्षेत्रजस्तु क्षेत्रे पत्न्यां सगोत्रेणान्येन वा नियोगोत्पादितः (विश्वरूपः) ।
5. मृतस्य प्रसूतो यः क्लीबव्याधितयोर्वाऽन्येनानुमतेन स्वे क्षेत्रे स क्षेत्रजः । (इति मुद्रितकोशे)
6. क्षेत्रे–उ, स.
7. रिक्थो–ज, स, A. S. B., विश्वरूप, अपरार्क, विज्ञानेश्वर ; ऋक्थी–उ.
8. ननु च ब्राह्मणस्य नियोगप्रतिषेधादनारभ्योऽयम् । क्षत्रियार्थस्तर्हि भविष्यति । न च ब्राह्मणस्य नियोगप्रतिषेधः, किं तर्हि ब्राह्मण्याः । तेनाऽन्योत्पादितो ब्राह्मणस्य न स्यात् । न तु क्षत्रियादिकायां ब्राह्मणस्यानुत्पादकत्वम् । अतोऽविरुद्ध एवायमौरसाभावे कल्पः ॥ (विश्वरूपः)

अस्यार्थः —यदासौ नियुक्तो देवरादिः स्वयमप्यपुत्रोऽपुत्रस्य क्षेत्रे स्वपरपुत्रार्थं प्रवृत्तो यं जनयति स द्विपितृको द्व्यामुष्यायणो द्वयोरपि रिक्थहारी पिण्डदाता च । यदा तु नियुक्तः पुत्रवान्, केवलं क्षेत्रिणः पुत्रार्थं प्रवर्तते तदा तदुत्पन्नः क्षेत्रिण एव पुत्रो भवति न बीजिनः । स च न नियमेन बीजिनो रिक्थहारी पिण्डदो भवति ॥ (मिताक्षरा).

मनुः [९, ५३]

[1]क्रियाभ्युपगमादेतद्बीजार्थं यत्र दीयते ।
तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥[2]

[3]नारदः [१५, ५८]

क्षेत्रिकानुमते बीजं यस्य क्षेत्रे [4]प्रसिच्यते ।
तदपत्यं द्वयोरेव बीजिक्षेत्रिकयोर्मतम् ॥

शङ्खलिखितौ

मन्त्रसंस्कारकर्तुरपत्यम् इत्याङ्गिरसः । बीजिक्षेत्रयोरनुमते यद्बीजं प्रकीर्यते तद्द्विधा शस्यमित्युशना ॥[5]

कात्यायनः [८५९]

क्षेत्रिकस्य मतेनापि फलमुत्पादयेत्तु यः ।
तस्येह भागिनौ तौ तु न फलं हि विनैकतः ॥

1. क्रियाभ्युपगमार्थेन-S. B. (b), A. S. B. । क्रियाभ्युपगमाच्चैवं-मेधातिथिः ; क्रियाभ्युपगमात्तेन-ज.

2. क्रियाया 'अभ्युपगमो'ऽङ्गीकरणं, एवमेवैतदिति संविल्लक्षणो यो निश्चयः सा क्रियाऽभिप्रेता, तामभ्युपगम्य 'बीजार्थं' बीजकार्यफलनिष्पत्त्यर्थं 'यत्प्रदीयते' सामर्थ्याद्बीजमिति गम्यते । तस्येह द्वावपि भागिनौ ॥ (मेधातिथिः)

3. 'नारद-कात्यायनौ' इति वि. र. ५६१.

4. प्रजायते-वि. र. ; निषिच्यते-A. S. B. ; समर्प्यते-मु. ना.

5. 'मन्त्रसंस्कारकर्तुः' पाणिग्राहकस्य ; 'तद्द्विधा' द्वयोरपि ; 'शस्यं' क्षेत्रफलम् । (वि. र., ५६२).

हारीतः

जीवति क्षेत्रजमाहुरस्वातन्त्र्यात् । मृते द्व्यामुष्यायणमनूप्तबीजत्वात् । नाबीजं क्षेत्रं फलति, नाक्षेत्रं बीजं प्ररोहति, इत्युभयदर्शनादुभयोरपत्यमित्येके[1] । तेषामुत्पादयितुः प्रथमपिण्डो[2] भवति द्वौ पिण्डौ [3]निर्वपेन्निर्वापे । अथवैकपिण्डे द्वावनुकीर्तयेत् । द्वितीये पुत्रं तृतीये पौत्रं लेपिनश्च त्रीन् वाचक्षाण आसप्तमादित्यपरे[4] ॥

'जीवति' क्षेत्रपतौ । तस्यैव पुत्रं 'क्षेत्रजमाहुः' । अत्र हेतुः—'अस्वातन्त्र्यात्' स्त्रियाः । 'मृते' तु क्षेत्रपतौ, 'अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता' इति मनुवचनात्[5] । यद्यपि स्त्रिया अस्वातन्त्र्यं तदवस्थं तथापि न क्षेत्रिण एवेति । अत्र हेतुमाह—'अनूप्तबीजत्वात्' क्षेत्रिणा । 'निर्वापे' निरुप्यतेऽस्मिन्निति 'निर्वापः' पितृयज्ञः । 'एकपिण्डे द्वौ' इति—एकैकस्मिन् पिण्डे द्वौ द्वाविति वीप्साऽवगन्तव्या । यदि द्विपिता स्यादेकैकस्मिन् पिण्डे द्वौ द्वावुपलक्षयेदिति आपस्तम्बवचनानुसारात् [आप. श्रौ., १, ९, ७] । 'द्वितीये पुत्रं' इत्यादि—द्वितीये पुत्रमारभ्येदित्यर्थः । 'लेपिनश्च त्रीन् वाचक्षाणो' द्वौ द्वावनुकीर्तयेदित्यर्थः ॥

नारदः [१६, २३]

द्व्यामुष्यायणका दद्युर्द्वाभ्यां पिण्डोदके पृथक् ।
रिक्थादर्धं समादद्युर्बीजिक्षेत्रिकयोस्तथा ॥

1. इत्यपरे–बि, ज, स.
2. प्रथमप्रवरो–उ etc.
3. निर्वापाते दद्युः–उ etc.
4. आसप्तमादित्येके–वि. र., ५६२ ; स.
5. इदं वचनं वृद्धमनोरिति मिताक्षरा, वरदराजश्च (पृ. ४४८).

बौधायनः [२, ३, १९]

अथाप्युदाहरन्ति—

> द्विपितुः पिण्डदानं स्यात् पिण्डे पिण्डे [1]च नामनी ।
> त्रयश्च पिण्डाः षण्णां स्युरेवं कुर्वन्[2] मुह्यति ॥ इति ।

## अथ पुत्रिकापुत्रः[3]

तत्र वसिष्ठः [१७, १५]

[4]तृतीयः पुत्रिका विज्ञायते । अभ्रातृका [हि] पुंसः पितॄनभ्येति प्रतीचीनं गच्छति पुत्रत्वम् ॥

'पुंसः' पत्युः सकाशात् । 'प्रतीचीनं' प्रत्यावृत्तिम्[5], पितृकुलाभिमुख्यमित्यर्थः ।

शङ्खलिखितौ

पुत्रिका पुत्रवदिति प्रचेतसः । तस्यापत्यं पुत्रिकासुता मातामहपितामहाभ्यां पिण्डदः ।

> पुत्रदौहित्रयोर्लोके न विशेषोऽस्त्यनुग्रहे[6] ।
> तस्मात्तु [7]संशयान्नेहोपेयादभ्रातृकां स्त्रियम् ॥

1. द्विनामता–ज, A. S. B.
2. एवं कुर्वन्ति साधवः–ज. 'न मुह्यति' न दुष्यतीत्यर्थः–वि. र., ५६३.
3. पुत्रिकातत्पुत्रौ–ज, द, वि. र., ५६४
4. द्वितीयः–ख.
5. प्रत्यावृत्तं पुत्रत्वं–वि. र.
6. 'अनुग्रहे' पुन्नामनरकोद्धारे–वि. र.
7. 'संशयात्' इयं पुत्रत्वेन परिगृहीता न वा इत्याकारात् । (वि. र., ५६४)

याज्ञवल्क्यः [२, १२८]

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ॥

विद्यादित्यनुवृत्तौ बौधायनः [२, ३, १५]

अभ्युपगम्य दुहितरि जातं पुत्रिकापुत्रमस्यां[1] दौहित्रम् ॥

अत्रानौरसाभिप्रायेण मनुः [९, १३१-१३२]

दौहित्र एव तु हरेदपुत्रस्याखिलं धनम् ।
दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत् ॥

औरसानुवृत्तौ देवलः

तत्तुल्यः पुत्रिकापुत्रो दायदः सोऽथवा भवेत् ।
स एव दद्यात् पिण्डं तु पित्रे मातामहाय च ॥

पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः ।
तयोर्हि मातापितरौ संभूतौ तस्य देहतः ॥

अकृता वा कृता वापि यं विन्देत्सदृशं सुतम् ।
पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥

कृताकृतदुहित्रधिकारे बृहस्पतिः [व्यव., २६, १३३]

यथा पितृधने स्वाम्यं तस्याः सत्स्वपि बन्धुषु ।
तथैव तत्सुतोऽपीष्टे मातृमातामहे धने ॥

1. अन्यमिति वि. र. पाठः (५६५); अन्यमिति औरसापेक्षया । 'अस्यां' इति कल्पतरौ पाठः, स तु सुगम एव ॥ (वि. र.)

शङ्खलिखितौ

स्त्रीधनं च कन्या लभते । तदपत्यस्य धनं[1] कन्याभाग एव ॥

'तदपत्यस्य' तच्छब्देन पुत्रिकामातुः परिग्रहः[2] । तत्सुतस्योत्तरकालं जातस्य[3] अपुत्रकस्यातीतस्य धनं 'कन्याभाग एव' पुत्रिकाभाग एव । तस्याः सोदरभ्रातृरूपत्वादित्यभिप्रायः ॥[4]

अथ मनुः [९, १२७-१२९]

अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् ।
यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम् ॥

अनेन तु विधानेन पुरा चक्रे[5]ऽथ पुत्रिकाम् ।
विवृद्ध्यर्थं स्ववंशस्य स्वयं दक्षप्रजापतिः ॥

ददौ स दश धर्माय काश्यपाय त्रयोदश ।
सोमाय राज्ञे सत्कृत्य प्रीतात्मा सप्तविंशतिम् ॥

वसिष्ठः [१८, १७]

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् ।
अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ॥

1. द्रव्यं-वि. र., ५६६.

2. परामर्शः-ज, द, स, B. J., वि. र.

3. उत्तरकालजन्मनः-B. J.

4. Comment reproduced by वि. र.

5. चक्रेऽथ पुत्रिकाः-मेधातिथिः । चक्रे सपुत्रिकाः-इति गोविन्दराजः; चक्रे च पुत्रिकाः-ed. Jolly.

गौतमः [२८, १८-२०]

पितोत्सृजेत् पुत्रिकामनपत्योऽग्निं प्रजापतिं चेष्ट्वाऽस्मदर्थमपत्यमिति संवाद्य । अभिसन्धिमात्रात् पुत्रिकेत्येकेषाम् । [1]तत्संशयान्नोपयच्छे-दभ्रातृकाम् ॥

जाबालिः[2]

पुत्रिकायाः प्रदाने तु स्थालीपाकेन धर्मवित् ।
अग्निं प्रजापतिं चेष्ट्वा पुत्रदाने तथैव च ॥

ब्रह्मपुराणे

अपुत्रेण च या कन्या मनसा पुत्रवत्कृता ।
राजाग्निबान्धवेभ्यश्च समक्षं वाऽथ कुत्रचित् ॥

प्रागगर्भमथवा शुल्कमुक्त्वा [3]पित्रा वराय वै ।
मृते पितरि वा दत्ता सा विज्ञेया तु पुत्रिका ॥

[4]पित्र्याद्दक्षात्समं भागं [5]लभते तादृशी[6] तु सा ।

1. Last two *Sūtras* supplied by A. S. B.

2. *Vivādaratnākara* omits the śloka of जाबालि and the last *Sūtra* above from Gautama. He cites instead from बृहस्पति [व्य., २६, ७६] this śloka :—

अग्निं प्रजापतिञ्चेष्ट्वा क्रियते गौतमोऽवदत् ।
अन्ये त्वाहुरपुत्रस्य चिन्तिता पुत्रिका भवेत् ॥

3. दत्ता वराय वै–वि. र., ५९७.

4. पित्र्यादंशात्–वि. र.

5. लभेत–व्य. प्र.

6. तादृशी सुता–वि. र.

<u>मनुः</u> [९, १४०]

मातुः [1]प्रथमतः पिण्डं निर्वपेत्पुत्रिकासुतः ।
द्वितीयं तु पितुस्तस्यास्तृतीयं तु पितुः पितुः ॥

## अथ पौनर्भवः

तत्र <u>वसिष्ठविष्णू</u> [व., १७, १८ ; वि. १४, ७]

पौनर्भवश्चतुर्थः ॥

<u>मनुः</u> [९, १७५]

या तु पत्या[2] परित्यक्ता विधवा वा स्वयेच्छया ।
उत्पादयेत्पुनर्भूत्वा[3] स पौनर्भव उच्यते ॥

<u>याज्ञवल्क्यः</u> [२, १३०]

[4]अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः ॥

<u>कात्यायनः</u> [८६०]

क्लीबं विहाय पतितं या पुनर्लभते पतिम् ।
तस्यां पौनर्भवो जातो व्यक्तमुत्पादकस्य सः ॥

1. अस्या इत्यनुषङ्गः–वि. र., ५६७

2. या पत्या वा–(मेधातिथिः)

3. 'पुनर्भूत्वा' अन्यस्य सवर्णस्य भार्या भूत्वा (मनुभावार्थचन्द्रिका) । पुरुषान्तरेण आत्मानं विवाह्य इत्यर्थः (वि. र. ५६८).

4. मृते भर्तरि अक्षतयोन्यां अन्यसंस्कृतायां जातः पौनर्भवः क्षतयोन्यां वा । (विश्वरूपः) अक्षतायां क्लीबादिभार्यायां विधवायां अविधवायां वा भार्यायां परोपभुक्तायां पुनः परिगृह्य संस्कृतायां यो जातः स पौनर्भवसंज्ञकः । (अपरार्कः)

## अथ कानीनः

तत्र वसिष्ठः [१७, २१-२३]

कानीनः पञ्चमः। या पितृगृहेऽसंस्कृता कामादुत्पादयेत् स कानीनो मातामहस्य पुत्रो भवतीत्याहुः। अथाप्युदाहरन्ति।

अप्रत्ता दुहिता यस्य सुतं विन्देत [1]तुल्यतः।
पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम्॥ इति॥

नारदः [१६, १८]

अज्ञातपितृको यस्तु कानीनो गूढमातृकः।
मातामहाय दद्यात्स पिण्डं रिक्थं हरेत्ततः॥

बौधायनः [२, ३, २४]

[2]असंस्कृतामनतिसृष्टां यामुपगच्छेत्तस्यां यो जातः स कानीनः॥

ब्रह्मपुराणे

अदत्तायां तु यो जातः सवर्णेन पितुर्गृहे।
स कानीनः सुतस्तस्य यस्मै सा दीयते पुनः॥

1. 'तुल्यतः' समानजातीयात् (वि. र., ५६९)
2. 'असंस्कृता' परिणयसंस्कारशून्या। 'अनतिसृष्टा' अदत्ता। (वि. र.)

नारदः [१६, १७ ; ना॰ सं॰, १४, १६]

कानीनश्च सहोढश्च गूढायां यश्च जायते ।
तेषां वोढा पिता ज्ञेयस्ते [च भागहरा स्मृताः] ॥

## अथ गूढोत्पन्नः

तत्र मनुः [९, १७०]

उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः ।
स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥[1]

## अथ सहोढः

तत्र विष्णुः [१४, १५-१७]

सहोढः सप्तमः । गर्भिणी या[2] संस्क्रियते तस्याः पुत्रः । स तु पाणिग्राहस्य ॥

मनुः [९, १७३]

या गर्भिणी संस्क्रियते ज्ञाताऽज्ञाताऽपि वा सती ।
वोढुः स गर्भो भवति सहोढ इति चोच्यते ॥

1. 'न च ज्ञायेत' माता यद्युद्भ्रान्ता बहुशो गता वा तदा न ज्ञायते का पुनस्तस्य जातिः यतः पूर्वमुक्तं 'अनिज्ञातबीजिनो मातृतः' (मेधातिथिः) । 'तल्पजो' भार्याजातः (वि. र., ५७१)

2. तत्र प्रकाशाकृता गर्भिण्याः कन्यात्वं पुरस्कृत्य पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिता इति संस्कार आक्षिप्तः । आथर्वणीयकेन विधिना पुनः संस्कारविधिः श्रुतौ अस्तीत्यन्ये इति सिद्धान्तदृशा लिखितम् । वस्तुतस्तु पाणिग्रहणिकमन्त्रजन्यसंस्कारातिरिक्तहोमादिकर्मसंस्काराभिप्रायं संस्क्रियते पदमिति । (वि. र., ५७२)

## अथ दत्तकः

तत्र मनुः [९, १६८ ; १४१, १४२]

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः[1] सुतः ॥[2]

उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्त्रिमः ।
स हरेतैव तद्रिक्थं संप्राप्तोऽप्यन्यगोत्रतः ॥

गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः सुतः[3] ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः [4]स्वधा ॥

वसिष्ठः [१५, १-८]

[5]शोणितशुक्रसंभवः पुरुषो मातापितृनिमित्तकः । तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः । न त्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा । स हि सन्तानाय पूर्वेषाम् । न तु स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वा । अन्यत्रानुज्ञानाद्भर्तुः । पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि च निवेद्य[6] निवेश-

1. दत्तकः-उ.

2. 'च' शब्दः पठितुं युक्तो 'माता पिता च' इति, न 'वा' शब्दः । न हि उभयोरपत्यं अन्यतरानिच्छायां दातुं युक्तम् । अथापि 'वा' शब्दः पठ्यते । तथा चोक्तम्—'माता पिता वा दद्यातां', 'तयोरपि पिता श्रेयान्' इति कार्यान्तरविनियोगविषयमेतम् । ........ 'सदृशं' न जातितः । किं तर्हि कुलानुरूपगुणैः । क्षत्रियादिरपि ब्राह्मणस्य दत्तको युज्यते। प्रतिग्रहणं लोभादिना प्रतिषेधार्थम् ॥ (मेधातिथिः) 'आपदि' दुर्भिक्षादौ, अथवा गृहीतुः आपदि सुताभावे (अपरार्कः ७३८) ॥ आपच्छब्दोपादानात् अनापदि न देयमिति गम्यते। अनापदि दत्ते दातुर्दोषो न प्रतिगृहीतुः (मदनपारिजात, ६५२) ॥ 'सदृशं' जात्या इति कुल्लूकभट्टः ॥ 'सदृशं' समवर्णमिति चण्डेश्वरः (वि. र., ५७३)

3. क्वचित्-उ.

4. स्वधाशब्दः श्राद्धादिपरः (वि. र., ५७४).

5. शुक्रशोणितसंभवः पुत्रो-वि. र. ५७४.

6. राजनि चावेद्य-वि. र., ५७४.

नस्य मध्ये व्याहृतीः[1] हुत्वाऽदूरेबान्धवमसन्निकृष्टमेव प्रतिगृह्णीयात् । सन्देहे चोत्पन्ने दूरेबान्धवं[2] शूद्रमिव स्थापयेत् । विज्ञायते [3]ह्येकेन बहूं-स्त्रायत इति ॥[4]

'अदूरेबान्धवं' सन्निहितमातुलादिकम् । 'असन्निकृष्टमेव' अविज्ञात-गुणदोषमपि । अप्यर्थः एवकारः । 'सन्देहे' इत्यादि—बान्धवानामसन्नि-धानाज्जातिसन्देहे शूद्रत्वेनाध्यवस्य संस्कारहीनमेव 'स्थापयेत्' । शूद्रोऽपि हि किल पुत्रो भवतीत्यभिप्रायः ॥

## अथ क्रीतः

तत्र मनुः [९, १७४]

क्रीणीयाद्यस्त्वपत्यार्थे मातापित्रोर्यमन्तिकात् ।
स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा ॥[5]

1. व्याहृतिभिः हुत्वा–वि. र., ५७४.

2. अदूरबान्धवं–Fiiehrer ; वि. र.

3. एकेन बहूंस्त्रायते, यथाकथंचिदेकेन पुत्रेण बहून् पूर्वजान् त्रायते । तस्मादसन्दिग्ध-जात्यादिकमेव परिगृह्णीयात् इत्यर्थः । (वि. र., ५७५)

4. अदूरबान्धवमिति अत्यन्तदेशभाषाविप्रकृष्टस्य प्रतिषेधः । एवं क्रीतस्वयंदत्तकृत्रिमे-ष्वपि योजनीयम् । समानन्यायत्वात् ॥ (मिताक्षरा, २, १३०).

कल्पतरौ त्वदूरबान्धवमसन्निकृष्टमेवेति पाठं लिखित्वाऽदूरबान्धवं सन्निहितमातुलादिकम् । असन्निकृष्टमेव अविज्ञातगुणदोषमपि । अप्यर्थ एवकार इति व्याख्यातम् । 'सन्देहे चोत्पन्ने शूद्रमिव स्थापयेत् विज्ञायते ह्येकेन च बहूंस्त्रायते इति च वचनमधिकं लिखित्वा एवं विवृतम् । 'सन्देहे' बान्धवानामसन्निधानात् जातिसंदेहे उत्पन्ने शूद्रमिव संस्कारहीनमेव दूरे स्थापयेत् । शूद्रोऽपि कृतपुत्रो भवतीत्यभिप्राय इति ॥ (व्यवहारप्रकाशः, ६११. ed. Jivananda)

5. सदृशासदृशोक्तिस्तु गुणापेक्षया सजातीयेष्विति मेधातिथिरित्याह । 'सदृशः' सवर्णः, तदभावे 'असदृशः' असवर्णः इति पारिजातः । प्रकाशकारस्तु सत्यामपि असदृश स्मृतौ न हीनजातीयेनोत्तमजातीयः पुत्रत्वेन ग्राह्यः, उत्तमेन न हीनोऽपि पुत्रत्वेन ग्राह्यः ॥ (वि. र., ५७६) ॥ गुणैः सदृशोऽसदृशो वेति व्याख्येयं न जात्या (मिताक्षरा, २, १३१).

बौधायनः [२, ३, २६]

मातापित्रोर्हस्तात्क्रीतोऽन्यतरस्य[1] वा योऽपत्यार्थे गृह्यते[2] स क्रीतकः ॥

## अथ स्वयमुपागतः

तत्र मनुः [९, १७७]

मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् ।
आत्मानं दर्शये[3]द्यस्मै स्वयंदत्तस्तु स स्मृतः ॥

## अथापविद्धः

तत्र विष्णुः [१५, २४-२६]

अपविद्धस्त्वेकादशः । [4]पित्रा मात्रा च परित्यक्तः । स च येन गृहीतः ॥

वसिष्ठः [१७, ३६-३७]

अपविद्धः पञ्चमः[5] । यं मातापितृभ्यामपास्तं[6] गृह्णीयात् ॥

1. 'अन्यतरेण वा' इति मुद्रितबौधायनीये.

2. स्वद्रव्यं प्रदाय इति शेषः (गोविन्दस्वामी)

3. स्पर्शयेत्-वि. र., ५७७. । 'आत्मानं स्पर्शयेत्'- अहन्ते पुत्र इत्यात्मानं दद्यात् । (वि. र.).

4. स माता पिता वा परित्यक्तः-वि. र. ५७८.

5. पञ्चमत्वेनोक्तिः उत्तरपुत्रषट्के पञ्चमत्वमादायेति (वि. र., ५७८).

6. पितृभ्याम्तु त्यक्तम्-वि. र.

## अथ कृत्रिमः

तत्र मनुः [९, १६९]

सदृशं यं प्रकुर्यातां[1] गुणदोषविचक्षणम् ।
पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः ॥[2]

## अथ शूद्रापुत्रः

[तत्र] विष्णुः [१५, २७]

[3]यत्र क्वचनोत्पादितश्च द्वादशः ॥

वसिष्ठः [१७, ३८]

शूद्रापुत्र एव [षष्ठो][4] भवतीत्याहुः ॥

मनुः [९, १६७]

यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम् ।
स पारयन्नेव[5] शवस्तस्मात्पारशवः स्मृतः ॥

बौधायनः [२, ३, २९-३०]

द्विजातिप्रवराच्छूद्रायां जातः कामात् पारशव इति ।

1. प्रकुर्वीत–वि. र., ५७९
2. 'सदृशः' सदृशगुण इति मेधातिथिः । 'पुत्रगुणैः' शुश्रूषादिभिः (वि. र., ५७९)
3. 'यत्र क्वचन' ऊढायामनूढायां वा शूद्रायाम् । (वि. र. ५८०)
4. औरसापेक्षया द्वादशः (वि. र. ५८०)
5. 'पारयन्' पिण्डदानादिना उपकुर्वन्नपि (मेधातिथिः)

अथ मनुः [९, १८०-१८१]

[1]क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥

[2]य [3]एते विहिताः पुत्राः प्रसङ्गादन्यबीजजाः ।
यस्य ते बीजतो जातास्तस्य ते नेतरस्य तु ॥

बृहस्पतिः [व्यव., २६, ७७, ७८]

पुत्रास्त्रयोदश प्रोक्ता मनुना येऽनुपूर्वशः ।
सन्तानकारणं तेषामौरसः पुत्रिकासुतः[4] ॥

आज्यं विना यथा तैलं सद्भिः प्रतिनिधिः स्मृतम्[5] ।
तथैकादशपुत्रास्तु पुत्रिकौरसयोर्विना ॥

1. मुख्याभावे 'प्रतिनिधिः' । अतोऽसत्यौरस एते कर्तव्या इत्युक्तं भवति । 'क्रियालोपात्' अपत्यं उत्पादयितव्यमिति अस्य विधिलोपो माभूदिति । नित्यो ह्ययं विधिः । स यथाकथंचित् गृहस्थेन संपाद्यः । तत्र मुख्यः कल्प औरसः । तदसंपत्तौ एते अनुकल्पा आश्रयितव्याः ॥ (मेधातिथिः)

2. पूर्वोक्तस्याभावे विधिप्रतिषेधोऽयमिति व्याचक्षते । य एते औरसाभावे प्रतिनिधयः कर्तव्यतया उक्तास्ते न कर्तव्याः । यतस्तेऽ'न्यबीजजाताः' तस्यैव ते पुत्रा 'नेतरस्य' ये न क्रियन्ते तस्य ते न भवन्तीत्यर्थः । अतश्च पूर्वेण विधिरनेन प्रतिषेध इति विकल्पः । स च व्यवस्थितो रिक्थग्रहणे । कानीनादयो न रिक्थभाजः । दत्तकादयस्तु रिक्थभाजः असत्यौरसे ॥ (मेधातिथिः)

3. 'एतेऽभिहिता' इति मेधातिथिपाठः

4. 'पुत्रिका तथा' इति अपरार्कपाठः (७३५)

5. स्मृतम् (अपरार्कः) ; प्रतिनिधीकृतम्–वि. र., ५८१, B. J.

ब्रह्मपुराणे

दत्तकश्च स्वयंदत्तः कृत्रिमः क्रीत एव च ।
अपविद्धश्च ये पुत्रा भरणीयाः सदैव हि ॥

भिन्नगोत्राः पृथक् पिण्डाः भिन्नवंशकरास्तथा[1] ।
सूतके मृतके वापि त्र्यहाशौचस्य भागिनः ॥

अपि वस्त्रान्नदातॄणां क्षेत्रबीजवतां तथा ।
शूद्रो दासः पारशवो विप्राणां विद्यते क्वचित् ॥

राज्ञां तु शापदग्धानां नित्यं क्षयवतां तथा ।
अथ सङ्ग्रामशीलानां कदाचिद्वा भवन्ति ते ॥

औरसो यदि वा पुत्रस्त्वथवा पुत्रिकासुतः ।
विद्यते नत्र तेषां तु विज्ञेयाः क्षेत्रजादयः ॥

एकादश पृथग्गोत्रा वंशमात्रकरास्तु ते ।
श्राद्धादि दासवत्सर्वे तेषां कुर्वन्ति नित्यशः ॥

गूढोत्पन्नश्च कानीनः सहोढः क्षेत्रजस्तथा ।
पौनर्भवश्च वैश्यानां राजदण्डभयादपि ॥

वर्जिताः पञ्च पतितानां शेषाः सर्वे भवन्त्यपि ।
शूद्राणां दासवृत्तीनां परपिण्डोपजीविनाम् ॥

परायत्तशरीराणां न क्वचित्पुत्र इत्यपि ।
तस्माद्दासाच्च दास्याश्च जायते दास एव हि ॥

1. स्मृताः (बि. र.)

## अथ पुत्रत्वविचारः

तत्र वसिष्ठः [१८, ६]

क्षेत्रिणः पुत्रो जनयितुः पुत्र इति विवदन्ते ॥

आपस्तम्बः [२, १३, ६]

अप्रमत्ता रक्षथ तन्तुमेतं
मा वः क्षेत्रे परबीजानि वाप्सुः ।
जनयितुः पुत्रो भवति सांपराये
मोघं पिता कुरुते तन्तुमेनम् ॥ इति[1]

मनुः [९, ३५-३६]

बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते ।
सर्वभूतप्रसूतिर्हि बीजलक्षणलक्षिता ॥[2]

यादृशं तूप्यते बीजं क्षेत्रे कालोपपादितम्[3] ।
तादृग्रोहति तत्तस्मिन् बीजं स्वैर्व्यञ्जितं गुणैः ॥

तथा [९, ४१, ४५, ४६, ४८, ४९, ५०-५२, ५४-५५]

तत्प्राज्ञेन विनीतेन ज्ञानविज्ञानवेदिना ।
आयुष्कामेन वप्तव्यं न जातु परयोषिति ॥

1. 'तन्तुं' पुत्रपौत्रादिपरंपराम् । 'जनयितुः' बीजिनः पुत्रो भवति उपकारक इति शेषः । 'सांपराये' पारलौकिकफले । 'मोघं' निष्फलम् ॥ (वि. र., ५८४)

2. बीजप्राधान्यात् यस्य बीजं तस्यापत्यम् । [इति पूर्वपक्षः] (मेधातिथिः)

3. कालोपपादिते इति (मेधातिथिः)

एतावानेव पुरुषो यज्जायात्मा प्रजेति च[1] ।
विप्राः प्राहुस्तथा [2]चैव यो भर्ता सा स्मृताङ्गना ॥

न निष्क्रयविसर्गाभ्यां भर्तुर्भार्या विमुच्यते ।
एवं धर्मं विजानीमः[3] प्राक् प्रजापतिनिर्मितम् ॥[4]

यथा गोऽश्वोष्ट्रदासीषु त्वजाविमहिषीषु च ।
नोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि ॥

येऽक्षेत्रिणो बीजवन्तः परक्षेत्रप्रवापिणः ।
ते वै सस्यस्य जातस्य न लभन्ते फलं क्वचित् ॥

यद्यन्यगोषु वृषभो वत्सानां जनयेच्छतम् ।
[5]गोमिनामेव ते वत्सा मोघं [6]स्कन्दितमार्षभम् ॥

तथैवाक्षेत्रिणो बीजं परक्षेत्रप्रवापिणः ।
कुर्वन्ति[7] क्षेत्रिणामर्थं न बीजी लभते फलम् ॥

[8]फलं त्वनभिसंधाय क्षेत्रिणां बीजिनां तथा ।
प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्गरीयसी[9] ॥

1. प्रजेति ह–(मेधातिथिः)
2. चैवद्यो भर्ता–(मेधातिथिः)
3. 'विजानीत' इति गोविन्दराजः
4. 'निष्क्रयो' विक्रयो विनिमयश्च। 'विसर्गः' त्यागः। ताभ्यां न विमुच्यते। न भार्यास्वमस्या व्यपैति ॥ (मेधातिथिः) ; 'निष्क्रय' इति मेधातिथिकुल्लूकपाठः
5. 'गोमिनां' गोस्वामिनाम। 'स्कन्दितं' बीजनिषेकः। 'मोघं' वृथा, निष्फलम् ॥ (मेधातिथिः)
6. स्यन्दितम्–कुल्लूकः ; मोघं वृषभचेष्टितम्–(गोविन्दराजः)
7. 'करोति'–उ, वि. र., ५८५ ; 'कुर्वन्ति' इति मेधातिथिः
8. फलत्वेनाभिसंधाय–स.
9. 'गरीयसी' इति मूलमातृकाः ; बलीयसीति मेधातिथिः

ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति ।
[1]तज्ज्ञेयं क्षेत्रिकस्यैव न बीजी लभते फलम् ॥

एष धर्मो[2] गवाश्वस्य दास्युष्ट्राजाविकस्य च ।
विहङ्गमहिषीणां च विज्ञेयः प्रसवं प्रति ॥

शङ्खलिखितौ

क्षेत्रिकस्याविज्ञानेन यद्बीजं प्रकीर्यते तत्क्षेत्रिकस्यैव । न तत्र बीजी भागमर्हति ॥

गौतमः [१८, ९-१४]

[3]क्षेत्रियः पारदारिको न विभागमर्हति । [4]नातिद्वितीयं जनयितुरपत्यम् । समयादन्यस्य । जीवतश्च क्षेत्रे । परस्मात्तस्य । द्वयोर्वा । रक्षणात्तु भर्तुरेव ॥

1. 'क्षेत्रिकस्यैव तद्बीजम्' इति मेधातिथिः
2. एष धर्मो न बीजी फलभागिति [इति सिद्धान्तः] वि. र. ५८६.
3. सूत्रमिदं मुद्रितगौतमधर्मसूत्रे न दृष्टम् ।
4. प्रथममपत्यमतीत्य द्वितीयं न जनयेदिति । जनयितुस्तदपत्यं भवति । यदि ज्ञातयः समयं कृत्वा नियुञ्जते 'क्षेत्रिणोऽपत्यमस्तु' इति तदा क्षेत्रिण एवापत्यं न बीजिनः । 'परस्मात्' देवरादिव्यतिरिक्तात् तदनियुक्तायामप्यपत्यवत्यामनपत्यायां चोत्पन्नस्तस्यैव बीजिनो भवति, न क्षेत्रिणः । एवमुत्पादितमपत्यं द्वयोर्वा भवति बीजिक्षेत्रिणोः । इदं नियुक्ताविषयम् । यदि भर्ता क्षेत्र्येव 'रक्षणं' भरणं पोषणं संस्कारादि करोति, न बीजी, तदा भर्तुरेव तदपत्यमिति ॥ (हरदत्तभाष्यम्)

द्वितीयमतीत्य तृतीयं नोत्पादयेत् । यदि तृतीयमुत्पादयति 'जनयितुः' देवरादेरेव भवति, न क्षेत्रिणः । 'समयः'–'तव रतिः ममापत्यं इति समयः कृतश्चेत्, 'अन्यस्य' क्षेत्रिणो भवति तृतीयमपि । 'जीवतः' प्रजननासमर्थस्य पत्युः, 'क्षेत्रे' भार्यायां यदपत्यमुत्पद्यते तत् क्षेत्रिण एव भवति विनाऽपि समयेन द्वितीयादधिकमपि इत्यभिप्रायः । 'परस्मात्' देवरादिव्यतिरिक्तात्, व्यतिक्रमाद्वा यदि जीवतोऽपि अपत्यमुत्पद्यते तत् द्वितीयादधिकमपि 'तस्य' जनयितुरेव भवति, न क्षेत्रिणः । द्व्यामुष्यायणो वा भवति । 'रक्षणे' भरणपोषणसंस्कारादौ क्रियमाणे भर्त्रा, परस्मात् छिद्रेण यदपत्यमुत्पद्यते तद्भर्तुरेव भवति (मस्करी).

'नातिद्वितीयं जनयितुरपत्यम्' इति—'द्वितीयं' नियोगेन 'जनयितुः' द्वितीयमतिक्रम्य तृतीयमपत्यं न भवतीत्यर्थः। 'समयादन्यस्य' 'ममेदमपत्यं भवतु' इति सङ्केतात्, 'अन्यस्य' बीजिनो भवति। 'जीवतश्च क्षेत्रे'—जीवतः प्रजननासमर्थस्य [पत्युः] 'क्षेत्रे' भार्यायां, यदपत्यं जायते तत् क्षेत्रिण एव ॥

शङ्खलिखितौ

नियतं क्षेत्रिणामपत्यमिति वेदवादो मातुरपत्यमित्येके ॥

तथा

वसिष्ठकश्यपयोर्जलगतयोरुदवासादुत्तीर्यैकः[1] प्रजामुत्पादयत्यविज्ञातो लोकानाम्। एवं तयोर्द्विधा सन्तानः। यस्मात्कुलधर्मपरिग्रहरिक्थपिण्डोदकानि चैकतः कृत्वा परक्षेत्रोत्पन्ना अपि प्रयच्छन्ति ॥

अथ पुत्रातिदेशः

तत्र मनुः [९, १८२, १८३]

भ्रातृणामेकजातानामेकश्चेत्पुत्रवान् भवेत्।
सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥

सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत्।
सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः ॥

बृहस्पतिः [व्यव., २६, ७९-८०]

यद्येकजाता बहवो भ्रातरस्ते सहोदराः।
एकस्यापि सुते जाते सर्वे ते पुत्रिणः स्मृताः ॥

1. 'उदवासात्' जलवासात्। 'एको' अन्यतरः। अन्यतरस्य क्षेत्रे उत्पादयति। (वि. र., ५८८)

बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः ।
एका चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः ॥[1]

## अथ पुत्रनिरुक्त्यादिः

तत्र मनुविष्णू [म., ९, १३८ ; वि. १५, ४४]

पुन्नाम्नो नरकाद्यस्मा[2]त्पितरं त्रायते सुतः ।
तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ॥

[3]हारीतः

पुन्नामा निरयः प्रोक्तश्छिन्नतन्तुश्च नैरयः ।
तत्र वै त्रायते यस्मात्तस्मात्पुत्र इति स्मृतः ॥

बृहस्पतिः [व्यव., २६, ८१-८२]

पुंनाम्नो नरका[4]द्यस्मात् पितरं त्रायते यतः ।
मुखसन्दर्शनेनापि तदुत्पत्तौ यतेत सः ॥

पौत्रोऽथ पुत्रिकापुत्रः स्वर्गप्राप्तिकरावुभौ ।
[5]रिक्थपिण्डप्रदानेन समौ संपरिकल्पितौ ॥

1. अत्र असहायेनोक्तं पुंसां सति भ्रातृत्वे, स्त्रीणां सति सपत्नीपुत्रे क्षेत्रजादयः प्रतिनिधयो न कर्तव्या इति । पारिजातोऽप्येवमाह । मनुटीकायां उदयकरोऽप्येवम् ॥ (वि. र., ५८९)

2. त्रायते पितरं सुतः-(मेधातिथिः)

3. S. B. (b) ascribes this to Yama.

4. नरकात्पुत्रः-ख, ज, B. J.

5. रिक्थे पिण्डाम्बुदाने च तौ समौ परिकल्पितौ-ज.

विष्णुवसिष्ठौ [वि., १५, ४५ ; व., १७, १]

ऋणमस्मिन् सन्नयति अमृतत्वं च विन्दति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥

शङ्खलिखितपैठीनसयः

यत्र क्वचन जातेन पिता पुत्रेण नन्दति ।
तेन चानृणतां याति पितॄणां पिण्डदेन वै ॥

हारीतः

यस्य पुत्रः शुचिर्दक्षः पूर्वे वयसि धार्मिकः ।
नियन्ता चात्मदोषाणां [1]स तारयति पूर्वजान् ॥

शङ्खलिखितौ

अग्निहोत्रं त्रयो वेदा यज्ञाश्च शतदक्षिणाः ।
ज्येष्ठपुत्रप्रसूतस्य कलां नार्हन्ति षोडशीम् ॥

पुत्रपौत्रप्रतिष्ठस्य बहुपुत्रस्य[2] जीवतः ।
[3]अस्कन्नवेदयज्ञस्य हस्तप्राप्तं त्रिविष्टपम् ॥

[4]शङ्खलिखित-विष्णु-वसिष्ठ-हारीताः

पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण [5]ब्रध्नस्याप्नोति [6]विष्टपम् ॥

1. सन्तारयति—ज. द.
2. बहुपत्यस्य—स.
3. अक्षुण्णवेदयज्ञस्य—वि. र., ५९१ ; 'अक्षुण्णः' अलुप्तः ।
4. विष्णुस्मृति, १५, ४५ ; वसिष्ठस्मृति, १७, ५.
5. 'ब्रध्नस्य' सूर्यस्य (वि. र., ५९१)
6. 'विष्टपम्'—वि. र.

<u>याज्ञवल्क्यः</u> [१, ८७८]

लोकानन्त्यं दिवः[1] प्राप्तिः पुत्रपौत्रप्रपौत्रकैः[2] ॥

<u>वसिष्ठः</u> [१७, २-४]

अनन्ताः पुत्रिणो लोका नाऽपुत्रस्य लोकोऽस्तीति श्रूयते । 'प्रजाः सन्त्वपुत्रिणः' इत्यभिशापः । 'प्रजाभिरग्ने अमृतत्वमश्याम्' इत्यपि <u>निगमो</u>[3] भवति ॥

<u>बृहस्पतिः</u> [व्यव., २६, ८८-९०]

अपुत्रेण सुतः कार्यो यादृक् तादृक् प्रयत्नतः ।
पिण्डोदकक्रियाहेतोर्नामसङ्कीर्तनस्य[4] च ॥

काङ्क्षन्ति पितरः पुत्रान्नरकापातभीरवः ।
गयां यास्यति यः कश्चित्सोऽस्मान् सन्तारयिष्यति ॥

यथा जलं कुप्लवेन तरन्मज्जति मानवः ।
तथा पिता[5] कुपुत्रैस्तु तमस्यन्धे निमज्जति ॥[6]

1. लोकानन्त्यदिवः प्राप्तिः-इति विश्वरूपापरार्कौ.

2. लोकप्राप्तिरानन्त्यप्राप्तिर्दिवः प्राप्तिश्च क्रमेण पुत्रपौत्रप्रपौत्रिका यस्मात्, तस्मात् स्त्रियः सेव्याः (विश्वरूपः)

3. यस्त्वा हृदा कीरिणा मन्यमानो मर्त्यं मर्त्यो जोहवीमि ।
जातवेदो यशो अस्मासु धेहि प्रजाभिरग्नेअमृतत्वमश्याम् ॥
ऋ. वे., ३, ८, १९ ; तै. सं., १, ४, ४६

4. संकीर्तनाय-Bik. Ms.

5. तद्वत्पिता-व्य. मातृकापाठः, p. 320.

6. The last four lines are supplied by ज, द, स and A. S. B. The last śloka appears thus in गृहस्थकाण्ड, ४३३-४:

याद‍ृशं गुणमाप्नोति कुप्लवैः सन्तरन् जलम् ।
ताद‍ृशं गुणमाप्नोति कुपुत्रैः सन्तरंस्तमः ॥

## अथ निन्दितः

तत्र **मनुः** [९, १४३-१४४]

अनियुक्तासुतश्चैव पुत्रिण्याप्तश्च देवरात् ।
उभौ तौ नार्हतो भागं जारजातककामजौ ॥[1]

नियुक्तायामपि पुमान्नार्यां जातोऽविधानतः ।
नैवार्हः पैतृकं रिक्थं पतितोत्पादितो हि सः[2] ॥

**गौतमः** [२८, २४]

देवरवत्यामन्यजातमभागम् ।[3]

**नारदः** [१६, १९-२०]

जाता ये त्वनियुक्तायामेकेन बहुभिस्तथा ।
अरिक्थभाजस्ते [4]सर्वे बीजिनामेव ते सुताः ॥

दद्युस्ते बीजिनो[5] पिण्डं माता चेच्छुल्कतो हृता ।
अशुल्कोपनतायां च पिण्डदा वोढुरेव ते ॥[6]

1. अपुत्रे भर्तरि मृते पुत्रोत्पादने स्त्रिया गुरुनियोगोऽपेक्षितव्यः । या गुरुभिरनियुक्ता पुत्रमुत्पादयेत्–'क्षेत्रं किलाहं भर्तुः क्षेत्रजश्च पुत्रस्तदंशहरः' इत्यनया भ्रान्त्या–स तस्यां समुत्पन्नो न रिक्थहरः । पिण्डदाने तु न निषिध्यते । यद्यपि पतितोत्पन्नो भवति ॥ (**मेधातिथिः**) 'भागं' क्षेत्रियक्रिक्थादिभागम् । एतच्च पिण्डदानादेः उपलक्षणम् ॥ (**वि. र.**, ५९३).

2. 'अविधानतः' शुक्लवस्त्रादिनियमत्यागो 'विधानाभावः' । नियमत्यागेन देवरभ्रातृजाययोः पुत्रोत्पादने प्रवर्तमानयोः युक्तं पतितत्वम् ॥ (**मेधातिथिः**)

3. विद्यमानदेवरायां अन्येनोत्पादितमपत्यमभागार्हं, कामजत्वात् ॥ (**मस्करिः**)

4. सर्वे स्युः–मु. ना. पाठः

5. बीजिने–मु. ना, वि. र., ५९५.

6. 'अनियुक्तायां' स्वैरिण्याम् । 'अरिक्थभाजः' क्षेत्रिरिक्थं न लभन्ते । मातृक्षेत्रिकमातामहानां च न ऋक्थं भजन्ते इति **प्रकाशकारः** । यदि क्षेत्रिणः '**शुल्कं**' दत्वा बीजिना माता हृता, [दद्युस्ते बीजिनो पिण्डम् ।]. **वि. र.**, ५९४.

मनुः [९, १९१]

द्वौ तु यौ विवदेयातां द्वाभ्यां जातौ स्त्रियां [1]धने ।
तयोर्यद्यस्य पित्र्यं स्यात् तत्स गृह्णीत नेतरः ॥[2]

## [3]अथ अपुत्रधनविभागः

तत्र मनुः [९, १९०]

संस्थितस्यानपत्यस्य [4]सगोत्रात्तन्तुमाहरेत् ।
तत्र यद्रिक्थजातं [5]स्यात्तत्तस्मै प्रतिपादयेत् ॥[6]

'तन्तुमाहरेत्' सगोत्रात्पुरुषात् सन्तानमुत्पादयेदित्यर्थः ।

वृद्धमनुः

[7]अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता ।
पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमर्थं लभेत च ॥

1. स्त्रिया धने–स.

2. इदं तु औरसपौनर्भवविषयम् (कुल्लूकः) अत्र स्त्री वेश्या–पुनर्भू–स्वैरिणीति पारिजातः । (वि. र., ५९४)

3. Lakṣmīdhara's views in this section are paraphrased and elaborated by the *Sarasvatīvilāsa*, pp. 421-430 (ed. Mysore, 1907). He is referred to as 'भगवान् लक्ष्मीधरः' (p. 421). The section ends thus: 'इतश्च लक्ष्मीधराचार्यमतमतिगम्भीरं दिङ्मात्रमुदाहृतम्'.

4. सगोत्रात् पुत्रमाहरेत्–मेधातिथिः । सगोत्रात्तन्तुमाहरेत्–वि. र., ५९५.

5. स्यात्तत्तस्मिन् प्रतिपादयेत् –मेधातिथिः

6. 'अनपत्यस्य' मृतस्य पत्नी 'सगोत्रात्' देवर–सपिण्डयोरन्यतरस्मात् अपत्यमुत्पाद्य तस्मै मृतस्वामिस्वत्वोपलक्षितं ऋक्थजातं दद्यात् न स्वयमाददीत इति पारिजातः ॥ (वि. र., ५९५).

7. नियोगार्थिन्या नास्ति रिक्थग्राहित्वमिति स्पष्टयति । उक्तगुणा पत्नी पितृभ्रातृसद्भावेऽपि स्वयमेव पतिधनं समग्रं गृह्णाति, पत्युश्च श्राद्धादि करोति ॥ (अपरार्कः, ७४२).

बृहस्पतिः [व्यव. २६, ९२-९५, ९७-९८, १०५]

आम्नाये स्मृतितन्त्रे च लोकाचारे[1] च सूरिभिः ।
शरीरार्धं स्मृता जाया[2] पुण्यापुण्यफले समा ॥

यस्य नोपरता भार्या देहार्धं तस्य जीवति ।
जीवत्यर्धशरीरेऽर्थं कथमन्यः समाप्नुयात् ॥

सकुल्यैर्विद्यमानैस्तु[3] पितृभ्रातृसनाभिभिः ।
असुतस्य प्रमीतस्य [4]पत्नी तद्भागहारिणी ॥

[5]पूर्वप्रमीताग्निहोत्रं मृते भर्तरि तद्धनम् ।
विन्देत् पतिव्रता नारी धर्म एष सनातनः ॥

जङ्गमं स्थावरं हैमं [6]कुप्यधान्यरसाम्बरम् ।
आदाय दापयेच्छ्राद्धं मासषाण्मासिकादिकम् ॥

पितृव्यगुरुदौहित्रान् [7]भर्तुः स्वस्रीयमातुलान् ।
पूजयेत्कव्यपूर्ताभ्यां [8]वृद्धान्धानतिथीन् स्त्रियः ॥

[9]तत्सपिण्डा बान्धवाश्च येऽन्ये स्युः परिपन्थिनः ।
[10]हिंस्युर्धनानि तान् राजा चौरदण्डेन [11]शासयेत् ॥

1. 'लोकाचारे' लोकाचारानुमते अर्थशास्त्रे-स्मृ. चं.
2. 'भार्या-अपरार्क, ७४० ; जाया-वि. र. ५९५.
3. विद्यमानस्तु-अपरार्क, ७४० ; कुल्येषु विद्यमानेषु पितृभ्रातृसनाभिषु-अपरार्कः
4. 'नारी' पत्नी-स्मृ. चं.
5. पूर्वे प्रमीत-अपरार्क, ७४०
6. रूप्यधान्य-B. J. S. B. (b) अपरार्क, ७४१ ; हेम रूप्यं धान्यं रथाम्बरम्-वि. र., ५९६.
7. स्वसृभर्त्रीयमातुलान्-अपरार्क, ७४१
8. वृद्धानाथातिथीन्-अपरार्क, ७४१
9. सपिण्डा बान्धवा ये तु तस्याः स्युः (बालंभट्टीयम्)
10. हन्युः-द, B. J.
11. घातयेत्-(बालंभट्टीयम्)

अथ नारदः [१६, ५०]

पुत्राभावे तु दुहिता तुल्यसन्तानदर्शनात्[1] ।
पुत्रश्च दुहिता चोभौ पितुः सन्तानकारकौ ॥[2]

[3]तथा (?) । [मनुः, ९, १३०]

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा ।
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् ॥

बृहस्पतिः [व्यव., २६, १३२]

[4]सदृशी सदृशेनूढा साध्वी शुश्रूषणे रता ।
कृताकृता वाऽपुत्रस्य पितुर्धनहरी तु सा ॥

'कृता' पुत्रिकात्वेन स्थापिता ।

तथा [व्यव., २६, १३५]

[5]भार्यासुतविहीनस्य तनयस्य मृतस्य च ।
माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञया ॥

1. कारणात्–मु. ना. स्मृ.

2. पुत्रग्रहणं पत्न्या अप्युपलक्षणम् (मदनरत्ने, १५४) पत्न्यामसत्यां पितुस्समानवर्णा दुहितरोऽपुत्रधनस्वामिन्यः (अपरार्कः, ७४३ .

3. मनु–नारदौ इति दायभागे, १७५ ; 'नारद' इति अपरार्कः (७४३) ; मनु–नारदाविति व्यवहारनिर्णये (४५७) । मुद्रित ना. स्मृ. न दृष्टम् ।

4. 'सदृशी' सवर्णा । 'कृताऽकृता' पुत्रिका इत्यर्थः । अत्र च 'कृताकृता वा' इत्यनेन पुत्रिका दृष्टान्ततयोपादीयते, न पुनस्तस्या अपुत्रधनग्राहित्वं विधीयते । न हि पुत्रिकापिताऽपुत्र इति शक्यते वक्तुम् , पुत्रिकायाः पुत्रत्वात् । (अपरार्कः, ७४४)

5. पारिजातमते मातृपदं पितुरप्युपलक्षणम् । 'तदनुज्ञया' मातापित्रोरनुज्ञया (स्मृतिसारः, धर्मकोशे, १५१८) ; 'तदनुज्ञया' मातुरनुज्ञया । (वि. र., ५९७). पितुरभावे माता, मातानुमतो वा भ्राता (अपरार्कः, ७४५)

मनुः [९, २१७]

अनपत्यस्य पुत्रस्य माता दायादमाप्नुयात् ।
मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम् ॥

गौतमः [२७, २८,]

असंसृष्टिविभागः । प्रेतानां ज्येष्ठस्य ॥[1]

मनुः [९, १८५-१८७]

पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा ।
त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्तते ॥

चतुर्थः संप्रदातैषां पञ्चमो नोपपद्यते ।
अत ऊर्ध्वं सकुल्यः स्यादाचार्यः शिष्य एव वा ॥[2]

पैठीनसिः

अपुत्रस्य स्वर्यातस्य भ्रातृगामि द्रव्यम् । तदभावे मातापितरौ लभेताम् । पत्नी वाऽज्येष्ठा[3] सगोत्रशिष्यसब्रह्मचारिणः ॥

यत्त 'अपुत्रधनं पत्न्याभिगामि' इत्यादि [4]विष्णुवचनेन (१७, ४) भ्रातृसद्भावेऽप्यपुत्रधनस्य पत्न्यभिगामित्वं प्रतिपादितम्, तत् 'अपुत्रा

1. एतदपि पत्नी-माता-पित्रसत्त्वे बोद्धव्यम् । (वि. र., ५९८) । द्वैमातृकाणां समानजातीयानां असमानजातीयानां अभिन्नमातृकाणां च यो भागः स स्वस्ववर्गज्येष्ठस्यैव भवति ॥ (मस्करी)·

2. 'अपुत्रस्य' मुख्यामुख्यपुत्रशून्यस्य । 'अनन्तरः' सन्निहितः (वि. र., ५९८).

3. 'ज्येष्ठा' इति अपरार्कपाठः (७४४) ; 'अज्येष्ठा' इति वि. र., ५९७ ; शङ्खलिखितपैठीनसिवचनं इति अपरार्केनोद्धृतम् । 'तत् पितृधनानुपघातेन आर्जितविभक्तधनेषु भ्रातृषु द्रष्टव्यम् । एतादृशभ्रात्रभावे पितरौ ज्येष्ठा वा पत्नी ॥ (अपरार्क, ७४४).

4. विष्णुवचनेन भ्रातृसंभवेऽप्यपुत्रस्य पत्नीगामित्वं तत् 'अपुत्रा'—ख.

शयनं भर्तुः' इत्यादि वृद्धमनुवाक्यपर्यालोचनया भर्तृशयनपरिपालन-श्राद्धकरणादिगुणोपेता या पत्नी तद्विषयम् । या चैवंविधा न भवति तस्यां विद्यमानायामपि भ्रातृगाम्येव तद्धनम् ।[1] यच्च—

भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात् ।
रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितरासु तत् ॥

इति भरणमात्रं शङ्खेनोक्तम् । तद्वैधव्यव्रतरहिताऽव्यभिचारिणीमात्र-विषयम् । यश्च याज्ञवल्क्येन (२, १३५) 'पितरौ भ्रातरस्तथा' इति भ्रातृसद्भावे पित्रोरेवाधिकार उक्तः, सः पितृपितामहाद्युपार्जितधनविषयः । यच्च पितृद्रव्याविरोधेनोपार्जितं तत्पित्रोः सद्भावेऽपि भ्रातॄणामेव ॥[2]

देवलः

ततो दायमपुत्रस्य विभजेरन् सहोदराः ।
कुल्या[3] दुहितरो वापि ध्रियमाणः पिताऽपि वा ॥

सवर्णा भ्रातरो माता भार्या [4]चेति यथाक्रमम् ।
तेषामभावे गृह्णीयुः कुल्यानां सहवासिनः ॥[5]

1, 2. Reproduced by वि. र., ५९९.

3. 'तुल्याः' [सोदर्याः], वि. र., ५९९

4. 'चेति' इति वि. र. पाठः

5. 'ध्रियमाणः' विद्यमानः, सस्पृह इति शेषः (स्मृ. च.) । अत्र हलायुधेन 'यथाक्रमं' यथा याज्ञवल्क्यादिक्रममिति विरोधमाशङ्क्य परिहृतम्—अत्रेदं शास्त्रतत्त्वमिति उपक्रम्य लिखितं च 'पत्नीमारभ्य श्रोत्रियपर्यन्तस्य अपुत्रब्राह्मणधने राजपर्यन्तस्य अपुत्राब्राह्मणधनेऽधिकारित्वम् । एतद्दर्शनाच्च शङ्खलिखितवचनेऽपि व्यवहितकल्पना कार्या' इति, देवलवचने अलब्धक्रमे याज्ञवल्क्य-विष्णूक्तः क्रमः अन्वेतीति देवलवचनलिखनानन्तरं याज्ञवल्क्य-विष्णुवचने लिखितवतः कल्पतरुकारस्याभिप्रेतम् । वस्तुतस्तु पैठीनसिवाक्ये 'अपुत्रस्य [प्रमीतस्य] भ्रातृगामि द्रव्यं' इति पितृपितामहार्जितधनेतरधने, तदभावे मातापितरा' वित्यपि । अन्यत्र खण्डे क्रमदर्शनमेवेति न विरोधः (वि. र., ६००)

याज्ञवल्क्यः [२, १३५-१३६]

> पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ।
> तत्सुतो गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः ॥
>
> एषामभावे पूर्वस्य धनभागुत्तरोत्तरः ।
> स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः[1] ॥

विष्णुः [१९, ४-१३]

अपुत्रस्य धनं पत्न्यभिगामि । तदभावे दुहितृगामि । तदभावे मातृगामि[2] । तदभावे पितृगामि । तदभावे भ्रातृगामि । तदभावे भ्रातृपुत्रगामि । तदभावे बन्धुगामि[3] । तदभावे सकुल्यगामि । तदभावे सहाध्यायिगामि । तदभावे ब्राह्मणधनवर्जं राजगामि ॥

दुहितृदौहित्रानन्तरं — बृहस्पतिः [व्यव., २६,]

> तदभावे भ्रातरस्तु भ्रातृपुत्राः सनाभयः ।
> सकुल्या बान्धवाः शिष्याः श्रोत्रियाश्च धनार्हकाः ॥
>
> मृतोऽनपत्योऽभार्यश्चेदभ्रातृपितृमातृकः ।
> सर्वे सपिण्डास्तद्दायं विभजेरन् यथांशतः ॥

1. 'अपुत्रस्य' अविद्यमानमुख्यगौणपुत्रस्य । 'स्वर्यातस्य' मृतस्य । केनचित् [विश्वरूपेण] 'दुहितरश्च पुत्रिका एव', पृ. २४१] दुहितृशब्देन पुत्रिकोच्यते इति । तन्निरस्तं वेदितव्यम् । माता च पिता च 'पितरौ' ॥ (अपरार्कः, ७४२-७४४). अपुत्रत्वमत्र पौत्रप्रणप्तृशून्यत्वमपि विवक्षितमिति प्रकाशकारेण द्योतितम् । युक्तं चैतद् व्यावहारिकत्वात् ॥ (वि. र., ६००). पत्नी अत्र गृहीतगर्भाऽभिप्रेता (विश्वरूपः, २५२)

2. Sūtra supplied by B. J. and वि. र.

3. Omitted by Bikaner manuscript. बन्धुरत्र सपिण्डः । सगोत्र इति मिश्राः (?) । वि. र., ६०१:

समुत्पन्नाद्धनादर्धं तदर्धं स्थापयेत्पृथक् ।
माससाण्मासिकश्राद्धे वार्षिकं च प्रयत्नतः ॥

बहवो ज्ञातयो यत्र सकुल्या बान्धवास्तथा ।
यो ह्यासन्नतरस्तेषां सोऽनपत्यधनं हरेत् ॥

बौधायनः [१, ११, १५-१२]

प्रपितामहः पितामहः पिता स्वयं सोदर्या भ्रातरः सवर्णायाः [1]पुत्र-पौत्राः प्रपौत्रास्तानविभक्तदायादान् सपिण्डानाचक्षते । विभक्तादायादानपि सकुल्यानाचक्षते । असत्स्वङ्गजेषु तद्गामी ह्यर्थो भवति । सपिण्डाभावे सकुल्यः । तदभावे[2] पिताऽऽचार्योऽन्तेवासी ऋत्विग्वा हरेत् । तदभावे राजा[3] ॥

नारदः [१६, ५१-५२]

अभावे दुहितॄणां च सकुल्या बान्धवास्तथा ।
ततः सजात्याः सर्वेषामभावे राजगामि तत् ॥

अन्यत्र ब्राह्मणात् किं तु राजा धर्मपरायणः ।
तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः ॥

देवलः

सर्वत्र दायकं राजा हरेद्ब्रह्मस्ववर्जितम् ।
अदायकं तु ब्रह्मस्वं श्रोत्रियेभ्यः प्रदापयेत् ॥

1. 'पुत्रः पौत्रः प्रपौत्रस्तत्पुत्रस्तत्पुत्रवर्जं तेषां च पुत्रपौत्रमविभक्तदायं सपिण्डानाचक्षते' इति मुद्रितबौधायानीये (पृ. ५६) 'पुत्रः पौत्रः प्रपौत्र एतानाविभक्तदायादान् सपिण्डानाचक्षते' इति विवादरत्नाकरे (६०२).

2. तदभावेऽप्याचार्यो–मूलमातृकाः, वि. र., च.

3. 'अङ्गजेषु' औरसादिषु (वि. र.)

बौधायनः [१, ११, १४]

ब्रह्मस्वं पुत्रपौत्रघ्नं हन्यादेकाकिनं विषम्[1] ।
[2][न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ॥]

तस्माद्राजा ब्राह्मणस्वं नाददीत कथंचन ।
[3]परमं ह्येतद्विषं यद्ब्राह्मणस्वमिति ॥

बृहस्पतिः [व्यव., २६, ११९]

येऽपुत्राः क्षत्रविट्शूद्राः पत्नीभ्रातृविवर्जिताः ।
तेषां धनं हरेद्राजा सर्वस्याधिपतिर्हि यः ॥

शङ्खलिखितौ

परिषद्गामि[4] वा श्रोत्रियद्रव्यं न राजगामि । न हार्यं राज्ञा देवब्राह्मणसंस्थितम् । न निक्षेपोपनिधिक्रमागतम् । न बालस्त्रीधनानि । एवं ह्याह—

न हार्यं स्त्रीधनं राज्ञा तथा बालधनानि च ।
नार्याः [5]षडागमं वित्तं बालानां पैतृकं धनम् ॥

मनुः [८, २७]

बालदायागतं[6] रिक्थं तावद्राजा तु पालयेत् ।
यावत्स स्यात्समावृत्तो यावद्वाऽतीतशैशवः ॥

1. हरेत्–Some manuscripts ; विषं–उ, स, त्रि.

2. Omitted by the manuscripts and वि. र., १०३ ; supplied by the printed '*Baudhāyana*'

3. This is wrongly printed as a comment by वि. र., १०३.

4. परिषद्ब्राह्मणाः । क्रमागतं पितृपरंपरयाऽऽगतम् । (वि. र., १०४)

5. अध्यग्न्यादिषडागमलब्धम् । (वि. र., १०४)

6. बालदायादिकं इति मेधातिथिपाठः

विष्णुः [३, ६५]

बालानाथस्त्रीधनानि च[1] राजा परिपालयेत् ॥

शङ्खलिखितौ

रक्षेद्राजा बालानां धनान्यप्राप्तव्यवहाराणां श्रोत्रियवीरपत्नीनाम् । प्रहीणस्वामिकानि राजगामीनि भवन्ति ॥

पुत्राधिकारे बौधायनः [२, ३, ३७]

तेषामप्राप्तव्यवहाराणामंशान्[2] सोपचयान् सुगुप्तान् निदध्यादाव्यवहारप्रापणात् ॥

कात्यायनः [८४५, अ.]

प्रोषितस्य च यो भागो रक्षेयुः सर्व एव तम् ।
बालपुत्रे मृते रिक्थं[3] रक्ष्यं तत्स्वं[4] तु बन्धुभिः ॥

पोगण्डाः परतस्तं तु विभजेरन् यथांशतः ।

'बालपुत्रे' बालः पुत्रः यस्य तस्मिन् । 'पोगण्डो'ऽतिबालः व्यवहारानभिज्ञः ॥[5]

विष्णुः [१५, ४०]

[6]यश्चार्थहरः स पिण्डदायी ॥

स्मृतिः

यो धनमाददीत स तस्मै श्राद्धं[7] कुर्यात् । पिण्डं च त्रिपुरुषं दद्यात् ॥ इति

1. 'च' वि. रत्नाकरे नास्ति [६०४].
2. अंशोपचयान् सुनिगुप्तान्–स
3. रक्ष्यमृक्थं–उ.
4. तत्तन्तु–वि. र., ६०५
5. Reproduced by वि. र. ६०५.
6. 'यश्चांशहरः' इति वि. र. पाठः
7. अत्र श्राद्धशब्देन प्रोषितैकोद्दिष्टाम्युच्यन्ते इति प्रकाशकारः । (वि. र., ६०५)

[1]वृद्धशातातपो बृहस्पतिश्च [व्यव., २६, १३९]

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ।
सह पिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः ॥

[2]वसिष्ठः [विष्णुस्मृति, १५, ३१]

पुत्रः पितृवित्तालाभेऽपि पिण्डं दद्यात् ॥

अथ विष्णुः [१७, १५]

वानप्रस्थधनमाचार्यो गृह्णीयाच्छिष्यो वा ॥

याज्ञवल्क्यः [२, १३७]

वानप्रस्थयतिब्रह्मचारिणामृक्थभागिनः ।
क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः ॥[3]

## अथ संसृष्टिविभागः[4]

तत्र मनुः [९, २१०-२१२]

[5]विभक्ताः सह जीवन्तो विभजेरन्पुनर्यदि ।
समस्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते ॥[6]

येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः ।
म्रियेतान्यतरो वाऽपि तस्य भागो न लुप्यते ॥

1. वि. र., ६०६ and स्मृतिसार, १३८, १४४ ascribe this to बृहस्पति, A. S. B. to वृद्धशातातप and B. J., S. B. (b) and Bik. Ms. to वृद्ध.

2. विष्णुः-ज, द. ; not found in *Vasiṣṭhasmṛti*. Ascribed to Vasiṣṭha by वि. र., ६०६.

3. 'ब्रह्मचारी' नैष्ठिकोऽभिप्रेतः । एकाचार्यसंबद्धो 'धर्मभ्राता' । एकाश्रमसंबद्ध 'एकतीर्थी' (विश्वरूपः) ॥ 'क्रमेण' प्रतिलोमक्रमेण (वि. र., ६०६)

4. अथ संसृष्टधनविभागः-द

5. विष्णुस्मृति, १८, ४१.

6. समस्तत्र इति-सवर्णभ्रातृसंसर्गाभिप्रायेण, ब्राह्मणक्षत्रिययोस्तु संसर्गे, पूर्वकृतस भागानुसारेण भागव्यवस्था बोद्धव्या । (दायभागः, २१२)

सोदर्या विभजेरंस्तं समेत्य सहिताः समम् ।
भ्रातरो ये च संसृष्टा [1]भगिन्यश्च सनाभयः ॥

बृहस्पतिः, [व्यव., २६, १०६]

संसृष्टौ यौ पुनः प्रीत्या तौ परस्परभागिनौ ॥

तथा [व्यव., २६, १०६-८ ; ११२]

विभक्ता भ्रातरो ये च संप्रीत्यैकत्र संस्थिताः ।
पुनर्विभागकरणे [2]ज्यैष्ठ्यं तेषां न विद्यते ॥

यदा कश्चित्प्रमीयेत प्रव्रजेद्वा कथञ्चन ।
न लुप्यते तस्य भागः सोदरस्य विधीयते ॥

या तस्य भगिनी सा तु ततोऽंशं लब्धुमर्हति ।
अनपत्यस्य धर्मोऽयमभार्या[3]पितृकस्य च ॥

संसृष्टानां तु यः कश्चिद्विद्याशौर्यादिनाऽधिकम् ।
प्राप्नोति तस्य दातव्यो द्व्यंशः शेषाः समांशिनः ॥

नारदः [१६, २४][4]

संसृष्टानां तु यो भागस्तेषामेव स इष्यते ।
[5]अतोऽन्यथांशभाजस्तु निर्बीजेष्वितरानियात् ॥[6]

1. 'भगिन्यश्च सनाभयः' सोदर्या अप्रत्ताः ता हि सनाभिव्यपदेश्याः । प्रत्ताः पुनः पतिगोत्रभावमनुभवन्तीति न भ्रातॄणां सनाभयः ( मेधातिथिः )

2. तेषां ज्यैष्ठ्यं न विद्यते–ज.

3. भार्या–वि. र., ६०८ ; बालंभट्टीय, ७१२.

4. 'नारदः' इति ज, द, B. J., A. S. B.

5. Lacunae in other manuscripts supplied by **ज, द, B. J.** and A. S. B.

'अनपत्योऽशभाग्योऽपि निर्बीजेष्वितरानियात्' इति मुद्रित ना. स्मृ.

6. प्रकाशकारस्तु 'अतोऽन्यथा' पुत्रवत्त्वेऽपि त एवांशभाजः 'निर्बीजेषु' सन्तानरहितेषु भ्रातृभाग 'इयाद्' गच्छेदित्याह । पारिजाते तु 'अतोऽन्यथा अनंशभाज' इति पठितं तत्तु बहुग्रन्थविसंवादात् त्यक्तम् । (वि. र., ६०८) ॥

'अतोऽन्यथा' संसृष्टिनामभावे । 'निर्बीजेषु' सन्तानरहितेषु । 'इतरान्' अंशहरान् । 'इयात्' गच्छेत् ॥

शङ्खः

भ्रातॄणामप्रजाः प्रेयात्कश्चित् चेत्प्रव्रजेत[1] वा ।
विभजेरन् धनं तस्य शेषास्तु स्त्रीधनं विना ॥

भरणं चास्य कुर्वीरन् स्त्रीणामाजीवितक्षयात् ।
रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितरासु तत् ॥

या तस्य दुहिता तस्याः पित्रंशो भरणे मतः ।
आसंस्काराद्धरेद्भागं परतो बिभृयात् पतिः ॥[2]

'इतरासु' शय्यामरक्षन्तीषु । 'आसंस्कारात्' विवाहमभिव्याप्य तावन्तं भागं हरेद्यावता विवाहस्य निष्पत्तिरित्यर्थः ।[3]

याज्ञवल्क्यः [२, १३८]

संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ।
दद्याच्चापहरेच्चांशं जातस्य च मृतस्य च ॥[4]

1. प्रम्रियेत इति वि. र. पाठः

2. स्त्रियोऽत्र वैधव्यव्रतादिरहिताव्यभिचारिण्यः । अभार्यापितृकस्य च इत्यत्र भार्याशब्दो वैधव्यव्रतादिसहिताव्यभिचारिणीपरः । पारिजाते तु स्त्रियोऽत्र सवर्णा इत्युक्तम् । तेन तन्मते भार्याशब्दः पूर्वसवर्णभार्यापर इति लक्ष्यते ॥ (वि. र., ६०९)

3. Cited by वि. र.

4. विभक्तः सन् निमित्तान्तरात् यः पित्रा भ्रात्रा वा सह अर्थं संसृज्य वसति, स 'संसृष्टी' तत्र यद्येवं सह वसतां पितापुत्राणां पितुः पुत्रो जायेत तस्य अयमंशो देयः । मृतस्य च हर्तव्यः । 'सोदरस्य च सोदर' इत्येतत्तु मातृतो विभागपक्षे द्रष्टव्यम् । निर्धने च पितरि विभक्तजविषयम् ॥ (विश्वरूपः) मृतस्य [संसृष्टिनः] धनं संसृष्टयेव भ्राता हरेत् । भ्राताऽपि सोदर एव न पुनरन्योदर्यः संसृष्ट्यपि । संसृष्टिनस्तु 'जातस्य' तन्मरणोत्तरकालमुत्पन्नस्य पुत्रस्य तद्भागं, तत्पुत्राय जीवन्संसृष्टो दद्यात् । (अपरार्कः, ७४७)

अनन्तरं याज्ञवल्क्यः [२, २३९]

अन्योदर्यस्तु संसृष्टी नान्योदर्यधनं हरेत् ।
असंसृष्ट्यपि वाऽऽदद्यात् संसृष्टो नान्यमातृजः ॥[1]

'संसृष्टो'ऽत्र एकोदरसम्बद्धः सोदरोऽभिप्रेतः ।

कात्यायनः [९३२]

संसृष्टानां तु संसृष्टा पृथक्स्थानां पृथक्स्थिताः ।
अभावेऽर्थहरा ज्ञेया निर्बीजान्योन्यभागिनः ॥

'अभावे' स्त्रीपुत्रादीनामर्थहराणामभावे ।[2]

बृहस्पतिः [व्यव., २६, ११३]

विभक्तो यः पुनः पित्रा भ्रात्रा वैकत्र संस्थितः ।
पितृव्येनाथवा प्रीत्या स तु संसृष्ट उच्यते ॥[3]

1. यदा पुनरन्योदर्यः संसृष्टी न सोदरश्चेत् तदा कोऽशहर इत्यपेक्षायामाह–'असंसृष्ट्यपि चाऽऽदद्यात्सोदर्यो नान्यमातृजः' इति। सोदर्यो यद्यपि असंसृष्टी तथाऽपि स एवाऽऽददीत न पुनरन्योदर्यः संसृष्ट्यपि। अन्योदर्यस्य संसृष्टित्वं विशेषणं 'असंसृष्ट्यपि' इति शब्दादवगम्यते। तेनायमर्थः सिद्धः—यदि सोदरत्वं संसर्गित्वं च विद्यते तदा स एव तादृशस्यांशं हरति। यदा पुनः संसृष्टित्वं अन्योदर्यस्य तदा सोदरत्वमेवांशहरत्वे निमित्तं नेतरत् इति ॥ (अपरार्कः, ७४८). वि. र. 'नान्योदर्यो धनं' इति पठति व्याख्याति च (६१०)–'नान्योदर्यो धनं हरेदसंसृष्टी' इति श्लोकच्छेदः। संसृष्ट्यपि धनमाददीत ; असंसृष्टस्यापि धनग्रहणे सोदरत्वमपि हेतुरुक्तः अनेन। यस्तु कल्पतरौ 'नान्योदर्यधनं हरेत्' इति पाठः तत्रापि स एवार्थः ॥ (वि. र., ६१०). 'स पाठः लिपिप्रमाद' इति चण्डेश्वरमतम् (वि. र. ६१० *foot note*).

2. 'अभावे' भार्याद्यभावे। निर्बीजान्योन्यभागिनः इति द्वन्द्वसमासः। (वि. र., ६११)

3. प्रकाशे तु वचनबलेन नियम एवेत्युक्तम्। (वि. र., ६११)

## अथ विभागनिश्चयः

तत्र नारदः [१६, ३६-४०]

विभागधर्मसन्देहे दायादानां विनिर्णयः ।
ज्ञातिभिर्भागलेख्येन[1] पृथक्कार्यप्रवर्तनात् ॥

भ्रातॄणामविभक्तानामेको धर्मः प्रवर्तते ।
विभागे सति धर्मोऽपि[2] भवेत्तेषां पृथक् पृथक् ॥

दानग्रहणपश्वन्नगृहक्षेत्रपरिग्रहाः ।
विभक्तानां पृथग्ज्ञेयाः पाकधर्मागमव्ययाः[3] ॥

साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च ।
विभक्ता भ्रातरः कुर्युर्नाऽविभक्ताः परस्परम् ॥

येषामेताः क्रिया लोके प्रवर्तन्ते स्वरिक्थतः[4] ।
विभक्तानवगच्छेयुर्लेख्यमप्यन्तरेण तान्[5] ॥

याज्ञवल्क्यः [२, १४९]

विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः ।
विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः ॥

1. लेख्यैश्च–मु. ना. स्मृ.

2. धर्मो हि–मु. ना. स्मृ., वि. र., ६२२ f. n.; धर्मोऽयं–वि. र., ६२२.

3. 'पृथक्कार्यप्रदर्शनात्' पृथगायव्ययादिकार्यप्रवृत्तिदर्शनात् । 'धर्मो' वैश्वदेवादि-क्रियाकलापः । 'आगमो' अर्थप्राप्तिः । 'व्ययः' त्यागः । (वि. र., ६१२)

4. रिक्थिनाम्–मु. ना. स्मृ. ; वि. र., ६२२ f. n.

5. Here the Udaipur manuscript ends and is followed by this terminal colophon: इति भट्टहृदयधरात्मजमहासांधिविग्रहिकभट्टश्री-लक्ष्मीधरविरचिते कृत्यकल्पतरौ व्यवहारकाण्डे [?] व्यवहारकाण्डं समाप्तम् ॥

तथा [२, ५२]

भ्रातॄणामथ दम्पत्योः[1] पितुः पुत्रस्य चैव हि ।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम् ॥

'यौतकैः' पृथग्भूतैः ।

बृहस्पतिः [व्यव., २६, १४७]

पृथगायव्ययधनाः [2]कुसीदश्च परस्परम् ।
वणिक्पथं च ये[3] कुर्युर्विभक्तास्ते[4] न संशयः ॥

## अथ विभक्तकृत्यम्

तत्र नारदः

यद्येकजाता बहवः पृथग्धर्माः पृथक्क्रियाः ।
[5]पृथक्कर्मगुणोपेता न चेत्कार्येषु[6] सम्मताः ॥

1, दंपतिवचनमत्र विभागासम्भवादन्येषामपि रिक्थभाजामविभक्तानां साक्ष्याद्यभाव-प्रदर्शनार्थम् ॥ (विश्वरूपः) ॥ अत्र अविभक्तग्रहणं भ्रातृविषयं, पितापुत्रविषयं वा, न जायापति-विषयम् । न हि तयोर्धनविभागोऽस्ति, पतिधने हि जाया स्वामिनी जायात्वादेव । अतो दंपत्योः साधारणं धनमशक्यं विभक्तुम् । अत एव आपस्तम्बः—"जायापत्योर्न विभागो विद्यते पाणिग्रहणाद्धि सहत्वं कर्मसु । तथा पुण्यफलेषु द्रव्यपरिग्रहेषु च" इति [आप. ध. सू., २, १४, १६-१९] । (अपरार्कः, ६५४-६५५) ॥ पूर्तेषु जायापत्योः पृथगेवाधिकारः संपद्यते । येषु पुण्यकर्मसु सहाधिकारः तेषां फलेषु सहत्वमिति बोद्धव्यं, न पुनः पूर्तानां भर्त्रनुज्ञयानुष्ठितानां फलेष्वपि । द्रव्यस्वामित्वं पत्न्या दर्शितं न पुनर्विभागाभावः । यस्मात् 'द्रव्यपरिग्रहेषु' इत्युक्त्वा [आपस्तम्बेन ; २, १४, २०] तत्र कारणमुक्तम्—"भर्तुर्विप्रवासे नैमित्तिके दाने [अतिथिभोजनभिक्षाप्रदानादौ यस्मात् न] स्तेयमुपदिशन्ति मन्वादयः तस्माद्भार्याया अपि द्रव्यस्वामित्वमस्ति अन्यथा स्तेयं स्यादिति' । तस्मात् भर्तुरिच्छया भार्ययापि द्रव्यविभागो भवत्येव न स्वेच्छया । यथा वक्ष्यति—'यदि कुर्यात्समानंशान्पत्न्यः कार्याः समांशिकाः' [याज्ञ., २, ११५]—इति (विज्ञानेश्वरः)

2. कुसीदमपरस्परम्-स, बि.

3. ते-स, ज, द.

4. विभक्ता ये-स.

5. पृथक्कार्य-स.

6. न चेत् कृत्येषु—वि. र. ; (६१४)

स्वभागान्यदि दद्युस्ते विक्रीणीयुरथापि वा ।
कुर्युर्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य वै[1] ॥

बृहस्पतिः [व्यव., २६]

येनांशो यादृशो भुक्तस्तस्य[2] तन्न विचालयेत् ॥

तथा [व्यव., २६]

स्वेच्छाकृतविभागो यः पुनरेव विसंवदेत् ।
स [3]राज्ञांशे स्वके स्थाप्यः शासनीयोऽनुबन्धकृत् ॥

[4]तथा [व्यव., २६,]

विभक्ता ह्यविभक्ता वा दायादा स्थावरे समाः ।
एको ह्यनीशः सर्वत्र दानाधमनविक्रये[5] ॥

इति महाराजाधिराजश्रीगोविन्दचन्द्रदेवमहासान्धिविग्रहिकेण
भट्टश्रीहृदयधरात्मजेन भट्टश्रीलक्ष्मीधरेण विरचिते
कृत्यकल्पतरौ व्यवहारकाण्डे दायविभागः ॥



1. च-स, B. J.
2. ततः-वि.
3. राज्ञा स्वे स्वके-स, B. J.
4. 'धारेश्वरे बृहस्पतिः'-वि, स ; 'धारेश्वरे' not found in A. S. B. and
5. 'आधमनं' आधीकरणम् (स्मृ. च.)

## ७५

# अथ द्यूतसमाह्वयम्

तत्र नारदः [ना. स्मृ., १९, १; ना. म. सं., १८, १]

[1]अक्षवध्रशलाकाद्यैर्देवनं जिह्मकारितम् ।
पणक्रीडावयोभिश्च पदं द्यूतसमाह्वयम् ॥

मनुः [९, २२९]

अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते ।
प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः ॥

[2]काकिन्यो वध्रिकाश्चैव शलाकाः [3]सीसमेव च ।
अक्षाः सबीजाः [4]कुहका द्यूतोपकरणानि षट् ॥

बृहस्पतिः [व्यव., २८, १]

अन्योन्यं परिगृहीताः [5]पक्षिमेषमृगादयः ।
प्रहरन्ते कृतपणास्तं [6]वदन्ति समाह्वयम् ॥

1. अक्षभ्रम–मिता., स्मृ. चं.; अक्षबन्ध–वि. र., स्मृ. चि.; अक्षवध्र–अप.; 'अक्षाः' पाशकाः, 'वध्रः' चर्मादिवलयवेधः–अपरार्कः; 'भ्रमं' चर्ममयपट्टिका–स्मृ चं.।

2. A. S. B., interpolates this śloka, which is not found in the printed मनुस्मृति but is cited by अपरार्क, २, १९९.

3. मोर्य for सीस–अप.

4. कुहकाः–ज; शदकाः–A. S. B.; शलकाः–A. S. B. (a).

5. पक्षिमेषवृषादयः–वि.

6. विदन्ति–वि.

**मनुः** [९, २२१--२२२, २२४, २२७, २२८]

द्यूतं समाह्वयं चैव राजा [1]राष्ट्राद्विवासयेत् ।
राष्ट्रान्तकरणावेतौ द्वौ दोषौ पृथिवीक्षिताम् ॥

प्रकाशमेतत्तास्कर्यं[2] यद्देवनसमाह्वयौ[3] ।
तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान् भवेत् ॥

[4]द्यूतं समाह्वयं चैव [5]यः कुर्याद्यश्च कारयेत् ।
[6]तान् सर्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ॥

द्यूतमेतत्पुराकल्पे दृष्टं [7]वैरकरं महत्[8] ।
तस्माद् द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥

प्रच्छन्नं वा प्रकाशं वा [9]तन्निषेवेत यो नरः ।
तस्य [10]दण्डविकल्पः[11] स्याद्यथेष्टं नृपतेस्तथा ॥

**कात्यायनः**

द्यूतं नैव तु सेवेत क्रोधलोभविवर्धनम्[12] ।
असाधुजननं क्रूरं[13] नराणां द्रव्यनाशनम् ॥

1. राष्ट्रे निवारयेत्-स, वि. ; राष्ट्रान्निवारयेत्-मेधा ;
2. प्रकाशमेतत्तस्कार्यं-ज, द.
3. समाह्वयम्-वि.
4. एतदारभ्य 'कात्यायनः-प्रसह्य दापयेद्दण्डं तस्मिंस्थाने न चान्यथा' इत्येतत्पर्यन्तो भागो 'वि' कोशे नास्ति ।
5. यः कुर्यात्कारयेत वा-मेधा.
6. तत्सर्वान्-B. J.
7. वै विकृतं महत्-वि. र., ६११.
8. 'पुराकल्पे' पूर्वस्मिन् काले 'वैरकरं दृष्टं' नलयुधिष्ठिरादिषु-नन्दपण्डितः ।
9. द्यूतं राष्ट्रे निवारयेत्-विश्व., २, २०६ ;
10. दण्डे विकल्पः-A. S. B.
11. विविधः कल्पो 'विकल्पः'-मेधा ; 'दण्डविकल्पः' दण्डभेदोऽर्थहरणादिलक्षणः-न[न्द]पण्डितः ।
12. प्रवर्धकम्-ज, द.
13. क्षुद्रं-द.

ध्रुवं द्यूतात्कलिर्यस्माद्विषं सर्पमुखादिव ।
तस्माद्राजा निवर्तेत विषये व्यसनं हि तत् ॥

वर्तेत [1]चेत्प्रकाशं तु द्वारावस्थिततोरणम् ।
असंमोहार्थमार्याणां कारयेत्तत्करप्रदम् ॥

बृहस्पतिः [व्यव., २७, १-२]

द्यूतं निषिद्धं मनुना सत्यशौचधनापहम् ।
तत्प्रवर्तितमन्यैश्च[2] राजभागसमन्वितम् ॥

सभिकाधिष्ठितं कार्यं [3]तस्करज्ञापकं हि तत्[4] ॥

याज्ञवल्क्यः [२, २०३]

द्यूतमेकमुखं कार्यं तस्करज्ञानकारणात् ।
एष एव विधिर्ज्ञेयः [5]प्राणिद्यूतसमाह्वये[6] ॥

बृहस्पतिः [व्यव., २७, ३]

सभिको ग्राहकस्तस्य[7] [8]दद्याज्जेत्रे नृपाय च[9] ।

1. चेत्प्रकाशं तद्द्वारा-स.

2. अभ्यनुज्ञातमन्यैस्तु-स्मृ. चं. ३३१.

3. तस्करज्ञानहेतुना-स्मृ. च. ३३१.

4. अस्यायमर्थः-द्यूतं तावद्राज्ञा सर्वथा निवर्तनीयम् । यदि तु तस्करज्ञापनाय क्रियते तदा उक्तक्रमेणेति-वि. र., ६१२.

5. प्राणिद्यूते समाह्वये-स, B. J., विश्व.

6. 'एकमुखं' एकमार्गे एकस्मिन् प्रदेशे राजकीयचारपुरुषाद्यधिष्ठितं तस्करादि-प्रजाकण्टकपरिज्ञानार्थमधर्मरूपमपि धर्मान्तरोपायतया महतेऽभ्युदयाय संपद्यत इत्यर्थः-विश्वरूपः.

7. ग्राहकस्तत्र-परा. मा.

8. दद्याद्देयं-A. S. B.

9. द्यूतपराजितकितवानां तु बन्धनादिना पणग्राहको भवेत् । पणग्रहणानन्तरमेव स्वत्वं जेत्रे नृपाय च यथाभागं दद्यात्सभिक इत्यर्थः-स्मृ. च., ३३१.

**कात्यायनः**

सभिकः कारयेद्द्यूतं देयं दद्यात्स्वयं नृपे[1] ।
दशकं तु शते[2] वृद्धिं गृह्णीयाच्च [3]पराजयात् ॥

जेतुर्दद्यात्स्वयं द्रव्यं जितं ग्राह्यं [4]त्रिपक्षकम् ।
सद्यो वा सभिकेनैव कितवात्तु[5] न संशयः ॥

**नारदः** [ना. स्मृ., १९, २, ८ ; ना. म. सं., १८, २.]

सभिकः कारयेद्द्यूतं देयं दद्याच्च[6] तत्त्वतः[7] ।
दशकं तु [8]शतं वृद्धिस्ततः स्याद्द्यूतकारिता[9] ॥

अथवा कितवो राज्ञे दत्वा भागं यथोदितम् ।
प्रकाशं देवनं कुर्यादेवं दोषो न विद्यते[10] ॥

**याज्ञवल्क्यः** [२, १९९-२००]

[11]ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम् ।
गृह्णीयाद्धूर्तकितवादितराद्दशकं शतम् ॥

1. दद्यात्तु तन्नृपे-ख. ; दद्यात्तु यन्नृपे A. S. B. ; दद्याच्च यन्नृपे-अप., २, २००.
2. शतं-B. J., अप., २, २००.
3. पराजये-A. S. B., स्मृ. चं.
4. विपक्षकम्-A. S. B., वि. र.
5. कितवात्त तु संशयः-ज. ; कितवाद्धनसंशये-वि. र.,
6. दद्याद्देयं च-ना. म. सं.,
7. तत्कृतम्-ख, ना. स्मृ., ना. म. सं. ; तद्गतम्-अप., २, २००.
8. शताद्-ना. म. सं.
9. स्याद्द्यूतकारिणः-ना. स्मृ. ; द्यूतकारितम्-B. J.

10. सभिको देवयिता । स कारयिता । तन्निमित्तं च देयं राजकुले । जेतुश्च तस्य वृद्धिर्लाभः । शताद् दशकं द्यूतकरणनिमित्ता वृद्धिः अथवा सभिकं विना कितव एव राजभागं दत्वा प्रकटं देवनं कुर्यात् ।—नारदीयभाष्यम्.

11. ग्लहस्सभिकवृद्धिस्तु-विश्व. ; ग्रहे शतिकवृद्धेस्तु-ज ; ग्रहे सभिकवृद्धेस्तु-र.

[1]स सम्यक्पालितो दद्याद्राज्ञे भागं यथाकृतम् ।
जितमुद्ग्राहयेज्जेत्रे दद्यात्सत्यवचाः क्षमी[2] ॥

नारदः [ना. स्मृ., १९, ३ ; ना. म. सं., १८, ३]

द्विरभ्यस्ताः[3] पतन्त्यक्षा ग्लहे[4] यस्याक्षदेविनः ।
जयं तस्यापरस्याहुः कितवस्य पराजयम् ॥

कात्यायनः [९३८]

एकरूपा द्विरूपा वा द्यूते यस्याक्षदेविनः[5] ।
दृश्यते च जयस्तस्य [6]यस्मिन्नक्षा व्यवस्थिताः[7] ॥

गलितं निर्गलितं यत् सभिकहस्तात् पराजितानां देवनार्थे द्रव्यं, यच्च द्यूतोपकरणमक्षादि, तद् 'गलत्सभिकं' द्रव्यम्, तदर्था वृद्धिः 'गलत्सभिकवृद्धिः'—विश्वरूपः । परस्परसंप्रतिपत्त्या कितवपरिकल्पितः पणो 'ग्लह' इत्युच्यते । तत्र ग्लहे तदाश्रया 'शतिका' शतपरिमिता तदधिकपरिमाणा वा वृद्धिर्यस्यासौ शतिकवृद्धिः, तस्मात् 'धूर्तकितवात्' 'पञ्चकं शतं आत्मवृत्त्यर्थं सभिको गृह्णीयात्–मिताक्षरा । पञ्चपणाः अधिका यस्मिन् शते तत् 'पञ्चकं शतम्'। 'इतरात्' अपरिपूर्णशतवृद्धेः 'दशकं शतं' 'गृह्णीयात्' इति मिताक्षरा । हलायुधस्तु शतिका शतपरिमाणा यस्य वृद्धिः स शतिकवृद्धिः येन शतमेकं जितमिति यावत् तस्मात् पञ्चकं शतं सभिको गृह्णीयात् । 'इतरात्' 'दशकं शतं' येन शतमेकं पराजितं तस्माद्दशकं शतं गृह्णीयादित्यर्थः–वि. र. ६१३.

1. यः सम्यक्पालितो–B. J.

2. 'यथाकृतं' यथापरिभाषितं यथा वा स्मृत्यन्तरे निरूपितमित्यर्थः । किं च जितं यत् कितवैः तत् पराजितेभ्यः सभिक उद्ग्राहयेत् । –विश्वरूपः । सभिको धूर्तकितवो राज्ञा रक्षितो राज्ञे यथा कृतभागं दद्यात् जितं चोद्ग्राहयेत् जेत्रे सत्यवाक् क्षमी सन् दद्यात् । सत्यवचा इति इष्टमूलभूतयाज्ञवल्क्यमिताक्षरयोर्दृष्टम् । तत्र जितं सत्यवचाश्च जेत्रे दद्यादित्यर्थः इति फलतो न विशेषः–वि. र., ६१३.

3. कूटाभ्यस्ताः–ज.

4. ग्रहे–A. S. B., द ; गेहे–ना. म. सं.

5. यथाक्षदेविनः–ना. स्मृ.

6. यस्मिन् रक्षा व्यवस्थिता–वि. र., ६१४.

7. Lacunae in B. J.; Supplied by A. S. B. and वि. र., p. 614.

<u>बृहस्पतिः</u> [व्यव., २८, २]

[1]द्वन्द्वयुद्धे तु यः[2] कश्चिदवसादमवाप्नुयात् ।
तत्स्वामिना पणो देयो यस्तत्र परिकल्पितः ॥

<u>नारदः</u> [ना. स्मृ., १९, ५; ना. म. सं., १८, ५]

अशुद्धः कितवो नान्यदाश्रयेद्द्यूतमण्डलम् ।
प्रतिहन्यान्न कितवं दापयन्तं [3]स्वमिष्टतः ॥

<u>याज्ञवल्क्यः</u> [२, २०१]

[4]प्राप्ते नृपतिभागे तु प्रसिद्धे द्यूतमण्डले[5] ।
जितं स सभिके स्थाने दापयेदन्यथा न तु ॥

<u>नारदः</u> [१९, ७]

अनिर्दिष्टस्तु यो राज्ञा द्यूतं कुर्वीत मानवः ।
न स तं प्राप्नुयात्कामं विनयं चैव सोऽर्हति ॥

[6]परिहासकृतं यच्च यच्चाप्यविदितं नृपे ।
तत्रापि नाप्नुयात्काममथवा नाशमाप्नयोः[7] ॥

भक्ष्यभोज्यान्नपानानि स्वल्पान्यन्यानि कानिचित् ।
प्रीत्या तु सकृदाजीवेत् प्रसङ्गं तु विवर्जयेत् ॥

1. वि. र., p. 614—'द्वन्द्वयुद्धे' मल्लमेषादिद्वन्द्वयुद्धे । 'अवसादं' पराजयम् ।

2. द्वन्द्वयुद्धेन यः–स.

3. स्वमिच्छतः–A. S. B., वि. र. ६१४.

4. प्राप्ते नृपतिना भागे–A. S. B.; प्राप्ते भागे च नृपतिः–अप., मिता.

5. वि. र., p. 615 gives an alternative reading–अप्रसिद्धे धूर्तमण्डले which is the one given by A. S. B.; प्रसिद्धे धूर्तमण्डले–विश्व., अप., मिता.

6. The following two verses are not found in the printed नारदस्मृति and नारदमनुसंहिता but cited by वि. र., p. 615 and स्मृ. चं p. 331.

7. स and A. S. B. read अथवा न सकृत्तयोः । वि. र., p. 615 reads 'न स तं प्राप्नुयात्काममथवा नाशमाप्तयोः' and explains अथवेति समुच्चये ।

कात्यायनः

प्रसह्य दापयेद्देयं तस्मिन् स्थाने न चान्यथा ।
जितं वै सभिकस्तत्र सभिकप्रत्ययात् क्रिया ॥

अनभिज्ञो जितो मोच्योऽभिज्ञो वापि जितो रहः ।
[1]सर्वस्वेऽपि जितेऽभिज्ञे न सर्वस्वं प्रदापयेत् ॥

बृहस्पतिः[2] [व्यव., २७, ६]

रहो जितोऽनभिज्ञश्च कूटाक्षैः कपटेन वा ।
मोच्योऽभिज्ञोऽपि सर्वस्वं जितं सर्वं न दाप्यते ॥

नारदः [ना. स्मृ., १९, ६ ; ना. म. सं., १८, ६]

कूटाक्षदेविनः [3]पापान्निर्हरेद्द्यूतमण्डलात् ।
कण्ठेऽक्षमालामासज्य स ह्येषां विनयः स्मृतः ॥

बृहस्पतिः [व्यव., २७, ७]

कूटाक्षदेविनः [4]क्षुद्रा राजभागहराश्च ये ।
[5]गणनावञ्चकाश्चैव दण्ड्यास्ते कितवाः स्मृताः ॥

'गणनावञ्चकाः' गणनायां वञ्चकाः ।

1. सर्वस्वे निर्जितेऽभिज्ञे-A. S. B.; सर्वस्वेऽपि जितेऽभिज्ञे-वि. र., p. 616 सर्वस्वे विजितेऽभिज्ञे-अप., २, २०१.

2. The name बृहस्पति and the following verse are not found in ज.

3. पापान् राजा राष्ट्राद्विवासयेत्-मिता., २, २०२.

4. पापा राजभाग्यहरास्तु ये-स.

5. Borrowed by वि. र., p. 616.

तथा [व्यव., २२, ११]

ग्लहः प्रकाशः कर्तव्यो निर्वास्याः कूटादेविनः ।
'ग्लहः' द्यूते पणः ।

याज्ञवल्क्यः [२, २०२]

राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपधिदेविनः ।

विष्णुः [५, १३४-१३५]

द्यूते कूटाक्षदेविनां करच्छेदः । उपधिदेविनां संदंशच्छेदः ।
[1]'संदंशो'ऽङ्गुष्ठतर्जनीसंयोगः[2] ।

नारदः [१९, ४ ; ना. म. सं., १८, ४]

कितवेष्वेव तिष्ठेरन् कितवाः संशयं प्रति ।
त एव तत्र [3]द्रष्टारस्तत्र चैते तु[4] साक्षिणः ॥

बृहस्पतिः [व्यव., २७, ९]

स एव साक्षी [5]संदिग्धे सभ्यैश्चान्यैस्त्रिभिर्वृतः ।

कात्यायनः

[6]विग्रहे विजये लाभे करणे कूटदेविनाम् ।
प्रमाणं सभिकस्तत्र [7]शुचिश्च सभिको यदि ॥

1. 'उपधिः' छद्म । संदशो-A. S. B.

2. "संदंशोऽङ्गुष्ठतर्जन्यो ।"-वि. र. ६१७ ; संदंशच्छेदश्च तर्जन्यङ्गुष्ठच्छेदः-वि. र., ३०८.

3. दृष्टान्ताः-ज.

4. A. S. B.-तेषां तु साक्षिणः ; वि. र. p. 617 confirms the text. त एवैषां तु-स, बि, A. S. B.

5. संदिग्धो-A. S. B ; संदिग्धे-ज, द ;

6. विग्रहे च जये-A. S. B., स, बि, ज, वि. र., ६१७.

7. शुभश्च-स, A. S. B; शुचिः स्यात्-ज, वि. र., ६१७.

म्लेच्छश्वपाकधूर्तानां कितवानां तपस्विनाम् ।
तत्कृताचारभेत्तॄणां [1]निश्चयो न तु राजनि[2] ॥

<u>बृहस्पतिः</u> [व्यव., २७, ९-११]

उभयोरपि संदिग्धौ[3] कितवास्तु परीक्षकाः ।
यदा विद्वेषिणस्ते तु[4] तदा राजा [5]विचारयेत् ॥

एवं वादिकृतान् वादानवेक्षेत्[6] प्रत्यहं नृपः ।
[7]नृपाश्रयास्तथा चान्ये विद्वद्भिर्ब्राह्मणैः सह ॥

[8]<u>मनुः</u> [८, १७८-१८०]

अनेन विधिना [9]राजा [10]मिथ्या विवदतां नृणाम् ।
साक्षिप्रत्ययसिद्धानि कार्याणि [11]समतां नयेत् ॥

1. निश्चये–B. J.
2. A. S. B., and ज interpolate here as from कात्यायनः

राज्ञा प्रवर्तितान् धर्मान् यो नरो नानुपालयेत् ।
गर्ह्यः स पापो दण्ड्यश्च लोपयन् राजशासनम् ॥

See Kane, St. 670 where राजप्रवर्तितान् is given instead of राज्ञा प्रवर्तितान्. Caṇḍeśvara, who reproduces the whole section of Lakṣmīdhara does not give this s'loka.

3. संदिग्धे–ज ; संदिग्धो–स, वि, वि. र., ६१८ ; संदिग्धे–अप., २, ७०२.
4. विद्वेषिणस्तत्र–स.
5. विधीयते–ज.
6. वादान् प्रपश्येत्–स, वि, B. J., वि. र. ६१८.
7. नृपाश्रयांस्तथा चान्यान्–B. J., स, वि.
8. A. S. B., B. J., and वि omit मनु, but स and वि. र., p. 618 supply the omission.
9. राज्ञा–A. S. B.
10. मिथो–वि. र. ६१८.
11. शमतां–A. S. B., स, ज, वि. र., ६१८.

[1]उदितोऽयं विस्तरेण मिथो विवदमानयोः ।
अष्टादशसु [2]मार्गेषु व्यवहारविनिर्णयः[3] ॥

एवं कार्याणि सर्वाणि कुर्वन् सम्यङ्महीपतिः ।
देशानलब्धान् लिप्सेत[4] लब्धांश्च परिपालयेत् ॥

[5]इति श्रीभट्टलक्ष्मीधरविरचिते कृत्यकल्पतरौ
[6]द्यूतसमाह्वयम्



1. उदितोऽयं विस्तरतो–B. J. ; गदितोऽयं विस्तरशो–ज ; उदितोऽयं विस्तरशो–मेधा. ; उदितो विस्तरेणायं– वि. र., ६१८.

2. धर्मेषु–ज.

3. व्यवहारविनिश्चयः–द ; व्यवहारमुनिर्णयः–ज.

4. 'अलब्धांल्लिप्सेत' इति संतोषपरेण न भवितव्यमित्यर्थः–मेधा.

5. इति श्रीमन्महाराजाधिराज श्रीगोविन्द[7]देवाधिप्रेन महासान्धिविग्रहिकेण भट्टहृदय-धरात्मजेन भट्टश्रीमल्लक्ष्मीधरेण विरचिते कृत्यकल्पतरौ[8] द्यूतसमाह्वानम्–A. S. B., स, म.

6. द्यूतसमाह्वानम्–द.

7. ॰गोविन्दचन्द्रदेवमहासान्धि॰–स, ज.

8. ॰रौ व्यवहारकाण्डे द्यूत॰–स.

७६

## अथ क्रियाभेदः

तत्र बृहस्पतिः [व्यव., १०, ५६-५९]

विवादोऽष्टादशोपेतः पूर्वोत्तरविशेषतः ।
व्याख्यातस्त्वधुना सम्यक् क्रियाभेदान्निबोधत ॥

पूर्वं कृता क्रिया या तु पालनीया तथैव सा ।
अन्यथा क्रियते यत्र क्रियाभेदस्तदा[1] भवेत् ॥

विहाय करणं पूर्वं धनिको वाऽधमर्णिकः ।
[2]कुर्यान्न्यूनाधिकं तुल्यं क्रियाभेदः स उच्यते ॥

द्विकेनार्थं समादाय प्रपन्नः[3] पञ्चकं तु यः ।
लाभं तत्र प्रमाणं स्यात् पश्चिमं [4]तद्धि निश्चितम् ॥

याज्ञवल्क्यः [२, २३]

सर्वेष्वेव विवादेषु बलवत्युत्तरक्रिया ।
आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा ॥

1. स्तया–स, वि.
2. कुर्यान्नूनाधिकं–स.
3. 'प्रपन्नः' स्वीकृतवान्–वि. र., ६२५.
4. तद्विनिश्चितम्–वि. र. ; यद्विनिश्चितम्–स.

[1]नारदः [ना. स्मृ., ४, ९७ ; ना. म. सं., २, ८५]

[2]क्रियार्णादिषु सर्वेषु बलवत्युत्तरोत्तरा ।
प्रतिग्रहाधिक्रीतेषु पूर्वा पूर्वा गरीयसी[3] ॥

बृहस्पतिः [व्यव., १०, ६१-६४]

क्रिया बलवती पूर्वा विक्रयाधिप्रतिग्रहे ।
ऋणादिकेषु कार्येषु पश्चिमा तु गरीयसी[4] ॥

उत्तरोत्तरबन्धेन प्राग्बन्धः शिथिलो भवेत् ।
यः पश्चिमः क्रियाकारः स पूर्वाद्बलवत्तरः ॥

न्यासं कृत्वा[5] ततश्चार्थं गृहीत्वाधिं करोति यः ।
विक्रयं वा क्रिया तत्र पश्चिमा बलवत्तरा ॥

कृतं चेदेकदिवसे विक्रयाधिप्रतिग्रहम् ।
त्रयाणामपि संदेहे कथं तत्र विचारणा ॥

त्रीण्येव हि प्रमाणानि विभजेरन् यथांशतः ।
उभौ चार्थानुरूपेण [6]विभागेन प्रतिग्रहः ॥

॥ इति क्रियाभेदः ॥

---

1. चि. र., p. 626 omits these two, while borrowing the rest of the section and explaining the verses.

2. ग्रहणादिषु सर्वेषु बलवत्युत्तरा क्रिया–ना. म. सं.

3. ऋणादिषु व्यवहारपदेषु सर्वेष्वपि या या उत्तरा अन्तिमा क्रिया द्रव्यवृद्धिपरिच्छेद-विषये भवति तया तया पश्चिमा बाध्येत । सा उत्तरोत्तरा प्रमाणम् । प्रतिग्रहे पुनर्येन प्रथमं प्राप्तो लब्धस्तस्य प्रमाणम् । येन पश्चाल्लब्धस्तस्य न प्रमाणम् । आधिरपि यस्य पूर्वाधिस्तस्य प्रमाणम् । पश्चात्कृताधिरप्रमाणम् । क्रीतमपि येन पूर्वं क्रीतं तस्य प्रमाणम् । पश्चात्क्रीतम-प्रमाणम् । एवमेतेषु प्रतिग्रहाधिक्रीतेषु व्यवहारपदेषु पूर्वा क्रिया बलवतीति–असहायः ॥

4. Not traced.

5. दत्त्वा–ख, चि.

6. त्रिभागेण प्रतिग्रही–स्मृ. चं., १४५ ; त्रिभागेण प्रतिग्राही लभ्यत इति शेषः । 'प्रतिग्रहः' इति तु पाठे पूर्ववचनवन्निष्पद्यते इति शेषो ग्राह्यः–स्मृ. चं.

# अथ प्रकीर्णकम्

तत्र बृहस्पतिः [व्यव., २९, १]

[1]एष वादिकृतः प्रोक्तो व्यवहारः समासतः।
नृपाश्रयं प्रवक्ष्यामि व्यवहारं प्रकीर्णकम्[2] ॥

नारदः [२०, १-४ ; ना. म. सं., १९, १-४]

[3]प्रकीर्णकः पुनर्ज्ञेयो व्यवहारो नृपाश्रयः।
राज्ञामाज्ञाप्रतीघातस्तत्कर्मकरणं तथा ॥

[4]पुरप्रधानसंभेदः प्रकृतीनां तथैव च।
पाषण्डिनैगमश्रेणिगणधर्मविपर्ययाः ॥

पितापुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः।
प्रतिग्रहविलोपश्च कोप[5] आश्रमिणामपि ॥

1. B. J. does not cite the name of the author of this śloka. But it is ascibed to बृहस्पतिः by वि. र., p. 621 ; स्मृ. चं., III., p. 771 ; and वी. मि., p. 710. A. S. B. cites the name.

2. वादिकृतः अर्थिप्रत्यर्थिभ्यां राजनि मिथो विसंवादमावेद्य कृतः। स च ऋणादाना-नादिद्यूतान्तविषयो न द्यूतमात्रविषय इति। ...............नृपाश्रयं दुष्टचेष्टोपेताश्रयान्तर-सापेक्षनृपाश्रयम्। एकाश्रयव्यवहाराभावात् प्रकीर्णकं प्रकीर्णकव्यपदेशयोगित्वं, तद्योगश्च विप्रकीर्णानां नृपाश्रयाणामेकत्र सन्निवेशात्-स्मृ. चं., २३१.

3. प्रकीर्णके पुनर्ज्ञेया व्यवहारा नृपाश्रयाः-ना. म. सं.

4. पुरप्रधाने संभेदः-ना. म. सं. ; पुरप्रमाण-स्मृ. च., २३२ ;

5. कोप-ना. स्मृ., ना. म. सं.

वर्णसंकरदोषश्च तद्वृत्तिरहितस्तथा[1] ।
न दृष्टं यच्च पूर्वेषु सर्वं तत्स्यात् प्रकीर्णकम् ॥

[2]कात्यायनः

पूर्वोक्तादुक्तशेषं स्यादधिकारच्युतं[3] च यत् ।
आहृत्य परतन्त्रार्थनिबद्धमसमञ्जसम् ॥

दृष्टान्तत्वेन शास्त्रान्ते पुनरुक्तक्रियास्थितम्[4] ।
अनेन विधिना यत्तु[5] वाक्यं तत् स्यात् प्रकीर्णकम् ॥

राजधर्मान् स्वधर्मांश्च सन्दिग्धानां विशेषणम्[6] ।
[7]प्रागुक्तादुक्तशेषं च [8]सर्वं तत्स्यात् प्रकीर्णकम् ॥

बृहस्पतिः [व्यव., २९, १२-१५]

[9]षड्भागकरणं शुल्कं गर्ते देयं तथैव च ।
संग्रामचौरभेदी च परदाराभिमर्शनम्[10] ॥

1. स and वि. र. p. 622 : तद्वृत्तिनियमस्तथा
2. The verses from कात्यायन are missing in A. S. B.
3. अधिकाराच्च्युतं-स.
4. वि. र., p. 622 पुनरुक्तिक्रियास्थि (न्वि) तम् ।
5. यच्च-वि, वि. र., p. 622.
6. भाषणम्-वि. र.
7. पूर्वोक्तादुक्तशेषं च-वि. र.
8. वक्ष्याम्येतत्प्रकीर्णके-स.
9. A. S. B., प्रत्यक्षं करणं शुल्कं प्रत्यादेयं तथैव च ; वि. र., p. 622 gives two alternative readings :—सद्भागकरशुल्कञ्च गर्त्ते देयं तथैव च and पुत्रभागस्त्वर्थञ्च पितुर्देयं तथैव च.

10. मर्षणम्-स ; मर्षका-वि ; मर्दनम्-A. S. B.

गोब्राह्मणजिघांसा[1] च सस्यव्याघातकृत्तथा ।
[2]एतान् दशापराधांस्तु नृपतिः स्वयमन्विषेत्[3] ॥

निष्कृतीनामकरणमाज्ञासेधव्यतिक्रमः ।
वर्णाश्रमविलोपश्च[4] वर्णसंकरलोपनम् ॥

निधिर्निष्फलवित्तं च दरिद्रस्य धनागमः ।
एतांश्चारैः सुविदितान् स्वयं राजा निवारयेत् ॥

[5]अनाम्नातानि कार्याणि क्रियावादाश्च वादिनाम् ।
प्रकृतीनां प्रकोपश्च संकेतश्च परस्परम् ॥

अशास्त्रविहितं यच्च प्रजायां संप्रवर्तते ।
उपायैः सामभेदाद्यैरेतानि शमयेन्नृपः ॥

वर्णाश्रमव्यवस्थापनम्

याज्ञवल्क्यः [१, ३६१]

कुलानि जातीः श्रेणीश्च गणान् जानपदानपि ।
स्वधर्माच्चलितान् राजा विनीय स्थापयेत् पथि ॥

नारदः [ना. स्मृ., २०, ५-६ ; ना. प्र. सं., १९, ५-६]

राजा त्ववहितः सर्वानाश्रमान् परिपालयेत् ।
उपायैः शास्त्रविहितैश्चतुर्भिः प्रकृतीस्तथा ॥

यो यो वर्णोऽवहीयेत यश्चोद्रेकमनुव्रजेत् ।
तं तं दृष्ट्वा स्वतो मार्गात् प्रच्युतं स्थापयेत् पथि[6] ॥

1. जिघांसी–A. S. B.,
2. एषां–ख, बि.
3. A. S. B.–अन्विायात्; अन्विशेत्–ख.
4. विरोधश्च–बि.
5. A. S. B.–अनाश्रितानि ; वि. र. p. 623 confirms the text.
6. वि. र., p, 624 : 'पथि' स्वमार्गे ।

<u>[1]शङ्खलिखितौ</u>

वर्णाश्रमाणां संस्थानमानुपूर्व्यानुपूर्वशः ।
तेषां हेतुरवस्थाने राजा [2]सुप्रस्थितो यदि ॥

राजमूलमिदं राष्ट्रं ब्रह्मक्षत्रपुरोगमम् ।
स्थिते[3] राजनि तद्धर्मे दुराचारान्न कुर्वते ॥

[4]मनुः [९, २७३ ; ८, ४१० ; ८, ४१८]

यश्चापि धर्मसमयात् प्रच्युतो धर्मजीवनः ।
[5]दण्डेनैव [6]समाप्लोषेत् स्वकाद्धर्माद्धि विच्युतम् ॥

वाणिज्यं कारयेद्वैश्यं कुसीदं कृषिमेव च ।
पशूनां रक्षणं चैव [7]शूद्रं दास्यं द्विजन्मनाम् ॥

वैश्यशूद्रौ प्रयत्नेन स्वानि कर्माणि कारयेत् ।
तौ हि च्युतौ स्वकर्मभ्यः क्षोभयेतामिदं जगत्[8] ॥

यमः

यत्किंचित्कुरुते राजा शुभं वा यदि वाऽशुभम् ।
भृत्यास्तदनुकुर्वन्ति नर्तक्यो नर्तनं यथा ॥

तस्मात् पौराणिकान् धर्मान् निपुणैर्मन्त्रिभिः सह ।
प्रशिष्याद्भूपतिः[9] सम्यग् ब्रह्मक्षत्रविवृद्धये ॥

1. This is included in the quotation from Nārada by वि. र., p. 624, but the verses are not-found in Jolly's *Nāradasmṛti* or *Nāradamanusaṁhita*. A. S. B., (fol 130) scores out नारद and substitutes शङ्खलिखितौ.

2. सुप्रहितो-स.

3. स्थिरे-वि.

4. वि. र., p. 624 inserts here a quotation from देवीपुराण.

5. दण्डेनैव नयेद्वश्याः स्वकाद्धर्माद्धि विच्युतान्-स.

6. तमप्योषेत्-मेधातिथिः.

7. दास्यं शूद्रं-स, मेधा.

8. स्वकर्म व्यतिक्रामन्तः 'क्षोभयेयुः' आकुलीकुर्युर्जगत्, अतस्तान् प्रयत्नेन स्वकर्माणि कारयेत्-मेधातिथिः

9. प्रशिष्यान्नृपतिः-वि. र., ६२५.

गौतमः [८, १-३]

द्वौ लोके धृतव्रतौ राजा ब्राह्मणश्च बहुश्रुतः । तयोश्चतुर्विधस्य [1]मनुष्यजातस्यान्तःसंज्ञानां [2]चलनपतनसर्पिणामायत्तं[3] जीवनम् । प्रसूतिरक्षणमसंकरो धर्मः ॥

वसिष्ठः [१, ४०-४२]

त्रयो वर्णा ब्राह्मणस्य निदेशे वर्तेरन् । ब्राह्मणो धर्मान् प्रब्रूयात् । राजा चानुशिष्यात् ॥

हारीतः

निग्रहानुग्रहपालनेषु [4]सर्वेषामुन्मर्यादिनां मर्यादाभेदिनां परदारपरद्रव्यापहारिणां राजा शास्ता भवत्येवेत्याह ।

गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम् ।
अन्तःप्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥

गुरुभिर्ये न शास्यन्ते राज्ञा वा गूढकिल्बिषाः ।
ते नरा यमदण्डेन शस्ता यान्त्यधमां गतिम्[5] ॥

आपस्तम्बः [२, १०, १३-१६ ; २, ११, १]

[6]शास्त्रैरधिगतानामिन्द्रियदौर्बल्याद्विपन्नानां शास्ता निर्वेशमुपदिशेद्यथाकर्म[7] यथोक्तम् । तस्य चेच्छास्त्रमतिवर्तेरन् राजानं [8]गमयेत् ।

1. मनुष्यस्य चलनपतन–वि. र., ६२५.

2. वि. र. p., 625–gives an alternative reading: चलनपतनसर्पणानामायत्तं.

3. सर्पणानामायत्तं वि.

4. प्रभुः सर्वेषामुन्मार्गगामिनां परदारद्रव्याप०–स.

5. वि. र. p., 226 reproduces these four lines as prose.

6. शास्त्रमभिगतानां–स.

7. यथाकर्म–स.

8. गमयेत्–A. S. B., वि. र.

[1]राजा पुरोहितं धर्मार्थकुशलम् । स ब्राह्मणान् नियुञ्ज्यात् । बलविशेषेण परदास्यवर्जं[2] नियमैरुपशोधयेत् । इतरेषां वर्णानामाप्राणवियोगात् समवेक्ष्य तेषां कर्माणि राजा दण्डं प्रणयेत् ॥

[3]उशना

मोहात् प्रमादात् संहर्षात्प्रीत्या चोक्तं मयेति यः ।
नाऽहमेवं पुनर्वक्ष्ये दण्डार्धं तस्य कल्पयेत् ॥

वाक्पारुष्यविषयमेतत् ।

गौतमः [१२, ४८-४९]

पुरुषशक्त्यपराधानुबन्धविज्ञानाद्दण्डनियोगः । अनुज्ञानं वा वेदवित्समवायवचनात् ॥

वसिष्ठः [१९, ६]

दण्डस्तु देशकालकर्मवर्णवयोविद्यास्थानविशेषैर्हिंसाक्रोशयोः कल्प्यः, [4]आगमाद्दृष्टान्ताच्च ॥

'राज्ञा' इत्यनुवृत्तौ—

शङ्खः

दण्डो[5] यथासारापकारं च[6] वयोविद्यावर्णलक्षणगुणानुगः ।

1. राजपुरोहितं-A. S. B. वि. र.

2. वधदास्यवर्जं-मस्करिहरदत्तौ.

3. This verse and its comment are missing in B. J., and स and are supplied by A. S. B; वि. र also misses the quotation here, showing that an incomplete text was used by Caṇḍeśvara. But he quotes this verse under कात्यायनोशनसौ on page 246.

4. A. S. B., and वि-आगमात् । दृष्टान्तो राज्ञ इत्यनुवृत्तौ शङ्खः; आगमात् दृष्टान्ताच्च राज्ञेत्यनुवृत्तौ शङ्खः-स.

5. दण्डे-स.

6. च वयोविद्या-स.

दण्डसृष्ट्यनन्तरं मनु[1]: [७, १६]

तं देशकालौ शक्तिं च विद्यां चावेक्ष्य तत्त्वतः ।
यथार्हतः संप्रणयेन्नरेष्वन्यायवर्तिषु ॥

याज्ञवल्क्यः [१, ३६८]

ज्ञात्वापराधं देशं च कालं बलमथापि वा ।
वयः कर्म च वित्तं च दण्डं दण्ड्येषु पातयेत्[2] ॥

विष्णुः [५, १९०]

आगःसु च तथान्येषु [3]ज्ञात्वा जातिं धनं वयः ।
दण्डं प्रकल्पयेद्राजा संमन्त्र्य ब्राह्मणैः सह ॥

[4]पुनर्विष्णुः [३, ९१-९४]

अपराधानुरूपं च दण्डं दण्ड्येषु पातयेत् । [5]सम्यग्दण्डप्रणयनं कुर्यात् । [6]द्वितीयेऽपराधे न स कस्यचित् क्षमेत । स्वधर्ममपालयन् नादण्ड्यो नामास्ति राज्ञः ॥

मनुः [८, ३३५]

पिताचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः ।
नादण्ड्यो नाम राज्ञोऽस्ति [7]यः स्वधर्मे न तिष्ठति ॥

1. A. S. B. reads भृगुः.

2. यथैवापराधं ज्ञात्वा तदपेक्षया दण्डप्रकल्पनं तथैव च देशकालाद्यपेक्षयापीत्यभिप्रायः—विश्वरूपः.

3. ज्ञात्वा जातिं धनं व्ययम्-स.

4. B. J. corrupt as also printed text, p. 16 ; corrected by A. S. B. The printed text makes a different reading and sense. स्वधर्ममपालयतो ना दण्ड्यो नामास्ति राज्ञः ।

5. सम्यक् च-स.

6. द्वितीयमपराधं-वि. स्मृ.

7. यः स्वधर्मेण तिष्ठति-स.

[1]याज्ञवल्क्यः

ऋत्विक्पुरोहितामात्यपुत्रसंबन्धिबान्धवाः ।
धर्माद्विचलिता दण्ड्या निवास्या राजहिंसकाः ॥

[2]शङ्खलिखितौ

अदण्ड्यौ मातापितरौ स्नातकपुरोहितौ परिव्राजकवानप्रस्थौ जन्मकर्मश्रुतशीलशौचाचारवन्तश्च[3] । [4]एते हि धर्मप्रतिकरा राज्ञः । स्त्रीबालवृद्धास्तपस्विनस्तेभ्यः क्रोधं नियच्छेत् ।

कात्यायनः

आचार्यस्य पितुर्मातुर्बान्धवानां तथैव च ।
एतेषामपराधे [5]तु दण्डो नैव विधीयते ॥

बृहस्पतिः [व्यव., ९, १७ ; ११]

गुरून्पुरोहितान् पूज्यान् [6]वाग्दण्डेनैव दण्डयेत् ।
[7]विवादिनो नरांश्चान्यान् दोषिणोऽर्थेन दण्डयेत्[8] ॥

महापराधयुक्तांश्च वधदण्डेन [9]शासयेत् ।

1. Not traced in printed editions of याज्ञवल्क्यस्मृति; attributed to बृहस्पति by स्मृ. चं., १२९.

2. शङ्खः–बि.

3. च–Omitted by बि.

4. ते for एते–स.

5. अपराधेन–स.

6. वाग्दण्डेनेह–स, बि.

7. This half-verse is omitted by स.

8. धिग्धनाभ्यां च दण्डयेत्–स्मृ. च., १२९.

9. शातयेत्–स.

काात्यायनः

मित्रादिषु प्रयुञ्जीत वाग्दण्डं धिक् तपस्विनि[1] ।
यथोक्तं तस्य तत्कुर्यादनुक्तं साधुकल्पितम् ॥

बृहस्पतिः [व्यव., २९, २ ; ९, १२-१३]

वाग्धिग्दण्डं वधं चैव चतुर्धा कल्पितं दमम् ।
पुरुषं दोषविभवं ज्ञात्वा संपरिकल्पयेत् ॥

स्वल्पेऽपराधे वाग्दण्डं धिग्दण्डं पूर्वसाहसे ।
[3]मध्ये तु रोधनं दण्डं राजद्रोहेषु बन्धनम् ॥

[4]निर्वासनं [5]विरोधेऽपि कार्यमात्महितैषिणा ।
[6]योज्याः समस्ताश्चैकस्य महापातककारिणः ॥

मनुः [८, १२३]

वाग्दण्डं प्रथमं कुर्याद्धिग्दण्डं तदनन्तरम् ।
तृतीयं धनदण्डं तु वधदण्डमतः परम्[7] ॥

तथा [८, १३०]

[8]वधेनापि यदा त्वेनं निग्रहीतुं न शक्नुयात् ।
तदैषु सर्वमप्येतत् प्रयुञ्जीत चतुष्टयम् ॥

[9]'वधेनापि' ताडनेनापीत्यर्थः ।

1. A. S. B.-तपस्विनम् ; तपस्विनाम्-स, बि.
2. ज्ञात्वा च परिकल्पयेत्-स.
3. मध्योत्तमे धनदण्डे राजद्रोहे च-बि. ; मध्योत्तमेषु दण्डश्च राजद्रोहे च बन्धनम्-स.
4. निर्वासनं वापि कार्यं राजामातृहितैषिणा- स.
5. वधो वापि-A. S. B. बि.
6. योज्यं समस्तं नैकस्य-स.
7. मनन्तरम्-स ; ततः परम्-बि.
8. धनेनापि यदा त्वेतान् निग्रहीतुं-स.
9. धनेनापि ताडनेनापि इत्यर्थः-स.

[1]बृहस्पतिः [१, ९१ ; २९, ६, ९]

[2]वाग्दण्डश्चैव धिग्दण्डो विप्रायत्तावुभौ स्मृतौ ।
अर्थदण्डवधावुक्तौ [3]राजायत्तावुभावपि ॥

मनुः [८, ३१० ; ९, २८८ ; ८, १२४ ; ८, १२५]

अधार्मिकं त्रिभिर्न्यायैर्[4]निगृह्णीत प्रयत्नतः ।
निरोधनेन बन्धेन विविधेन वधेन च ॥

बन्धनानि च सर्वाणि [5]राजमार्गे विनिवेशयेत् ।
दुःखिता यत्र दृश्येरन् विकृताः पापकारिणः ॥

दशस्थानानि दण्डस्य मनुः स्वायंभुवोऽब्रवीत् ।
त्रिषु वर्णेषु यानि स्यू रक्षतो ब्राह्मणो व्रजेत् ॥

उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम् ।
चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च ॥

बृहस्पतिः [व्यव., २९, ४-५]

हस्ताङ्घ्रिलिङ्गनयनं जिह्वा कर्णौ च नासिका ।
ग्रीवा पादार्धसंदंशललाटौष्ठगुदं कटिः ॥

स्थानान्येतानि दण्डस्य निर्दिष्टानि चतुर्दश ।
ललाटाङ्को ब्राह्मणस्य नान्यो दण्डो विधीयते ॥

[6]यमः

सर्वेषामेव वर्णानामन्योन्यस्यापराधिनाम् ।
शारीरं धनसंयुक्तं [7]दण्डं धर्म्यं प्रकल्पयेत् ॥

1. बृहस्पतिः–Supplied by स.
2. वाग्दण्डो धिग्दमश्चैव–स.
3. राजा दद्यादुभावपि–स.
4. निगृह्णीयात्–स.
5. राजमार्गे निवेशयेत्–स, बि.
6. यमः–Supplied by स.
7. धर्म्यं दण्डं–स.

जगत्सर्वमिदं हन्याद्ब्राह्मणस्य [1]न तत्समम् ।
तस्मात् तस्य वधं राजा मनसापि न चिन्तयेत् ॥

अवध्यान् ब्राह्मणानाहुः सर्वपापेष्ववस्थितान् ।
यद्यद्विप्रेषु कुशलं [2]न तद्राजा समाचरेत् ॥

हारीतः

न त्वङ्गभेदं विप्रस्य प्रवदन्ति मनीषिणः ॥
तपसा [3]चेज्यया चैव ब्राह्मणः पूयते सदा ॥

मनुः [८, ३८०-३८१]

न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितम् ।
राष्ट्रादेनं बहिः कुर्यात्समग्रधनमक्षतम् ॥

न ब्राह्मणवधाद्भूयानधर्मो भुवि [4]विद्यते ।
तस्मादस्य वधं राजा मनसापि न चिन्तयेत् ॥

गौतमः [८, ४-१२,]

स एव बहुश्रुतो भवति । लोकवेदवेदाङ्गवित् । वाकोवाक्येतिहासपुराणकुशलः । तदपेक्षस्तद्वृत्तिः । चत्वारिंशता संस्कारैः संस्कृतः । त्रिषु कर्मस्वभिरतः । षट्सु वा । सामयाचारिकेष्वभिविनीतः । षड्भिः परिहार्यो राज्ञा अवध्यश्चाबन्ध्यश्चादण्ड्यश्चाबहिष्कार्यश्चापरिवाद्यश्चापरिहार्यश्चेति ॥

'त्रिषु' [5]दानाध्ययनयागेषु । 'षट्सु' [6][अनु]प्रवचनयाजनप्रतिग्रहाध्ययनादिषु ।

1. ब्राह्मणे च न—स.
2. तत्तद्राजा—स.
3. चेज्यया—स ; चेष्टया—त्रि. र.
4. वर्तते—स.
5. अध्ययनेज्यादानेषु—स. त्रि.
6. A. S. B. omits अनु ; आप्र—स ; षट्सु प्रव—त्रि.

वसिष्ठः [१, ४५-४६]

ब्राह्मणो वेदमाढ्यं करोति। ब्राह्मण आपदुद्धरति। तस्माद्ब्राह्मणोऽनाद्यः सोमो राजा भवतीति ह प्रेत्य चाभ्युदयिकमितीह विज्ञायते ॥

शङ्खलिखितौ

सर्वत्र त्रयाणां वर्णानां धनहारकारावधबन्धाः क्रियासु चोपरोधो[1] महत्स्वपि पातकेषु विवासोऽङ्ककरणं ब्राह्मणस्य प्रायश्चित्तानि वा शोधनम्। [2]अपीड्यो हि ब्राह्मणः ॥

बृहस्पतिः [व्यव., ९, १०]

महापातकयुक्तोऽपि न विप्रो वधमर्हति।
निर्वासनाङ्कने मौण्ड्यं तस्य कुर्यान्नराधिपः ॥

मनुः [९, २३५-२४२]

ब्रह्महा च सुरापश्च तस्करो गुरुतल्पगः।
एते सर्वे पृथग्ज्ञेया महापातकिनो नराः ॥

चतुर्णामपि चैतेषां प्रायश्चित्तमकुर्वताम्।
शारीरं धनसंयुक्तं [3]धर्म्यं दण्डं प्रकल्पयेत् ॥

गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः।
स्तेये तु श्वपदं कार्यं [4]ब्रह्महण्यशिराः पुमान् ॥

[5]असंभोज्या असंयाज्या असंपाठ्याविवाहिनः।
चरेयुः पृथिवीं दीनाः सर्वधर्मबहिष्कृताः ॥

1. वधबन्धक्रियासूपयोगो-स.
2. अपीति ब्राह्मणः-स.
3. दण्ड्यं धर्म्यं-स.
4. ब्रह्महत्याशिरः-स.
5. असंभाष्या-स.

ज्ञातिसंबन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः ।
निर्दया निर्नमस्कारास्तन्मनोरनुशासनम् ॥

प्रायश्चित्तं तु कुर्वाणाः पूर्वे वर्णा यथोदितम् ।
नाङ्क्या राज्ञा ललाटेषु दाप्यास्तूत्तमसाहसम् ॥

आगःसु ब्राह्मणस्यैष[1] कार्यो मध्यमसाहसः ।
विवास्यो वा भवेद्राष्ट्रात् सद्रव्यः सपरिच्छदः ॥

इतरे कृतवन्तस्तु[2] [3]पापान्येतानि धर्मतः ।
[4]सर्वस्वहानिमर्हन्ति कामतस्तु प्रवासनम् ॥

'तस्करो' अत्र सुवर्णचोरः[5] ।

बौधायनः [१, १८, १८]

ब्राह्मणस्य भ्रूणहत्यागुरुतल्पगमनस्वर्णस्तेयसुरापानेषु कबन्धभगश्वपदध्वजांस्तप्तेनायसा ललाटेऽङ्कयित्वा विषयान्निर्वासनम् ।[6]

नारदः [ना. स्मृ., २१, ४३-४५ ; ना. म. सं., १९, १०१-१०३]

ब्राह्मणस्यापराधेषु चतुर्ष्वङ्को विधीयते ।
गुरुतल्पे सुरापाने स्तेये ब्राह्मणहिंसने ॥

1. ब्राह्मणस्येषु-ब.

2. उते कृतवन्तु पाता–Thus ends the Bikaner Ms (बि). Paper, folio 262, 27 lines in a page, 20 to 22 letters in a line. Modern Transcript. Corrupt. Copied from Ms no 2368 of the Anup Sanskrit library, Bikaner on 24-11-41. Begins अथ व्यवहारनिरूपणम् । तत्र मनुः etc.

3. पापान्येतान्यकामतः ब.

4. सर्वस्वहार–ब.

5. चोरः–ब.

6. So B. J. and A. S. B; printed text presents the following variants: ब्रह्महत्या for भ्रूणहत्या, कुसिन्ध for कबन्ध, सृगाल for श्वपद, and निर्धमनम् for निर्वासनम् ।

गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः ।
स्तेये तु श्वपदं कृत्वा [1]शिखिपित्तेन पूरयेत् ॥
[2]अशिराः पुरुषः कार्यो ललाटे [3]द्विजघातिनः ।
असंभाष्यस्तु[4] कर्तव्यस्तन्मनोरनुशासनम् ॥

यमः

ब्राह्मणस्यापराधेषु चतुर्थेवं विधीयते ।
शिरसो मुण्डनं दण्डं पुरान्निर्वासनं तथा ॥
प्रख्यापनार्थं पापस्य प्रयाणं गर्दभेन तु ।
ललाटे चाङ्ककरणं कुर्याद्राजा यथाविधि ॥

आपस्तम्बः [२, २७, १८-२१]

नियमातिक्रमिणमन्यं[5] वा रहसि बन्धयेत् । आसमापत्तेः । असमापत्तौ नाश्यः । आचार्य ऋत्विक् स्नातको राजेति त्राणं स्युरन्यत्र वध्यात् ।

'नियमातिक्रमिणं' विहितस्याकर्तारम् । 'अन्यम्' निषिद्धकारिणं ब्राह्मणम् । 'रहसि' रहस्यस्थाने 'बन्धयेद्' । 'आसमापत्तेः' यावन्न करिष्यामीति प्रतिपत्तिं कुर्यात् । अन्यथा 'नाश्यो' निरास्यः । आचार्यादयो [6]दण्ड्यानां 'त्राणं स्युः' त्रातारो भवेयुः, न कदाचिदौदासीन्यं भजेयुः ॥

[7] यमः

स्तेनाः सुरापा ब्रह्मघ्ना गुरुदाराभिगामिनः ।
[8]न सन्ति यस्य राष्ट्रेषु स राजा शक्रलोकभाक् ॥

1. शिखिनं तेन पूरयेत् A. S. B.
2. विशिराः स.
3. द्विजघातकः-स ; ब्रह्मघातिनः-ना. स्मृ., ना. मं. सं.
4. श्च-स.
5. B. J.. interpolates here ब्राह्मणं, which the printed text discountenances. A. S. B. omits ब्राह्मणम्.
6. दण्ड्यानां जनानां-स.
7. Name omitted by A. S. B.; supplied by स and **वि. र., १२५.**
8. न यस्य सन्ति-स.

मनुः [९, २४३-२४७]

नाददीत नृपः साधुर्महापातकिनो धनम् ।
आददानस्तु तल्लोभात्तेनाधर्मेण लिप्यते ॥

अप्सु [1]प्रवेश्य तद्दण्डं वरुणायोपपादयेत् ।
[2]श्रुतिविद्योपसंपन्ने ब्राह्मणे प्रतिपादयेत् ॥

ईशो दण्डस्य वरुणो राज्ञो [3]दण्डधरो हि सः ।
ईशः सर्वस्य जगतो ब्राह्मणो वेदपारगः ॥

यत्र वर्जयते राजा पापकृद्भ्यो धनागमम् ।
तत्र कालेन जायन्ते मानवा दीर्घजीविनः ॥

निष्पद्यन्ते च सस्यानि यथोक्तानि विशांपते ।
बालाश्च न प्रमीयन्ते [4]विकृतं न च जायते ॥

यमः

पतितस्य धनं हृत्वा राजा पर्षदि दापयेत् ।
[5]सर्वस्वं च हरेद्राजा चतुर्थं चावशेषयेत् ॥

भृत्येभ्योऽन्नं स्मरन् धर्मं प्राजापत्यमिति श्रुतिः[6] ॥



1. प्रविश्य ते दण्ड–स.
2. श्रुतिवृत्तोपपन्ने वा–स
3. दण्डधनो–वि. र., ६३८.
4. विकृतिश्च–स.
5. Line omitted by A. S. B.
6. इति श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ व्यवहारकाण्डे वर्णाश्रमव्यवस्थापनम्–B. J.; A. S. B. and स–इति महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेवमहासान्धिविग्रहिकेण भट्टहृदयधरात्मजभट्टश्रीमल्लक्ष्मीधरेण विरचिते कृत्यकल्पतरौ वर्णाश्रमव्यवस्थापनम् ॥

## ७८

# अथ तरशुल्कः

[1]तत्र वसिष्ठः [१८, १७-२२]

संयाने [2]दशवाहवाहिनी द्विगुणकारिणी स्यात् । दशपुरुषवती प्रत्येकं प्रपाः स्युः[3] । पुंसां चावरार्धवाहं वहेत् । अध्यर्धाः स्त्रियः स्युस्तरोऽष्टौ माषाः शरमध्याया अशरमध्यायाः पादः कार्षापणस्य । निरुदकस्तरो माष्यः[4] ॥

[5]संयाति समेत्यानेनेति 'संयानः' नदीपरः । तत्र वाहिनी नौः । [6]वाहयन्तीति 'वाहाः' । दश पुरुषाः यत्र सा तथा 'दशपुरुषवती' वाहकादन्येऽपि दशपुरुषा यस्यामारूढाः । 'प्रपाः स्युः' एवं[7] दशपुरुषाः प्रतिवाहकं प्रकर्षेण[8] पालयितारः स्युः । पुंसामेव 'अवरार्धं वाहं वहेत्' सा नौः यावन्तं भारं वहति तदपेक्षया 'अवरार्धं' अवरं न्यूनमर्धं यस्मिन् वाहे तं भारं पुरुषैः पूरयेत् । 'अध्यर्धाः स्त्रियः स्युः' पुरुषापेक्षया अध्यर्धाः स्त्रियः, तासामतिभीरुत्वात् । [9]'तरः' शुल्कः 'माषः,' कार्षापणविंशतितमो भागः । 'शरमध्यायाः' [10]यस्यां नद्यां धनुष्मता क्षिप्तशरो मध्ये पतति

1. B. J. omits this sentence.

2. दशवाहिनी-ख.

3. A. S. B.-प्रदेयास्स्युः ।

4. Printed text of वसिष्ठः (ed. Führer) reads: संयाने दशवाहवाहिनी द्विगुणकारिणी स्यात् । प्रत्येकं प्रपाः स्युः । पुंसां शतावरार्ध्यं चाहवाहयेत् । अध्यर्धाः स्त्रियः स्युः । कराष्टौला माषः शरमध्यायः पादः कार्षापणाः स्युः । निरुदकस्तरो मोष्यः ।

5. Passage corrupt: virtually reproduced by *Vivāda-ratnākara*, p. 639.

6. दश वाहा वाहयन्तीति वाहाः-ख.

7. स एव-ख.

8. प्रयत्नेन-ख.

9. करः-ख;

10. यस्यां नद्यां शरो मध्ये पतितः स्यादित्यर्थः-ख.

तस्याः इत्यर्थः । 'अशरमध्यायाः पादः' न मध्यं यस्यां शरेण लक्ष्यते [यां शरो लङ्घयतीत्यर्थः ।] 'पादः' चतुर्थांशः 'कार्षापणस्य' । 'निरुदकः' अल्पोदकः । 'माष्यः' माषः शुल्को यत्र दीयते ॥[1]

मनुः [८, ४०४-४०७]

पणं [2]याने तरं दद्यात् पौरुषेऽर्धपणं तरम् ।
पादं पशुश्च योषिच्च पादार्धं रिक्तकः पुमान् ॥

भाण्डपूर्णानि यानानि तार्यं दाप्यानि सारतः ।
रिक्तभाण्डानि यत्किंचित् पुमांसश्चापरिच्छदाः[3] ॥

दीर्घाध्वनि यथादेशं यथाकालं तरो भवेत् ।
नदीतीरेषु तद्विद्यात् समुद्रे नास्ति लक्षणम् ॥

गर्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः ।
ब्राह्मणा लिङ्गिनश्चैव नादाप्यास्तारिकं तरे ॥

1. B. J. corrupt; copyist has added to the difficulties by senseless punctuation. A. S. B. followed in the text. वि. र. p. 639, reproduces the passage thus :

'संयात्यनेनेति' संयानशब्दो नदीपरः । तत्र वाहिनी नौः । वाहयन्ती वाहाः, ते दश यस्यां सा दशवाहाः । सा चासौ वाहिनी चेति दशवाहवाहिनी । द्विगुणकरणा द्विगुणादीनि चरित्रादीनि यस्याः सा नौस्तथा, एकविधा नौः कार्या । तथा दशपुरुषवती वाहकादन्ये दशपुरुषाः । तेषां प्रयोजनमाह । त एव प्रपाः स्युः । अस्यां नावि यावान् भार आरोप्यस्तमाह पुंसां इत्यादिना । सा नौः यावन्तं भारं वहति तदपेक्षया अवरार्धं अवरं न्यूनमर्धं यस्मिन् वाहे स वाहो भारः । तेन यावतः पुरुषानसौ परमविधुरा वहति तावन्न तु समधिकमारोप्यमित्यर्थः । 'अध्यर्धाः स्त्रियः' पुरुषापेक्षया तासामतिभीरुत्वात् । 'तरः' शुल्कः 'माषः' पुराणस्य विंशतितमो भागः । 'शरमध्यायाः' यस्यां नद्यां धनुष्मता क्षिप्तशरो मध्ये पतति तस्याः । 'अशरमध्यायाः' यां शरो लङ्घयति तस्याः । 'पादः' कार्षापणस्य चतुर्भागः । 'निरुदको' अल्पोदकः । 'माष्यः' माषपरिमाणः ।

2. याने तरे-ख, मेधा.

3. 'यान'मत्र रिक्तं रथादि । 'पौरुषः' पुरुषवाह्यो भारः । 'पादार्धं' पणस्याष्टमो भागः । 'सारतो' द्रव्योत्कर्षापकर्षापेक्षया । 'यत्किंचित्' अल्पम् । वि. र. ६४०.

वसिष्ठः [१८, २३-२५]

अकरः श्रोत्रियो राजा पुमाननाथः प्रव्रजितो बालवृद्धतरुणप्रजाताः प्राग्गामिकाः कुमार्यो मृतपत्न्यश्च । बाहुभ्यां तरन् शतगुणं दाप्यः ॥

'पुमाननाथः' स्वजनरहितो रोगार्तो वा । 'तरुणप्रजाताः' अचिरप्रसूताः । 'प्राग्गामिकाः' [सततगमनशीलाः] लेखहारकादयः । 'मृतपत्न्यो' विधवाः ॥[1]

विष्णुः [५, १३१]

तरिकश्च स्थलशुल्कं गृह्णन् दशपणान् दण्ड्यः । ब्रह्मचारिवानप्रस्थभिक्षुगुर्विणीतीर्थानुसारिणां [2]नाविकः शौल्किकः शुल्कमाददानश्च । तच्च तेषां जह्यात् ॥

'आददानश्च'[3] दण्ड्य इत्यनुषङ्गः[4] ।

मनुः [८, ४०८-४०९]

यन्नावि किंचिद्दाशानां विशीर्येतापराधतः ।
तद्दाशैरेव दातव्यं समागम्य [5]स्वतोऽंशतः ॥

एष नौयायिनामुक्तो व्यवहारविनिर्णयः ।
दाशापराधतस्तोये दैविके नास्ति निग्रहः[6] ॥

1. Comment reproduced in वि. र. p. 640-1. Passage in [ ] from A. S. B.

2. नाविकः शौल्किकः omitted by A S. B.

3. श्चेद्दण्ड्यः-ख.

4. वि. र. p. 641 :—तरिकः तररूपशुल्कनियुक्तः । आददानश्च दाप्य इत्यनुषङ्गः । तच्च तरशुल्कं तेषां ब्रह्मचार्यादीनां जह्यात् त्यजेत् ॥

5. स्वकोशतः-ख.

6. वि. र. p. 641 adds this comment : दाशा नौवाहननियुक्ताः कैवर्तादयः । "कैवर्ते दाशधीवरौ" इत्यमरः । The whole section is reproduced by वि. र.

# अथ निधिः

तत्र मनुः [८, ३५-३६]

ममायमिति यो ब्रूयान्निधिं सत्येन [1]हेतुना ।
तस्याददीत षड्भागं राजा द्वादशमेव च ॥

अनृतं तु वदन् दण्ड्यः[2] स्ववित्तस्यांशमष्टमम् ।
तस्यैव वा निधानस्य संख्ययाल्पीयसीं कलाम्[3] ॥

विष्णुः [३, ६३-६४]

स्वनिहिताद्राज्ञे ब्राह्मणवर्जं द्वादशमंशं दद्युः । परनिहितं स्वनिहितमिति [4]वदन्तस्तत्समं दण्डमावहेयुः[5] ॥

नारदः [ना. स्मृ., १०, ८; ना. म. सं., ८, ८]

स्वमप्यर्थं तथा नष्टं लब्ध्वा राज्ञे निवेदयेत् ।
गृह्णीयात्तु ततः शुद्धमशुद्धं[6] स्यात्ततोऽन्यथा ॥

## अथ परनिहितम्

तत्र वसिष्ठः [३, १४-१५]

अप्रज्ञायमानं वित्तं योऽधिगच्छेत राजा [7]तदुद्धरेदधिगन्त्रे षष्ठमंशं प्रदाय । ब्राह्मणश्चेदधिगच्छेत् षट्कर्मसु वर्तमानो मा[8] राजा हरेत् ॥

'अप्रज्ञायमानं' [9]अज्ञायमानस्वामिकम् अस्वामिकं च ॥

1. मानवः-सिता.
2. दण्ड्यः-ख, A. S. B.
3. वि. र., p. 642 explains—निधिरत्र पूर्वनिखातचिरभ्रष्टं धनम् । षड्भागद्वादशभागयोर्ममायमिति वक्तुर्गुणवत्ताऽगुणवत्ताभ्यां विकल्पः । अल्पीयसीं कलां यावत्या नावसीदति, अल्पीयस्त्वकलाग्रहणं च सर्वस्वापरिज्ञानपक्षे ॥
4. ब्रुवन्तः-ख ; ब्रुवन्-मु. वि. स्मृ.
5. दण्डमावहेत्-मु. वि. स्मृ.
6. वि. र., p. 642 : अशुद्धं स्तेयशङ्कया भवेदित्यर्थः ॥
7. तद्धरेत्-ख.
8. न-ख.
9. अज्ञातस्वामिकं-ख.

<u>नारदः</u> [ना. स्मृ., १०, ६-७; ना. म. सं., ८, ६-७]

परेण निहितं लब्ध्वा राजन्युपहरेन्निधिम् ।
राजगामी निधिः सर्वः सर्वेषां ब्राह्मणादृते ॥

ब्राह्मणोऽपि निधिं लब्ध्वा क्षिप्रं राज्ञे निवेदयेत् ।
तेन दत्तं तु भुञ्जीत स्तेनः स्यादनिवेदने ॥

<u>याज्ञवल्क्यः</u> [२, ३४-३५]

राजा लब्ध्वा निधिं दद्याद्द्विजेभ्योऽर्धं द्विजः पुनः ।
विद्वानशेषमादद्यात् स सर्वस्य प्रभुर्यतः ॥

इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत् ।
अनिवेदितविज्ञातं दाप्यस्तं दण्डमेव च[1] ॥

<u>विष्णुः</u> [३, ५६-६२]

निधिं लब्ध्वा तदर्धं ब्राह्मणेभ्यो दद्यात् । दत्त्वा द्वितीयमर्धं कोशे प्रवेशयेत् । निधिं लब्ध्वा ब्राह्मणः [2]स्वयमादद्यात् । क्षत्रियश्चतुर्थमंशं [3]राज्ञे दद्यात्, शेषं चतुर्थमंशं ब्राह्मणेभ्यो दद्यादर्धमादद्यात् । वैश्यश्चतुर्थमंशं राज्ञे दद्याद्ब्राह्मणेभ्योऽर्धमंशं[4] स्वयमादद्यात्[5] ।

1. 'इतरेण' ब्राह्मणेनैवानभिरूपेणेत्यर्थः । गौतमीयं त्वब्राह्मणविषयं 'निध्यधिगमो राजधनम्' इति । यावत् निध्यधिगमः स सर्वो राजधनमित्यर्थः । तथा च 'न ब्राह्मणस्यानभिरूपस्य' इत्युक्त्वाह—'अब्राह्मणोऽप्याख्याता षष्ठं लभतेत्येके' इति । अनाख्याय तु गृह्णन् ब्राह्मणोऽपि सर्वमादाय शक्त्यनुरूपेण दण्ड्यः स्यात् । विद्वांस्तु 'स सर्वस्य प्रभुः' इति वचनादनाख्यायापि गृह्णन् न दोषभागित्यर्थः—विश्वरूपः ॥

2. सर्वम्–मु. वि. स्मृ.

3. राज्ञेऽपरं चतुर्थमंशं ब्राह्मणेभ्योऽर्धमादद्यात्–मु. वि. स्मृ.

4. अंशमादद्यात्–मु. वि. स्मृ.

5. वि. र. p. 644 explains: ब्राह्मणेभ्योऽर्धं दद्यादित्यनुषञ्जनीयम् । अंशं परिशिष्टं स्वयमादद्यात् ॥

[1]शूद्रस्त्ववाप्तं द्वादशधा विभज्य पञ्चमं राज्ञे दद्यात् । ब्राह्मणेभ्योऽशद्वयमेव दद्यात् । अवशिष्टं सर्वं स्वयमादद्यात्[2] । अनिवेदितविज्ञातस्य सर्वस्वमपहरेत् ॥

मनुः [८, ३८-३९]

यं तु पश्येन्निधिं राजा पुराणं निहितं क्षितौ ।
तस्माद्द्विजेभ्यो दत्त्वाऽर्धमर्धं कोशे [3]निवेशयेत् ॥

निधीनां तु[4] पुराणानां धातूनामाकरस्य च ।
[5]रक्षणाद्धर्मभाग्राजा भूमेरधिपतिर्हि सः[6] ॥

विष्णुः [३-५५]

आकरेभ्यः सर्वमादद्यात् ।

वसिष्ठः

[7]उद्वाहकारिणं त्वागमयेत् कस्य केन सह विवाहो युज्यत इति वर्णविभागप्रतिष्ठापनाय संप्रदायं रक्षेत्[8] । [9]आकरशुद्धिश्च तदनुरूपकरग्रहणाद्यर्थे[10] जानीयात् । [11]आकराधिपतयो हि प्रायेण मायाविनो भवन्ति ॥

1. शूद्रश्चांशान् द्वादशधा विभज्य पञ्चांशान् राज्ञे पञ्चांशान् ब्राह्मणेभ्योऽशद्वयमादद्यात्–स, मु. वि. स्मृ.

2. ब्राह्मणेभ्योऽर्धं दद्यादित्यनुषञ्जनीयम् । अंशं परिशिष्टं स्वयमादद्यात्–वि. र., ६४४.

3. प्रवेशयेत्–स, मेधा.

4. हि–स.

5. रक्षणादर्धभाग्राजा–स.

6. वि. र. p. 645 comments thus :—

'पुराणानां' चिरन्तनानां न तु विद्यमानस्वामिदायानाम् । 'आकराः' माणिक्यादिभूमयः । एतदुत्पन्नं द्रव्यमपि आकर एव । अतश्च धात्वाकरयोरन्योन्योत्पादितस्य द्रव्यस्यार्धं राजा गृह्णीयात् ॥

7. उद्वाहाकारांस्त्वागमयेत्–स.

8. वि. र. p. 645 : आगमयेत् धातुशुद्धिं जानीयात् ।

9. आरम्भुः द्विजः–B. J.

10. अर्थे–स.

11. आकरा हि कृताभिप्रायेण माया–स.

# अथ दण्डप्रणयनविवेकः

तत्र मनुः [७, १४-१५, १७-१८]

तदर्थं सर्वभूतानां गोप्तारं धर्ममात्मजम् ।
ब्रह्मतेजोमयं दण्डमसृजत्पूर्वमीश्वरः ॥

तस्य सर्वाणि भूतानि स्थावराणि चराणि च ।
भयाद्भोगाय कल्पन्ते स्वधर्मान्न चलन्ति च ॥

स राजा पुरुषो दण्डः स नेता [1]शासिता च सः ।
चतुर्णामाश्रमाणां च धर्मस्य प्रतिभूः [2]कृतः ॥

दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति[3] ।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥

तथा [७, २५]

यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ।
प्रजास्तत्र [4]विवर्धन्ते नेता चेत् साधु पश्यति ॥

तथा [७, ३१, २६, ३०, २७-२९, १९]

शुचिना सत्यसन्धेन यथाशास्त्रानुसारिणा ।
दण्डः प्रणयितुं शक्यः सुसहायेन धीमता ॥

तस्याहुः संप्रणेतारं राजानं सत्यवादिनम् ।
[5]समीक्ष्यकारिणं प्राज्ञं धर्मकामार्थकोविदम् ॥

असहायेन मूढेन लुब्धेनाकृतबुद्धिना ।
न शक्यो न्यायतो नेतुमुक्तधेषु विषयेषु च ॥

1. स च रक्षकः-स.
2. स्मृतः-स.
3. एष च रक्षति-स.
4. न मुह्यन्ति-स.
5. श्लोकार्धः नास्ति-स.

तं राजा प्रणयन् सम्यक् त्रिवर्गेणाभिवर्धते ।
कामात्मविषयः क्षुद्रो दण्डेनैव निहन्यते ॥

दण्डो हि सुमहातेजो दुर्धरश्चाकृतात्मभिः ।
धर्माद्विचलितं हन्ति नृपमेव सबान्धवम् ॥

ततो दुर्गं च राष्ट्रं च लोकं च सचराचरम् ।
अन्तरिक्षगतांश्चैव यतीन् देवांश्च पीडयेत् ॥

समीक्ष्य सुधृतः सम्यक् सर्वा रञ्जयति प्रजाः ।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः ॥

'सुधृतः' यथार्हं धृतः ।

तथा [७, २०-२१]

यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः ।
[1]शूले मत्स्यानिवापक्ष्यन् दुर्बलान् बलवत्तराः ॥

अद्यात्काकः पुरोडाशं श्वा च लिह्याद्धविस्तथा
स्वाम्यं च न स्यात् कस्मिंश्चित् प्रवर्तेताऽधरोत्तरम् ॥

अङ्गिराः

राजा गुरुर्यमश्चैव शासन् धर्मेण युज्यते ।
कर्ता च [2]मुच्यते पापान्न च[3] पापेन लिप्यते ॥

याज्ञवल्क्यः [१ ३५९-३६०]

यो दण्ड्यान् दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत् ।
इष्टं स्यात्क्रतुभिस्तेन [4]समाप्तवरदक्षिणैः ॥

1. अदण्ड्यपलिनः शूले भिन्दुर्मत्स्यानिवामयाः-ख.
2. विमुच्यते-ख.
3. स-ख.
4. बहुसवत-ख.

इति सञ्चिन्त्य नृपतिः क्रतुतुल्यफलं पृथक् ।
व्यवहारान्स्वयं पश्येत् सभ्यैः परिवृतोऽन्वहम् ॥

तथा [१, ३५७]

अधर्मदण्डनं लोके [1]धर्मकीर्तिविनाशनम् ।
[2]सम्यक् च दण्डनं राज्ञः स्वर्गकीर्तिजयावहम् ॥

मनुः [८, १२८; ९, २४७]

[3]अदण्ड्यं दण्डयन् राजा [4]दण्ड्यं चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकं चैव गच्छति ॥

[5]यावानवध्यस्य वधे तावान्वध्यस्य मोक्षणे ।
अधर्मो नृपतेर्दृष्टो धर्मस्तु विनियच्छतः ॥

कात्यायनः

राजानो मन्त्रिणश्चैव विशेषादेनमाप्नुयुः ।
अशासनात्तु पापानां नतानां दण्डधारणात् ॥
'नतानां' विनीतानां, अदण्ड्यानामिति यावत् ।

वसिष्ठः [१९, ४०-४३]

दण्डोत्सर्गे राजैकरात्रमुपवसेत् । त्रिरात्रं पुरोहितः । [6]कृच्छ्रमदण्ड्यदण्डने पुरोहितस्त्रिरात्रं राजा च ॥[7]

1. धर्मघ्नं कीर्तिनाशनम्-स.
2. अस्वर्ग्यं च परत्रापि तस्मात्तत्परिवर्जयेत्-स. Compare मनु, ८, १२९.
3. अदण्ड्यान्-स.
4. दण्ड्यान्-स.
5. Verse omitted by other Mss; supplied by स.
6. कृच्छ्रमदण्ड्यदण्डने-A. S. B., मु. वि. स्मृ.
7. 'अदण्डने' दण्ड्यादण्डने। तेनोपदेशनिमित्तकं त्रिरात्रं चरेत् पुरोहितः विपरीतोपदेशनिमित्तं च कृच्छ्रम् । राजा तु दण्ड्योत्सर्गे एकरात्रोपवासं कुर्यात्, अदण्ड्यदण्डने त्रिरात्रोपवासम्। चकारात् सम्याश्चेति द्रष्टव्यम् । कश्चित्पुनरदण्ड्यदण्डन इत्येव पठितम्। वि. र., ६५०.

## अथ दण्डोत्कर्षापकर्षादिः

तत्र कात्यायनः

सचिह्नमपि पापं तु पृच्छेत्पापस्य [1]कारणम् ।
तथा दण्डं [2]नियुञ्जीत दोषमारोप्य यत्नतः ॥

प्राणात्यये तु यत्र स्यादकार्यकरणं कृतम् ।
दण्डस्तत्र तु नैव स्यादेष धर्मः स्मृतो भृगुः[3] ॥

सद्वृत्तानां तु सर्वेषामपराधो यदा भवेत् ।
अवशेनैव दैवाच्च [4]दण्डं तत्र न कल्पयेत्[5] ॥

सम्यग्दण्डप्रणेतारो नृपाः पूज्याः सुरैरपि ।
आरम्भे प्रथमं दद्यात् प्रवृत्ते मध्यमः स्मृतः ॥

यस्य यो विहितो दण्डः पर्याप्तस्य स वै भवेत्[6] ।
कल्पितो यस्य यो दण्डस्त्वपराधस्य यत्नतः ॥

1. कारिणम्-ख.

2. प्रकल्पेत-वि. र., ६५०.

3. वि. र. p. 651 comments : 'आरोप्य' विशेषतो निर्णीय । 'प्राणात्यये' प्राप्ते पापकर्म एष धर्मः स्मृत इति भृगुः आह इति शेषः । क्वचित् 'भृगोः' इति पाठः । स व्यक्त एव ॥

4. न दण्डं तत्र कल्पयेत्-ख.

5. *Ibid* 'अवशेन' भयादिवशतया दैवात्प्रमादात् । अतः परं 'अतोऽन्येष्वपि प्रदुष्टेषु दण्डं नैव प्रकल्पयेत्' इति खण्डं पारिजातपठितम् । तच्च कामधेनौ कल्पतरौ चादर्शनान्न पुरस्कृतम् ॥

6. वि. र. p. p. 651-2 : 'आरम्भे' तत्फलावच्छिन्नकर्मकदम्बान्तर्भूतार्थ-एककर्मफलककृत्यामित्यर्थः । प्रथमः कथितः संपूर्णदण्डचतुर्भागात्मा । प्रवृत्ते तथाविधानेककर्म-फलककृत्यां 'मध्यमो' दण्डार्धः । 'पर्याप्तस्य' स वै भवेत् पर्याप्तिः तत्पापफलकस्वकर्मजनककृतिः, तद्वतः पुरुषस्य स वै भवेत् संपूर्णो दण्डो भवेत् । एकपापफलावच्छिन्नानेककर्माभिप्रायमेवैतत् ॥

पणानां ग्रहणं तस्यात् तन्मूल्यं वाऽथ राजनि ।
अपराधेषु [1]नियतमाहुर्गार्गीयमानवाः[2] ॥

दण्डनीयः स शैथिल्यात् प्रथमं नेति गौतमः[3] ।
अर्थवन्तो [4]यतस्सन्तो यथोक्तानपि ते दमान् ॥

दद्यु[5]र्नैवोपशाम्येयुस्तस्मात्तत्र विनिश्चयः ।
तस्मादव्याहताः पापा येन [6]येन शुभं पुनः ॥

न कुर्युस्तत्तदेवैषां कर्तव्यमिति निश्चयः ।
[7]समूहस्थाः प्रवृत्ताश्च पापेषु पुरुषाधमाः ॥

यथोक्तं द्विगुणं दण्डमेकैकस्य प्रदापयेत् ।

नारदः [ना. स्मृ., २१, ५३-५६; ना. सं., १९, १११-११५]

शारीरश्चार्थदण्डश्च दण्डस्तु द्विविधः स्मृतः ।
शारीरो द्विविधः प्रोक्तो ह्यर्थदण्डोऽप्यनेकधा ॥

काकिण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च ।
शारीरस्त्ववरोधादिर्जीवितान्तकरस्तथा ॥

[8]काकिन्यादिस्तु यो दण्डः स तु माषपरः स्मृतः ।
माषावरार्धो यः प्रोक्तः[9] कार्षापणपरस्तु सः ॥

1. A. S. B.,–नियममाहुः ।

2. वि. र. p. 651-2: यस्यापराधस्य संख्याविशेषवान् न दण्डः प्रकल्पितः । तत्र संख्याया आकांक्षायां पणो ग्राह्यः । पणमूल्यं वा इति गार्गीयमानवाः आहुः । पारिजाते तु आहुः 'आम्भीयमानवा' इति पठितम् । आम्भिर्नाम मुनिः तन्मानवाः तस्य शिष्याः इति व्याख्यातम् ॥

3. *Ibid*: शैथिल्याद्दण्डहेतुकर्मकार्यनिश्चयशैथिल्यादनिश्चयादिति वा पाठः ।

4. यतस्सर्वे–स.

5. नवोपशाम्येषु तस्मात्तत्र न निश्चयः–स.

6. येनाशुभं–स.

7. वि. र. p 573: 'समूहस्था' मिलिताः । 'यथोक्तात्' एकाकिनः पुरुषस्य पापे प्रवृत्तस्य यो दण्ड उक्तस्तस्मात् ।

8. *Ibid*: 'काकिन्यादिः' काकिन्यवरः । 'माषपरो' माषान्तः । तेन [illegible] काकिन्यात्मको दण्ड उक्तस्तस्यानुबन्धगौरवात् सातिशये माषपर्यन्त एव दण्डः कार्यः ।

9. वि. र. p. 654 reads also यश्चोक्तः

कार्षापणावराधस्तु चतुःकार्षापणोत्तरः ।
द्व्यवरोऽष्टपणास्त्वन्यस्त्र्यवरो द्वादशोत्तरः ॥

[1]कार्षापणाद्या ये प्रोक्ताः सर्वे ते स्युश्चतुर्गुणाः ।
एवमन्येपि विज्ञेयाः प्राक् चैते पूर्वसाहसात्[2] ॥

[3]मनुः [८, ३३६]

कार्षापणं भवेद्दण्ड्यो यत्रान्यः प्राकृतो जनः ।
तत्र राज्ञां[4] भवेद्दण्डः सहस्रमिति धारणा ॥

तथा [९, २४८]

ब्राह्मणान् बाधमानं तु कामादवरवर्णजम् ।
[5]हन्याच्चित्रैर्वधोपायैरुद्वेगजननैर्नृपः[6] ॥

कात्यायनः

प्रव्रज्यावसितं शूद्रं जपहोमपरं तथा ।
वधेन शासयेत्पापं [7]दाप्यो वा द्विगुणं दमम्[8] ॥

1. The following verse is not found in नारदस्मृति.

2. वि. र. p. 654 comments: "'पूर्वसाहसः' पणसहस्रद्वयं सार्धं, तस्मात् प्राग्ये दण्डविशेषास्ते अनुबन्धगौरवात् पापातिशये चतुर्गुणा ग्राह्याः । पूर्वसाहसादौ तु पापातिशये चातुर्गुण्यं नास्तीत्यर्थः ।"

3 A. S. B. and वि. र. p. 645 cite these from मनु; rest of the mss read continuously.

4. B. J. reads राजा ; वि. र. explains: 'राज्ञां' अवान्तरनृपतीनाम् ।

5. A. S. B. reads अन्यैः for चित्रैः

6. वि. र. p. 654: 'बाधमानं' अतिपीडयन्तम् । 'अवरवर्णजं' शूद्रम् । 'चित्रैः' कामाग्निदहनादिभिः ।"

7. दण्ड्यो-A. S. B., र.

8. वि. र. p. 655 comments: 'प्रव्रज्या' उत्तराश्रमपरिग्रहरूपा, सा च यद्यपि श्रुतिस्मृतिभ्यां शूद्रस्य नोक्ता, तथापि शैवागमोक्तामपि तां गृहीत्वा यस्त्यजेत् स शूद्रः 'प्रव्रज्यावसितः' । श्रुतिस्मृत्यनुक्ताऽपि शैवादिधर्मा राज्ञा परिपाल्या एव । 'द्विगुणं' वधार्हस्य पापिनो वा [illegible] पक्षया बोध्यः ।"

अस्पृश्यधूर्तदासानां नराणां पापकारिणाम् ।
प्रातिलोम्यप्रसूतानां ताडनं नाऽर्थतो दमः[1] ॥

परतन्त्रास्तु ये केचिद्दासत्वं ये च संस्थिताः ।
अनाथास्ते तु निर्दिष्टास्तेषां दण्डस्तु[2] ताडनम्[3] ॥

ताडनं बन्धनं चैव तथैव च विडम्बनम् ।
एष दण्डो हि दासस्य नाऽर्थदण्डो 'बृहस्पतिः[5] ॥

शङ्खलिखितौ

शिल्पिनः कारवः शूद्रास्तेषां व्यभिचारेष्वपि शिल्पोपकरणानि रक्षेद्राजा । तुलमानप्रतिमानसमुत्थानि वणिक्पथानाम् । क्षेत्रबीजभक्तगोशकटकर्षणद्रव्याणि कर्षकाणाम् । वाद्यभाण्डालङ्कारवासांसि रङ्गोपजीविनाम् । गृहशयनालङ्कारवासांसि वेश्यानाम् । [6]शस्त्राणि चायुधोपजीविनाम् । सर्वेषां [7]करणद्रव्याणि नाऽहार्याणि[8] राज्ञा धार्मिकेण । अस्मा हि पुरुषाः पापबहुलाश्चाऽविधेयाश्च भवन्ति । तेभ्यः पापांशभाग्राजा । तस्मान्नाऽधनान्नाऽनुपकरणान् कुर्यात् । तन्मूला हि वृत्तिः[9] । वृत्तिमूलो निवासः । तैर्निवसद्भिः स्फीतं राष्ट्रमित्युच्यते[10] ॥

1. वि. र., p. 655 : 'धूर्ताः' मायाविनः । 'प्रतिलोमप्रसूताः' सूतमागधादयः ।

2. तादृशः–A. S. B., द.

3. *Ibid* 'परतन्त्रा' भार्यापुत्रादयः । 'संस्थिताः' प्राप्ताः । 'अनाथाः' अनीश्वराः । 'निर्दिष्टाः' निर्धनाः ।

4. विधीयते for बृहस्पतिः–वि. र., p. 655.

5. *Ibid* : 'ताडनं' कशाद्यभिघातः । 'विडम्बनं' मुण्डनगर्दभारोहणादि ।

6. सर्वास्त्राणि चायुधीयानाम्–स.

7. A. S. B.–कारुकद्रव्याणि ; वि. र. p. 656 gives कारुद्रव्याणि as an alternative reading.

8. न हार्याणि–स.

9. वि. र. p. 656 adds भवति but notes, as an alternative reading, the omission of this word.

10. वि. र. p. 656 comments : "शिल्पिनः" चित्रलेखकर्तारः । 'व्यभिचारेषु' सर्वस्वापहारयोग्येषु अपराधेषु । 'तुलमानं' ऊर्ध्वमानं । 'प्रतिमानं' स्वर्णादितुलनोपकरणम् । 'भक्तं' कृषिसिध्यर्थं अन्नम् । 'कर्षणद्रव्यं' हलादि । 'वाद्यभाण्डं' पटहादि । 'रङ्गोपजीविनां' नृत्यवृत्तीनाम् ।"

बृहस्पतिः [व्य., ९, १९]

वधार्हः सुवर्णशतं दमं दाप्यस्तु पूरुषः ।
[1]अङ्गच्छेदार्हस्त्वर्धं संदंशार्हस्तदर्धकम् ॥

कात्यायनः [९६४-९६६]

सुवर्णशतमेकं तु वधार्हो दण्डमर्हति ।
अङ्गच्छेदे तदर्धं तु [2]विवासे पञ्चविंशतिम्[3] ॥

[4]कुलीनार्यविशिष्टेषु[5] निकृष्टेष्वनुसारतः ।
सर्वस्वं वा निगृह्यैतान् पुराच्छीघ्रं [6]प्रवासयेत् ॥

निर्धना बन्धने स्थाप्या वधं नैव प्रवर्तयेत् ।
सर्वेषां पापयुक्तानां विशेषार्थश्च शास्त्रतः ॥

तथा [ ९६७, ९६८, ७८१, ९६९]

वधाङ्गच्छेदार्हविप्रो निःसङ्गे बन्धने [7]विशेत् ।
तदा कर्मवियुक्तोऽसौ वृत्तस्थस्य दमो हि सः[8] ॥

1. अङ्गच्छेदार्हस्तदर्धं–ज. द.

2. विनाशे–स.

3. वि. र. p. 657: "अङ्गच्छेदे अर्हे, विवासे अर्हे। क्वचित् पाठो 'विनाशे' इति। तत्रापि तद्देशवासविनाशे अर्हे इत्येक एवार्थः।"

4. *Ibid* : "'कुलीनः' उत्तमकुलः। 'आर्यः' स्वधर्मनिरतः। 'विशिष्टो' गुणवान्। एतेषु निकृष्टेषु अल्पधनेषु, वधार्हेषु अनुसारतः स्वर्णशतासंभवेऽपीदम्। तस्याप्यसंभवे सर्वस्वम्।"

5. विकृष्टेषु स.

6. विसर्जयेत्–स.

7. वसेत्–स.

8. वि. र., pp. 558 offers these additional comments: 'विप्रः' अत्र सदाचारनिष्ठः। 'निःसङ्गे' क्रियायोगशून्ये। यत्र वसन् स्वधर्मं कर्तुं न पारयति, स एव सदाचारस्य दमः यत् स्वधर्मवियोजनं नाम, 'विख्याप्यः' तेन रूपेण लोके प्रकाशनीयः। 'अङ्गच्छेदी' परस्याङ्गच्छेत्ता।

कूटसाक्ष्यपि निर्वास्यो विख्याप्योऽसत्प्रतिग्रही ।
अङ्गच्छेदी वियोज्यः स्यात्स्वधर्मे बन्धनेन तु ॥

कर्णौष्ठघ्राणपादाक्षिजिह्वाशिश्नकरस्य च ।
छेदने चोत्तमं [1]दद्याद्भेदने मध्यमं भृगुः[2] ॥

एतैः समापराधानां तत्राप्येवं प्रकल्पयेत् ।
बालवृद्धातुरस्त्रीणां न दण्डस्ताडनं दमः[3] ॥

'वधाङ्गच्छेदार्हः' वर्णान्तराणां येनाऽपराधेन वधोऽङ्गच्छेदो वा दण्डः, तद्युक्तो विप्रः । 'वृत्तस्थस्य' इति विशेषणेन दुर्वृत्तस्य [4]दण्डान्तरं सूचयति ।

मनुः [९, २२९-२३०]

क्षत्रविट्शूद्रयोनिस्तु दण्डं दातुमशक्नुवन् ।
आनृण्यं कर्मणा गच्छेद्विप्रो दद्याच्छनैः शनैः[5] ॥

स्त्रीबालोन्मत्तवृद्धानां [6]दरिद्राणां च रोगिणाम् ।
शिफाविदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दमम् ॥

1. दण्डो भेदने—ख.

2. वि. र., p. 658 comments: 'छेदने' कर्तने । 'उत्तमं' उत्तमसाहसं पण-सहस्रात्मकम् । 'भेदने' विदारणे ।

3. *Ibid*: 'समापराधानाम्' अङ्गान्तरच्छेदभेदकर्तॄणाम् । प्रमादकृतापराधविषयमेतत् ॥

4. दण्डान्तरांशश्च भवति—द, ज.

5. वि. र., p. 658 comments: 'कर्मणा' अर्थनिस्तारानुरूपव्यापारेण विप्रस्तु न कर्मणा आनृण्यं गच्छेत्, किन्तु क्रमेण दद्यादेव ॥ "क्षत्रियादयो निर्धना न बन्धनेनावसादयितव्याः । किं तर्हि ? कर्मणा यद्यस्योपचितं कर्म राजोपयोगि तेन दण्डधनं संशोधयितव्याः । ब्राह्मणस्तु कुटुम्बानामविरोधेन शनैर्दाप्यो, बन्धताडनकर्मणी तस्य निषिध्येते" ॥—इति मेधातिथिः ।

6. वि. र., p. 659 :—दरिद्रोऽत्र कर्मण्यशक्तो निर्धनः ।

कात्यायनः [९७०]

स्त्रीधनं दापयेद्दण्डं धार्मिकः पृथिवीपतिः ।
निर्धना प्राप्तदोषा स्त्री ताडनं दण्डमर्हति[1] ॥

नारदः [ना. स्मृ., २०, ३५-३८ ; ना. म. सं., १९, ३३-३६]

ब्राह्मणस्य परीहारो [2]राज्ञश्चासनमग्रतः ।
प्रथमं दर्शनं प्रातः सर्वेभ्यश्चाभिवादनम् ॥

अग्रं नवेभ्यः सस्येभ्यो मार्गदानं च गच्छतः ।
भैक्ष्यहेतोः परागारे प्रवेशश्चानिवारितः ॥

[3]समित्पुष्पकुशाधानेष्वस्तेयं स्वपरिग्रहात् ।
अनाक्षेपः[4] परेभ्यश्च संभाषस्तु परस्त्रिया ॥

नदीष्ववेतनस्तारः पूर्वमुत्तारणं तथा ।
तरेष्वशुल्कदानं च न चेद्वाणिज्यमस्य तत्[5] ॥

1. *Ibid* : यदि धनवती स्त्री तदा दोषे धनं दण्डः । अधनायास्तु ताडनमेव इत्यर्थः ।

2. अजघन्यासनमग्रतः–ना. म. सं., राजन्यासनमग्रतः–स, ना. स्मृ.

3. समित्पुष्पोदकादाने–स.

4. वि. र. p. 659 reads अनाधृष्यः ।

5. वि. र., pp 659-660 : 'परीहारो' अदण्डः । राज्ञो अग्रतः 'आसनं' उपवेशनम् । राज्ञे प्रातरास्यदर्शनम्, नवसस्यानां अग्रग्रहणम्, गच्छतो ब्राह्मणस्य अग्रे मार्गदानम्, भैक्ष्यहेतोः परागारेषु अनिवारितः प्रवेशश्च, निवारणे स्वपराध एव । 'अस्तेयं' अचौर्यम् । अत एवानपराधः । 'स्वपरिग्रहात्' परिग्रहविषयसमिदादीनामप्यादानात् । 'अनाधृष्यः परेभ्यश्च' शत्रुभ्योऽप्यन्यतो ब्राह्मणो न दण्ड्यः । 'संभाषश्च परस्त्रिया' इति भावदोषमात्राभिप्रायम् । 'अवेतनो' भृतिशून्यः । 'तारः' पारगमनम् । 'पूर्वं' अब्राह्मणेभ्यः, 'तरेषु' पारं प्रापणीयेषु नद्यादिषु, 'अशुल्कदानं' राजभागादानम् । यदि तस्य ब्राह्मणस्य न वस्त्रादि वाणिज्यार्थं स्यात् ॥

## अथ ब्राह्मणस्य परीहारः

तत्र शङ्खलिखितौ

इन्धनोदकाग्निकाष्ठतृणोपलपुष्पमूलफलपर्णादानेष्वप्रापचयं,[1] देवतीर्थाभिगमनं, गृहकोष्ठप्रवेशनं, पथि शस्त्रधारणम्, असंबद्धमासनं, [2]प्रस्तुतेष्वनिवारणं, असद्वासश्चेति, शिलोञ्छपदयोर्धान्यराशिग्रहणम्,[3] अग्रोत्सर्गप्रसववृद्धिकर्षापणशुल्कनदीतरेष्वनुपरोधनं, परस्त्रीसंभाषणं, राजस्त्रीदर्शनं, राज्ञा समासनं, व्यतिक्रमणं च कोपात्सर्वमर्हति ब्राह्मणः[4] ॥

## अथ नगरपरीहारः

तत्र शङ्खलिखितौ

न वैष्टिकं जाङ्घिकं क्षेत्रद्रव्यापहरणं पुष्पमूलप्रचयनं स्वयमर्जितप्रवेशनं निष्क्रमणप्रवेशनेष्वनिवेदनं स्कन्धवाह्येषु शुल्को गणसमयश्रेणिपूगचरणव्य-

1. तृणोलपपुष्पमूलफलपर्णानामप्रापचयं–ख.
2. प्रसवेष्वनि–ख.
3. धान्यराशिमूलनम्–ख.
4. वि. र., p. 661 comments thus:—

'इन्धने'त्याद्यारण्यकेन्धनादिविषयम् । 'देवो' अत्रान्यपरिगृहीतो देवालयः । एवं तीर्थमपि । 'गृहकोष्ठप्रवेशनं' परस्य इति शेषः । 'पथि' देशान्तरगमने । 'असंबद्धमासनं' प्रयोजनं विना यत्रक्वचनावस्थानम् । 'प्रस्तुतेषु' स्वकार्यार्थचेष्टितेषु 'अनिवारणं' तन्मध्यगमनानिवारणम् । 'असद्वासः' कार्यवशादसद्भिः सह वासः । 'च'च्छेदो'ऽव्ययानामनेकार्थत्वात् समुच्चये । 'शिलोञ्छपदयोः' शिलोञ्छ इत्यात्मकवृद्धिभ्यां वर्तमानयोः शेषीभूतधान्यराशेर्ग्रहणम् । 'अग्रोत्सर्गो' अग्रत्यागपूर्वकमश्वस्तनविधिना ग्रहणम् । 'नान्यथा' इति पारिजातेऽधिकम् । 'प्रसवः' स्फुट एव, 'वृद्धिः' कुसीदम् । 'कर्षः' कर्षणम् । 'आपणः' क्रयविक्रयव्यवहारः । 'नदीतरः' नदीतरणार्थं देयम् । एतेषु यद्देयं तदप्रयच्छतो 'अनुपरोधनं' अनाक्रमणं व्यतिक्रमणं आज्ञालङ्घनं च ॥ लक्ष्मीधरेण तु नारदव्याख्यानन्तरं प्रकरणभेदः कृतः । ब्राह्मणस्य परीहार इति वाक्यं पठितम् ।

वहारनिष्ठा स्वामिनः परिज्ञातारोऽन्यत्र राजाभिद्रोहात् [1]नगरनिवासिनां विभेतराणामपि परिग्रहा अनपराधाः[2] ॥

<u>बृहस्पतिः</u> [व्य., ९, २५]

साक्षिलेख्यानुमानेन सम्यग्दिव्येन वा जितः ।
यो न दद्याद्देयमर्थं[3] स निर्वास्यस्ततः पुरात् ॥

[बृह., प्राय., ८४]

[4]विषोद्बन्धनशस्त्रेण यस्त्वात्मानं प्रमापयेत् ।
मृतोऽमेध्येन लेप्तव्यो नान्यं संस्कारमर्हति ॥

<u>अङ्गिराः</u>

आत्मानं घातयेद्यस्तु रज्ज्वादिभिरुपक्रमैः[5] ।
मृतेऽमेध्येन लेप्तव्यो जीवेच्चेद्द्विगुणो दमः[6] ॥

1. नगर etc to अनपराधाः omitted by स.

2. वि. र. p. 662 :–'न वैष्टिकं' विष्टिः कर्मकरः, तत्संबन्धि देयं वैष्टिकम् । 'जाङ्घिकं' जङ्घाजन्यदेयम् । 'स्वयमर्जितस्य' पण्यस्य राज्ञे अनिवेद्यापि 'प्रवेशने' अनपराधः । निष्क्रमणप्रवेशनेषु अनिवेदनं' राजपुरुषेभ्य इति शेषः । 'स्कन्धवाह्येषु शुल्कः' स्कन्धे वहनयोग्येषु शुल्कदानम् । 'गणो' ब्राह्मणसमुदायः । 'समयः' पाषण्डादीनाम् । 'श्रेणी' शिल्पसमूहः । 'पूगो' वणिजादिसमूहः, गणादीनां 'चरणं' आचारः, 'व्यवहारो' विवादः, तत्र 'निष्ठा' निर्णयः । 'स्वामिनः' तत्र प्रधानभूताः, 'परिज्ञातारः' स्वे स्वे वृत्ते आचारव्यवहारप्रवर्तकत्वेन लक्षणपरिज्ञातरः । 'अन्यत्र राजाभिद्रोहात्' गणाभ्यन्तरेष्वपि राजद्रोहकारिषु न ते प्रभवः, किन्तु राजैव, तेन राजद्रोहादन्यत्र नगरवासिगणादिषु मुख्यानां स्वातन्त्र्येण आचारविवादपरिच्छेदो न दण्डायेत्यर्थः ॥

3. देयद्रव्य-स.

4. A. S. B. (2) attributes this verse to बृहस्पति and reads this verse before the name अङ्गिराः. वि. र., p. 663 omits this verse.

5. B. J. has before this an unmeaning prose sentence which repeats part of the śloka. वि. र., p. 663 notes a variant—राजादिभिरुपद्रवैः for रज्ज्वादिभिरुपक्रमैः

6. द्विगुणो दमः–स.

याज्ञवल्क्यः [२, ३०७]

राज्ञाऽन्यायेन[1] यो दण्डो गृहीतो वरुणाय तम् ।
निवेद्य दद्याद्विप्रेभ्यः स्वयं त्रिंशद्गुणीकृतम् ॥

कात्यायनः [९७१-९७३]

अन्यायोपार्जितं न्यस्तं कोशे कोशं निवेशयेत् ।
कार्यार्थे कार्यनाशः स्याद्बुद्धिमान्नोपपातयेत् ॥

दत्वा धनं तद्विप्रेभ्यः सर्वं दण्डसमुत्थितम् ।
पुत्रे राज्यं समासज्य कुर्वीत प्रायणं वने ॥

एवं चरेत्सदा युक्तो राजधर्मेषु पार्थिवः ।
हितेषु चैव लोकस्य सर्वान् भृत्यान्नियोजयेत् ॥

## अथ दण्डसंज्ञा

तत्र शङ्खलिखितौ

चतुर्विंशतिरेकनवतिः प्रथमसाहसः, द्विशतं पञ्चशतं चैव मध्यमसाहसः,[2] षट्शतं सहस्रं चोत्तमः । [3]यथासारापकारं सर्वेषामानुपूर्व्येण[4] ॥

नारदः [ना. स्मृ., २१, ३०-३१ ; ना. म. सं., १९, ८८-९०]

चतुर्विंशावरः पूर्वः परः षण्णवतिर्भवेत् ।
शतानि पञ्च च तु परो मध्यमो द्विशतावरः ॥

1. वि. र. p. 663—'अन्यायेन' अयथाशास्त्रम् ।

2. मध्यमः—स

3. B. J. reads यथा परोपकारे सर्वेषामानुपूर्वेण । वि. र. ६६४ reads यथासारापकारम्. Text reconstructed conjecturally.

4. वि. र. p. 664 comments thus: 'सर्वेषां' आचतुर्विंशत्यादिरेकनवतिपर्यन्तः प्रथमसाहसाख्यो दण्डः । एवमुत्तरत्रापि, द्विशतादिः पञ्चशतान्तो मध्यमः, षट्शतादिः सहस्रान्तो उत्तमः । 'यथासारापकारम्' अर्थापराधानुसारेण, अत एव वित्तापराधलाघवगौरवाभ्यां विकल्पः ।

सहस्रस्तूत्तमो ज्ञेयः स तु पञ्चशतावरः ।
त्रिविधः साहसेष्वेवं दण्ड उक्तः स्वयंभुवा[1] ॥

अत्र मनुः[2] [८, १३८]

पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः ।
मध्यमः पञ्च विज्ञेयः सहस्रं त्वेव चोत्तमः ॥

याज्ञवल्क्यः [१, ३६६]

साशीतिपणसाहस्रो दण्ड उत्तमसाहसः ।
तदर्धं मध्यमः प्रोक्तस्तदर्धमधमः[3] स्मृतः[4] ॥

## अथ मानसंज्ञा

तत्र मनुः [८, १३१-१३७]

लोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि ।
ताम्ररौप्यसुवर्णानां ताः प्रवक्ष्याम्यशेषतः ॥

जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥

त्रसरेणवोऽष्टौ विज्ञेया लिक्ष्यैका च [5]प्रमाणतः ।
ता राजसर्षपस्तिस्रस्ते तु द्वे गौरसर्षपः ॥

1. वि. र. p. 664 : चतुर्विंशत्यारम्य षण्णवतिपर्यन्तः प्रथमः । द्विशतादारम्य पञ्चशतपर्यन्तो मध्यमः । पञ्चशतादारम्य सहस्रपर्यन्त उत्तम इत्यर्थः ॥

2. अत्र मनुविष्णू–स.

3. B. J. reads wrongly मध्यमः ।

4. वि. र. p. 665 : पणसहस्रपरिमाणं यस्य सः पणसाहस्रः तेन पणसहस्रपरिमितसाशीतिपणोत्तर उत्तमसाहसः । एतेपि संख्याविकल्पा वित्तापराधबलवगौरववैचित्र्यात् समञ्जसा बोद्धव्याः ॥

5. परिमाणतः–इति पाठान्तरम्–स and (वि. र. p.

सर्षपाः षड्यवो मध्यः त्रियवं त्वेककृष्णलम् ।
पञ्चकृष्णलको माषस्ते [1]सुवर्णं तु षोडश[2] ॥

पलं सुवर्णाश्चत्वारः पलानि धरणं दश ।
द्वे कृष्णले समधृते विज्ञेयो रौप्यमाषकः ॥

ते षोडश स्याद्धरणं पुराणश्चैव राजतः ।
कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः ॥

धरणानि दश ज्ञेयः शतमानं तु राजतः ।
चतुःसुवर्णिको निष्को विज्ञेयस्तु प्रमाणतः ॥

याज्ञवल्क्यः [१, ३६४]

पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तितम्[3] ।

माषाधिकारे विष्णुः [४, ८-९]

तद्द्वादशमक्षार्धम् । अक्षार्धमेव चतुर्माषकं सुवर्णः ।

बृहस्पतिः [व्यव., ८, ८, १०]

लोके संव्यवहारार्थं संज्ञेयं कथिता भुवि ।
ताम्रकर्षकृता मुद्रा विज्ञेयः कार्षिकः पणः ॥

स एव चन्द्रिका प्रोक्ता ताश्चतस्रस्तु धानकाः ।
ता द्वादश सुवर्णस्तु दीनाराख्यः स एव हि ॥

1. सुवर्णस्तु—इति पाठान्तरम्—वि. र. p. 666.

2. वि. र., p. 666 explains:—याः प्रथिताः ताः लोकव्यवहारार्थं 'प्रवक्ष्यामि' व्युत्पादयामीत्यर्थः । 'यवो मध्यः' नातिस्थूलो नातिकृशः ।

3. उभयथा प्रयोगदर्शनात् । कार्यविशेषापेक्षया च व्यवस्था-विभागरूपः

नारदः [ना. स्मृ., २१, ५८-६० ; ना. म. सं., १९, ११७-११८]

माषो विंशतिभागस्तु ज्ञेयः कार्षापणस्य तु ।
काकिनी तु चतुर्भागो माषस्य च पणस्य च ॥

[1]पञ्चनद्याः प्रदेशे तु संज्ञेयं व्यावहारिकी ।
कार्षापणप्रमाणं तु तन्निबद्धमिहैव वा ॥

कार्षापणोऽण्डिका ज्ञेया ताश्चतस्रस्तु धानकः ।
ते द्वादश सुवर्णस्तु दीनारश्चित्रकः स्मृतः[2] ॥

तथा [ना. स्मृ., २१, ५७ ; ना. म. सं., १९, ११६]

कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्तते ।
पणैर्निबद्धः पूर्वस्यां षोडशैव पणाः स तु ॥

कात्यायनः [४९१-४९२]

माषः पादो द्विपादो वा दण्डो यत्र प्रकल्पितः ।
अनिर्दिष्टं तु सौवर्णं माषकं [3]तत्र कल्पयेत् ॥

[4]यत्रोक्तो माषको दण्डो राजानं तत्र निर्दिशेत् ।
कृष्णलैश्चोक्तमेव स्यादुक्तं दण्डविनिश्चये ॥

1. वि. र. p. 667 : पञ्चनद्या इत्यादि । इह शास्त्रीयसंव्यवहारार्थं कार्षापणप्रमाणं तदेवं निबद्धं, यत्पञ्चनद्याः प्रदेशे प्रसिद्ध्यर्थं, इतरत्तु तत्तद्दिशि लोकव्यवहारार्थमुक्तम् ॥

2. स्मृ. च., p. 99 attributes these verses to कात्यायन.

3. तु प्रकल्पयेत् –ख.

4. वि. र., p. 668 observes : यत्र माषको दण्ड इत्युक्तं तत्र राजतो ग्राह्यः । यत्र कृष्णलो दण्डः तत्र सौवर्णो ग्राह्य इत्यर्थः ।

## अथ नैगमादिसंज्ञा

तत्र कात्यायनः [६७८-६८२]

नानापौरसमूहस्तु [1]नैगमस्तु प्रकीर्तितः ।
नानायुधधरव्राताः समवेताः प्रकीर्तिताः ॥

समूहो वणिगादीनां पूगः [2]संपरिकीर्तितः ।
ब्राह्मणानां समूहस्तु गण इत्युच्यते बुधैः ॥

प्रव्रज्यावसिता ये तु पाषण्डाः परिकीर्तिताः ।
शिल्पोपजीविनो ये तु शिल्पिनः परिकीर्तिताः[3] ॥

आर्हतसौगतानां तु समूहः सङ्घ उच्यते ।
चाण्डालश्वपचादीनां समूहो गुल्म संज्ञितः ॥

गणपाषण्डपूगाश्च व्राताश्च श्रेणयस्तथा[4] ।
समूहस्थाश्च ये चान्ये [5]वर्गाख्यास्ते बृहस्पतिः ॥

चातुर्वर्ण्यस्य या सूतिरसजात्यादिसंभवा[6] ।
तस्या धर्माः [7]समुद्दिष्टा जातिः सा परिकीर्तिता ॥

[8]इति श्रीलक्ष्मीधरकृते कृत्यकल्पतरौ
व्यवहारकाण्डे प्रकीर्णकम् ॥

---

1. नैगमः स तु कीर्तितः–स.
2. स परिकीर्तितः–स.
3. शिल्पिनस्ते प्रकीर्तिताः–स.
4. वि. र. p. 669 : 'श्रेणयः' शिल्पिसमूहः ।
5. वर्गाश्च परिकीर्तिताः । बृहस्पतिः–चातुर्वर्ण्यस्य etc–स.
6. वि. र. p. 669 : 'असजातिः' असवर्णः; असजातिसमुद्भवा–स. Missing in Kane.
7. सदा रक्ष्यः सा जातिः–स.
8. इति महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेवमहासान्धिविग्रहिकेण भट्टहृदयधरात्मजेन भट्टश्रीलक्ष्मीधरेण विरचिते कृत्यकल्पतरौ etc–स.

# ८१

## अथ वर्णानुलोमप्रतिलोमाः[1]

तत्र आपस्तम्बः [१, १, ४-५]

चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः। तेषां पूर्वः पूर्वो जन्मतः श्रेयान्॥

मनुः [१०, ३-४]

वैशेष्यात्प्रकृतिश्रैष्ठ्यान्नियमस्य च धारणात्।
संस्कारस्य विशेषाच्च वर्णानां ब्राह्मणः प्रभुः॥

ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः।
चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः॥

[2]बृहस्पतिः

[3]विप्रक्षत्रियवैश्याश्च शूद्राश्चान्त्यास्त्रयो द्विजाः।
प्रतिलोमानुलोमाश्च [4]तैर्युता वर्णसंकराः॥

देवलः

[5]चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्रा इति। अनुलोमाश्चत्वारः सवर्णाम्बष्ठपारशवोग्रा इति। प्रतिलोमाः षड् आयोगवक्षत्तचण्डालमागध-

1. This section is wanting in चि. र.

2. A. S. B., and ज omit 'बृहस्पतिः'; omitted in my ed. of बृहस्पति.

3. विप्रक्षत्रियवैश्याश्च शूद्रा वर्णाश्चान्त्यास्त्रयो द्विजाः—A. S. B.; विप्रक्षत्रियविट्शूद्रा वर्णास्त्वन्यास्त्रयो द्विजाः—स.

4. ते ज्ञात्वा—स, S. B. (2)

5. All Mss corrupt.

वैदेहकसूता इति । अन्तरालाः षट् [1]कुक्कुटपुल्कसवेनकुशीलवबन्दिश्वपाका इति । सर्वेषां लक्षणानि विधानानुपूर्वं व्याख्यास्यामः ॥

ब्राह्मण्यां ब्राह्मणाज्जातः संस्कृतो ब्राह्मणो भवेत् ।
एवं क्षत्रियविट्शूद्रा [2]ज्ञेयास्तेभ्यः स्वयोनिजाः ॥

ब्राह्मणात्क्षत्रियायां तु समुत्पन्नः सवर्णकः ।
वैश्यायां ब्राह्मणाज्जातः [3]पुत्रोऽम्बष्ठ इति स्मृतः[4] ॥

विप्रान्निषादः शूद्रायां जातः पारशवोऽपि सः ।
वैश्यायां क्षत्रियाज्जातः सवर्णः स च [5]संज्ञया ॥

शूद्रायां क्षत्रियाज्जातं प्राहुरुग्रमिति द्विजाः ।
वैश्याच्छूद्रस्य कन्यायां शूद्र एव प्रजायते ॥

मनुः [१०, ६-१०]

स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान् ।
सदृशानेव तानाहुर्मातृदोषविगर्हितान् ॥

अनन्तरासु जातानां विधिरेष सनातनः ।
द्व्येकान्तरासु जातानां धर्म्यं विद्यादिमं विधिम् ॥

1. काककुक्कुटपुल्कसवेनशीलबद्धमिश्रपाका इति-स ; काककुक्कुटकुशवैदेहवन्दिश्वपाका इति–A. S. B.

2. तेभ्यः सर्वे स्वयोनिजाः–A. S: B., ज.

3. पुत्रः पुष्ट इति स्मृतः–A. S. B.

4. ननु देवलेनानुलोमजातयोऽन्यथा वर्णिताः 'ब्राह्मणात् क्षत्रियायां तु............... पुत्रोऽम्बष्ठ इति स्मृतः ॥' इति । नायं दोषः । एकस्यामेव जातौ मूर्धा[illegible]संज्ञयोर्विकल्पेन प्रवृत्तत्वात्, । एवमम्बष्ठादिष्वपि । न चैकस्य संज्ञाविकल्पे दृष्टान्ताभावः शङ्कनीयः । एकस्य निषादपारशवसंज्ञाविकल्पस्य मनुदेवलयाज्ञवल्क्यैरुदाहृतत्वात् ॥—पराशरमाधवीयम्, Vol I. pp. 513.

5. संख्यया–A. S. B.

ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते ।
निषादः शूद्रकन्यायां यः [1]पारशव उच्यते ॥

क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान् ।
क्षत्रशूद्रवपुर्जन्तुरुग्रो नाम प्रजायते ॥

विप्रस्य त्रिषु वर्णेषु[2] नृपतेर्वर्णयोर्द्वयोः ।
वैश्यस्य वर्णे चैकस्मिन् षडेतेऽपसदाः स्मृताः ॥

तथा [१०, १४]

पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम् ।
ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते ॥

याज्ञवल्क्यः [१, ९०-९५]

सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ।
अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्धनाः ॥

विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम् ।
जायतेऽम्बष्ठः शूद्रायां निषादः पारशवोऽपि वा ॥

[3]माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात् ।
शूद्रायां करणो वैश्याद्विजेभ्यः क्षत्रिये तथा ॥

1. पारस्कर–ज, द.
2. राष्ट्रेषु–B. J., द.
3. अयं श्लोकः विश्वरूपाचार्येण पठितः । उत्तरार्धस्तु 'शूद्रायां करणो वैश्याद् विन्नास्वेष विधिः स्मृतः ।' इति ॥ 'अम्बष्ठो' इत्यादि सार्धश्लोकस्तु विश्वरूपाचार्येण न पठितः । अपरार्क-विज्ञानेश्वरौ तु 'माहिष्योग्रौ' इत्यादिकं श्लोकं न पठतः । 'अम्बष्ठो' इत्यर्धं च न पठतः । 'वैश्याशूद्र्योस्तु' इत्यादिश्लोकमात्रं पठतः ॥ कल्पतरौ तु पाठद्वयमपि दृश्यते । अयं तु विशेषः । 'जायतेऽम्बष्ठः शूद्रायां निषादः पारशवोऽपि वा' इत्यर्धः 'अम्बष्ठो ब्राह्मणाच्छूद्र्यां जातः पारशवोऽपि वा' इत्यर्धेन समानार्थकः । 'माहिष्योग्रौ' इत्यादि विश्वरूपाचार्यपठितः [१, ९१] श्लोकः 'वैश्याशूद्र्योस्तु' इत्याद्यपरार्कपठितश्लोकेन समानार्थः । पाठद्वयमपि प्रामाणिकम् । पाठद्वयस्यापि पठने पुनरुक्तिः दार्ढ्याय भवेदपि ॥

अम्बष्ठो ब्राह्मणाच्छूद्र्यां जातः पारशवोऽपि वा ।
वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ ॥
वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः ॥

बौधायनः १, (१७, ४-६)

क्षत्रियाद्वैश्यायां क्षत्रियः । शूद्रायामुग्रः । वैश्याच्छूद्रायां रथकारः ॥

उशना

[1]उत्कर्षापकर्षाद्वर्णा विज्ञायन्ते । रथकाराम्बष्ठसूतोग्रमागधवैनपुक्कस-क्षत्तकुक्कुटवैदेहचण्डालश्वपाकव्रात्यप्रभृतयः । तत्र [2]सवर्णायामेव सवर्णः । [3]ब्राह्मणात् क्षत्रियायां जातो ब्राह्मण एव सः । वैश्यायामम्बष्ठः । शूद्रायां पारशवः । निषाद इत्येके । क्षत्रियेण वैश्यायां क्षत्रियः, शूद्रायामुग्रः, वैश्येन शूद्रायां वैश्यः ॥

'ब्राह्मण एव स' इति, क्षत्रियपूर्वकात् क्षत्रियादुत्कृष्टो [4]'ब्राह्मण-वदित्यर्थः ।

शङ्खलिखितौ

[5]तत्र ब्राह्मणात् क्षत्रियायां क्षत्रिय एव [6]जायते । क्षत्रियेण वैश्यायां वैश्य एव । वैश्येन शूद्रायां शूद्रः ।[7] ब्राह्मणेन शूद्रायां [8]निषादः पारशवो

1. स adds 'ततः' before this.

2. सवर्णात् सवर्णः–स.

3. ब्राह्मणेन–स.

4. ब्राह्मणवच्छ्रेष्ठ इत्यर्थः–A. S. B.

5. तत्र ब्राह्मणेन क्षत्रियस्त्रियामुत्पादितः क्षत्रिय एव जायते । क्षत्रियेण वैश्यायामुत्पादितो वैश्य एव भवति । वैश्येन शूद्रायामुत्पादितो शूद्रः । –A. S. B.

6. भवति–विज्ञानेश्वरः, (याज्ञ. स्मृ. १, ९१.)

7. यत्तु 'ब्राह्मणेन क्षत्रियायां.........शूद्र एव भवति' इति शङ्खस्मरणं तत् क्षत्रियादि-धर्मप्राप्त्यर्थम्, न पुनर्मूर्धावसिक्तादिजातिनिराकरणार्थं क्षत्रियादिजातिप्राप्त्यर्थं वा । अतश्च मूर्धावसिक्तादीनां क्षत्रियादेरुक्तैरेव दण्डाजिनोपवीतादिभिश्चनयनं कार्यम् । –विज्ञानेश्वरः, (याज्ञ. स्मृ. १, ९१.)

8. पारशवो निषादो वा–A. S. B. (2) ; निषादो पारशवोऽपि–A. S. B., B. J ; निषादः पारस्कपेऽपि–स.

वा जायत आनुलोम्येन विधिना। विपर्यये ब्राह्मण्यां सूतः [1]क्षत्रियेण। क्षत्रियायां मागधो[1] वैश्येन। वैश्यायामायोगवः शूद्रेण। [1]शूद्रेण ब्राह्मण्यां चण्डालो जायते। अम्बष्ठोग्रावेकान्तरानुलोम्येन। क्षत्तृवैदेहकावेकान्तर-प्रातिलोम्येन। यस्माद्वर्णाः [2]संकीर्यन्ते तस्मात् प्रतिसंकरः॥

गौतमः [४, १६-२१]

[3]अनुलोमा अनन्तरैकान्तरद्व्यन्तरासु जाताः सवर्णाम्बष्ठोग्रनिषाद-दौष्यन्तपारशवाः। प्रतिलोमाः सूतमागधायोगवक्षत्तृवैदेहकचण्डालाः। ब्राह्मण्यजीजनत्पुत्रान् वर्णेभ्य आनुपूर्व्याद्ब्राह्मणसूतमागधचण्डालान्। तेभ्य एव क्षत्रिया मूर्धावसिक्तक्षत्रियधीवरपुल्कसान्। तेभ्य एव वैश्या भृज्यकण्ठ-माहिष्यवैश्यवैदेहकान्। पारशवयवनकरणशूद्रान् शूद्रेत्येके॥

[4]नारदः [ना. स्मृ., १४, १०३-१०४, १०६-११२ ना. म. सं., १२, १०६-११०, ११२-११७]

अनन्तरः स्मृतः पुत्रः पुत्र एकान्तरस्तथा।
द्व्यन्तरश्चानुलोम्येन तथैव प्रतिलोमतः॥

उग्रः पारशवश्चैव निषादश्चानुलोमतः।
[5]उत्तमेभ्यस्त्रयस्त्रिभ्यः शूद्रापुत्राः प्रकीर्तिताः॥

ब्राह्मण्यामपि चण्डालसूतवैदेहका अपि।
अपरेभ्यस्त्रयस्त्रिभ्यो विज्ञेयाः [6]प्रतिलोमजाः॥

1. Words omitted in A. S. B.
2. प्रसंकीर्यन्त–A. S. B.
3. अनुलोमास्तु–ब, S. B. (2).
4. The name of the author of these verses is omitted by all the Mss. All Mss corrupt.
5. The following three lines are not found in printed नारदस्मृति.
6. प्रतिलोमतः–ना. स्मृ., ना. म. सं.

सवर्णो[1] मागधश्चैव क्षत्ता च क्षत्रियासुतः ।
आनुलोम्येन तत्रैको द्वौ ज्ञेयौ [2]प्रतिलोमजौ ॥

[3]वैश्यापुत्रास्तथाम्बष्ठयवनायोगवा अपि ।
प्रातिलोम्येन तत्रैको द्वौ ज्ञेयावनुलोमजौ ॥[4]

सवर्णो ब्राह्मणीपुत्रः क्षत्रियायामनन्तरः ।
अम्बष्ठोग्रौ तथा पुत्रावेवं क्षत्रियवैश्ययोः ॥

एकान्तरस्तु दौष्यन्तो वैश्यायां ब्राह्मणात् सुतः ।
शूद्रायां क्षत्रियात्तद्वन्निषादो नाम जायते ॥

शूद्रा पारशवं सूते ब्राह्मणाद्व्यन्तरं सुतम् ।
आनुलोम्येन वर्णानां [5]तथैव प्रतिलोमतः ।[6]

[7]अनन्तरः स्मृतः सूतो ब्राह्मण्यां क्षत्रियात्सुतः ।
मागधायोगवौ तद्वत्सुतौ द्वौ वैश्यशूद्रयोः ॥

ब्राह्मण्येकान्तरं सूते वैश्याद्वैदेहकं सुतम् ।
क्षत्तारं क्षत्रिया शूद्रात्पुत्रमेकान्तरं तथा ॥

द्व्यन्तरः प्रातिलोम्येन पापिष्ठः संकरे सति ।
चण्डालो जायते शूद्राद्ब्राह्मणी यत्र मुह्यति ॥

1. अम्बष्ठो for सवर्णो-ना. स्मृ., ना. म. सं ; अम्बष्ठ आनुलोम्येन क्षत्रियस्य वैश्यायां जातः-भवस्वामिभाष्यम्.

2. प्रतिलोमतः-ना. स्मृ., ना. म. सं.

3. 'वैश्यापुत्रास्तु दौष्मन्तयवनायोगवा अपि,' ना. म. सं. ; वैश्यापुत्रा अपि ब्राह्मणात् दौष्मन्तः क्षत्रियाद् यवनः अनुलोमौ, शूद्रात् प्रतिलोम आयोगव इति-भवस्वामी ॥ नारदस्मृति omits this verse.

4. नारदस्मृति and नारदमनुसंहिता add a verse after this : क्षत्राद्याः प्रतिलोमाः स्युरनुलोमास्त्विमे स्मृताः । संस्काराश्चाश्वपाकाद्यास्तेषां त्रिःसप्त वै मताः ॥ ना. म. सं. reads सूताद्याः for क्षत्राद्याः, and ससंकराः। श्वपाकद्याः for सकराश्चा-श्वपाकाद्याः ।

5. पुत्र ह्येते प्रकीर्तिताः-ना: स्मृ., पुत्रा एते प्रकीर्तिताः-ना. म. सं.

6. नारदस्मृति and नारदीयमनुसंहिता add one verse after this : सूतश्च मागधश्चोभौ पुत्रावायोगवस्तथा । प्रातिलोम्येव वर्णानां क्षत्तृवैदेहकावपि ॥ ना. म. सं. reads तद्वदेतेऽप्यनन्तराः for क्षत्तृवैदेहकावपि ।

7. The following verse is omitted by ना. म. सं.

देवलः

शूद्रादायोगवक्षत्तृचण्डालाः प्रतिलोमजाः ।
वैश्यायां क्षत्रियायां च ब्राह्मण्यां च यथाक्रमम् ॥

तथैव मागधो वैश्याज्जातो वैदेहकोऽपि च ।
ब्राह्मण्यां क्षत्रियाज्जातः [1]सूतो जात्या स्वकर्मणा ॥

विष्णुः [१६, ३-६]

प्रतिलोमाश्चार्यविगर्हिताः । तत्र वैश्यापुत्रः शूद्रेणायोगवः । पुल्कसमागधौ क्षत्रियापुत्रौ [2]शूद्रवैश्याभ्याम् । चण्डालवैदेहकसूताश्च ब्राह्मणीपुत्राः शूद्रविट्क्षत्रियैः ॥

वसिष्ठः [१८, १-६]

शूद्रेण ब्राह्मण्यामुत्पन्नश्चण्डालो भवतीत्याहुः । राजन्यायां वैणः । वैश्यायामन्त्यावसायी । वैश्येन ब्राह्मण्यामुत्पन्नो [3]रामको भवतीत्याहुः । राजन्यायां पुल्कसः । राजन्येन ब्राह्मण्यामुत्पन्नः सूतो भवतीत्याहुः ॥

यमः

सर्वाश्चण्डालयोन्यस्तु चातुर्वर्ण्याद्विनिःसृताः ।
[4]सूतमागधचण्डालश्वपचा उग्रपुल्कसाः ॥

एकयोनय एवाद्यास्त्रयस्तेषामनन्तराः ।
द्वावेकयोनिजावेव एक एवोत्तरः स्मृतः[5] ।

1. क्षत्ता जातस्तु कर्मणा–ज ; सूतो जात्यादिकर्मणि–द.
2. वैश्यशूद्राभ्याम्–स.
3. भमको–S. B. (b), स.
4. सूतमागधचण्डालश्वपचामग्नुपुल्कसाः–स, S. B. (b) ; सूतमागधचण्डालाः कारुमातङ्गपुल्कसाः–A. S. B., ज, द.
5. एवोत्तरैः स्मृताः–द ; द्वाधिकयोनिशानेन एकैको नरैः स्मृतः–A. S. B.

क्षत्रियाज्जायते सूतो वैश्याज्जायेत मागधः ।
शूद्राज्जायेत चण्डालो ब्राह्मणी यत्र सूयति ॥

क्षत्रियायां तु वैश्येन [1]श्वपचो नाम जायते ।
शूद्रेण जायते [2]चोग्रः क्षत्रिया यत्र सूयति ॥

वैश्यायामेव शूद्रेण पुल्कसो नाम जायते ।
बीजयोनिविशिष्टास्ते[3] वर्णेभ्यस्त्वधमोत्तमाः ॥

हारीतः

विपरीता ब्राह्मण्यां क्षत्रियवैश्यशूद्राः सूतमागधमातङ्गान् जनयन्ति । क्षत्रियायां वैश्यशूद्रौ वन्दिनिषादौ जनयतः । वैश्यायां शूद्रः पुल्कसं जनयति ॥

पैठीनसिः

सूतमागधचण्डालाश्चेति ब्राह्मण्यां मोहादधोवर्णेभ्यः । अम्बष्ठश्चायोगवश्चेति क्षत्रियायाम् । वैश्यायां मागधश्चेति । पुल्कसो वैणो रथकारः श्वपाकः कैवर्तो निषादश्चेति वर्णसंकरा जायन्ते ॥

बौधायनः [१, १६, ६-१५]

शूद्राद्वैश्यायां मागधः[4] क्षत्रियायां क्षत्ता ब्राह्मण्यां चण्डालः । वैश्यात् क्षत्रियायामायोगवो[5] ब्राह्मण्यां वैदेहकः । क्षत्रियाद्ब्राह्मण्यां सूतः । तत्रा-म्बष्ठोग्रसंयोगे भवत्यनुलोमः । क्षत्तृवैदेहकयोः प्रतिलोमः । उग्राज्जातः

1. निषादो-A. S. B. ; भूपो-S. B. (b).
2. मद्गुः-A. S. B., S. B. (b), ख.
3. बीजं योनिविशिष्टास्ते-ख.
4. आयोगवः-S. B. (b)
5. मागधः-S. B. (b)

क्षत्तायां श्वपाकः। वैदेहकादम्बष्ठायां वैणः। निषादाच्छूद्रायां पुल्कसः। शूद्रान्निषाद्यां कुक्कुटः। वर्णसंकरादुत्पन्नान् व्रात्यानाहुर्मनीषिण इति॥

## पैठीनसिः[1]

प्रतिलोमादव्यभिचारे[2] सूतमागधायोगवा जायन्ते। शूद्रेणोत्तमासु[3] श्वपाकचण्डालनिषादा जायन्ते। ब्राह्मणेन [4]कृष्णायां पारशवः। पारशव्यां[5] क्षत्ता। क्षत्रियेण कृष्णायां वन्दी। वैश्येन [6]वैतालः। [7]पारशवेन क्षत्रियाया-मम्बष्ठो[8] वैश्यायां [9]दुन्दलादोऽम्बष्ठश्चेति। विदेहायां वेनः। वैदेहकवन्दि-निषादाम्बष्ठासु ब्राह्मणेन [10]चूचुकमद्गुपौल्कसकुक्कुटका[11] जायन्ते। वैश्याया-मायोगवः[12]। क्षत्रियेण क्षत्तापुल्कसवेनोग्रेषु दूतप्रेष्यकैवर्तारा जायन्ते। उग्रेणाद्यासु [13]मौञ्जिष्ठसौतपाणिविकला जायन्ते। उग्रायां त्वाद्यैः पौष्टिक-डोम्बभिक्षुशिण्डिका जायन्ते॥

## शङ्खलिखितौ

क्षत्र्यामुग्रसंगे श्वपाकः। वैदेहकायामम्बष्ठसंयोगे वेनः। शूद्रायां निषादेन पुल्कसः मागधेन कुक्कुटकः॥

1. Name found only in A. S. B.; the entire **passage is** corrupt in all Mss.
2. प्रतिलोमाव्यभिचारे–A. S. B.
3. उत्तमान्–A. S. B.
4. कुमार्या–ज; वृषल्यां–S. B. (b).
5. पारस्करः। पारस्कर्यां–ज.
6. वेनातः–A. S. B.
7. पारस्करेण–ज, द.
8. अपुष्ठः–A. S. B.
9. दुर्मतो–A. S. B.
10. चूचूप–ज, द.
11. शशका–ज, द.
12. आयोगवतः–ज, द.
13. मौञ्जिष्ठसौतवगणकिलिका–ज; मौञ्जिष्ठसौतवगानकिलिका–द.

बौधायनः [१, १३, ९]

अम्बष्ठात् प्रथमायां श्वपाकः । [1]उग्राद्द्वितीयायां वेनः । निषादात्तृतीयायां पुल्कसः । विपर्यये कुक्कुटकः ॥

देवलः

उग्रान्निषाद्यामुत्पन्नस्तनयः कुक्कुटो भवेत् ।
ततो[2] निषादाच्छूद्रायां जातो[3] भवति पुल्कसः ॥

वैदेहकेन त्वम्बष्ठ्यां जातो वेन इति स्मृतः ।
वैदेहकायामम्बष्ठाद्भवेज्जातः कुशीलवः ॥

क्षत्र्यां तथोग्रजः पुत्रः श्वपाक इति कीर्त्यते ।
[4]अन्तराला भवन्त्येवमेते चान्ये च मिश्रजाः ॥

मनुविष्णू [मनु, १०, १५, १८-१९, २५-४० ; विष्णुः, १६-१७]

ब्राह्मणादुग्रकन्यायामावृतो नाम जायते ।
आभीरोऽम्बष्ठकन्यायामायोगव्यां तु धिग्वणः ॥

जातो निषादाच्छूद्रायां जात्या भवति पुल्कसः ।
शूद्राज्जातो निषाद्यां तु स वै कुक्कुटकः स्मृतः ॥

[5]क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्यते ।
वैदेहकेन त्वम्बष्ठ्यामुत्पन्नो वेन उच्यते ॥

संकीर्णयोनयो ये तु प्रतिलोमानुलोमजाः ।
अन्योन्यव्यतिषक्ताश्च तान् प्रवक्ष्याम्यशेषतः ॥

1. तथा द्वितीयायां द.
2. जातो–ज, द.
3. जात्या–ज, द.
4. अन्तराला–S. B. (b), स ; ह्यन्तराला–A. S. B.
5. क्षत्र्यां जातस्तथोग्रात्तु–स, S. B. (b)

सूतो वैदेहकश्चैव [1]चण्डालश्चाधमो नृणाम् ।
मागधः क्षत्तजातिश्च तथायोगव एव च ॥

एते षट् सदृशान् वर्णाञ्जनयन्ति स्वयोनिषु ।
मातृजात्यां प्रसूयन्ते[2] प्रवरासु च योनिषु ॥

यथा त्रयाणां वर्णानां [3]द्वयोरात्मास्य जायते ।
आनन्तर्यात्स्वयोन्यां च[4] तथा बाह्येष्वपि [5]क्रमः ॥

ते चापि बाह्यान् सुबहूंस्ततोऽप्यधिकदूषितान् ।
परस्परस्य दारेषु जनयन्ति विगर्हितान् ॥

यथैव शूद्रो ब्राह्मण्यां बाह्यं जन्तुं प्रसूयते ।
तथा बाह्यतरं बाह्यश्चातुर्वर्ण्ये प्रसूयते ॥

प्रतिकूलं वर्तमाना बाह्या बाह्यतरान् पुनः ।
हीना हीनान् प्रसूयन्ते वर्णान्पञ्चदशैव तु ॥

प्रसाधनोपचारज्ञमदासं [6]दास्यजीवनम् ।
सैरिन्ध्रं[7] वागुरावृत्तिं सूते दस्युरयोगवे ॥

मैत्रेयकं तु वैदेहो माधूकं संप्रसूयते ।
नॄन् प्रशंसत्यजस्रं यो घण्टाताडोऽरुणोदये ॥

1. चण्डालश्च नराधमः-मेधातिथिकुल्लूकौ ।

2. मातृजात्यां प्रसूयन्ते-omitted in S. B. (b) and the whole line is omitted in other Mss.

3. द्वयोरात्मा च-A. S. B.

4. तु-कुल्लूकमेधातिथी ।

5. क्रमात्-कुल्लूकः

6. दासजीवनम्-कुल्लूकः

7. वौरन्ध्रं-च, S. B. (b)

निषादो मार्गवं सूते दासं नौकर्मजीविनम् ।
कैवर्तमिति यं प्राहुरार्यावर्तनिवासिनः ॥

मृतवस्त्रभृत्स्वनार्यासु[1] गर्हितान्नाशनासु च ।
भवन्त्यायोगवीष्वेते जातिहीनाः पृथक् त्रयः ॥

कारावरो निषादात्तु चर्मकारः प्रसूयते ।
वैदेहकादन्ध्रमेदौ बहिर्ग्रामप्रतिश्रयौ ॥

चण्डालात्पाण्डुसोपाकस्त्वक्सारव्यवहारवान् ।
आहिण्डिको निषादेन वैदेह्यामेव जायते ॥

चण्डालेन[2] तु सोपाको मूलव्यसनवृत्तिमान् ।
पुल्कस्यां जायते पापः सदा सज्जनगर्हितः ॥

निषादस्त्री तु चण्डालात्पुत्रमन्त्यावसायिनम् ।
श्मशानगोचरं सूते बाह्यानामपि गर्हितम् ॥

संकरे जातयस्त्वेताः पितृमातृप्रदर्शिताः ।
प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः ॥

नारदः [१४, १०५]

[3]सूताद्याः प्रतिलोमास्तु ये जाताः प्रतिलोमतः ।
ससंस्काराश्च पाकाद्यास्तेषां त्रिःसप्तको गणः ॥

1. मृतवस्त्रभृत्सु नारीषु–कुल्लूकः
2. चण्डालेन तु सोपाको–कुल्लूकमेधातिथी ; चण्डालेन श्वपाक्यां तु–A. S. B., ख.
3. अवान्तरः पितृकर्माणो ये जाताः प्रतिलोमतः ।
तेष्वन्तराश्च पापाद्यास्तेषां त्रिःसप्तको गणः ॥—A. S. B., ख.

सूताद्याः प्रतिलोमाः स्युरनुलोमास्त्विमे मताः ।
संस्काराश्चाल्पकाद्यास्तेषां त्रिःसप्त वै मताः ॥—मुद्रितनारदस्मृतिः

शङ्खलिखितौ

[ [1]क्षत्रियवैश्यानुलोमान्तरोत्पन्नो यो रथकारस्तस्येज्यादानोपनयनसंस्कारक्रिया अश्वप्रतिष्ठारथसूत्रवास्तुविद्याध्ययनवृत्तिता च ॥ ]

वसिष्ठः

क्षत्रियवैश्यानुलोमान्तरजातो रथकार इत्येके । तस्याध्ययनेज्यादानोपनयनसंस्काराश्चाप्रतिषिद्धाः । रथसूत्रवास्तुविद्याध्ययनकर्मवृत्तिश्चेति ॥

याज्ञवल्क्यः [१, ९५]

माहिष्येण करण्यां तु रथकारः प्रजायते ॥

यमः

मर्यादाया विलोपेन जायते वर्णसंकरः ।
भ्रष्टवंशास्तु[2] पतिता भ्रष्टाचारा भवन्ति ते ॥

पुनर्यमः

प्रातिलोम्यानुलोम्येन गुणदोषान्निबोधत ।
आनुलोम्येन वर्णत्वं प्रातिलोम्येन पातकम् ॥

मनुः [१०, ६६-७२]

अनार्यायां समुत्पन्नो ब्राह्मणात्तु यदृच्छया ।
ब्राह्मण्यामप्यनार्यात्तु श्रेयस्त्वं [3]केति चेद्भवेत् ॥

1. There is a blank in the manuscripts after शङ्खलिखितौ and upto वसिष्ठ. The Sūtras ascribed to वसिष्ठ are not found in his work. They are virtually identical with the Sūtras cited from शङ्ख in the *Mitākṣarā* I, 95, reproduced here.

2. भ्रष्टवर्गास्तु-S. B. (b)

3. कस्येति चेद्भवेत्–मेधातिथिः ।

जातो नार्यामनार्यायामार्यादार्यो भवेद् गुणैः ।
जातोऽप्यनार्यादार्यायामनार्य इति निश्चयः ॥

उभावपि त्वसंस्कार्याविति[1] धर्मो व्यवस्थितः ।
वैगुण्याज्जन्मतः[2] पूर्व उत्तरः प्रतिलोमतः ॥

सुबीजं त्वेव सुक्षेत्रे जातं संपद्यते यथा ।
तथार्याज्जात आर्यायां सर्वं संस्कारमर्हति ॥

बीजमेके प्रशंसन्ति [3]क्षेत्रमेके मनीषिणः ।
बीजक्षेत्रे तथैवान्ये तत्रेयं तु व्यवस्थितिः ॥

अक्षेत्रे बीजमुत्सृष्टमन्तरैव विनश्यति ।
अबीजकमपि क्षेत्रं केवलं स्थण्डिलं भवेत् ॥

यस्माद्बीजप्रभावेण [4]तिर्यग्जा ऋषयोऽभवन् ।
पूजिताश्च प्रशस्ताश्च तस्माद्बीजं [5]विशिष्यते ॥

तथा [१०, ४१-४२]

स्वजातिजानन्तरजाः[6] षट्सुता द्विजधर्मिणः ।
शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः ॥

तपोबीजप्रभावैश्च[7] ते गच्छन्ति युगे युगे ।
उत्कर्षं चापकर्षं च मनुष्येष्विह [8]जन्मतः ॥

1. तावुभावप्यसंस्कार्याविति -मेधातिथिकुल्लूकौ ।
2. वैगुण्याजन्मनः-कुल्लूकः
3. क्षेत्रमन्ये- मेधातिथिकुल्लूकौ ।
4. "तिर्यग्जातिहरिण्यादिजाता अपि ऋष्यश्रृङ्गादयो मुनित्वं प्राप्ताः"-कुल्लूकः
5. प्रशस्यते-A. S. B. द, कुल्लूकः.
6. सजातिजानन्तरजाः-कुल्लूकः ।
7. तु for च-मेधातिथिकुल्लूकौ ।
8. कर्मतः-S. B. (b).

तथा [१०, ६४-६५]

शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत्प्रजायते ।
अश्रेयान् श्रेयसीं जातिं गच्छत्यासप्तमाद्युगात् ॥

शूद्रो [1]ब्राह्मण्यमभ्येति ब्राह्मणश्चैव शूद्रताम् ।
क्षत्रियाज्जातमेवं तु[2] विद्याद्वैश्यात्तथैव च ॥

बौधायनः [१, १६, १३-१४]

निषादेन निषाद्यामा पञ्चमाज्जातोऽपहन्ति शूद्रताम् । तमुपनयेत् षष्ठं याजयेत् [3]सप्तमोऽविकृतो [4][भवति]। [5]जीवसंजीवकर इत्येषां सञ्ज्ञाः[6] [7]क्रमेण निपतन्ति ॥

याज्ञवल्क्यः [१, ९६]

जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेऽपि वा[8] ।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम् ॥

1. ब्राह्मणतामेति-मेधातिथिकुल्लूकौ ।

2. क्षत्रियाच्चैव वैश्यायां-A. S. B.

3. यत्सप्तमान्निःसृतो-A. S. B. ; यत्सप्तमान्निकृतो-ज.

4. भवति-This word is not found in any of the Mss ; supplied by the printed text.

5. The portion from जीवसंजीवकर इत्येषां संज्ञाः क्रमेण निपतन्ति is not found in the printed texts of Baudhāyana, but is found in all the Mss.

6. जीवितमित्येषां संज्ञा-ज ; जीवितं जीवकमित्येषां संज्ञा-A. S. B.

7. कर्मणामित्यनुवृत्तो-ज, A. S. B.

8. सप्तमे पञ्चमेऽपि वा-A. S. B., विज्ञानेश्वरः ।

आपस्तम्बः [२, ११, १०-११]

धर्मचर्यया जघन्यो वर्णः [1]पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ । [2]अधर्मचर्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ ॥

मनुः [१०, ७३]

अनार्यमार्यकर्माणमार्यं चानार्यकर्मिणम् ।
[3]संप्रधार्याब्रवीद्धाता न समौ नासमाविति ॥

तथा [१०, २०-२३]

द्विजातयः सवर्णासु जनयन्त्यव्रतांस्तु यान् ।
तान्सावित्रीपरिभ्रष्टान् व्रात्यानिति विनिर्दिशेत् ॥

व्रात्यात्तु जायते विप्रात्पापात्मा [4]भूर्जकण्टकः ।
आवन्त्यवाटधानौ च [5]पुष्पधः शैख एव च ॥

झल्लो मल्लश्च राजन्याद्व्रात्याल्लिच्छिविरेव[6] च ।
नटश्च करणश्चैव खसो[7] द्रविड एव च ॥

वैश्यात्तु जायते व्रात्यात्सुधन्वाचार्य एव च ।
कारुषश्च विजन्मा च मैत्रः सात्वत एव च ॥

1. पूर्वपूर्वमवस्थामापद्यते जीवपरिवृत्तौ-अधर्मपरिचर्यया च पूर्ववर्णो जघन्यं वर्णमापद्यते ।-ब.

2. The following sūtra is omitted by S. B. (b).

3. संप्रदाय-S. B. (b), ब.

4. भूर्जकण्टकः-कुल्लूकः ; भृजकण्टकः-S. B. (b).

5. पुष्पः शैखव एव च-ब.

6. निच्छिविरेव-कुल्लूकः

7. वेशो-S. B. (b).

देवलः

व्रतहीना असंस्काराः [1]सवर्णास्वपि ये पुनः ।
उत्पादिता भवेयुस्ते व्रात्या [2]इव बहिष्कृताः ॥

शङ्खलिखितौ

त्रिषु [3]वर्णेष्वसंस्कृतप्रसूतः स्यात्कालाभिज्ञातः[4] [5]पतितसावित्रीको ब्राह्मणः ॥

यमः

यस्तु प्रव्रजिताज्जातः प्रव्रज्यावसितश्च यः ।
तावुभौ ब्रह्मचण्डालावाह वैवस्वतो यमः ॥

आरूढपतिताज्जातो ह्यारूढपतितश्च यः ।
द्वावेतौ ब्रह्मचण्डालौ मनुः स्वायम्भुवोऽब्रवीत् ॥

यस्तु प्रव्रजितापुत्रो ब्राह्मण्यां [6]चैव शूद्रजः ।
[7]द्वावेतौ ब्रह्मचण्डालौ मनुः स्वायम्भुवोऽब्रवीत् ॥

अङ्गिराः

यस्तु प्रव्रजितापुत्रो ब्राह्मण्यां यश्च शूद्रजः ।
तावुभौ [8]विद्धि चण्डालौ सगोत्राद्यश्च जायते ॥

1. सवर्णास्त्वपि-S. B. (b)
2. इति-A. S. B.
3. वर्णेषु संस्कृतप्रसूतः-A. S. B., द.
4. कलाभिज्ञातः-S. B. (b) ; कलाभिजातः-A. S. B.
5. पतितसामान्यश्च-A. S. B.
6. यश्च-स, S. B. (b)
7. तावुभौ-स, S. B. (b)
8. ब्र[illegible]चण्डालौ-अ ; द्विजचण्डालौ-द.

मनुः [१०, ४३-४४]

शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके [1]ब्राह्मणादर्शनेन च ॥

पौण्ड्रकाश्चौड्रद्रविडा[2] काम्बोजा यवनाः शकाः ।
पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः ॥

तथा [१०, ५७-६१]

वर्णापेतमविज्ञातं नरं कलुषयोनिजम् ।
आर्यरूपमिवानार्यं कर्मभिः स्वैर्विभावयेत् ॥

अनार्यता [3]निष्ठुरता क्रूरता निष्क्रियात्मता ।
पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ॥

पित्र्यं वा[4] भजते शीलं मातुर्वोभयमेव वा ।
न कथंचन दुर्योनिः प्रकृतिं स्वां नियच्छति ॥

कुले मुख्येऽपि जातस्य यस्य स्याद्योनिसंकरः ।
संश्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु ॥

यत्र त्वेते परिध्वंसाज्जायन्ते वर्णदूषकाः ।
राष्ट्रीयैः[5] सह तद्राष्ट्रं क्षिप्रमेव विनश्यति ॥

नारदः [१४, ११३]

[6]रक्षाप्रमादान्नृपतेर्जायते वर्णसंकरः ।
तस्माद्राज्ञा विशेषण स्त्रियो [7]रक्ष्यास्तु संकरात् ॥

1. ब्राह्मणातिक्रमेण च–मेधातिथिः
2. पौण्ड्रकाश्चोलद्राविडाः–A. S. B.,
3. पिशुनता–ज.
4. पित्र्यं वा–मेधातिथिकुल्लूकौ ।
5. राष्ट्रिकैः–ज, कुल्लूकः
6. This line is not found in the printed Nāradasmṛti.
7. रक्ष्या हि–A. S. B., ना. स्मृ.

शङ्खलिखितौ

एवं वर्णे[1] भेदः। प्रमादाद्दौर्बल्याच्च राज्ञस्तु किल्बिषं [2]कर्तुर्यद्दापयेत् तेषां प्रतिनियतानि कर्माणि राज्ञा प्रतिपादनीयानि ॥

## अथ तेषां कर्माणि

तत्र मनुः [१०, ४६-५०]

ये द्विजानामपसदा ये चापध्वंसजाः स्मृताः।
ते निन्दितैर्वर्तयेयुर्द्विजानामेव कर्मभिः ॥

[3]सूतानामश्वसारथ्यमम्बष्ठानां [4]चिकित्सितम्।
वैदेहकानां स्त्रीकार्यं मागधानां वणिक्पथः ॥

मत्स्यघातो निषादानां [5]त्वष्टिरायोगवस्य च।
मेदान्ध्रचुञ्चुमद्गूनामारण्यपशुहिंसनम् ॥

क्षत्तुग्रपुल्कसानां तु बिलौकोवधबन्धनम्।
धिग्वणानां[6] चर्मकार्यं वेणानां भाण्डवादनम् ॥

चैत्यद्रुमश्मशानेषु शैलेषूपवनेषु च।
वसेयुरेते विज्ञाता वर्तयन्तः स्वकर्मभिः ॥

1. वर्णभेदः–A. S. B.
2. यद्युपपद्येत for कर्तुर्यद्दापयेत्–A. S: B ; यद्यु उपपद्येत–S. B. (b).
3. सूतानामश्व सारथ्यं–ख, S. B. (b).
4. चिकित्सनम्–कुल्लूकमेधातिथी।
5. विष्टिः–ख, S. B, (b)
6. चम्मकानां–ख, S. B. (b)

'अपध्वंसजाः' प्रतिलोमजाः । 'निन्दितैः' द्विजानामापद्विहितैर्वाणिज्यादिभिः । 'द्विजानामुपयोगिभिः प्रेष्यकर्मभि'रिति मेधातिथिः[1] ॥

शङ्खलिखितौ

सूतानामश्वसंस्कारक्रिया केशश्मश्रुनखलोमवापनस्नपनविलेपनान्यलंकरणमश्वदमन[2]योग्यासनमेक्षणानि कर्माणि । क्षत्तुः प्रतीहारदौत्ये । मागधानां मृदङ्गवेणुवीणावादननृत्यगीत[3]पुष्पमाणवककर्मसिद्धिकोपस्थानगाथाश्लोकमत्यूषप्रतिबोधनानि कर्माणि । अम्बष्ठानां [4]जातिविशेषात्कायशल्यशलाकारसायनविषोन्मादक्लीबज्वरापस्मारकुमारचिकित्साशरीरपोषणादिकर्माणि । वैदेहकानां [5]पत्रच्छेदनसीवनरञ्जनावनिर्णेजनवापीतटाकोद्यानारामावस्करशोधनानि कर्माणि । उग्राणां [6]कुञ्जरग्रहणराजच्छत्रधारणपुरतःप्रधावनबन्धनागारसंयमनानि कर्माणि । वेणानां लङ्घनवनक्रीडानियुद्धमायाशास्त्रैन्द्र[7]जालप्रस्थापनप्रहरणानि कर्माणि । कुक्कुटानां प्रहरणकरणचक्रतोमरभिण्डिपालपाशासिपरश्वथलगुडलोहजालिकासमरसंधारणादीनि कर्माणि । आयोगवानामवस्करणकुम्भकरणसुवर्णरजतमणिलोहादिशिल्पकरणानि चर्मवृत्तिता चेति । पुल्कसानां नगरवीथीरक्षणजागरणानाथमृतनिर्हरणालेख्य[8]पत्रच्छेदमालिकत्वमिति कर्माणि । निषादानां [9]वागुरापाशसंधारणमृगपशुपक्षिमत्स्यदारणमधुपातनविकर्तनादीनि कर्माणि ॥

1. 'अपसदाः' अनुलोमाः प्रतिलोमाः । 'अपध्वसंजाः' गोब[illegible] । 'द्विजानां' उपयोगिभिः प्रेष्यं 'कर्मभिः' 'वर्तयेयुः' आत्मानम् । 'निन्दितैः' 'प्रेष्यकार्यत्वान्निन्दितानि ।—मुद्रितमेधातिथिः ॥

2. गमन–A. S. B.

3. पुष्पधारणकर्म–A. S. B.

4. जातिविशेषकोपशल्यगणकारमार्जने कुष्ठोन्मत्तक्लीबजरापस्मारकुमारचिकित्सकोपशरीरशोषणानि–A. S. B.

5. गात्रच्छेदनशाधनबलिनिर्णेजनवापीकूपतटकोदपानावस्करशोधनानि–A. S. B.

6. कुण्डगोलकजारजकुञ्जरग्रहणं–A. S. B.

7. सन्धानपूरणक्रीडातिप्रह्वमायाधारस्तुते ऐन्द्रजालप्रस्थापन०–A. S. B.

8. पत्रच्छेदनालिकत्वमिति–A. S. B.

9. वागुरापाशसंधारणमृगपशुपक्षिमत्स्योद्धरणमधुपातनविवर्तनादीनि–A. S. B.

'पुष्पमाणवककर्मसिद्धिकोपस्थानं' पुष्पमाणवकत्वेन ज्योतिःशास्त्र-विस्त्वेन कर्मसिध्युपदेशार्थं राजसमीपोपस्थानमिति शबरस्वामी ॥

विष्णुः [१६, ७-१३]

रङ्गावतरणमायोगवानाम् । व्याधता पुल्कसानाम् । स्तुतिक्रिया मागधानाम् । वध्यघातित्वं चण्डाळानाम् । स्त्रीरक्षातज्जीवनं च वैदेहकानाम् । अश्वसारथ्यं सूतानाम् ॥

हारीतः

तेषां वृत्तीर्वक्ष्यामः अश्वरथसूतत्वं सूताय । [1]मृदङ्गवादोपजीवनं मागधाय । [2]श्मशानमृतपरिच्छदोपजीवनं [3]चण्डाळाय । [4]नटयितर्यनुवादित्वं बन्दिने । [5]पोतवाहोपजीवनं निषादाय । [6]तूर्यवादवीथीरङ्गवास्तुप्रक्षाळनं पुल्कसाय ॥

यमः

सूतानामश्वसारथ्यं मागधानां [7]चिकित्सितम् ।
चण्डाळानां [8]वध्यघातश्शुल्कुपानां च वेतनम्[9] ॥
आघोषणं च [10]मद्गूनां पुल्कसानां च [11]संतरम् ।

1. मृदङ्गचर्मोपजीवनं–A. S. B.
2. श्मशानाधिपत्यश्मशानव्रतपरिच्छन्दोपजीवजीवनं मृतस्थापन–A. S. B.
3. मत्तस्थापन–स ; मृतस्थाय A. S. B.
4. नटननृत्यगीतवादित्रवन्दिता–A. S. B.
5. प्रेतवाहोपजीवनं निषादधीवरयोः–A. S. B. ; पोतनानोपजीवनं निषादाय–स.
6. तूर्यवादविधिरङ्गप्रक्षाळनं–A. S. B. ; तूर्यवादविधिरङ्गवस्तुप्रच्योलनं–स.
7. स्तुतिक्रिया–A. S. B.
8. वध्यवधः–स, S. B. (b) ;
9. अरण्यक्षेपवेतनम्–A. S. S.
10. संघानां A. S. B.
11. तान्तवत्–स, S. B. (b)

<u>मनुः</u> [१०, ५१-५२ ; ५० ; ५३-५६]

चण्डालश्वपचानां तु बहिर्ग्रामात्प्रतिश्रयः ।
अपपात्राश्च कर्तव्या धनमेषां [1]श्वगर्दभम् ॥

वासांसि मृतचैलानि भिन्नभाण्डेषु भोजनम् ।
कार्ष्णायसमलङ्कारः परिव्रज्या च नित्यशः ॥

[2]चैत्यद्रुमश्मशानेषु वनेषूपवनेषु च ।
वसेयुरेते विज्ञाता वर्तयन्तः स्वकर्मभिः ॥

न तैः समयमन्विच्छेत्पुरुषो धर्ममाचरन् ।
व्यवहारो मिथस्तेषां विवाहः सदृशैः सह ॥

अन्नमेषां पराधीनं देयं स्याद्भिन्नभाजने ।
रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च ॥

दिवा चरेयुः कार्यार्थे चिह्निता राजशासनैः ।
अबान्धवं शवं चैव निर्हरेयुरिति स्थितिः ॥

वध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञया ।
वध्यवासांसि गृह्णीयुः [3]शय्याद्याभरणानि च ॥

<u>यमः</u>

कार्ष्णायसमलङ्कारस्तत्पात्रेषु च भोजनम् ।
बहिर्ग्रामनिवासश्च धनमेषां च गर्दभः ॥

1. च for श्व, S. B. (b)
2. This verse is repeated. See page 829.
3. शय्याश्चाभरणानि च—कुल्लूकमेधातिथी ।

शङ्खलिखितौ

चण्डालानामेकान्तवासः श्मशानसंरक्षणं [1]स्वकुलपरिधावनं [2]वध्यघातित्वमिति कर्माणि । श्वपचानां चैवम् । दस्युम्लेच्छगणानां च [3]कृतशस्त्रोपजीवनमिति कर्माणि । नार्यः[4] सजातीयाः सर्वेषां श्रेयस्यः[5] स्युरिति ॥

विष्णुः [१६, १४-१६]

चण्डालानां बहिर्ग्रामनिवसनं मृतचैलधारणमिति विशेषः । समानजातिभिर्वासः सर्वेषाम्[6] । स्वपितृवित्तानुहरणं च ॥

देवलः

तत्र [7]जात्यन्तरालानां प्रतिलोमानुलोमयोः ।
स्वे स्वे च [8]योनिसंबन्धांस्तांस्तान्संपादयेत्पृथक् ॥

तथैव चतुरो वर्णान् स्वे स्वे धर्मे नियोजयेत् ।
राज्ञो भूतिर्यशस्तुष्टिर्धर्मश्च [9]परिवर्धते ॥

मनुः [१०, ६२-६३]

ब्राह्मणार्थे गवार्थे वा [10]देहत्यागोऽनुपस्कृतः ।
[11]स्त्रीबालाभ्युपपत्तौ च बाह्यानां [12]सिद्धिकारणम् ॥

1. स्वकुलपरिघातनम्–B. J.
2. वध्यमारकत्वमिति–ज.
3. कृपिशस्त्रोपजीवनमिति–A. S. B.
4. कार्याः–A. S. B.
5. श्रेयसे–A. S. B.
6. सर्वेषां समानजातिभिर्व्यवहारः A. S. B. ; मु. वि. स्मृ.
7. यात्यान्तरालानां–A. S. B.
8. योनिसंबन्धं शास्त्रं संपादयेत्–A. S. B. ; योनिश्चक्रे (?) तांस्तान् संपादयेत्–A. S. B. (b)
9. परिवर्तते–S. B. (b)
10. देहत्यागोऽपप्लुतः–ज.
11. स्त्रीबालाभ्युपपत्तौ च–स. S. B, (b) ; स्त्रीबालवृद्धापत्तौ च–ज.
12. सिद्धिकारणात्–स, S. B. (b)

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
[1]एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥

देवलः

[2]स्वजातिजीवनं [3]सर्वप्रमाणतितिक्षा [4]व्यवहारपरमताणं स्वभृत्यपोषणमकर्मपरिवर्जनमित्याचण्डालधर्मः[5] ॥

इति व्यवहारकाण्डे [6]वर्णानुलोमप्रतिलोमलक्षणवृत्तिधर्माः ॥

इति महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेवमहासान्धिविग्रहिक-
भट्टहृदयधरात्मजश्रीमल्लक्ष्मीधरेण विरचिते कृत्यकल्पतरौ
[7]व्यवहारकाण्डं समाप्तम्[8]



1. तस्मिन् साम्यं च धर्मस्य-S. B. (b) ; एतत्सामासिकं धर्मं A. S. B.

2. स्वजातिशोषनं-स. S. B. (b) ; स्वजातिगोषनं-द.

3. सर्वस्वप्रमाणस्थितिरक्षा-B. J. ; सर्वप्रमाणस्थितिरक्षा- A. S. B.

4 व्यवहारपण्यमान्-A. S. B. ; व्यवहारपरायणं B. J.

5. स्वकर्मपरिवर्जनमिति चण्डालधर्मः-स ; S. B. (b) : स्वकर्मपरिवर्जनमि चण्डालधर्म A. S. B.

6. वर्णानुलोमलक्षणवृत्तिधर्माः-द.

7. व्यवहारकाण्डे वर्णानुलोमप्रतिलोमलक्षणवृत्तिधर्माः । समाप्तं चेदं व्यवहारकाण्डम् । इति शुभम् ॥ स, S. B. (b)

8. स ends thus : ओं नमः शिवाय । ओं नमः सरस्वत्यै । शुभमस्तु ; S. B. (b) ends thus : ओं नमः शिवाय । ओं नमः सरस्वत्यै । ओं नमो गणपतये । शुभमस्तु ॥ ; A. S. B. ends thus : लेखकस्य शुभं भूयात् । सन् १२३६ चैत्रशुक्लतृतीयायां शुक्रे पुस्तकमिदं लिखितम् । ; द ends thus : श्रीरस्तु शुभमस्तु

# APPENDIX A

## INDEX OF AUTHORS AND WORKS CITED IN THE TEXT

---

# APPENDIX—B

## INDEX OF WORKS AND AUTHORS CITED IN THE FOOTNOTES

-:o:-